# THE PANDIT

## A MONTHLY JOURNAL

OF THE

## BENARES COLLEGE,

DEVOTED TO

# SANSKRIT LITERATURE.

## VOLUME V.

BENARES:
PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS & CO.

# INDEX TO VOLUME V.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥

अङ्कुरश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature

No. 49. Benares, June 1st, 1870. Vol. V.


## ॥ उपदेशसहस्र्याः पद्यप्रबन्धः ॥

ननु बुद्ध्यादिभिरात्मनि ज्ञानमुत्पाद्यते ततः कथमिदमुच्यते आत्मचैतन्यं बुद्धावध्यस्यते इति तत्राह ।

(६७) स्वरूपं चात्मनो ज्ञानं नित्यं ज्योतिः श्रुतेर्यतः ।

न बुद्ध्या क्रियते तस्मान्नात्मनान्येन वा सदा ॥ ४८० ॥

स्वरूपं चेति । ज्ञानमात्मनः स्वरूपं "तद्देव ज्योतिषां ज्योतिरात्मैवास्य ज्योतिरत्रायं पुरुषः स्वयंज्योतिः साक्षी चे"-त्यादिश्रुतेः । अतश्च नित्यमेव यतस्तस्माच्च बुद्ध्या ज्ञानं क्रियते आत्मना वान्येन वा चक्षुरादिना ज्ञानं सदा कदाऽपि न क्रियतइत्यर्थः ॥ ६७ ॥

बुद्ध्यात्मनोरन्योन्यधर्माध्यासेनैव व्यवहारइत्युक्तेर्थे दृष्टान्तमाह ।

(६८) देहेहंप्रत्ययो यद्वज्जानातीति च लौकिकाः ।

वदन्ति ज्ञानकर्तृत्वं तद्वद्बुद्धेस्तथात्मनः ॥ ४८१ ॥

देहइति । रूपादिमत्त्वेन घटादिवदहंप्रत्ययायोग्येपि देहे चेतनामध्यस्य यथाहं मनुष्यः कृशः स्थूल इत्यादिप्रत्ययो दृश्यते तथा बुद्धेर्जडत्वेन ज्ञातृत्वायोग्यत्वेपि चिदाभासव्याप्त्या ज्ञातृत्वमारोप्य जानामीति लौकिका वदन्ति व्यवहरन्ति । दार्ष्टान्तिकमाह । तथात्मन इति । विकाररहितस्याप्यात्मनो विकारिचित्ताविवेकाद्विकारित्वादिव्यपदेशसिद्धिरित्यर्थः । यद्वा स्थूले देहे यद्वदहंप्रत्ययो मनुष्योहमित्येवमादिरहंप्रत्ययायोग्येपि व्यवह्रियते सर्वैः, लौकिकाश्च शास्त्रसंस्काररहिता देवदत्तो जानाति मनुतइति च देहस्यैव ज्ञातृत्वं वदन्ति च तद्वद्बुद्धेर्ज्ञानकर्तृत्वं तथा ऽऽत्मनो ज्ञानाश्रयत्वं विकारवत्त्वं च व्यवहारास्पदं भवतीत्यर्थः ॥ ६८ ॥

ननु "तार्किका ज्ञानस्योत्पत्तिविनाशौ पश्यन्तो ज्ञानमात्मना क्रियतइत्याहुः" तत्कथं नित्यं ज्ञानमात्मरूपमित्युक्तमित्यत आह ।

(६९) बौद्धैस्तु प्रत्ययैरेवं क्रियमाणैश्च चिन्निभैः ।

मोहिताः क्रियते ज्ञानमित्याहुस्तार्किका जनाः ॥ ४८२ ॥

बौद्धैस्त्विति । एवं पूर्वोक्तप्रकारेणात्मबुद्ध्योरन्योन्याध्यासाच्चिन्निभैश्चिच्छायापत्त्या चिदिव भासमाना ये तैर्बौद्धैर्बुद्धिप्रभवैः क्रियमाणैः प्रत्ययैर्वृत्तिविशेषैर्मोहितास्तार्किका जना ज्ञानं क्रियते जायतइत्याहुर्वदन्ति, तेषां बुद्ध्यात्माविवेक एवापराधो न तु ज्ञानं क्रियते तथा सति प्रत्ययोत्पत्तिविनाशयोरसाक्षिकतयाऽसिद्धिप्रसङ्गादिति भावः ॥ ६९ ॥

यस्मादेवं विचार्यमाणे प्रमाणसिद्धकौटस्थ्यस्यात्मनो न विकारित्वं प्रामाणिकं, यस्माच्च ज्ञानमात्मरूपत्वश्रवणान्नित्यमेवेति न केनापि क्रियते, यस्माच्च बुद्धिसंसर्गं विनात्मनो न ज्ञातृत्वमुपलभ्यते, सुषुप्तावदर्शनाद्, बुद्धिश्च नात्मनः पृथग् ज्ञातृत्वाद्याकारोपलभ्यते, तस्मादात्मबुद्धितत्स्थाभासानामविवेकाद्यथाप्रसिद्धमेव व्यावहारिकं बुद्ध्यात्मनोरेकत्वं गृहीत्वा जानात्यादिव्यपदेश उपपद्यते, न परमार्थतो मुख्यमन्यदालम्बनमस्तीति प्रकृतमुपसंहरति ।

(७०) तस्माज्ज्ञाभासबुद्धीनामविवेकात्प्रवर्तिताः ।

जानातीत्यादिशब्दश्च प्रत्ययो या च तत्स्मृतिः ॥ ४८३ ॥

तस्मादिति । ज्ञानातीत्यादिशब्दश्च तदनन्तरभावी तद्विषयः प्रत्ययश्च या तत्संस्कारजा स्मृतिः सा चेति त्रयोर्थाः ज्ञाभासबुद्धीनामविवेकात्प्रवर्त्तिता इति योजना ॥ ७० ॥

ज्ञाभासबुद्धीनामविवेकमूलः सर्वो व्यवहारो न पारमार्थिक इत्युक्तमर्थं दृष्टान्तेन स्पष्टयति ।

(७१) आदर्शानुविधायित्वं छायाया अस्यते मुखे ।
बुद्धिधर्म्मानुकारित्वं ज्ञाभासस्य तथेष्यते ॥ ४८४ ॥

आदर्शेति । छायायाः मुखाभासस्य यदादर्शानुविधायित्वं तन्मुखे ऽस्यते ऽध्यस्यते यथेति शेषः, तथा ऽध्यस्तस्य चिदाभासस्य बुद्धिधर्मानुकारित्वं ज्ञे आत्मनीष्यते ऽध्यस्य व्यवह्रियतइत्यर्थः ॥ ७१ ॥

यस्मादेवं चिदाभासाविविक्ता बुद्धिस्तस्मात्तत्परिणामेषु ग्राहकत्वप्रतिभाससिद्धिरित्याह ।

(७२) बुद्धेस्तु प्रत्ययास्तस्मादात्माभासेन दीपिताः ।
ग्राहकाइव भासन्ते दहन्तीवोल्मुकादयः ॥ ४८५ ॥

बुद्धेस्त्विति । निगदव्याख्यातं पद्यम् ॥ ७२ ॥

एवमाभासविविक्तपदार्थस्वरूपाज्ञानाद्यथा तार्किकाणां व्यामोहो ज्ञानं क्रियतइति, तथा बौद्धानामपि बुद्धिव्यतिरिक्तो ग्राहको नास्तीति व्यामोह एवेत्याह ।

(७३) स्वयमेवावभास्यन्ते ग्राहकाः स्वयमेव च ।
इत्येवं ग्राहकास्तित्वं प्रतिषेधन्ति सौगताः ॥ ४८६ ॥

स्वयमेवेति । स्वयमेव च प्रत्यया इति शेषः ॥ ७३ ॥

यद्येवं प्रत्ययानां ग्राहकमन्यं स्थिरमनादृत्य प्रत्ययमेव ग्राह्यग्राहकाकारं बौद्धा मन्यन्ते तर्हि तन्मतस्यानुभवानुसारित्वादाभासानभ्युपगमे कथं ते निराकर्त्तव्या इत्याशयेन स्वयूथ्यं पृच्छति ।

(७४) यद्येवं नान्यदृश्यास्ते तद्वारणं किमुच्यताम् ।
भावाभावौ हि तेषां यौ नान्यग्राह्यौ सदा यदि ॥ ४८७ ॥
अन्वयी ग्राहकस्तेषामित्येतदपि तत्समम् ।
अचितित्वस्य तुल्यत्वादन्यस्मिन् ग्राहके ऽसति ॥ ४८८ ॥

यद्येवमिति । ते प्रत्यया नान्यदृश्या अन्येन साक्षिणा नित्यसिद्धेन न ग्राह्या इति यद्येवं बौद्धा वदन्ति तन्मतवारणं किमस्ति तदुच्यतामित्युक्तः स्वयूथ्यः प्रत्याह । भावाभावाविति । तेषां प्रत्ययानां यौ भावाभावावुत्पत्तिविनाशौ सदा स्वतःसिद्धेन साक्षिणान्येन न ग्राह्यौ यद्यपि तथापि यस्मिन्प्रत्ययानां भावाभावौ सोहमिति प्रत्यभिज्ञाबलात्तेषां ग्राहकोन्वयी स्थाय्यात्मा सिद्ध्यति किमाभासकल्पनयेति योजना । एवं स्वयूथ्येनोक्ते नैतावता बौद्धो वारयितुं शक्यतइति दूषयति । एतदपीति । एतदपि प्रत्यभिज्ञानसिद्धमपि ग्राहकरूपं तत्समं प्रत्ययसमं जडमेवेत्यत्र हेतुमाहाचितित्वस्येति । अयमर्थः । प्रत्ययग्राहकः प्रत्यभिज्ञासिद्धोपि ग्राह्यः स्वप्रकाशो वा,आद्यं प्रत्याह । अचितित्वस्येति । अन्यस्मिन् ग्राहके असति ग्राह्यकोटिपतितत्वेन जाड्यापरिहारात्स्वयमप्यसिद्धः कथं प्रत्ययानां ग्राहक इत्यर्थः । अथ वा ऽन्यस्मिन् ग्राहके असति स्वतः सिद्धे साक्षिण्यविद्यमाने प्रत्यभिज्ञाग्राह्यस्याप्यचितित्वस्य तुल्यत्वाद्ग्राहकत्वासिद्धिरित्यर्थः । द्वितीये स्वप्रकाशस्य साक्षिणो निर्विकारत्वादाभाससिद्धिरिति द्रष्टव्यम् ॥ ७४ ॥

स्वप्रकाशसाक्षिण्यसति प्रत्ययानां भावाभावासिद्धिश्चेत्तर्हि साक्षिसान्निध्यमात्रेणैव तत्सिद्धेः कृतमाभासाभ्युपगमेनेति शङ्कते ।

(७५) अध्यक्षस्य समीपे तु सिद्धिः स्यादिति चेन्मतम् ।
नाध्यक्षेनुपकारित्वादन्यत्रापि प्रसङ्गतः ॥ ४८९ ॥

अध्यक्षस्येति । तत्र वक्तव्यं, किं साक्षिसन्निधानमात्रं प्रत्ययसिद्धिहेतुः, किं वा तत्कृतविशेषयोगोपीति, तत्र द्वितीयं तावद्दूषयति । नेति । निर्विकारे ऽध्यक्षे उपकारित्वानिरूपणादित्यर्थः । पाठान्तरे अध्यक्षे साक्ष्ये ऽहंकारादावनुपकारित्वादुपकारपदवाच्यातिशयाजनकत्वादित्यर्थः । प्रथमं दूषयत्यन्यत्रापीति । साक्षिणः पूर्णतया सर्वत्र सदा सान्निध्याविशेषात्काष्ठलोष्टादीनामपि सिद्धिप्रसङ्गादित्यर्थः ॥ ७५ ॥

एवमाभासानभ्युपगमे बौद्धादिमतसाम्यदोषपरिहारानुपपत्तिं स्वयूथ्यान्प्रत्युक्त्वा शास्त्रीयो बन्धमोक्षव्यवहारोपि तेषां न सिद्ध्यतीति वक्तुं विकल्पयति ।

(७६) अर्थी दुःखी च यः श्रोता स त्वध्यक्षो ऽथ वेतरः ।
अध्यक्षस्य च दुःखित्वमर्थित्वं च न ते मतम् ॥ ४९० ॥

अर्थीति । यो दुःखित्वेन मोक्षार्थित्वेन च प्रसिद्धो गुरूपदेशश्रोता स एवाध्यक्षो मतस्ततो ऽन्यो वेति विकल्पार्थः । आद्ये निरनुग्रहाध्यक्षवादिनस्तवापसिद्धान्तप्रसङ्ग इति दूषयत्यध्यक्षस्य चेति । आत्माभासानङ्गीकारवादिनस्ते द्वाराभावादविद्यातत्कार्यसंबन्धासिद्धेस्तेन च विनार्थित्वाद्यसिद्धेराभासाभ्युपगमप्रसङ्ग इत्यर्थः ॥ ७६ ॥

द्वितीयं दूषयति ।

(७७) कर्त्ता ऽध्यक्षः सदस्मीति नैव सद्ग्रहमर्हति ।
सदेवासीति मिथ्योक्तिः श्रुतेरपि न युज्यते ॥ ४९१ ।

कर्त्तेति । श्रोतुरर्थिनो ऽध्यक्षस्य च भेदपक्षे कर्त्ता कर्तृत्वादिधर्मको ऽविकारी श्रोता जडवर्गपतितत्वात्सदहमध्य

क्षोऽस्मीति सद्ग्रहं सदादिशब्दनिर्दिष्टब्रह्मात्मग्रहं नार्हति विरोधादित्यर्थः । यद्वा सदध्यक्षो निर्विकार आत्मा ऽहमस्मीति सद्ग्रहं यथार्थबोधं नार्हति न लभत इत्यर्थः, श्रुतिबाधप्रसङ्गाच्चायं पक्षो न युक्त इत्याह । सदेवेति ॥ ७७ ॥

चिदाभासानभ्युपगमपक्षे बन्धमोक्षानुपपत्तिमुपपाद्य स्वपक्षे तदुपपत्तिमाह ।

(७८) अविविच्योभयं वक्ति श्रुतिश्चेत्स्याद्ग्रहस्तथा ।
अस्मदस्तु विविच्यैव त्वमेवेति वदेद्यदि ॥ ४६२ ॥
प्रत्ययान्वयिनिष्ठत्वमुक्तो दोषः प्रसज्यते ।

अविविच्येति । उभयमात्मानमहंकारं च द्वयमाभासद्वारेणाविवेकापन्नमविविच्य विविक्तमकृत्वा यथाप्राप्तमार्थत्वादुपादाय श्रोतृत्वेन स्थितं प्रति तत्त्वमसीति श्रुतिर्वक्त्यात्मतत्त्वमिति चेत्पक्षस्तदा तथा यथा श्रुत्युक्तस्तस्य ग्रहो ग्रहणं स्यादिति योजना । अयमभिप्रायः । अन्तःकरणादौ चिदाभासोदये सति तद्गतविकाराध्यासादविविक्ताहंकार आत्मार्थित्वादिसंपन्नो मुमुक्षुतां प्रतिपद्यते तथैवाविवेकावस्थं त्वमित्यनूद्याभासद्वारा साभासान्तःकरणसाक्षितया लक्षयित्वा तेजोबन्नादिजगत्कारणत्वेनोपलक्षितं सच्छब्दवाच्यं ब्रह्म तदित्यनूद्य जीवेनात्मना नामरूपसंघातानुप्रविष्टत्वेनापरोक्षप्रत्यक्तया लक्षयित्वा त्वं तदसीति श्रुतिरुपदिशत्यात्मतत्त्वमिति तथा ग्रहणमुपपद्यत इति । अहंकार एव श्रोता स्यात्किमात्माभासाभ्युपगमेनेति सांख्यमतमनूद्य दूषयत्यस्मदस्त्विति । प्रत्ययान्वय्यहंकारः यदि वाक्यमस्मदः प्रत्यक्चैतन्यादहंकारं विविच्यैव त्वमेवेति प्रत्ययान्वयिनिष्ठत्वं वदेत्तदोक्तो दोषः श्रुतेर्मिथ्योक्तित्वप्रसङ्गरूपः प्रसज्यत इत्यर्थः ॥ ७८ ॥

तर्ह्यहंकर्तृविषयोऽप्युपदेशो ऽध्यक्षे पर्यवस्यतीत्याशङ्क्याभासानभ्युपगमे तदपि दुर्घटमित्याह ।

(७९) त्वमित्यध्यक्षनिष्ठश्चेदहमध्यक्षयोः कथम् ॥ ४६३ ॥
संबन्धो वाच्य एवात्र येन त्वमिति लक्षयेत् ।

त्वमिति । त्वमितिपदमहंकारवाचि सदध्यक्षं बोधयति चेदहंकाराध्यक्षयोः संबन्धग्रहणमन्तरेण वाक्यार्थबोधानुपपत्तेरहमध्यक्षयोः संबन्धो ऽत्र वाच्य एव, स कथमुपपद्यते, येन संबन्धेन त्वमिति पदमध्यक्षं लक्षयेदित्यर्थः ॥ ७९ ॥

अस्तिसंबन्ध इहेत्याशङ्क्य परिहरति ।

(८०) द्रष्टृदृश्यत्वसंबन्धो यद्यध्यक्षे ऽक्रिये कथम् ॥ ४६४ ॥

द्रष्टृदृश्यत्वेति । यदि द्रष्टृदृश्यत्वसंबन्धो ऽभ्युपगम्यते तदापि संबन्धग्रहणमनुपपन्नम्, अहंकारस्य जडत्वात्संबन्धग्रहणायोगादध्यक्षस्य तद्ग्रहणमिति वक्तव्यमक्रिये निर्विकारे ऽध्यक्षे कथं संबन्धग्रहणकर्तृत्वमित्यर्थः ॥ ८० ॥

मास्तु संबन्धग्रहणं तथापि तादात्म्योपदेशो भविष्यतीति शङ्कामनूद्य दृष्टविरोधान्नैवमिति परिहरति ।

(८१) अक्रियत्वे ऽपि तादात्म्यमध्यक्षस्य भवेद्यदि ।
आत्माध्यक्षो ममास्तीति संबन्धाग्रहणे न धीः ॥ ४६५ ॥

अक्रियत्वेपीति । यथा लोके घटस्य शैक्ल्यमिति घटशौक्ल्ययोः संबन्धाग्रहणे शुक्लो घट इति वाक्यात्तादात्म्यधीर्नोदेति, तथा ममात्माध्यक्षो ऽस्तीति संबन्धाग्रहणे सति न तादात्म्यधीः श्रुतितो जायेतेत्यर्थः ॥ ८१ ॥

"एष य आत्मा हृदयेणीयानेष य आत्मान्तर्हृदय एतद्ब्रह्मे"ति शास्त्रादस्त्यहंकाराध्यक्षयोः संबन्धग्रह इति शङ्कामुत्थाप्य निराकरोति ।

(८२) संबन्धग्रहणं शास्त्रादिति चेन्मन्यसे नहि ।
पूर्वोक्ताः स्युस्त्रिधा दोषा ग्रहो वा स्यान्ममेति च ॥ ४६६ ॥

संबन्धग्रहणमिति । नहीत्युक्तं व्यनक्ति । पूर्वोक्ता इति । अहंकारस्य जडत्वात्संबन्धग्रहीतृत्वं न घटते, नाप्यध्यक्षस्य, निर्विकारित्वादिति द्वौ दोषौ, जडं प्रति श्रुतेर्बोधकत्वासंभवस्तृतीयो दोष इति त्रिधा दोषाः स्युः, यदि कथं चित्संबन्धग्रहणं कल्प्येत तदापि ममाध्यक्षो ऽस्तीति संबन्धग्रहणं स्यान्न त्वहमेवाध्यक्षोऽस्मीति तादात्म्याध्यासानङ्गीकारात्, चकारान्ममाध्यक्षो ऽस्तीत्यपि न घटते ऽहंकारस्य जडत्वादित्यभ्युच्चयः ॥ ८२ ॥

एवमात्मानात्मनोः परपक्षे संबन्धासिद्धिमुक्त्वा स्वपक्षे मिथ्या तादात्म्यसंबन्ध इति दर्शयति ।

(८३) अदृशिर्दृशिरूपेण भाति बुद्धिर्यदा सदा ।
प्रत्यया अपि तस्याः स्युस्तप्तायोविस्फुलिङ्गवत् ॥ ४६७ ॥

अदृशिरिति । यदा अदृशिरचेतना बुद्धिर्दृशिरूपेण सदा भातीत्यभ्युपगम्यते तदा तस्या बुद्धेः प्रत्यया वृत्तयोपि तप्तायोविस्फुलिङ्गानामग्न्यात्मत्ववद् दृशिरूपाः स्युरित्यर्थः ॥ ८३ ॥

अस्मिन्पक्षे लौकिकवैदिकव्यवहारसिद्धिरपि सुसंपादेत्याह ।

(८४) आभासस्तदभावश्च दृशेः सोऽस्त्रो न चान्यथा ।
लोकस्य युक्तितः स्यातां तद्ग्रहश्च तथा सति ॥ ४६८ ॥

आभास इति । सोऽस्त्रा ऽवधिभूतायाः दृशेश्चिदात्मनः सकाशादेव लोकस्याभासस्तदभावश्च स्यातां युक्तितो युक्तेरुपपत्तेर्न चान्यथा, तथा सति आभासानभ्युपगमे सति प्रत्ययभावाभावयोः प्रत्यग्ग्राह्यत्वायोगात्ततोत्यन्तमेव विविक्तस्य चात्मनस्तद्ग्राहकत्वानुपपत्तेराभासद्वारा तु संबन्धादात्मने

बुद्धिवृत्तिभावाभावसाक्षित्वमुपपद्यते, बुद्धेश्च तद्ग्रह आत्मग्रहो ऽहमस्मीत्युपपन्नः स्यादित्यर्थः ॥ ८४ ॥

तप्तायोविस्फुलिङ्गवदिति दृष्टान्ताभिधानादात्मनो विकारप्राप्तिं शङ्कते ।

(८५) नन्वेवं दृशिसंक्रान्तिरयःपिण्डेऽग्निवद्भवेत् ।
मुखाभासवदित्येतदादर्शे तन्निराकृतम् ॥ ४९९ ॥

नन्वेवमिति । अयःपिण्डे ऽग्निसंक्रान्तिवद् बुद्धौ दृशिसंक्रान्तिर्विकारो भवेदित्यर्थः । परिहरति, मुखाभासवदिति । तदेतच्चोद्यमादर्शे मुखाभासवदिति दृष्टान्तप्रबन्धेन निराकृतमित्यर्थः । यथा मुखस्यादर्शे प्रतिबिम्बितस्य तत्स्थत्वेन रूपेण मिथ्यात्वं तथा बुद्धौ प्रतिबिम्बितस्य चिदात्मनो बुद्धिधर्मत्वेनावभासो मृषेति पूर्वमुक्तं सर्वमिहानुसंधेयमिति भावः ॥ ८५ ॥

तर्हि कथं तप्तायोविस्फुलिङ्गदृष्टान्त उक्तस्तत्र विकारप्रसिद्धेर्दार्ष्टान्तिकाननुरूपत्वादित्याशङ्क्य विवक्षितांशस्येहापि संभवान्मैवमित्याह ।

(८६) कृष्णायो रोहिताभासमित्येतद् दृष्टमुच्यते ।
दृष्टदार्ष्टान्ततुल्यत्वं न तु सर्वात्मना क्व चित् ॥ ५०० ॥

कृष्णाय इति । कृष्णवर्णमयो लोहिताभासं लोहितवर्णमवभासतइत्येतदेतावद् दृष्टं दृष्टान्तमुच्यते, जडाया बुद्धेश्चैतन्याभास इत्यर्थः । सर्वांशसाम्यमनुपपन्नमित्याह । दृष्टदार्ष्टान्तेति । अप्रकाशाद्यात्मनो मुखादेश्चन्द्रादिदृष्टान्ताभावप्रसङ्गादिति भावः ॥ ८६ ॥

दृष्टान्ते विवक्षितमंशमुक्त्वा दार्ष्टान्तिकेपि तथाविधमंशं दर्शयति ।

(८७) तथैव चेतनाभासं चित्तं चैतन्यवद्भवेत् ।
मुखाभासो यथा ऽऽदर्शे आभासश्चोदितो मृषा ॥ ५०१ ॥

तथैवेति । चेतनाया आभासो यस्मिंस्तच्चेतनाभासं चित्तं चैतन्यवच्चेतनमिव भवेत्स चाभासो यथा आदर्शे मुखाभासो ऽविकृत एवमेवेहापि द्रष्टव्यः, आभासश्चोपाधिस्थतया दृश्यमानो मृषा मिथ्येत्युदित उक्त एवेत्यर्थः ॥ ८७ ॥

कस्माच्चिदाभासव्याप्त्या चित्तस्य चेतनतावभासोऽभ्युपगम्यते न स्वत इति शङ्का न कार्या, तत्र प्रमाणन्याययोरभावादित्याह ।

(८८) चित्तं चेतनमित्येतच्छास्त्रयुक्तिविवर्जितम् ।
देहस्यापि प्रसङ्गः स्याच्चक्षुरादेस्तथैव च ॥ ५०२ ॥

चित्तमिति । उत्पत्तिविनाशवत्तया ऽन्यदृश्यस्यापि चित्तस्य चेच्चेतनता स्वभावः स्यात्तदातिप्रसङ्गश्च दुष्परिहर इत्याह । देहस्येति ॥ ८८ ॥

दृष्टापत्तिमाशङ्क्य परिहरति ।

(८९) तदप्यस्त्विति चेतन्न लौकायतिकसङ्गतेः ।
न च धीर्दृशिरस्मीति यद्याभासो न चेतसि ॥ ५०३ ॥

तदपीति । अवैदिकत्वप्रसङ्गादित्यर्थः, किं चाभासानभ्युपगमे द्वाराभावादहं ब्रह्मास्मीत्यागन्तुकं वाक्यजन्यमैक्यज्ञानं न सिद्ध्येदित्याह । न च धीरिति । चेतसि यद्याभासो न भवेत्तदा दृशिर्ब्रह्मास्मीति धीर्न भवेत्केवलस्य चित्तस्य जडत्वाच्चिन्मात्रस्य च कूटस्थत्वादित्यर्थः ॥ ८९ ॥

ब्रह्मास्मीतिधियो ऽभावे का क्षतिरित्यत आह ।

(९०) सदस्मीति धियो ऽभावे व्यर्थं स्यात्तत्त्वमस्यपि ।
युष्मदस्मद्विभागज्ञे स्यादर्थवदिदं वचः ॥ ५०४ ॥

सदस्मीति । अपिरवधारणार्थः । तत्त्वमसिवाक्यमैक्यग्राहकमुक्तधियो ऽभावे व्यर्थमेवाप्रमाणमेव स्यादित्यर्थः । अस्तु वैयर्थ्यं तद्वाक्यश्रोतृणां सर्वेषां झटिति ब्रह्मास्मीति बुद्ध्युत्पत्त्यदर्शनादित्याशङ्क्याह । युष्मदस्मदिति । अधिकारिणः प्रमितिजनको वेद इति न्यायात्सम्यक्पदार्थविज्ञानवत एव वाक्यार्थबोधे ऽधिकारादात्मानात्मविभागज्ञानवत्येव पुंसीदं वाक्यमर्थवच्च सर्वान्प्रति झटितीत्यर्थः ॥ ९० ॥

तमेव युष्मदस्मद्विवेकं दर्शयितुमुपक्रमते ।

(९१) ममेदंप्रत्ययौ ज्ञेयौ युष्मद्येव न संशयः ।
अहमित्यस्मदीष्टः स्यादयमस्मीति चोभयोः ॥ ५०५ ॥

ममेदमित्यादिना । इदं पुत्रादि ममेति च प्रत्ययौ युष्मद्यनात्मन्येव ज्ञेयौ पुत्रादिबाह्यार्थस्य देहाध्यासप्रणालिकयैवास्मदर्थे प्रवेशाद्बाह्यार्थसंबन्धोप्यनात्मधर्म एवेति युक्तमुक्तं ममेति प्रत्ययो युष्मद्येवेति । न संशय इति सर्वत्रानुषज्यते । अहमिति । प्रत्यय आभासद्वारात्मभूते व्यावहारिके ऽस्मद्यात्मन्यहंकर्तरीष्टः स्यादहमित्येवोल्लेखदर्शनाद्, अयं देहादिरस्मीति चोभयोरात्मानात्मनोः प्रत्यय इत्यर्थः ॥ ९१ ॥

आत्मानात्मविषयाणां प्रत्ययानामसंकीर्णतया संकीर्णतया च विषयानुक्तोक्तविवेकसिद्ध्यर्थं तेषां गुणप्रधानभावेन विशेषणविशेष्यभावो ग्राह्य इत्याह ।

(९२) अन्योन्यापेक्षया तेषां प्रधानगुणतेष्यते ।
विशेषणविशेष्यत्वं तथा ग्राह्यं हि युक्तितः ॥ ५०६ ॥

अन्योन्येति ॥ ९२ ॥

विशेषणविशेष्यत्वं युक्तितो ग्राह्यमित्युक्तमेव विविच्य दर्शयति ।

(९३) ममेदं द्वयमप्येतन्मध्यमस्य विशेषणम् ।
धनी गोमान्यथा तद्वद्देहो ऽहंकर्तुरेव च ॥ ५०७ ॥

ममेदं द्वयमिति । मध्यमस्य पूर्वश्लोके मध्ये निर्दिष्टस्यास्मदर्थस्यात्मनो विशेषणमिदं ममेति च द्वयं मनुष्यो ऽहमिति प्रत्ययापेक्षयेत्यर्थः । तत्रोदाहरणं धनी गोमान्यथेति यथा धनादीदंत्वास्पदं तद्देहापेक्षया ममत्वास्पदमहंकर्त्तुः सिद्धं तद्वत्स्थूलो देहो ऽहंकर्त्तुरात्मनो बाह्यधनाद्यपेक्ष्याहंत्वास्पदतया विशेषणमेवेत्यर्थः । चकारादात्मनोऽपि सोऽहं ज्ञातेत्याद्युल्लेखे स्थूलदेहमपेक्ष्य प्रधानभूतो ऽप्यहंकर्त्ता विशेषणमिति योज्यम् ॥ ९३ ॥

एतत्सर्वं यदधीनसत्ताप्रकाशं तत्रारोपितं सत्तस्य सदा विशेषणं भवदपि तेन साक्षिणा न संस्पृशतीत्येषु यो निरपेक्षसिद्धः स शुद्ध आत्मेति युष्मदस्मद्विभागज्ञस्य भवेदेव वाक्याद्वाक्यार्थज्ञानमिति प्रमाणमेव वेदान्तवाक्यमित्यभिप्रेत्योपसंहरति ।

(९४) बुद्ध्यारूढं सदा सर्वं साहंकर्त्ता च साक्षिणः ।
तस्मात्सर्वावभासो ज्ञः किं चिदप्यस्पृशन्सदा ॥ ५०८ ॥

बुद्ध्यारूढमिति । बुद्ध्यारूढं बुद्धिवृत्तिक्रोडीकृतं सर्वं देहतत्संबन्धिविषयजातं साक्षिणो विशेषणं गुणभूतमिति योजना । न केवलमेताव,त्किं च साहंकर्त्ता अहंकर्त्रा साभासमनसा सहितः सूक्ष्मो ऽपि संघातः साक्षिणो विशेषणं तस्मिन्नध्यस्ततया तदवभास्यत्वादित्यर्थः । यस्मादेवं परमार्थतः किं चिदप्यस्पृशन्सदा सर्वं स्वाभासद्वारा ऽवभासयतीति सर्वावभासस्तस्माद् ज्ञो ज्ञानस्वरूप एव सदात्मेति विवेको युक्त इत्यर्थः ॥ ९४ ॥

एष विवेकिनां मार्गो विपरीतस्त्वविवेकिनां क्षेत्रादावप्यात्मनो विशेषणत्वप्रतीतेरित्याह ।

(९५) प्रतिलोममिदं सर्वं तथोक्तं लोकबुद्धितः ।
अविवेकधियामस्ति नास्ति सर्वं विवेकिनाम् ॥ ५०९ ॥

प्रतिलोममिति । बाह्यार्थापहृतचेता लोकस्तस्य बुद्धिर्लोकबुद्धिस्तस्या इति बाह्यार्थसत्त्वप्रधानां लोकबुद्धिमपेक्ष्येति यावत्,तथा च बाह्यार्थं प्रधानीकृत्य यदिदं यथोक्तं विशेषणविशेष्यादि सर्वं प्रतिलोममनात्मभूतं तदविवेकधियो विवेकज्ञानशून्यानां दृष्ट्यास्ति वर्त्तते, विवेकिनां तु दृष्ट्या सर्वमेतद्विशेषणादिकं दृश्यरूपं नास्ति न वर्त्तते, अतो ऽविवेकिनां बुद्धिमात्मन्यवतारयितुं विशेषणविशेष्यादिप्रबन्धकल्पना यथाप्रतीति सत्तामादाय क्रियते ऽध्यारोपापवादन्यायेनेति भावः ॥ ९५ ॥

नन्वन्वयव्यतिरेकाभ्यामेव सर्वसंसारविनिर्मुक्तात्मावगमात्किं वाक्येनेत्याशङ्क्याह ।

(९६) अन्वयव्यतिरेकौ हि पदार्थस्य पदस्य च ।
स्यादेतदहमित्यत्र युक्तिरेवावधारणे ॥ ५१० ॥

अन्वयव्यतिरेकौ हीति । पदार्थस्यान्वयव्यतिरेकौ नाम, आत्मपदार्थो द्रष्टा साक्षी न कदापि दृश्यः साक्ष्यो वा भवति तस्यालुप्तप्रकाशसन्मात्रतया स्वतः सिद्धत्वादतो ऽनन्याश्रयत्वान्न कदापि कस्यापि विशेषणमात्मा तथा यद्दृश्यं साक्ष्यं चाहंकारादिविषयान्तं तदन्याधीनप्रकाशसत्ताकतयान्याश्रयं सत्सदा विशेषणभावं न व्यभिचरति तस्मादनागमापायि दृगात्मरूपं सत्यं शुक्त्यादिवत्तद्विपरीतमसत्यं रजतादिवदित्यनृतजडपरिच्छिन्नपराधीनपरागर्थव्यावृत्तः सत्यज्ञानानन्तप्रत्यगानन्दरूप आत्मेति विवेचनम् । पदस्यान्वयव्यतिरेकौ नाम आत्मा चैतन्यं प्रज्ञानं ब्रह्म सदित्यादिपदानि कर्त्रैत्याद्युपपदविधुराणि, केवलस्यैवात्मनः समर्पकाणि, न विशेषणतद्विशिष्टविषयाणि, असामर्थ्या,त्कर्त्ता भोक्ता ज्ञाता द्रष्टा श्रोता वक्ता गन्ता कृशः स्थूल इत्यादीनि तु न केवलपूर्णात्मविषयाणि, अन्याधीनक्रियाद्युपरागदशायामेव प्रयुज्यमानत्वादिति विवेचनम् । एवं पदस्य पदार्थस्य चान्वयव्यतिरेकाविति पदे तदहमित्यत्रास्मदर्थविषये ऽवधारणे युक्तिरेव स्याद्विवेकावधारणोपायमात्रं स्यान्न तु वाक्यार्थे पदार्थैक्ये व्यापारोऽस्येत्यर्थः । तस्माद्वैतावतापि विवेकेन देहादिवैलक्षण्ये ऽवधारिते ऽपि कोऽहं तर्हीति जिज्ञासाया अनुवृत्तेस्तत्त्वमसीति वाक्यं जिज्ञासितस्वरूपविशेषसमर्पकमवश्यमपेक्षितव्यमेवेति भावः ॥ ९६ ॥

किं चावस्थात्रयं परस्परव्यभिचारि चैतन्यात्मा तु न कदापि व्यभिचारीति प्रकारान्तरेणात्मानात्मविवेकं दर्शयति ।

(९७) नाद्राक्षमहमित्यस्मिन् सुषुप्ते ऽन्यन्मनागपि ।
न वारयति दृष्टिं स्वां प्रत्ययं तु निषेधति ॥ ५११ ॥

नाद्राक्षमिति । अस्मिन् सुषुप्ते ऽत्रात्मनि अत्र स्थाने वा मनागपीषदप्यन्यदात्मस्वरूपातिरिक्तमहं नाद्राक्षं न दृष्टवानस्मीति परामृशन् जनो न स्वां स्वात्मनो दृष्टिं चैतन्यं वारयति, प्रत्ययं तु पुनर्निषेधति, प्रतीयत इति प्रत्यय इति व्युत्पत्त्या प्रमातृप्रमाणप्रमेयादिरूपः सर्व एव विशेषो गृह्यते, तस्मात्परस्परव्यभिचारितया दृष्टनष्टस्वभावाभ्यो ऽवस्थाभ्यो मिथ्याभूताभ्यो ऽव्यभिचारी चिद्रूपः साक्षी सत्य आत्मेति विवेकः सिद्ध्यतीत्यर्थः ॥ ९७ ॥

एवमुक्तान्वयव्यतिरेकौ शास्त्रसंमतौ न स्वबुद्ध्युत्प्रेक्षामात्रकृताविति विश्वासाय शास्त्रमुदाहरति ।

(९८) स्वयंज्योतिर्नहि द्रष्टुरित्येवं संविदोऽस्तिताम् ।
कौटस्थ्यं च तथा तस्याः प्रत्ययस्य तु लुप्तताम् ॥ ५१२ ॥

स्वयमेवाब्रवीच्छास्त्रं प्रत्ययावगती पृथक् ।

स्वयंज्योतिरिति सार्द्धेन । "अत्रायं पुरुषः स्वयंज्योतिः नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत" इत्येवमादि शास्त्रं संविदश्चेतनाया अस्तितां सद्भावं तस्याः संविदः कौटस्थ्यं निर्विकारतां च स्वयमेवाब्रवीदिति संबन्धः, तथा प्रत्ययस्य प्रमात्रादिभेदस्य लुप्ततामसत्तां च, "न तु तद्द्वितीयमस्ति न ततोऽन्यद्विभक्त"मित्यादि शास्त्रं स्वयमेवाब्रवीदिति पुनरेवान्वयः, एवं प्रत्ययावगती पृथगसंकीर्णे शास्त्रेणैव विवेचिते इति शेषः, प्रत्ययो व्याख्यातः, अवगतिश्चैतन्यम् ॥ ९८ ॥

एवमवान्तरवाक्यकृतं युष्मदस्मद्विवेकमुपपत्तित उक्त्वा विज्ञातपदार्थतत्त्वे पुरुषे महावाक्यं फलवद्विज्ञानं जनयतीत्याह ।

(९९) एवं विज्ञातवाक्यार्थे श्रुतिलोकप्रसिद्धितः ॥५१३॥
श्रुतिस्तत्त्वमसीत्याह श्रोतुर्मोहापनुत्तये ।

एवमिति । एवमुक्तप्रकारेण श्रुतिप्रसिद्धितो लोकप्रसिद्धितोऽन्वयव्यतिरेकतश्च विज्ञातावान्तरवाक्यार्थे पुंसि सति महावाक्यात्मिका श्रुतिः श्रोतुर्जिज्ञासोर्मोहापनुत्तये सकार्याविद्यानिवृत्तिप्रयोजनाय तत्सदाख्यं ब्रह्म तत्त्वमसीत्याहोपदिशतीत्यर्थः ॥ ९९ ॥

वाक्यश्रवणमात्रान्मोहापोहे दृष्टान्तं पुराणसिद्धमाह ।

(१००) ब्रह्मा दाशरथेर्यद्वदुक्त्यैवापानुदत्तमः ॥ ५१४ ॥
तस्य विष्णुत्वसंबोधे न यत्नान्तरमूचिवान् ।

ब्रह्मेति । दाशरथिना रामेण देवकार्यसिद्धये मनुष्यावतारनाट्येन स्वमाहात्म्याच्छादनं संकल्पपूर्वकं यत्कृतं तदिह तमःशब्देनोच्यते, न त्वीश्वरस्य मोहः संभवति, तदुक्तं संक्षेपशारीरके ।

"संकल्पपूर्वकमभूद्रघुनन्दनस्य
नाहं विजानदिति कं चन कालमेतत् ।
ब्रह्मोपदेशमुपलभ्य निमित्तमात्रं
तच्चोत्ससर्ज स कृते सति देवकार्ये" ॥

इति । हे राम त्वं विष्णुरसि न दशरथपुत्रमात्र इत्युक्त्यैव ब्रह्मा दाशरथेः संकल्पमात्रकृतं तमो विष्णुत्वाच्छादनरूपमपानुदत् । एवकारार्थमाह । तस्येति । यत्नान्तरं वाक्योपदेशग्रहणातिरिक्तमित्यर्थः ॥ १०० ॥

दार्ष्टान्तिकमाह ।

(१०१) अहंशब्दस्य या निष्ठा ज्योतिषि प्रत्यगात्मनि ॥५१५॥
सैवोक्ता सदसीत्येवं फलं तत्र विमुक्तता ।

अहंशब्दस्येति । एवंशब्दः प्रथमं योज्यः, यथायं दृष्टान्त एवं सदसीति वाक्येन सा निष्ठोक्तैव केवलं नानुष्ठापितेति योजना । सा का निष्ठेति तामाह । अहंशब्दस्येति । प्रत्यगात्मनि परागर्थेभ्यो व्यावृत्ते शोधिते आत्मनि निरुपाधिके ज्योतिषि साक्षिस्वप्रकाशस्वभावे अहंशब्दस्य या निष्ठा लक्षणया पर्यवसिता वृत्तिः सैवेत्यर्थः, तत्र त्वं तदसीत्युपदेशमात्रादहं सद्ब्रह्मास्मीति वाक्यार्थज्ञानोदयमात्रे सति विमुक्तता मोहापोहरूपा फलं भवतीत्यर्थः । यद्वा दृष्टान्तस्य दार्ष्टान्तिकमेव विज्ञातवाक्यार्थे इति पूर्वश्लोकएव स्थितं द्रष्टव्यम्, । अयं त्वन्यथोत्थाप्यते । ननु दाशरथेर्भवेद्देव विष्णुत्वोपदेशमात्राद्विष्णुरहमस्मीति झटिति बोधोदयस्तस्य महामहिमसंपन्नत्वात्कथमिदानींतनस्य कर्त्ता भोक्तेत्यादिप्रत्यक्षाभिमतमिथ्याप्रत्ययगृहीतस्योपदेशमात्रादहं ब्रह्मास्मीति निर्विचिकित्सं ज्ञानं संभाव्यतइत्याशङ्क्य शोधितत्वंपदार्थस्य पुंसः कर्त्रादिसाक्षिण एवाहमादिशब्दलक्षितस्य ब्रह्मत्वोपदेशान्नानुपपत्तिरत्रापीति परिहरति । अहंशब्दस्येति । सदसीत्येवं वाक्येन सैव निष्ठोक्तेति संबन्धः, अन्यत्समानम् ॥ १०१ ॥

एवमवगतपदार्थतत्त्वस्य वाक्यादेव समूलसंसारनिवृत्तिफलं ज्ञानं जायतएवेति स्थिते श्रुतेः प्रामाण्यसिद्ध्यर्थं कार्यपरत्वकल्प्यमित्याग्रहो निरर्थको विद्वदनुभवविरोधादित्यभिप्रेत्याह ।

(१०२) श्रुतमात्रेण चेन्न स्यात्कार्यं तत्र भवेद्ध्रुवम् ॥ ५१६ ॥

श्रुतमात्रेणेति । यथोक्तन्यायेन वाक्यस्य श्रुतमात्रेण चेदुक्तफलं विज्ञानं न स्यात्तत्र तदा कार्यं कल्प्यं ध्रुवमवश्यं भवेदन्यथाऽर्थवादादिवाक्यवत्स्वार्थे प्रामाण्यानुपपत्तेः, इह तु न तथा कल्प्यमस्ति, फलस्य सद्य एवानुभवसिद्धत्वादित्यर्थः । स्वयंज्योतिर्नहि द्रष्टुरिति श्लोके पूर्वमर्द्धश्लोकोऽधिकः स्थितः, इह चायमर्द्ध एव श्लोक इति सह गणनीयः ॥ १०२ ॥

किं च सिद्धे ब्रह्मात्मनि शास्त्रस्याप्रामाण्यं नाम विपर्यासलक्षणं वा निष्फलत्वं वा संशयलक्षणं वाऽनुत्पत्तिलक्षणं वेति विकल्पान् क्रमेण दूषयति ।

(१०३) व्यवहारात्पुरापीष्टः सद्भावः स्वयमात्मनः ।
अशनायादिनिर्मुक्त्यै तत्काला जायते प्रमा ॥ ५१७ ॥

व्यवहारादित्यादिना । नाद्यः, यस्माद्व्यवहारादहं ब्रह्मास्मीतिशास्त्रोपदेशव्यवहारात्पुरा पूर्वमप्यात्मनः स्वयमेव सद्भाव इष्टो बाधकाभावात्तस्माद्यथावस्थितात्मस्वरूपस्यैव श्रुत्या निवेदनान्न शुक्तिरौप्यज्ञानवदप्रामाण्यमित्यर्थः । न द्वितीयोऽनुभवविरोधादित्याह । अशनायादीति । तत्कालाप्रवाक्यश्रवणकाल एव कालो यस्याः सा तत्काला प्रमा, अशनायाद्युपलक्षितसंसारस्य निर्मुक्त्यै निवृत्त्यर्थं जायते, विदुषां प्रत्यक्षमेवैतदित्यतो न निष्फलत्वशङ्कावकाश इत्यर्थः ॥ १०३ ॥

तृतीयमप्यनुभवविरोधेन निराकरोति ।

(१०४) तत्त्वमस्यादिवाक्यार्थे त्रिषु कालेष्वसंशयः ।

तत्त्वमसीति । असंशयः संशयो नास्तीत्यर्थः ॥ १०४ ॥

चतुर्थं प्रत्याह ।

(१०५) प्रतिबन्धविहीनत्वात्स्वयं चानुभवात्मनः ॥ ५१८ ॥
जायेतैव प्रमा तत्र स्वात्मन्येव न संशयः ।

प्रतिबन्धेति । पदार्थाज्ञानं हि वाक्यार्थज्ञानोत्पत्तिप्रतिबन्धस्तद्विहीनत्वादवगतपदार्थस्य पुंसस्तत्र तस्मिन्नेव वाक्यश्रवणकाले आत्मन्येव प्रमा जायेतैव न संशय इति योजना । आकाशपुष्पमस्तीत्यादिवाक्यार्थवदनुभवायोग्यार्थत्वशङ्कां वारयति । स्वयं चेति । अनुभवस्वरूपत्वात्स्वयमात्मनः प्रत्याख्यातुमशक्यत्वादित्यर्थः। अतो हुंफडादिशब्दवदनुत्पत्तिलक्षणमप्यप्रामाण्यं नास्तीति सिद्धं सिद्धे ब्रह्मात्मनि वाक्यस्य प्रामाण्यमिति भावः ॥ १०५ ॥

एवं प्रमाणस्वरूपनिरूपणेनाहं ब्रह्मास्मीति ज्ञानमुपपाद्येदानीं प्रतिपत्तव्यार्थस्वभावनिरूपणेनापि तदुपपादयितुं विकल्पयति ।

(१०६) किं सदेवाहमस्मीति किं वान्यत्प्रतिपद्यते ॥ ५१९ ॥
सदेव चेदहंशब्दः सता मुख्यार्थ इष्यताम् ।

किं सदेवेति। तत्त्वमसीतिवाक्यश्रवणसमनन्तरं प्रतिपत्तावहमस्मीति किं सदेव प्रतिपद्यते किं वान्यदिति विकल्पार्थः । आद्यमनूद्य तत्रपरस्यानिष्टापत्तिरित्याह । सदेव चेदिति । सता सच्छब्दार्थेनाहंशब्दो मुख्यार्थ इष्यतां तदा च सच्छब्दाहंशब्दयोरेकार्थपर्यवसानादैकात्म्यमेव वाक्यार्थो न संसर्ग इत्यपरोक्षज्ञानसिद्धिरित्यर्थः ॥ १०६ ॥

द्वितीये दोषमाह ।

(१०७) अन्यच्चेत्सदहंग्राहप्रतिपत्तिर्मृषैव सा ॥ ५२० ॥
तस्मान्मुख्यग्रहे नास्ति वारणावगतेरिह ।

अन्यच्चेदिति । प्रत्यगात्मनोऽन्यच्चेत्सत्तदाहंग्राहप्रतिपत्तिरहंग्रहरूपा या प्रतिपत्तिर्मृषैव सा भवेत्संपदादिज्ञानवत् तत्र वाक्यस्याप्रामाण्यमेव प्रसज्येतेत्यर्थः । प्रमाणप्रमेयस्वभावपर्यालोचनया वाक्यादेवापरोक्षं फलवदात्मतत्त्वविज्ञानमुत्पद्यतइत्युपपन्नमित्युपसंहरति । तस्मादिति । इह वाक्ये मुख्यग्रहे सति अवगतेर्यथार्थानुभवस्य वारणा निवारणं नास्तीत्यर्थः ॥ १०७ ॥

नन्वात्मनः कूटस्थत्वेन प्रतिपत्तृत्वानुपपत्तौ फलसंबन्धो नोपपद्यतइत्यस्यात्मग्रहे निवारणेत्याशङ्क्याह ।

(१०८) प्रत्ययी प्रत्ययश्चैव यदाभासौ तदर्थता ॥ ५२१ ॥
तयोरचितिमत्त्वाच्च चैतन्ये कल्प्यते फलम् ।

प्रत्ययीति । प्रत्ययी परिणाम्यन्तःकरणं प्रत्ययस्तत्परिणामश्च यदाभासौ यस्य चिदात्मन आभासो ययोस्तौ यदाभासौ तयोस्तदर्थता तच्छेषभूततेति यावत्, तस्मिंश्चैतन्ये चिदात्मनि तदाभासद्वारा फलं कल्प्यते, किं च तयोः प्रत्ययिप्रत्यययोरचितिमत्त्वाज्जडत्वादपि फलसंबन्धायोगात्फलस्यात्मसंबन्धः स्यादित्यर्थः ॥ १०८ ॥

निर्व्यापारस्यापि फलसंबन्धे दृष्टान्तमाह ।

(१०९) कूटस्थेऽपि फलं योग्यं राजनीव जयादिकम् ॥ ५२२ ॥
तदनात्मत्वहेतुभ्यां क्रियायाः प्रत्ययस्य च ।

कूटस्थेति । ननु राजतद्भृत्ययोः स्वस्वामिभावसंबन्धोऽस्ति राजनि जयादिसंबन्धनिमित्तमिह त्वध्यस्ताध्यस्ययोस्तादृशस्यादर्शनात्कथमयं दृष्टान्तः प्रकृतेः संगतः स्यादित्याशङ्क्यात्राप्यस्त्यधिष्ठानाधिष्ठेयभावः फलसंबन्धहेतुरित्याह । तदिति । हेतुभ्यामित्यत्र हेतुत्वाभ्यामिति भावप्रधानता योज्या, क्रिया ऽहमात्मिका वृत्तिः, प्रत्यर्थमयतीति व्युत्पत्तेः प्रत्ययोन्तःकरणं साभासमुच्यते, साभासवृत्तिवृत्तिमतोरिति यावत् । आत्मत्वं च हेतुत्वं चात्मत्वहेतुत्वे तस्य फलस्य न आत्मत्वहेतुत्वे तदनात्मत्वहेतुत्वे ताभ्यां तदनात्मत्वहेतुत्वाभ्यामिति योजना । तथा च क्रियाप्रत्यययोर्जडयोः फलस्वरूपत्वाभावात्फलोपादानत्वाभावाच्च तद्व्यापारनिबन्धनं फलतदधिष्ठान एव निर्व्यापारेऽपि कूटस्थे योग्यमित्यस्ति दृष्टान्तदार्ष्टान्तिकसंगतिरित्यर्थः ॥ १०९ ॥

शुद्धस्यात्मनः प्रमातृत्वं नास्तीत्यभिप्रेत्येदं विशिष्टप्रमातृकृतं फलं कूटस्थे उपचर्यतइति राजदृष्टान्तेनोक्तं, वस्तुतस्तु चित्प्रतिबिम्बस्यैव स्वोपाधिव्यापारेण स्वात्मन्यध्यस्तेन विद्यतएव प्रमातृत्वमिति चिदात्मन एवाविकृतस्य प्रतिबिम्बभावनिबन्धनः फलसंबन्ध इति सदृष्टान्तमाह ।

(११०) आदर्शस्तु यदाभासो मुखाकारः स एव सः ॥ ५२३ ॥
यथैवं प्रत्ययादर्शो यदाभासस्तथा ह्यहम् ।

आदर्शस्त्विति । येन मुखाकारेण विशिष्टतया आभासतइति यदाभासः सचादर्शो मुखाकारः स एव ग्रीवास्थ एव स न ततोऽन्यो यथा बिम्बप्रतिबिम्बयोरैक्यं लोके प्रसिद्धमित्यर्थः । एवं प्रत्ययादर्शोऽहंकारो यदाभासो येन चित्प्रतिबिम्बेनाभास्यतइति यदाभासः स चित्प्रतिबिम्बः परमात्मैव न ततोऽन्योऽहंकारेऽहमवभासगोचरस्तथा सत्यहं ब्रह्मेति वाक्यार्थधीर्घटतेऽध्यस्तांशापोहमात्रेण विना नात्मनः कर्मत्वमित्यर्थः ॥ ११० ॥

अयमेव पक्ष आदरणीय इत्याह ।

(१११) इत्येवं प्रतिपत्तिः स्यात्सदस्मीति च नान्यथा ॥५२४॥
तत्त्वमित्युपदेशोपि द्वाराभावादनर्थकः ।

इत्येवमिति । एवं सति चिदाभासाभ्युपगमे सति सदहमस्मि चकारादहं सदस्मीत्येवमाकारा प्रतिपत्तिः स्यान्नान्यथा आत्मन एवाहंकारस्यैव वा प्रमातृत्वाभ्युपगमे इति यतो ऽतो ऽयमेव मार्गो ऽनिच्छद्भिरप्यादरणीय इति योजना । एवमनभ्युपगमे न केवलं प्रतिपत्त्यनुपपत्तिरपि तूपदेशस्याप्यनुपपत्तिरित्याह । तत्त्वमिति । त्वमर्थानुवादद्वारेण हि तदर्थभाव उपदेष्टव्यस्तत्रानूद्यमानस्य चित्प्रतिबिम्बस्याभावे तदर्थोपदेशो निरालम्बनो ऽनर्थकः स्यादित्येतदाह । द्वाराभावादिति ॥१११॥

एतदेव विशदयति ।

(११२) श्रोतुः स्यादुपदेशश्चेदर्थवत्त्वं तथा भवेत् ॥ ५२५ ॥
अध्यक्षस्य न चेदिष्टं श्रोतृत्वं कस्य तद्भवेत् ।

श्रोतुरिति । तथा सतीत्यर्थः । तच्च श्रोतृत्वमध्यक्षादन्यत्र न संभवतीत्याह । अध्यक्षस्येति । न कस्यापीत्यर्थः ॥ ११२ ॥

यद्यप्यध्यक्षस्य नोपदेशस्तथापि न वैयर्थ्यमिति शङ्कते ।

(११३) अध्यक्षस्य समीपे स्याद्बुद्धेरेवेति चेन्मतम् ॥ ५२६ ॥
न तत्कृतोपकारो ऽस्ति काष्ठाद्यद्वन्न कल्प्यते ।

अध्यक्षस्येति । तत्र बुद्धेः श्रोतृत्व किमध्यक्षसंनिधिसत्तामात्रापेक्षमाहोस्वित्तत्कृतोपकारापेक्षमिति विकल्प्याद्यं प्रत्याह । न तदिति । तत्कृतः संनिहिताध्यक्षकृत उपकारो ऽतिशयो बुद्धेर्नास्त्येव यद्वत्काष्ठादिन्धनादेः संनिहिताद्बुद्धावतिशयो न कल्प्यते तद्वदित्यर्थः ॥ ११३ ॥

द्वितीयमुत्थाप्य दूषयति ।

(११४) बुद्धौ चेत्तत्कृतः कश्चिन्नन्वेवं परिणामिता ॥ ५२७ ॥
आभासे ऽपि च को दोषः सति श्रुत्याद्यनुग्रहे ।

बुद्धौ चेदिति । एवं सति आभासानभ्युपगमे अध्यक्षस्य परिणामिता ननु निश्चितं प्रसज्येतेत्यर्थः । अतो "रूपंरूपं प्रतिरूपो बभूव, एकधा बहुधा चैव दृश्यते जलचन्द्रव"दित्यादिश्रुतिस्मृत्यनुगृहीत आभासपक्षो निर्दुष्ट उपादेय इत्यभिप्रेत्याह । आभासेपि चेति । यद्वा अस्तु परिणामिताध्यक्षस्येति चेत्तर्ह्याभासेपि च प्रमाणसिद्धे ऽभ्युपगम्यमाने तव को दोषो भविष्यतीत्याहाभासेपीति ॥ ११४ ॥

आभासपक्षे चिदात्मनः परिणामप्रसङ्गाभावं वक्तुं शङ्कामुत्थापयति ।

(११५) आभासे परिणामश्चेन्न रज्ज्वादिनिभत्ववत् ॥ ५२८ ॥
सर्पादेश्च तथावोचमादर्शे च मुखत्ववत् ।

आभासे परिणामश्चेदिति । नैवमाभासस्य मृषात्वोपपत्तेरिति परिहारमाह । न रज्ज्वादीति । रज्ज्वज्ञानकल्पितस्य सर्पादेरज्जुनिभत्ववदनिदमात्मकस्य रजतादेरिदमात्मत्ववच्च चिदात्माज्ञानकल्पितस्य बुद्ध्यादेर्मृषैव चिन्निभत्वं, चकारादभोक्तृस्वरूपस्यात्मनो भोक्तृत्वाभासो मृषैवेति सूच्यते, यथैवं मृषात्वं तथा पूर्वमवोचमादर्शे च मुखत्ववन्मुखाकारत्ववदिति दृष्टान्तप्रणयेनेत्यर्थः । चकारान्मुखस्येवात्मनो ऽविकृतत्वमप्यवोचमित्यर्थः ॥ ११५ ॥

॥ शेष उत्तराङ्के ॥

---

## ॥ अथ बालभारतस्य ॥

॥ द्वितीयः सर्गः ॥

शुद्धज्ञानसुधाम्भोधिघनं द्वैपायनं स्तुवे ।
योऽवर्षद्विश्वहर्षाय श्रीभारतसुधारसैः ॥ १ ॥
चतुरङ्गचमूचारभारभुग्नावनिर्व्यधात् ।
भीमानुजोऽथ कौबेरीदिग्जयाय प्रयाणकम् ॥ २ ॥
स्फाराहंकारहुंकारभङ्गारिनभसोऽलसन् ।
अमित्रश्रीसमाकृष्टिमान्त्रिका इव पत्तयः ॥ ३ ॥
मुखरा हयहेषाभिः पताकाहस्तशिक्षया ।
रथाः स्वरथिनां कीर्तीर्नर्तयन्त इवाचलन् ॥ ४ ॥
स्वगतिस्पर्धिनीं छायामपि च्छादयितुं रुषा ।
पिधानाय रवेर्धूतधूलयो हलयोऽस्फुरन् ॥ ५ ॥
वल्गा: कलुषीकर्तुं द्विषत्कीर्तिपटीरिव ।
सम्रर्मदमषीधारावर्षिणः करिणां गणाः ॥ ६ ॥
जयश्रीवल्लिबीजानां राजयो लाजमुष्टयः ।
जिष्णौ घनरसासिक्ते क्षिप्ताः पुरपुरन्ध्रिभिः ॥ ७ ॥
कुलिन्दविषयप्रतावासस्तदनु वासविः ।
अपारपौरुषो भूरीन् जिगाय जगतीपतीन् ॥ ८ ॥
सुमण्डलादिभूमीन्द्रशौर्यनिद्रानिशागमः ।
सप्तद्वीपजयी जिष्णुर्ययौ प्राग्ज्योतिषं ततः ॥ ९ ॥
आलानितचमूनागमदस्यन्दकदम्बकैः ।
तत्रातिसुरभीचक्रे कृष्णः कृष्णागुरुद्रुमान् ॥ १० ॥
वृतश्चीनैः किरातौघैः सागरानूपवासिभिः ।
तत्र शक्रसुहृद्राजा भगदत्तो युधं व्यधात् ॥ ११ ॥

आरूढभगदत्तस्य सुप्रतीकस्य दन्तिन: ।
पपु:शिलीमुखा: पार्थकराम्भोजत्यजो मदम् ॥१२॥

कृत्वा कामं दिनान्यष्टौ कामरूपेश्वरो रणम् ।
धनंजये जयं पूर्वं स ततो व्यतरद्धनम् ॥ १३ ॥

सर्वपर्वतखर्वत्वकरद्विपवरोऽथ स: ।
उलूकपुरभूपालं बृहन्तं जितवान् युधा ॥ १४ ॥

रामदेवसुनामादिराजराजिजयोज्ज्वल: ।
सेनाबिन्दुं देवप्रस्थपुरे सत्याभिधं व्यधात् ॥१५॥

कृत्वा तु पौरवं ध्वस्तगौरवं पर्वतेश्वरम् ।
जिष्णुरुत्सवसंकेतांश्चक्रेऽनुत्सवकेतनात् ॥ १६ ॥

रागिण्य: स्मेरकाश्मीरै: श्लथीभूतपतिक्रिया: ।
काश्मीरभूमय: कामतप्तास्तमभजंस्तत: ॥ १७ ॥

अस्रैस्तेनारिनारीणां द्विरदानां मदाम्बुभि: ।
तेन मङ्क्षुमयो वङ्क्षुसरितस्त्रिगुणीकृता: ॥ १८ ॥

अवीरीकृतकाश्मीर: शौर्यमोहितलोहित: ।
दशमण्डलदण्डोग्रस्त्रिगर्तभटकर्तन: ॥ १९ ॥

गतोऽयमिति वैरीभसिंह: सिंहपुरं पुरम् ।
युधि चित्रायुधं भूपं तत्र चित्रायुधं व्यधात् ॥२० ॥

युग्मम् ।

अथ केलिचलाक्षीणां चक्षुश्चञ्चुलतां क्षिपन् ।
नव्यवैधव्यसंबन्धं कुर्वन् बाह्लीकयोषिताम् ॥२१॥

सिक्तकीर्तिलत: शिष्टभ्रूणहूणीदृगम्बुभि: ।
दरदोदरदीर्घोत्थनि:श्वासेद्धमह:शिखी ॥ २२ ॥

ययौ काम्बोजमोजस्वी रङ्गत्तुङ्गतुरंगमम् ।
लक्ष्मीलिप्सुरसौ जिष्णुरुत्तरङ्गमिवार्णवम् ॥ २३ ॥

विशेषकम् ।

बद्धा: सिषिचुरक्षोलवृक्षालीं तद्द्विपा मदै: ।
अपकारिष्वपि व्यक्तं महतामुपकारिता ॥ २४ ॥

कृत्वा सुदक्षिणं क्षीणशौर्यं काम्बोजभूपतिम् ।
नृपान् पार्थो जिगायाथ प्रागुदीच्यां दिशि स्थितान् ॥२५॥

ओज: परमकम्बोजलोहद्रोहभवं भजन् ।
दरदै: सह काम्बोजमजयत् पाकशासनि:[1] ॥ २६॥

हरित: स हरीनष्ट प्राप्य तत्प्रभुढौकितान् ।
रवेरप्यधिको रेजे तेज:क्रान्तजगत्त्रय: ॥ २७ ॥

एतद्विजयसंजातं यशोजातमिवात्मन: ।
अथारुक्षत् तुषाराद्रिं शुभ्रमभ्रंकषं विभु: ॥ २८ ॥

एषां नास्योचितं गात्रमास्यं गात्रोचितं न वा ।
इत्यत्र विस्मितास्तस्य तुरगान् वीक्ष्य किंनरा: ॥२९ ॥

आसन्नोत्तरदिग्दन्तिमदगन्धोद्धुरक्रुध: ।
नीरदेषु रदाघातं तत्र तद्द्विरदा व्यधु: ॥ ३० ॥

तत्र तद्रथचक्राध्वसमूढप्रवहत्पया: ।
सहस्रमुखतां मन्ये तदादि द्युधुनी दधौ ॥ ३१ ॥

तद्वीरा: शौर्यसोष्माणो यत्र यत्र ददु: पदम् ।
तत्र तत्रावहत् स्वच्छकीर्तिस्तेषां हिमच्छलात् ॥ ३२ ॥

चक्रे भूर्जसदृग्बिन्दुबन्धुरै: सिन्धुरैरध: ।
सोऽद्रिस्तदीयैर्दानालिध्वनिधिक्कृतकिंनरै: ॥३३ ॥

भिया शैलाधिदेवस्य दिग्गजैरप्यलम्भिताम् ।
तत्करिक्रीडया पीडां सेहिरे देवदारव: ॥ ३४ ॥

जित्वा स निष्कुटं शैलं तं क्रान्त्वा श्वेतपर्वतम् ।
देशे किंपुरुषावासे द्रुमपत्रं ततोऽजयत् ॥ ३५ ॥

स देशे हाटके कीर्तिशुभगं भावुकोद्यम: ।
प्रसह्य गुह्यकान् जित्वा सरो मानसमासदत् ॥ ३६ ॥

तत्र गजेद्गजालोकादस्थानाब्दभयोत्थितै: ।
यशोभिरर्जुनस्येव नभश्छन्नं सितच्छदै: ॥ ३७ ॥

सुवर्णसिकताखेलै: स्वर्णपद्मावतंसनै: ।
वीरास्तत्र बभुर्मूर्तदीप्ततेजोवृता इव ॥ ३८ ॥

स्फटिकाद्रौ तटीबिम्बद्विगुणायितसैनिक: ।
ततोऽलकापुरीद्वारि स निवासं न्यवेशयत् ॥ ३९ ॥

तटीषु वर्णसादृश्याददृश्यदशनानिह ।
निजबिम्बान् वशाबुद्ध्या मुदा तद्दन्तिनोऽस्पृशन् ॥४०॥

कर्णानिलोल्लसद्दानमखीबिन्दुनिवेशत: ।
तद्द्विपैरलकावप्रे तत्प्रशस्तिरलिख्यत ॥ ४१ ॥

यच्छन् धनान्यसंख्यानि तस्य स्वपुरभङ्गभी: ।
तदा धनद इत्याख्यां दधौ तथ्यां धनाधिप: ॥ ४२ ॥

जित्वा गन्धर्वदेशं स गन्धर्वनगरेऽग्रहीत् ।
हयांस्तित्तिरिकल्माषान् मण्डूकाख्यशिलोद्भवान् ॥ ४३ ॥

उत्तरं हरिवर्षं तु जिगीषुरथ फाल्गुन: ।
दिव्यैर्नरै: करान् दत्त्वा बहुरत्नानि वारित: ॥४४॥

1 हृषीकेषु हृषीकेशविक्रमस्तु क्रमाढ्ययौ इति पा० ।

सशंभुनन्दनाभ्यासविलासस्तम्भविभ्रमम् ।
आरोपयज्जयस्तम्भमिह निर्दम्भविक्रमः ॥ ४५ ॥
इत्युत्तरहरिं जैत्रः शंकरेणापि शङ्कितः ।
उत्ततार स कैलासशैलादैलविलार्चितः ॥ ४६ ॥

इत्युत्तरदिग्जयः ।

बलान्यथ बली भीमो रसादुद्धूषितैरसौ ।
वेशैरुच्छ्रितमाङ्गल्यदूर्वैः पूर्वदिशेऽदिशत् ॥ ४७ ॥
जयलक्ष्मीविलासाद्रिर्वाहिनीं वाहयन्नयम् ।
भीमोऽचलद्गदाशङ्खशृङ्गारः स्यन्दनाश्रयः ॥ ४८ ॥
अस्य प्रातःप्रयाणेऽभूत् पुरः कन्येव पूर्वदिक् ।
मौलौ विजयकल्याणकुम्भवद्बिभ्रती रविम् ॥ ४९ ॥
पुण्डरीकैः सडिण्डीरस्तुरंगैरुत्तरङ्गितः ।
भीमाननेन्दुतेजोभिर्जगर्ज बलसागरः ॥ ५० ॥
पूर्वदिग्विजयेऽपूर्वमेव पूर्वादितस्तदा ।
अप्रतापीकृतः सैन्यैः शूरो दूरोत्थरेणुभिः ॥ ५१ ॥
भूभृतः कटकाभोगवाहिनीं वाहिनीं द्विधा ।
लङ्घमानो मदोत्तालान् पाञ्चालान् प्राप मारुतिः ॥५२॥
निष्प्रपञ्चान् स पाञ्चालान् गण्डकान् दण्डदायिनः ।
विदेहान् देहदान् कृत्वा दशार्णेषु ततोऽविशत् ॥५३॥
निरायुधं युधा जित्वा सुशर्माणं दशार्णपम् ।
स न्यधाद्विदिशापुर्यां यशस्तम्भमिव ध्रुवम् ॥५४॥
प्रशस्तिं तत्र तत्सैन्यवृषा वेत्रवतीतटे ।
विषाणैरलिखन्नीलैरत्नशैलाश्मसु द्विपाः ॥ ५५ ॥
एनं सेनापतिं कृत्वा सुशर्माणं ततोऽजयत् ।
सोऽश्वमेधेश्वरं पूर्वदेशाधीशं नरेश्वरौ ॥ ५६ ॥
सुकुमारसुमित्राख्यौ पुलिन्दनगराधिपौ ।
वशीकृत्य निवासान् स चेदिदेशे न्यवेशयत् ॥ ५७ ॥
शिशुपालमहीपालप्रौढप्रेमगुणैरसौ ।
आलानितो गज इव तत्र त्रिंशन्निशाः स्थितः॥५८॥
श्रेणिमन्तं कुमारेषु कोशलेषु बृहद्बलम् ।
विनिर्जित्य स तेजस्वी ययावुत्तरकोशलान् ॥ ५९॥
सङ्गराभङ्गुरैरीशैः सर्वदा तत्र गर्वितम् ।
अलज्जयदयोध्यां स दीर्घप्रज्ञं नृपं जयन् ॥ ६० ॥
सरयूसरिता तत्र तद्दन्तिमदमिश्रया ।
स्वर्धुनी प्राप संभेदं कालिन्द्येव द्वितीयया[१] ॥ ६१ ॥
गोपालकच्छराजादिराजराजीवचन्द्रमाः ।
जगामोद्दामसंग्रामरसी वाराणसीमसौ ॥ ६२ ॥
जित्वा सुमन्तुनामानमुद्दामानमिलापतिम् ।
कीर्तिः प्रतेने तेनेह द्वितीयेव द्युवाहिनी ॥ ६३ ॥
सोऽत्र विश्वेश्वरं नत्वा प्रतापयशसी दधौ ।
तद्भालनेत्रबालेन्दुप्रभयेवाद्भुतप्रभे ॥ ६४ ॥
तेन तेजोऽग्निभिर्मत्स्यदेशादिक्षितिपेन्धनैः ।
चिरं देहे विदेहेषु जनको मिथिलापतिः ॥ ६५ ॥
कृष्टोग्रधन्वनो जाग्रज्जनके मिथिलापुरे ।
रामस्येवाभवत् तस्य करग्रहमहोत्सवः ॥ ६६ ॥
अथेन्द्रपर्वतं सुह्मान् प्राच्यसुह्मान् सपक्षकान् ।
जिगाय मागधान् दण्डदण्डधारधराधवौ ॥६७॥
गिरिव्रजे जरासंधसुतं कृत्वा करप्रदम् ।
स तैरेव वृतः सर्वं गौडदेशानुपाद्रवत् ॥ ६८ ॥
कम्पयन् भूभृतः सैन्यैः स्थावरान् जङ्गमानपि ।
ततः प्रापैष गौडेषु चम्पां निष्कम्पसंपदम् ॥ ६९ ॥
तं प्राप्तविषयं वीक्ष्य विषमायुधविग्रहम् ।
स्त्रीलोक इव चम्पायाः कम्पार्तः पार्थिवोऽभवत् ॥ ७० ॥
उत्तालकर्णभूपालावकर्णनरतस्ततः ।
पौण्ड्रकं रणसेवासु वासुदेवं जिगाय सः ॥ ७१ ॥
कृती कौशिककच्छादिदेशक्रमितविक्रमः ।
रङ्गदब्धितरङ्गेषु वङ्गेषु क्रमतोऽगमत् ॥ ७२ ॥
तस्याङ्घ्रिपूजानिर्मुक्तमुकुटेन महौजसः ।
आज्ञा समुद्रसेनेन राज्ञा मूर्ध्नि न्यधीयत ॥ ७३ ॥
चञ्चद्वीचिकरोत्क्षिप्तैस्तस्य नानामणिव्रजैः ।
गाम्भीर्यनिर्जितः पूर्वसागरोऽपि करं ददौ ॥७४॥
स गङ्गासागरन्यस्ते जयस्तम्भे यशोगजम् ।
स्वयमाकलयामास पूर्वदिक्करिजित्वरम् ॥ ७५ ॥
दीप्तस्तस्य प्रतापाग्निस्तत्र सिन्धूर्मिमारुतैः ।
उद्यान्त्यनुदिनं यस्य स्फुलिङ्गा इव भानवः॥७६॥
इत्यशेषां दिशं जित्वा ववलेऽसौ बलाम्बुधिः ।
दोर्दण्डदण्डितोद्दण्डमण्डलाधिपमण्डलः॥७७॥

१ स्वर्धुनीप्राप्तसंभेदकालिन्द्येव, इति पा० ।

इति पूर्वदिग्जयः ।

सहदेवोऽपि चतुरं चतुरङ्गचमूवृतः ।
वीरो दक्षिणदिग्देशजैत्रीं यात्रामसूचयत् ॥ ७८ ॥

शृङ्गान्तान् पातयंस्तुङ्गान् गिरीनरिमहीभृताम् ।
अशक्याश्रयणांश्चक्रे तस्य निश्शाणनिस्वनः ॥७९॥

हरिचामरकुम्भीन्द्रकर्णस्पन्दनकेतुजैः ।
क्रमाच्चमूरजो निन्ये मरुद्भिः परमं नभः ॥८०॥

शूरसेनेषु विद्वेषिशूरसेनां रसेन सः ।
अजयज्जयदन्तीन्द्रालानगोवर्धनाचलः ॥ ८१ ॥

मथुरानगरीनाथनारीभिः स जयोद्धुरः ।
सवैलक्ष्यं सहर्षं च दृष्टः सौभाग्यभाग्यभूः ॥८२॥

वृन्दावनाधिदेव्यस्तत्कुम्भिकुम्भैस्तदास्मरन् ।
कृष्णालोकोल्लसद्गोपीपीनवक्षोजविभ्रमान् ॥ ८३ ॥

तस्य द्विपमदैः श्यामैः शत्रुस्त्रीसाञ्जनाश्रुभिः ।
पृथक्प्रवाहिभिस्तत्र त्रिस्रोता यमुनाप्यभूत् ॥ ८४॥

मत्स्यराजाहिराजादिदेशक्लेशोपदेशकः ।
चर्मण्वतीसरित्तीरभूपभोजाब्जकुञ्जरः ॥ ८५ ॥

अथायमुच्छलद्धूलिच्छायासुखबलद्बलः ।
ययाववन्तिदेशाय वह्निदेशीयविक्रमः ॥ ८६ ॥

युग्मम् ।

विन्दानुविन्दराजेन्द्रद्वयीजयमयीमिव ।
स शिप्रापुलिनोत्सङ्गरङ्गे कीर्तिमनर्तयत् ॥ ८७ ॥

अयमुज्जयिनीवारनारीनेत्रोत्पलार्चितः ।
तत्रानर्च महाकालं चञ्चद्रोमाञ्चकञ्चुकः ॥ ८८ ॥

माहिष्मत्यां गतो नीलनृपेण कलयन् कलिम् ।
स व्यधाद्रुधिरै रेवामपि कोपारुणामिव ॥ ८९ ॥

नीलस्य पूर्वजप्रत्तवरबद्धोऽग्निरज्वलत् ।
साहाय्यायाथ माद्रेयपृतनान्तः प्रतापवत् ॥९०॥

स्वं विलोक्यानलज्वालामालाभिर्विह्वलं बलम् ।
सहदेवः शुचिर्भूत्वाब्रवीदिति हुताशनम् ॥ ९१॥

समारम्भस्त्वदर्थोऽयं स्वाहाप्रिय नमोऽस्तु ते ।
मुखं त्वमेव देवानां यज्ञविघ्नाय नार्हसि ॥ ९२ ॥

इत्यादिस्तुतिभिस्तस्य प्रशान्ते हव्यवाहने ।
मौलिना नीलभूपालः पालयामास शासनम् ॥९३॥

त्रैपुरं करदं कृत्वा नश्वरं पौरवेश्वरम् ।
कौशिकान् विवशीकृत्य सुराष्ट्रायां ततोऽगमत् ॥९४॥

सुराष्ट्रेशमतोऽजैषीन्नृपं भोजकटे पुरे ।
रुक्मिपुत्रयुतं शक्रसुहृदं भीष्मकाभिधम् ॥ ९५ ॥

मिलित्वाथ परप्रेमशालिनो वनमालिनः ।
गत्वा चकार सूर्पारदेशं वशगतं बली ॥ ९६ ॥

दण्डकेषु जयन् भूपान् पूजयन् राघवाश्रमान् ।
गतोऽथ सागरद्वीपं स निषादविषादकृत् ॥ ९७ ॥

छिन्नप्रावरणान् कुर्वन् कर्माप्रावरणान् रणे ।
द्विषां कालसमः कालमुखान् कालमुखान् सृजन् ॥९८॥

मुरवीपुरवीरालिजयशालियशस्ततिः ।
दीप्रताम्राह्वयद्वीपनृपदीपसमीरणः ॥ ९९ ॥

रामकाद्रिभरस्तम्भीकारिसेनारजश्चयः ।
रणाब्धौ शरजालेन गृह्णन् भूपं तिमिंगिलम् ॥ १००॥

अयोध्येष्वेकपादेषु दण्डदेषु दयापरः ।
उत्कटः करहाटादिदेशात्तकरहाटकः ॥ १०१ ॥

इत्थं युधिष्ठिराज्ञां स राज्ञां मूर्ध्नि किरीटयन् ।
मलयाद्रितटीं प्रापश्रीखण्डद्रुममण्डनाम् ॥१०२॥

पञ्चभिः कुलकम् ।

तत्र बर्हातपत्राणि दृष्ट्वा केकिविशङ्किभिः ।
चन्दनाः पन्नगैर्मुक्ता ययुस्तत्सैन्यसेव्यताम् ॥ १०३ ॥

तत्र तस्येभनिर्भग्नचन्दनस्यन्दसिन्धुषु ।
जलकेलिं विलेपं च समं चक्रुश्चमूचराः ॥ १०४ ॥

खेलंस्तमालमालासु हेलामेलासु संसृजन् ।
तत्र रङ्गन् लवङ्गेषु तमसेवत मारुतः ॥ १०५ ॥

तत्राद्भुतभयोद्रेकज्वरजर्जरविग्रहः ।
तेने कोदण्डपाण्डित्यं न पाण्ड्यः पाण्डवं प्रति ॥ १०६ ॥

तत्रेभभग्नशुक्त्युत्थव्यक्तमुक्तावरावलिः ।
प्रशस्तिपट्टिकेवास्य ताम्रपर्णी सरिद्बभौ ॥ १०७ ॥

दुर्दुरालसर्त्सिंहस्त्रीगर्भभिद्गटहुंकृतिः ।
अथापैष गिरिं सह्यमसह्यः प्रतिपार्थिवैः ॥१०८॥

आर्द्रास्तद्दन्तिदानौघैर्मेचकैस्तदुपत्यकाः ।
रामास्त्रताडिताम्भोधिसद्योमुक्ता इवाबभुः ॥ १०९ ॥

बिडौजोनिबिडौजोभिर्भटैर्द्रविडभूमिषु ।
पराञ्चि काञ्चीनाथस्य चक्रे चक्राणि स क्रमात् ॥ ११०॥

चोडीनेत्रपुटक्रोडीकृतैरपि पयःकणैः ।
शान्तश्चित्तान्तरे तस्य कोऽप्यहो कोपपावकः ॥१११॥

तद्बलैस्तरत्कुम्भिसेतुभिः स्तम्भिताम्भसः ।
कावेर्या विरहारम्भमम्भोधिर्लम्भितः क्षणम् ॥११२॥

केरलीचिकुरैरेव कुटिलैः केरलेऽथ सः ।
क्षणं विभ्रान्तहृदयो विदधे न विरोधिभिः ॥११३॥

मुरलातीरवानीरकुञ्जसंकेतकेतने ।
कान्ता केरलनाथस्य लक्ष्मीरभिससार तम् ॥ ११४॥

उपद्रेऽथ तन्नृपस्तैर्णबाष्पधौतपदाम्बुजः ।
महानदीनदीपद्मैरानर्च पुरुषोत्तमम् ॥ ११५ ॥

ततोऽन्ध्रेतिसप्रसप्तिसप्रयस्तस्य सप्तयः ।
सप्तगोदावरीतीरे मुमुचुर्मार्गजं रजः ॥ ११६ ॥

नीरन्ध्रयन् दिवो रन्ध्रमन्ध्रभूपजयोद्भवैः ।
यशोभिः सोऽत्र भावेनानमद्भीमेश्वरप्रभुम् ॥११७॥

ततः कुन्तलकर्णाटभूपाभ्यां भीमविक्रमः ।
शासनं ग्राहयामास पाकशासनशासनः ॥११८॥

हसन् सैन्यार्तभूभुग्नं भुजगेशं भुजेन सः ।
स्फूर्जत्त्वक्स्फुलिङ्गेभ्यः कलिङ्गेभ्यस्ततोऽचलत् ॥११९॥

निस्वाननिबिडस्वानप्रस्तसानुततिच्छलात् ।
कलिङ्गेषु महेन्द्राद्रिस्तं तुङ्गं त्वजितोऽनमत् ॥१२०॥

तस्मिन् नाराचधाराभिः कलिङ्गेशः सुरेशवत् ।
चिरं ववर्ष विस्तीर्य गर्जतो रदिवारिदान् ॥ १२१ ॥

करवालेन कुम्भिभ्यः कृष्ट्वा मुक्ताफलान्यथ ।
बीजानीव यशोवल्लेरुप्तवान् भुवि पाण्डवः ॥ १२२ ॥

धाराद्वयाग्रभिन्नेभकुम्भमुक्तावलिच्छलात् ।
जयश्रीस्तत्कृपाणस्य वरमालामिवाक्षिपत् ॥ १२३ ॥

पदपद्मद्वयं तस्य लक्ष्मीसद्म स्वयं ततः ।
मुक्ता कालं कलिङ्गेशस्ततः केशैरमार्जयत् ॥ १२४ ॥

तत्र नीरधितीराग्रपूगाभोगिलतादलैः ।
तद्वीरैः किंचिदस्मारि नारिकेलीफलेक्षणात् ॥ १२५ ॥

जित्वा रोमांश्चयवनरुरुकच्छादिभूपतीन् ।
दिदीपे सिंहलद्वीपे स महोभिर्महाबलः ॥ १२६ ॥

तत्र द्विपरदोत्खातकम्प्यमानमहावपुः ।
तस्मै भियेव भूरीणि ददौ रत्नानि रोहणः ॥ १२७ ॥

द्विरदोदस्तकर्पूरतरुणीर्णाभिरावृतम् ।
तत्र कर्पूरपारीभिस्तत्कीर्तिभिरिवाम्बरम् ॥ १२८ ॥

श्रीरोहणाश्रमागस्त्यसेवार्थी तत्र संस्थितः ।
सिंहलेशार्चितः प्रैषील्लङ्कां प्रति घटोत्कचम् ॥ १२९ ॥

श्रीरामविक्रमचमत्कारविस्मारणै रणैः ।
अक्षोभितः स रक्षोभिर्वशीचक्रे विभीषणम् ॥ १३० ॥

युधिष्ठिरजयस्तम्भसमारोपवशादसौ ।
त्रिकूटमपि शैलेन्द्रं चतुष्कूटमिव व्यधात् ॥ १३१ ॥

लङ्कावस्कन्दकल्याणैस्तडित्वन्तोऽम्बुदा इव ।
यशोऽवर्षन् सुवेलाद्रौ तच्चमूरजनीचराः ॥ १३२ ॥

इत्थं जयजुषा तेन समर्थेन समन्वितः ।
ववले कलयन् कीर्तिमर्जुनामर्जुनानुजः ॥ १३३ ॥

इति दक्षिणदिग्जयः ।

नकुलस्तु महीपालकुलस्तुतपराक्रमः ।
प्रपञ्चयंश्चमूवीचीं प्रतीचीमभिचेलिवान् ॥ १३४ ॥

परिभ्रष्टयशःपुष्पा मरुतेव प्रसर्पता ।
कम्पयांचक्रिरे तेन के न भूपतिभूरुहः ॥ १३५ ॥

अन्धानां सैन्यधूलीभिर्बधिराणां च भेरिभिः ।
निःशङ्कं द्विषतां लक्ष्मी रसादभिससार तम् ॥१३६॥

विपक्षपक्ष्मलाक्षीणां क्षीणां कुर्वन् मनोरतिम् ।
श्रीकार्तिकेयभवनं रोहीतकमुपाद्रवत् ॥ १३७ ॥

दिग्धाराभयशोरोही रोहीतकपुरस्पृशाम् ।
शूराणां द्रावयन् मत्तमयूराणां रणोत्सवम् ॥ १३८ ॥

चमूभरनमद्भूमिदूरोन्नतकुलाचलः ।
महाक्षकृतावेशं मरुदेशं विवेश सः ॥ १३९ ॥

युग्मम् ।

वशिष्ठाश्रमजैर्वृक्षैरर्बुदाद्रेः सदाफलैः ।
तत्सैन्यास्तापममुचन् बहिरन्तश्च मार्गजम् ॥ १४० ॥

स वशिष्ठमखोत्थानां विश्वामित्रजितामपि ।
तत्र धात्रीभूतामन्यैरनुच्छिष्टं पपौ यशः ॥१४१॥

तस्य सैन्येभदानार्द्रे हतवीरास्रपङ्किले ।
द्विषत्कान्ताश्रुभिर्नद्यो जाङ्गलेऽपि स्थलेऽवहन् ॥१४२॥

शैरीषकान् शिबीन् हैमांस्त्रिगर्तानर्तमालवान् ।
पञ्चकर्वटकान् मध्यवाटधानद्विजान् जयन् ॥ १४३ ॥
अपि ग्रीष्मज्वलद्दावपावकोग्रमहः सह: ।
पुष्करारण्यलोकोऽथ प्रतापैस्तेन तापित: ॥ १४४ ॥
युग्मम् ।
तद्बलाम्भोनिधेर्लोकलङ्घनाय प्रसर्पत: ।
मेनेऽम्भोनिधिरेवाये मर्यादावल्लिवैभवम् ॥१४५॥
दहता कूलभूपालान् क्रान्तस्तत्तेजसार्णव: ।
मेनेऽग्निमौर्वं सर्वाङ्गव्यापिनं स्वजयोत्थितम् ॥ १४६ ॥
तत्र तालासवोन्मत्ताश्चलत्प्रतिबलभ्रमात् ।
वीरा बिम्बितसैन्यासु सागरोर्मिषु धाविता: ॥१४७॥
अथैष मत्तदन्तीव भूरुहानिव भूभुज: ।
सरस्वतीसरित्कूलबद्धमूलानमूलयत् ॥ १४८ ॥
गर्वं पार्वतिकेषु खर्वमकृत प्रापञ्चयन् पञ्चता-
सूयां पञ्चनदेशितुर्व्यजयत द्रागुत्तरज्योतिषम् ।
दर्पणामरपर्पटक्षितिपतिं विश्लेषयन् निर्ममे
खेदं दिव्यकटाधिपस्य रसवान् निर्व्रीडयामास स: ॥१४९॥
दोर्भारानथ हारहूणनृपतेर्भङ्क्त्वा प्रभासाभिध-
क्षेत्रालंकृततीर्थसार्थनमनै: कृत्वा कृतार्थं वपु: ।
देवं द्वारवतीपतिं प्रियवचस्तोमातुलं मातुलं
शल्यं मद्रनरेन्द्रमार्द्रमनसौ स प्रेमभिर्निर्ममे ॥ १५० ॥
म्लेच्छानुच्छिद्य कृत्स्नानमरगिरिवरान् वल्लवेन्द्राय दत्त्वा
दारिद्र्यं बर्बरेशोपशमनशमन: पूर्वदिग्जैत्रयात्र: ।
अप्येतस्यां प्रतीच्यामयमुदयगिरि: स्वीयतेजोयश:श्री-
भानुप्रालेयभासोरजनयत यशस्तम्भमम्भोधितीरे ॥ १५१ ॥
इति पश्चिमदिग्जय: ।
मध्येबन्धु प्रथितविजयस्तम्भवेदीचतुष्कं
दीप्रे तेज:शिखिनि विधिना वर्तयन् मण्डलानि ।
यत्नप्रेप्सु: प्रसृमरयशश्चन्दनस्यन्दशुभ्रा-
मित्थं पृथ्वीं सुकृततनय: पर्यणैषीन्मनीषी ॥१५२॥
अथामी सामीरिद्युपतिसुतनासत्यतनुजा
जगज्जित्वोपेता: सुकृतसुतमानम्य मुदितम् ।
नगर्या: पर्यन्तक्षितिषु निखिलाशाजयमय-
श्रियां लीलाशैलानिव कनककूटानघटयत् ॥१५३॥

भ्रष्टस्पष्टापरनरपतिश्रेणिशुभ्रातपत्र-
श्छत्रं हैमं जगति सकले लालयन्नेकमेव ।
ताराभारव्यपगमभवद्वैभवो भानुबिम्ब-
भ्राजी भूमौ दिवस इव स द्योतयामास वीर: ॥ १५४ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते श्री बालभारतनाम्नि महाकाव्ये वीराङ्के सभापर्वणि सर्वदिग्विजयो नाम द्वितीय: सर्ग: ॥ २ ॥ :: ::

## ॥ अथ बालभारतस्य ॥

॥ तृतीय: सर्ग: ॥

अस्तु वस्तुषु पराशरात्मज-
ज्ञानदुग्धजलधि: स शुद्धये ।
नीयते बत यदेकबिन्दुना
भारतेन विलयं भवानल: ॥ १ ॥

सोदरैरथ वृकोदरादिभि-
स्तैरधिष्ठितजयो युधिष्ठिर: ।
आदधौ वशगदिक्चतुष्टय-
स्तुष्टये मखभुजां मखोद्यमम् ॥ २ ॥

एष एव समय: समुन्नतिं
यावदापतति तावदापतत् ।
श्रीपुराणपुरुष: पुर: पुरी-
भर्तुरस्य चतुर: क्रतुक्रमे ॥ ३ ॥

स्फाटिके सदसि संनिवेश्य तं
क्षीरनीरधिनिवेशविस्मरम् ।
विश्वपूज्यमभिपूज्य चावदत्
पुंगव: क्रतुकृतां कृताञ्जलि: ॥ ४ ॥

त्वत्प्रसादमदसीमया मया
निर्जितं जगदजेयमप्यद:[1] ।
तामसं सृजति दिक्षु भङ्गुरं
पङ्करप्यरुणसेवयारुणा: ॥ ५ ॥

तत्क्षणं कलुषितात्मनां रणे
भूभृतामपहता: प्रभा इव ।

१—दशेव—इति पा० ।

भान्ति कान्तिसमदा मदालये
रुक्मिणीवर न रुक्मपर्वताः ॥ ६ ॥

ध्यातया जगदिन त्वदाज्ञया
स्तम्भितो मणिकदम्बदम्भतः ।
आजगाम मम धाम मानिनां
नाम धामदहनो महीभुजाम् ॥ ७ ॥

यैर्विलासगिरिभिर्जयश्रियां
जिग्यिरे चकितदिग्गजा दिशः ।
तान् मम व्यदधत क्षमाभृतः
प्राभृतं भृशमसंनिभानिभान् ॥ ८ ॥

येऽश्ववारमनसा समं नभ-
स्युल्लसन्ति समरे समन्ततः ।
युक्तमेव मयि तान् ददुर्नृपा-
श्चित्तसेवितमदघ्नयो हयान् ॥ ९ ॥

इत्यमी मम परोपकारिता-
भासुराशयविभूतिराशयः ।
त्वत्प्रसादवशतः परःशत-
क्ष्माभुजंगजययोनयोऽभवन् ॥ १० ॥

तद्विश त्रिदशशर्मकर्मणे
यत् करोमि समयज्ञ संप्रति ।
त्वं सुमित्रमसि मे सुमन्त्रिते
सद्गुरुः सदुपदेशसंसदि ॥ ११ ॥

सन्ति सन्ततमपि त्वदीक्षणा-
द्राजसूयमखराजयोऽपि मे ।
किंतु तातवचनादिहस्पृहा
सापि तु त्वदनुबन्धबान्धवा ॥ १२ ॥

मङ्क्षु मामनुमनुष्व तत्क्रतौ
गच्छ मेऽद्भुतमहाः सहायताम् ।
दीक्षितो भवतु वा भवान् भव-
द्भारतीभरपरो भवाम्यहम् ॥ १३ ॥

इत्युदीरितवति प्रभौ भुवः
सत्यमभ्यधित विष्टपाधिपः ।
लोकदृक्कुमुदवृन्दसंमद-
द्योतमानदशनेन्दुमण्डलः ॥ १४ ॥

त्वं क्रतुं कुरु कृतिन् भवत्कृते
मत्कृतेऽपि च न किंचिदन्तरम् ।
एकमेव हि यशोऽब्जबोधने
भात्यहर्पतिमहः समूहयोः ॥ १५ ॥

दिग्जितस्त्वदनुजास्त्वदुत्सवे
निर्विशेषमतिरेष तेष्वहम् ।
इत्यमी ददतु पञ्च पञ्चतां
तस्य यस्त्वयि न कर्मकृन्नृपः ॥ १६ ॥

एवमुक्तवति देवकीसुते
सेवकीकृतसमस्तराजकः ।
सैष धौम्यमुनिना मुनीन् नृपः
सोदरैरपि नृपानजूहवत् ॥ १७ ॥

सिद्धसिन्धुसुतमुख्यबन्धुभि-
र्बन्धुरैरनुगतोऽनुबन्धतः ।
सोममूर्तिरयमष्टमूर्तिभृ-
न्मूर्तितामधित दीक्षितो नृपः ॥ १८ ॥

धौम्यदिष्टनकुलाग्रजद्विज-
स्तोमसंस्तुतसमस्तवस्तुनि ।
यज्ञकर्मणि पृथात्मजो यथौ-
चित्यमादिशदथावनीधवान् ॥ १९ ॥

सज्जनेष्वकृत भोजनक्रिया-
शोधनान्यथ सुयोधनानुजः ।
भूमिदैवततिप्रतिग्रहे
साग्रहोऽजनि कृपीतनूद्भवः ॥ २० ॥

पूजनानि जनयन् नयोज्ज्वलो
राजराजिषु रराज संजयः ।
कृत्यवस्तुनि मनो धुनीजनि-
द्रोणयोरजनि याज्ञिकेऽधिकृत् ॥ २१ ॥

दक्षिणास्वजनि दक्षिणः कृप-
स्तत्त्वमैक्षि विदुरेण धार्मिकम् ।
अर्हणग्रहणगौरवं नृपः
कौरवोऽभजत सर्वभूभुजाम् ॥ २२ ॥

नारदादिमुनिराजिराजिते
केशवादिकनरेशपेशले ।

ब्रह्मतामधित तत्र सत्यव-
त्यङ्गजस्त्रिजगदर्चितः क्रतौ ॥ २३ ॥
यज्ञवेदिमनुसंस्कृतामुपा-
ध्यायपङ्क्तिभिरथो यथोचितम् ।
आजगाम सह राजकैरसौ
राजसूययजमानशंकरः ॥ २४ ॥
सा जगत्त्रयजनौघपावनी
नूनमात्मनि पवित्रताकृते ।
तत् पदं त्रिपथगाभ्यगादनू-
चानचक्रगुणितत्रयीमयी ॥ २५ ॥
भावसौरभभृतो विभावसौ
मन्त्रपूतमुपहूतदेवताः ।
जुह्वति स्म बत बह्वपि द्विजा
द्रव्यमण्डलमखण्डशक्तयः ॥ २६ ॥
पालनोद्यततृतीयपाण्डव-
प्रत्तखाण्डवरसौघनीरुजा ।
पावकेन पपिरे परंपराः
सर्पिषामिह वपुःप्रपुष्टये ॥ २७ ॥
हूयमानमुपहूय सज्जिता
वीक्ष्य हव्यममरा हविर्भुजि ।
आननोत्थममृतं मुहुर्मुहुः
सावहित्थमहतस्पृहाः पपुः ॥ २८ ॥
उद्धुतेऽपि सति धूमसंचये
लोचनैरनिमिषैर्निरीक्षितम् ।
गृह्णते स्म हविराहुतं द्रुतं
पावके निपतदेव देवताः ॥ २९ ॥
नीरसाभिरमृतामृतद्युतौ
किंच नीरुचिभिरप्सरोऽधरे ।
तत्र कश्चन सुधाचयस्त्रय-
स्त्रिंशता त्रिदशकोटिभिः पपे ॥ ३० ॥
तत्र वल्गनरसाय वल्गता
संततं द्युपतिना वियोगिनी ।
द्यौरराजत मखाग्निकेतन-
श्रेणिदम्भकृतवेणिबन्धना ॥ ३१ ॥

दानवारिधुतदानवैर्यथा-
स्वादितैव विबुधैः सुखं सुधा ।
धौम्यधूतलघुजातिभिस्तथा-
भुज्यतान्नममृतं द्विजातिभिः ॥ ३२ ॥
पावकैकमुखदुःखभोजनात्
तृप्तिरापि नियतं न दैवतैः ।
तत्र तै रसवतीरसामृतं
पातुमित्यजनि भूमिदैवतैः ॥ ३३ ॥
संभृतैरवभृथैकमङ्गलैः
संगतस्त्रिजगतः प्रियंकरः ।
बन्धुबन्धुरितसंनिधिर्व्यधा-
द्दानवर्त्मनि मनो जनाधिपः ॥ ३४ ॥
स्पष्टतामटतु रत्नमण्डलं
दानहेतुवसुधा च वर्धताम् ।
इत्ययं द्विजकरेषु कल्पना-
वारि वारिनिधिशेषकं ददौ ॥ ३५ ॥
अत्र दानरसिके रसापतौ
स्वायतायभरभाजि के वयम् ।
इत्यभावि भुवि कल्पपादपै-
रस्य दानजलसेकतोऽपि न ॥ ३६ ॥
भूमिदेवतकुलाय भूमिकां
दातुमेव दधतो निजे भुजे ।
रुद्धभूरितरभूमयस्रजं
कुर्वते स्म हृदि तस्य भूधराः ॥ ३७ ॥
भूमिदेवनिवहाय भूरिभि-
र्भूरदायि वसुभिः सहामुना ।
इत्यसौ वसुमतीति नूतनं
नाम नूनमजनिष्ट विष्टपे ॥ ३८ ॥
राजक्षानि मखशेषया भुवा
स्वल्पयाप्यथमपूजयद्यया ।
तामिमां ननु नितान्तभारिणीं
मौलिभिर्धृतमगृह्णतानतैः ॥ ३९ ॥
आदितो यदसुवद्धृतं वसु
क्ष्माधवैस्तदुपदीकृतं मुदा ।

आददे स बहुमानतः कृती
मार्गणेषु तृणवद्ददौ पुनः ॥ ४० ॥
पूर्यतामुपदया मम क्रतुः
स्पर्धयेति यददुर्धनं नृपाः ।
तद्बभूव खलु तस्य भूपते-
रेकमार्गणकदानवर्णिका ॥ ४१ ॥
दातुमिष्टमजनिष्ट तस्य यत्
तद्व्यचिन्ति मनसापि नार्थिभिः ।
चिन्तितं न रसनास्वधारि तैः
किंतु दानमजनि त्रपाधिकम् ॥ ४२ ॥
याचको यदिह याचतेऽर्प्यतां
तज्जवादिति जगाद किंकरान् ।
दानकृत् कनकमानयत्यसौ
नादिशत् खलु नकारकैरतः ॥ ४३ ॥
अर्थिनः प्रथितकार्यसंमितं
गृह्णतोऽभ्यधिकमस्य यच्छतः ।
नाददे खलु ददामि खल्वहं
वाद एष भुवि केन भज्यताम् ॥ ४४ ॥
तत्प्रदेयमणिपूर्तये पयो-
नाथमाथहृदयस्तदा हरिः ।
मन्दरभ्रमिसखं बिलेऽक्षिप-
द्यद्विरोचनसुतं शुशोच तत् ॥ ४५ ॥
कम्पभृद्गृहमणिर्नभोमणि-
स्तापवान् कलुषहृन्निशामणिः ।
स्वस्वदानचकिताः शुचाभवं-
स्तत्र यच्छति नवच्छवीन् मणीन् ॥ ४६ ॥
पात्रमेष वसुभिर्यथोन्नतं
रागभृद्भिरपि पूरयन् क्रमात् ।
पर्वतोऽप्यवनिमप्यपूरयत्
प्रातरभ्युदयवानिवार्यमा ॥ ४७ ॥
स्थापयन् पृथु यथादरिद्रकं
वित्तमेष निखिलेऽपि भूतले ।
एकरूप्यमसृजद्यथा यथा
निम्नमम्बु घटयन् घनाघनः ॥ ४८ ॥

आयुगान्तकुलभृद्भिरन्वये-
रर्थिनां निधिगतैस्तदर्पितैः ।
रत्नराशिभिरनन्तया रजो-
गर्भयाप्यजनि रत्नगर्भया ॥ ४९ ॥
स्वं तथादित स पार्थिवो यथा
संजगुर्दिवि बिले च याचकाः ।
स्वर्युधिष्ठिरममर्त्यपादपं
पन्नगालययुधिष्ठिरं बलिम् ॥ ५० ॥
भूमिपातुरथ पात्रमत्र त-
त्संसदि प्रथममर्हणोचितम् ।
पृच्छतः क्रतुमहे पितामहः
संभ्रमादिति बभार भारतीम् ॥ ५१ ॥
शक्रचक्रनुतमर्हणोचितं
यद्विदन्नपि जगद्गुरुं हरिम् ।
पृच्छसि त्वमिह मां व्यनक्ति तद्
गौरवं गुरुषु कौरवोत्तम ॥ ५२ ॥
यत्पदोदकमधत्त मूर्धनि
स्वर्धुनीं त्रिजगतीहरो हरः ।
तं पुराणपुरुषं त्वमञ्जसा
विद्धि यज्ञपुरुषं प्रपूजय ॥ ५३ ॥
इत्युदारनिजचिन्तनस्फुटी-
कारवाचि सति शन्तनोः सुते ।
आद्यमर्घमसुरारये रयात्
पाण्डवोऽदित नवोदितस्मयः ॥ ५४ ॥
यज्ञसीम्नि शिशुपालपार्थिव-
श्चक्षमे न हि तदर्चनं हरेः ।
पाटलायितकरालदृग्गिरं
देहिनीमिव रुषं ततान तत् ॥ ५५ ॥
सत्स्वपि द्रुपदकुम्भसंभव-
व्यासवृद्धगुरुयाज्ञिकेषु किम् ।
पूजितः कुरुपते हरिस्त्वया
नैकमप्यधित तेषु यो गुणम् ॥ ५६ ॥
पूज्य एव यदि वा स एष व-
स्तन्नृपाः कि[illegible]हूय वञ्चिताः ।

धर्मसूनुरिति चात्मन: कुतो
नाम नाम निबिडं विडम्बितम् ॥ ५७ ॥
इत्युदीर्य सममुत्थितो नृपै-
र्गन्तुमिच्छुरवनीभृता धृत: ।
बोधितोऽपि शुचिसान्त्वनोक्तिभि-
र्वाचमित्ययमुवाच कोपन: ॥ ५८ ॥
नो गतिर्भवति पुत्रवर्जिते
तेन नूनमगतिर्धुनीजनि: ।
छेत्तुमेष भवतोऽपि सद्गतिं
बुद्धिदोऽजनि जनार्दनार्चने ॥ ५९ ॥
उक्षवाहशकटाहिमुख्यभि-
द्विक्रमस्मितमनास्त्रिविक्रम: ।
भूयसोऽपि परिभूय भूपती-
नद्भुतानयमपूजि धिक् त्वया ॥ ६० ॥
य: स्त्रियं बत जघान पूतनां
नूतनाङ्कुरितपुण्यकन्दल: ।
ईदृशि क्रतुमहोत्सवे महा-
राज युक्तमयमच्युतोऽर्चित: ॥ ६१ ॥
कैतवादयमजर्जरां जरा-
सन्धबन्धनविधौ धियं व्यधात् ।
तत्कलङ्कभरभागभागसि
स्तुत्य इत्युचितमच्युतस्तव ॥ ६२ ॥
यत्तदुक्तवति तत्र कोपत-
स्तद्वधाय युधि भीममुत्थितम् ।
संनिरुध्य सहसा भुजोरसा
शान्तनिस्तमिति शान्तये जगौ ॥ ६३ ॥
प्रागिह त्रिनयने चतुर्भुजे
जातवत्यशुभरासभध्वनौ ।
त्रस्तमातृपितृभीतिपारदा
भारतीति गगनोद्भवाभवत् ॥ ६४ ॥
डिम्भ एष भविता जगज्जयी
मृत्युरस्य स पुनर्भविष्यति ।
यास्यतोऽधिकदृशा समं यदु-
त्सङ्गसङ्गवशतोऽधिकौ भुजौ ॥ ६५ ॥

इत्यमुष्य जननी श्रुतश्रवा:
कस्य नैनमकृताङ्कवर्तिनम् ।
विष्णुमस्तमिव भानुमानयं
प्राप्य नष्टकरदर्शनोऽभवत् ॥ ६६ ॥
भ्रातृजं निजमथाह सा हरिं
सापराधमपि मा वधीरमुम् ।
इत्यदादभयदं वरं तदा
विष्णुरप्रियशतावधिं सुधी: ॥ ६७ ॥
एनमप्रियशतायुषं ततो
विष्णुयज्ञपशुमत्र मा वधी: ।
इत्यवेत्य शममाप मारुति:
कोपमाप्य च जगाद चेदिप: ॥ ६८ ॥
भीष्म भीष्मतरतेजसो भृशं
भूभुजोऽवगणयन्ति यं गुणै: ।
तं जलेशयमपि प्रपूजयन्
वृद्ध इत्यधम तैर्न वध्यसे ॥ ६९ ॥
गां निशम्य निशितामिति क्रुधा
दुर्धरोऽप्यधित सिद्धसिन्धुभू: ।
ये नृपा न गणयन्ति शार्ङ्गिणं
तच्छिर:सु पदमेतदर्पितम् ॥ ७० ॥
पूजितो हरिरयं मयामुना
रे नृपा: किमपि यस्य दुष्यति ।
अद्य मद्भुजभुजंगभेकतां
निर्विवेकमतिरातनोतु स: ॥ ७१ ॥
इत्युदीर्णगिरि जीर्णपूरुषे
रोषरूक्षितमुखेषु राजसु ।
शार्ङ्गिणं प्रति जगौ जगद्विदा-
घोषघोषि दमघोषनन्दन: ॥ ७२ ॥
योग्यतातिगमुपाददेऽर्चनं
किं त्वया कथममीभिराहितम् ।
त्वामहं शिखिमुखे जुहोम्यत:
कृष्ण शान्तनवपाण्डवै: समम् ॥ ७३ ॥
एहि मह्यु मदपूर्णमीहितं
संविधेहि युधि शक्तिरस्ति चेत् ।

मद्गुजोऽस्त्वनुचितार्हणग्रह-
क्रूरपापहरणाय ते गुरुः ॥ ७४ ॥
त्वं च शान्तनव पाण्डवाश्च रे
मङ्क्षु संयति समेतमेत वा ।
एककालमपि वः पिबाम्यहं
कुम्भयोनिरिव सप्त तोयधीन् ॥ ७५ ॥
एवमब्दमिव शब्दमम्बर-
ध्वानितं सृजति सात्वतीसुते ।
आददे सदसि विष्णुना द्विष-
त्खण्डिना मृदु शिखण्डिनेव गीः ॥ ७६ ॥
मत्पुरीमदहदेष मत्पितु-
र्वाहमप्यहृत वाहमेधतः ।
बभ्रुसुभ्रुवमपाहरन्नृपा
वच्मि विप्रियमतः किमेककम् ॥ ७७ ॥
आगसामिति शतं पितृष्वसुः
पुत्रकोऽयमिति मर्षितं मया ।
सांप्रतं तु न सहेऽतिमन्यतः
क्षीरनीरधिरपि व्यधाद्विषम् ॥ ७८ ॥
कोपकम्पितकरक्रमाधरः
प्रोचिवानथ सुनीथपार्थिवः ।
रे जनार्दन विनर्दसीति किं
किंकरस्य तव का मयि क्षमा ॥ ७९ ॥
मा सहस्व सहसाद्य साहसा-
दुत्पतेति तमुदित्वरायुधम् ।
चक्रचङ्क्रमवशादसौ शिरो-
विप्रयुक्तवपुषं विभुर्व्यधात् ॥ ८० ॥
नूयमानमहिमांशुदुःसहं
हर्षिभिः सुरमहर्षिभिर्महः ।
सात्वतीसुतकबन्धतोऽविशत्
केशवे वपुषि वीक्षितं न कैः ॥ ८१ ॥
संप्रधार्य निजमातृबान्धवी-
नन्दनस्य दहनक्रियां कृती ।
धृष्टकेतुमभिषिच्य तत्सुतं
तत्पदेऽथ सदमानयन्नृपः ॥ ८२ ॥

इत्थं मुरारिपरिपालितपूर्णयज्ञः
साम्राज्यमाप्य विरराज स राजराजः ।
पूर्णं यशोमयपयःप्रदयैश्च चक्रे
यज्ञान्तपूर्तमिव शाश्वतमन्तरिक्षम् ॥ ८३ ॥
जगत्त्रितयपूजितोज्ज्वलचरित्रभाजा स्वयं
नृपेण परिपूजितां मुदमुदित्वरीं बिभ्रतः ।
स्मितैरनुगता वृकोदरकिरीटिमाद्रीसुतै-
स्ततो निजनिजं पदं सपदि विश्ववीरा ययुः ॥ ८४ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते श्रीबालभारतनाम्नि महाकाव्ये वीराङ्के सभापर्वणि राजसूयवर्णनो नाम तृतीयः सर्गः ॥ ३ ॥ :: ::

---

## ॥ अथ बालभारतस्य ॥

### ॥ चतुर्थः सर्गः ॥

ज्ञानप्रदीपपात्राणां सर्वेषामुपरि स्फुरन् ।
पायाद् द्वैपायनो विश्वजनमञ्जनमञ्जुलः ॥ १ ॥
अथेन्द्रप्रस्थसौन्दर्यं पश्यन् दुर्योधनोऽमुचत् ।
पुरंदरपुरीजैत्रस्वपुरीचारुतामदम् ॥ २ ॥
कदापि कौतुकाविष्टः प्रविष्टस्तामसौ सभाम् ।
द्रष्टुं ग्रामणिको राजधानीमिव ससंभ्रमः ॥ ३ ॥
स्फटिकोर्व्यामसौ वीरमुत्क्षिपन् नीरशङ्कया ।
रसादहासि दासेरैर्विलक्षवदनः क्षणम् ॥ ४ ॥
पद्मरागमयीं पश्यन्नन्तरा पद्मिनीमयम् ।
अर्कोश्मभूवितर्केण लीलावापीजलेऽपतत् ॥ ५ ॥
अहासि न तदा तस्मिन् निस्तेजसि जलस्थिते ।
अब्धिपातिनि मार्तण्डे कैरवैरिव कौरवैः ॥ ६ ॥
हसत्सु सह दासेरैर्भीमार्जुनयमादिषु ।
अहस्यत प्रतिध्वानैः सभाभित्तिभिरप्यसौ ॥ ७ ॥
धिग्गतास्मि समयक्ष्मापतिक्षयनिमित्तताम् ।
इत्यन्तःपतिते तत्र चकम्पे केलिवापिका ॥ ८ ॥
वाप्यालवालमध्येऽसौ विरोधद्रुरिवाङ्कुरवान् ।
बभौ फलाय कस्मैचिद्विलक्षस्मितपुष्पितः ॥ ९ ॥
तापवानुत्थितः सोऽयं तोयोद्धृतनवांशुकः ।
निश्चितक्षचनक्षक्षयो रविरिवार्णवात् ॥ १० ॥

तस्याग्रे स्फाटिकीं भित्तिमच्छामनवगच्छत: ।
गच्छत: स्खलिते मौलौ ते पुनर्जहसुर्जना:॥ ११ ॥
इत्येष रोषवैलक्ष्यावहित्थकृतसंमद: ।
तपस: पुत्रमापृच्छ्य प्रपेदे हस्तिनापुरीम्॥ १२ ॥
तादृशीं क्ष्माभृतो लक्ष्मीं स्मारंस्मारं पदेपदे ।
न रतिं क्वापि स प्राप मेरौ तप्त इव द्विप: ॥ १३ ॥
अमान्तीरिव चित्तान्तर्दु:खसंतापवीचिका: ।
तप्तनिश्वासरूपेण मुहुरुद्वमति स्म स: ॥ १४ ॥
कृतकार्श्यपरिष्वङ्गास्तदङ्गावयवा: क्रमात् ।
प्रभाधिक्यममुञ्चन्त हेमन्तदिवसा इव ॥ १५ ॥
अथालोच्य मिथस्तेन प्रद्युम्न: सौवलो नृप: ।
प्रज्ञाचक्षुषमुर्वीशं विजनस्थं व्यजिज्ञपत् ॥ १६ ॥
रत्नैरिद्धोऽपि कान्ताभि: सेव्यमानोऽपि ते सुत: ।
कुतोऽपि कृशतामेति प्रावृषेण्य इवार्णव: ॥ १७ ॥
स मत्वेत्थमथाहूय नृपति: स्वयमब्रवीत् ।
आश्रयोऽपि श्रियो वत्स किमिन्दुरिव सीदसि॥१८॥
दूरनिर्मुक्तकौन्तेया: समुच्चेया: पदेपदे ।
किं तात रमयन्ति त्वां नैता: पैतामहश्रिय: ॥१९॥
वचोनासीरतानीतस्फीतनि:श्वसितानिल: ।
गान्धारीनन्दनो दैन्यसगद्गदमथावदत् ॥ २० ॥
कौन्तेया इव नूयन्ते क्षत्रिया: स्वार्जितश्रिय: ।
श्रीर्मुदे वणिजां पैतामही तात महीयसी ॥२१॥
पाण्डवै: खाण्डवप्रस्थमर्जिताभिर्विभूतिभि: ।
तथाभूषि यथेहाभूद्वस्तुं वास्तोस्पते: स्पृहा ॥२२॥
स्फुरति स्फाटिकस्तत्र प्राकारो रक्षितुं निधीन् ।
कुण्डलीन्द्र इव श्वभ्रात् परिखापथनिर्गत: ॥२३॥
गुह्यणा यस्य वप्रेण दत्तेव जपमालिका ।
माणिक्यकपिशीर्षालिर्व्योम्ना धारि तमोभिदे ॥२४॥
नभोमरकतादर्शे भान्ति यत्परिखोर्मय: ।
संक्रान्ता इव वप्रान्तचलकेतनकैतवात् ॥ २५ ॥
प्रवेशेनैव यद्वप्रे स्खलितस्य नभस्वत: ।
सफलं मेनिरे मारविवराणां जनुर्जना: ॥ २६ ॥
चतुर्भिस्तोरणामुक्तमुक्तास्रग्दशनैर्मुखै: ।
चतुर्दिङ्लोकपालानां पुराणि हसतीव यत् ॥२७॥

अपराह्णे नमन्नर्कस्तर्क्यते यद्बहिर्जनै: ।
वप्राग्रसंसमानैकमाणिक्यकपिशीर्षवत् ॥ २८ ॥
वसन्तमन्तर्दिवसं रत्नवेश्मविभानिभात् ।
यत्रारामममयो वप्रो बहिर्ध्वान्त: सदारुधत् ॥ २९॥
न मामसावसौ वेत्ति वेत्तीह युवमध्यगम् ।
हर: सोऽपीति निर्भीतिर्यत्रानङ्गोऽपि रङ्गति ॥३०॥
मुक्त्वा युगतयोऽभ्यस्तुं भुवि लीलागतीरिव ।
वसन्ति यत्र रम्भोरूदम्भाद्रम्भादिदेवता: ॥३१॥
मिथुनैर्घोर्मिथोरूपनिरूपादनिमेषिभि: ।
दिव्यैरिवागतं दैत्यभीतैर्यत्राकुतोभये ॥ ३२ ॥
मन्ये यच्चन्द्रशालानां नामाभूदमरावती ।
यद्भूमिगर्भगेहानां नाम भोगवती पुन: ॥ ३३ ॥
रत्नाढ्यौ कन्दुकभ्रान्त्या धावन्त: सह बालिना ।
द्वयेऽपि रविबिम्बे न सीमां यान्ति यदर्भका: ॥३४॥
बाला यत्सौधमालासु नक्तमेणाङ्कमण्डले ।
पाणिं क्षिपन्ति जानन्त्यो रजताञ्जनभाजनम् ॥ ३५ ॥
यत्प्रासादास्तथाभूतस्वाभोगग्रस्तमम्बरम् ।
उद्गिरन्ति सदोद्धूतधूपधूमावलिच्छलात् ॥ ३६ ॥
ध्वजरक्षा भुजंगेशभाजो यद्देववेश्मसु ।
कुम्भा: कारयितु: पुण्यनिधिकुम्भा इव स्फुटा: ॥ ३७ ॥
भान्ति यत्रोदवीथीषु कल्याणरजतच्छलात् ।
साम्राज्यदीक्षितन्यायतेज:कीर्तिचया इव ॥ ३८ ॥
जलैर्यत्केलिवापीनां स्यन्दिभिर्भूमिभेदिभि: ।
सुधाकुण्डावलिर्नूनं जाता पातालपालिभि: ॥ ३९ ॥
दानदीक्षागुरूणां यज्जनानां मणिपादुका: ।
नूनं कल्पद्रुमा मूर्ध्नि वहन्ते पल्लवच्छलात् ॥ ४० ॥
कवीनां रसनालोलदोलाकेलिरसस्पृश: ।
वाग्देव्या यत्र दासीव श्री: पुर: स्फुरति स्फुटम् ॥ ४१ ॥
शेषोऽपि द्विसहस्राक्षरसनस्तत्पुरश्रियम् ।
वीक्ष्य वीक्ष्य स्वयं वक्तुं शक्तो भवति वा नवा ॥४२॥
वसन् यत्र मणिश्रेणिनद्धसौधास्तत्तामसे ।
रवेरुदयमस्तं वा न वेत्ति सुखितो जन: ॥ ४३ ॥
स्वयंकृतस्य कौन्तेयै: पत्तनस्यास्य दूरगा ।
पूर्भे पैतामही काण्डकरपाटवदुर्भी ॥ ४४ ॥

सहजद्विषतामेषामेषा लक्ष्मीः पुरस्य माम् ।
स्मर्यमाणा दुनोत्यन्तरयोगिनमिव प्रिया ॥ ४५ ॥
चतुर्भुजेन दिग्जैत्रैः सोदरैश्च वृतः क्रतौ ।
श्रियं यामाश्रयद्धर्मसूनुः क्लिश्नाति साति माम् ॥४६॥
समस्तैर्वस्तुभिः स्वस्वदेशजैर्विश्वभूभुजः ।
दत्तैरानन्दयन् यज्ञवलये बलिनोऽपि तम् ॥ ४७ ॥
श्रीचन्दनरसं शातकुम्भकुम्भैरढौकयत् ।
यशः स्वमिव तेजःस्थ पाण्ड्यो मलयपार्थिवः ॥ ४८ ॥
जातं रावणगङ्गायां पद्मरागमणिव्रजम् ।
भक्त्या स्फुटीकृतं मूर्तमनुरागमिवात्मनः ॥ ४९ ॥
अब्धितीरोद्भवानिन्द्रनीलमौक्तिकसंचयान् ।
स्वराज्यश्रीसितश्वेतकटाक्षस्तबकानिव ॥ ५० ॥
सिंहलेशो यशोवल्लिवृन्दकन्दानिवोज्ज्वलान् ।
अदत्त दक्षिणावर्तशङ्खानपि सहस्रशः ॥ ५१ ॥
विशेषकम् ।
अब्ध्यर्पिता नु पुष्पालीः सभृङ्गास्तज्जुषे श्रिये ।
मुक्तामकरकतैर्युक्ता ददौ बर्बरदेशपः ॥ ५२ ॥
मल्लक्ष्मीस्तव मुण्डीति वदंस्तस्याः कचानिव ।
वैदूर्याणि पुरोऽमुञ्चत् कौङ्कचोलकदेशपः ॥ ५३ ॥
शङ्खमत्स्यमुखोन्मुक्तमुक्तापङ्क्तिद्वयीसिताः ।
प्रवालकन्दलश्रेणीर्नवीनरविपाटलाः ॥ ५४ ॥
नदीपद्वीपभूमीपा ददुर्यास्ताभिराबभौ ।
ओष्ठपर्यस्तदन्तालिद्वयच्छायेव तत्सभा ॥ ५५ ॥
युग्मम् ।
मुक्ताफलजुषो हीरान् नीरवाहद्युतौ ददौ ।
हसतोऽन्यानि रत्नानि नूनं सूर्पारपार्थिवः ॥ ५६ ॥
करिदंष्ट्राकरिशिरोवेणुमुक्तास्थलचयीः ।
ददुस्त्रिविधवीरश्रीलीलाशैलानिवाद्रिपाः ॥ ५७ ॥
मुक्ताभरणसश्रीकान् पारसीकाधिपो हयान् ।
ददौ स्वविषयस्थस्य तरङ्गानिव तोयधेः ॥ ५८ ॥
चामरौषधिकस्तूरीमुख्यैः किमु वयं यदि ।
हीरानिति क्रुधा रक्तान् हिमाद्रिसदना ददुः॥५९॥
हेमाभश्यामहीरालिमालिनो ददतुर्द्विपान् ।
कलिङ्गपुण्ड्रकौ जातानभितः काम्यकं सरः ॥६०॥
कोशलेशः शिरीषाभान् नातिपीतान् मतंगपः ।
रेवातीरनृपः शुभ्रान् शोणान् सौराष्ट्रभूपतिः ॥ ६१ ॥
हीरानढौकयन्नेते विद्योतद्योतिताम्बरान् ।
भक्त्या विभूषणानीव स्वस्ववामभ्रुवां भुवाम् ॥६२॥
युग्मम् ।
व्यतरन्नितरेऽप्युर्वीभुजः सारं निजश्रियाम् ।
एतादृचमखप्रेक्षाः कृप्रवत् कृप्रभक्तयः ॥ ६३ ॥
हेमकक्षास्तडित्वन्तोऽर्जुनप्रीतिलताम्बुदाः ।
चतुर्दश सहस्राणि हरिणा करिणोऽर्पिताः ॥६४॥
अदाच्चित्ररथः शक्रसुहृद्गन्धर्वनायकः ।
जगन्मनस्त्वराभ्यासगुरुं हयचतुःशतीम् ॥६५॥
अयं महाप्रभावानि प्रभावन्ति सहस्रशः ।
अहीन्द्रमौलिजीमूतगर्भमुक्ताफलान्यदात् ॥ ६६ ॥
विततार त्वरातारांस्तुम्बुरुस्तुरगान् शतम् ।
समीरोऽपि करोत्येव यदारोहस्पृहां गतौ ॥ ६७ ॥
पृथिव्यामुदयास्ताद्रिमुख्यदिक्पर्वतान्तरे ।
न स कोऽप्यस्ति भूभर्ता यस्तस्मै न बलिं ददौ ॥ ६८ ॥
अदृष्टपूर्वानज्ञातनाम्नो विस्मयदानपि ।
निर्विण्णोऽहं तदा गृह्णन् पदार्थान् सपरिच्छदः ॥ ६९ ॥
देशारण्यनदीशैलसिन्धुमध्यादिसंभवैः ।
वस्तुभिः पूरिता सा भूर्जम्बूद्वीपं श्रियाहसत् ॥ ७० ॥
यास्तदभिषेकार्थं मुनयोऽम्बरचारिणः ।
आहरन् सर्वतीर्थेभ्यस्तदानीं नारदादयः ॥ ७१ ॥
भूपतेरभिषेकाय तस्योपस्करढौककाः ।
महामहीभुजोऽप्यासन् भुजिष्या इव संसदि ॥ ७२ ॥
बाह्लीकेन्द्राहृतं वाहैः काम्बोजोऽयोजयद्रथम् ।
सुनीथोऽसज्जयत् केतुं वसुदानो महागजम् ॥७३॥
मागधेन्द्रः स्रगुष्णीषे एकलव्य उपानहौ ।
काश्योऽस्त्रं कवचं पाण्ड्यश्चेकितानोऽधितेषुधिम् ॥ ७४ ॥
शल्येन धारितस्यासेर्धाराद्विनयबिम्बितः ।
चिर्मूर्तिरिव रेजेऽसौ विवेदीवेदिनोऽर्चितुम् ॥ ७५ ॥
वृत्तैस्तस्य स्वकुल्यस्य निष्कलङ्क इवेक्षितुम् ।
सात्यकिस्फारितच्छत्रमूर्त्या तत्रायो विधुः ॥ ७६ ॥

रेजतुश्चामरे तस्य भीमफाल्गुनचालिते ।
कटाक्षौ निकटप्राप्तयज्ञदानश्रियोरिव ॥ ७७ ॥

वेदोक्त्या राजचिह्नेषु सज्जितेष्वपि पार्थिवैः ।
अभ्यषिञ्चंस्तपःसूनुं धौम्यव्यासादयो द्विजाः ॥ ७८ ॥

अकल्पयत् पुरा कल्पे यं शक्राय प्रजापतिः ।
तं ददौ वारुणं शङ्खं तदास्मै कलशोदधिः ॥ ७९ ॥

एनमादाय दायादः किरीटिसुखदुःखयोः ।
अभिषेकं व्यधात् तस्य तीर्थाम्भोभिः स्वयं हरिः ॥ ८० ॥

वीरवादितमङ्गल्यकम्बूनां निनदैस्तदा ।
मयान्यैरपि भूपालैर्मूर्च्छालैः पतितं भुवि ॥ ८१ ॥

कृष्णापाण्डवशैनेयधृष्टद्युम्नैरमूर्च्छितैः ।
हसितोऽहं व्रजन्मोहं यत् तैस्तन्नेति विस्मृतिम् ॥ ८२ ॥

आसीत् कृष्णार्चनात् पुष्पवृष्टिर्या नकुलाग्रजे ।
सा मां दुनोति चेदीन्द्रमृत्यूत्पातोडुपातवत् ॥ ८३ ॥

वाप्यन्तः पतितं कृष्णा यन्मां स्त्रीभिः सहाहसत् ।
स्खलत्यद्यापि तत् तात चित्ते निशितशल्यवत् ॥ ८४ ॥

इत्यादिस्मरणोत्पन्नचिन्ताभारभियेव मे ।
स्थितिमेकत्र कुत्रापि स्थाने न कुरुते मनः ॥ ८५ ॥

अपूर्यमाणवाञ्छस्य तादृक्परिभवोदधेः ।
मृत्युरेवाद्य मे श्लाघ्यो न तु दुःखविडम्बनम् ॥ ८६ ॥

इत्यवेत्य व्यथां सूनोरेवमूचेऽम्बिकासुतः ।
वत्स कापुरुषस्येव वैराग्याय परर्द्धयः ॥ ८७ ॥

पुरीं कुरु नयारम्भैर्जृम्भमाणश्रियं स्वयम् ।
सभां तादृक्प्रभां नानारत्नैर्यत्नेन कारय ॥ ८८ ॥

गौतमाङ्गपतिद्रोणद्रौणिभिः ककुभो जय ।
सप्ततन्तुं कुरु वृतः सोदरै राजसूयवत् ॥ ८९ ॥

वत्स निर्वेदभूर्मा भूः कीर्तिमर्जय विक्रमात् ।
त्वज्ज्येष्ठो यत् पृथासूनुः श्रीमान् सोऽप्युत्सवस्तव ॥ ९० ॥

अथाकिरद्गिरं दैन्यच्छन्नक्रोधां सुयोधनः ।
सा श्रीः पुरे चिरेण स्यात् प्रतिभूः कोऽस्ति जीविते ॥ ९१ ॥

सभा क्व भाविनी तात तादृक्षुनकर्तृका ।
पाण्डवैः पीतसर्वस्वाः कः स्वार्थो जयतां दिशः ॥ ९२ ॥

राजसूयं विना न स्यां सम्राट् किं सप्ततन्तुना ।
लज्जे तद्विक्रमार्तासु त्रिक्रामन् राजराजिषु ॥ ९३ ॥

ज्येष्ठः क्व मे तपःसूनुरुद्दासो यस्तदाभवत् ।
भीमादिषु सहासेषु सभान्तः स्खलिते मयि ॥ ९४ ॥

गौतमादिभिराक्रम्य तत् पार्थान् वैरिणो रणे ।
गृह्ण पुरं सभाशोभिदिग्जयोत्थां च संपदम् ॥ ९५ ॥

मत्वेति तत्र दुर्मन्त्रं धृतराष्ट्रे विवक्षति ।
स्वस्रीयं प्रति गान्धारधरणीपतिरभ्यधात् ॥ ९६ ॥

पुरःस्फुरन्मुरारातिभीमार्जुनयमो युधि ।
क्रोधे दग्धुं क्षमो विश्वं केन जेयो युधिष्ठिरः ॥ ९७ ॥

तं तु रन्तुमजानन्तमाहूतमनिवर्तिनम् ।
शारिद्यूतेन जित्वाहं ग्रहीष्ये सर्वमप्यदः ॥ ९८ ॥

तद्रूप कारितस्फारसभालोकच्छलादमुम् ।
इहानय ततः सर्वं ग्रहीष्येऽहं धियानया ॥ ९९ ॥

ऊचेऽथ व्यथमानोऽन्तः स प्रज्ञानयनो नृपः ।
धिङ्मन्त्रं वः स धर्मात्मा जेतव्यः कैतवादिति ॥ १०० ॥

कर्मण्यस्मिन् क्व सा धर्मप्रतापयशसां कथा ।
किंतु पापमसामर्थ्यमयशश्च प्रकाशि वः ॥ १०१ ॥

इत्युक्ते व्यक्तकोपान्धः स्वभावान्धसुतोऽवदत् ।
धर्मात्मा वा विधर्मा वा कैषा द्विषि विचारणा ॥ १०२ ॥

शक्त्या जेतुमशक्योऽरिः संताप्यः कैतवादपि ।
छलाद्बलाग्रजोऽबध्नाद्दुर्मन्त्रं बलिनं बलिम् ॥ १०३ ॥

तत् कुरूपक्रमं तूर्णमेनं जेतुं विरोधिनम् ।
न चेद्रोगैरिवाच्छिन्नैस्तैरुन्मूलयितास्महे ॥ १०४ ॥

कार्येऽस्मिन् पाण्डुपक्षीयैर्विदुराद्यैर्निषेध्यसे ।
तत् त्वं तात चिरं नन्देर्मरणं शरणं तु मे ॥ १०५ ॥

इतिसुतमतिविप्लवेन जान-
न्नपि कुलवीरविनाशमभ्युपेतम् ।
नृपतिरपि तथेत्युवाच कस्य
भ्रमयति पुत्रकदाग्रहो न चित्तम् ॥ १०६ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते श्रीबालभारतनाम्नि महाकाव्ये वीराङ्के सभापर्वणि कौरवामर्षो नाम चतुर्थः सर्गः ॥ ४ ॥ :: ::

श्रीः

अगुणोऽपि पुमान्ध्येयो योऽक्रियः परमार्थदः ।
अजोऽपि मनुजोऽमर्त्यो राघवः पातु नो विभुः ॥

पुरा श्रीमद्दाशरथे रामचन्द्रस्य लङ्काधिपतिरावणहननोत्तरं ततः परावर्तनसमये श्रीरामचन्द्रो नारायणावतार इति सूचयितु श्रीहनूमान् मीनाद्यवतारवर्णनविषयकं पद्यात्मकं काव्यं रचयित्वा जलधिसेतुप्रस्तरेषु विलिलेख ।

ततोऽनल्पे काले व्यतीते धनार्जनार्थिनो द्वीपान्तरं गच्छन्तः स्वपोतयानाः सांयात्रिकाः कदाचित्सेतुपथमागत्य प्रस्तरेषु पद्यबन्धं काव्यं दृष्ट्वा तल्लेखने प्रयता बभूवुः, परन्तु जलधिजलकल्लोलैर्दृषदां नाशात्तत्सम्पूर्णं नोपलब्धम् । ततश्च ते खण्डितमेव तद्विलिख्य स्वपुरमेत्य विद्वत्सदसि प्रादर्शयन्, ते च धीमन्तः कवयो दृष्ट्वा तत्खण्डितं काव्यं स्वशक्त्या पूरयन्ति स्म खण्डप्रशस्त्यभिधया तैर्व्यवहृतं च ।

ततश्चैकचत्वारिंशदधिकषोडशशततमे (१६४१) वैक्रमेऽब्दे जैनमतानुयायिना श्रीजयसोमगुणिशिष्येण श्रीगुणविनयगुणिना विवृतम् ।

सर्वं चैतत्तद्विवृतित एव मयाऽवगतम्, अस्य काव्यस्यातिप्राचीनमेकं पुस्तकं विपणौ लब्ध्वा पुस्तकान्तरमलभमानस्तत्पुस्तकमशुद्धमपि महता यत्नेन संशोध्य सरसालङ्कृतमेतत्काव्यं काशीविद्यासुधानिधिरसिकानां परमाल्हादजनकं भवेदितिधिया मुद्रितुमारभ्यतइति शम् ॥

काशिकराजकीयपाठशालायां ज्योतिश्शास्त्राध्यापको वामनाचार्यः

---

॥ श्रीगजाननाय नमः ॥

## खण्डप्रशस्तिः

तिलकयुता ।

श्रीपार्श्वं फलवर्धिकाद्भुतमहाराजं महो राजतं
त्रिःकृत्वःसुकृतैकभाजनमहं नत्वा कृपावारिधिम् ।
सारं श्रीगुरुराजपादकमलं चानन्दसंवर्द्धकं
संवक्ष्ये विवृतिं यथामति मतां खण्डप्रशस्तेः शुभाम् ॥ १ ॥

(१) कृतक्रोधे यस्मिन्नमरनगरी मङ्गलरवा
नवातङ्का लङ्का समजनि वनं वृश्चति सति ।
सदा सीताकान्तप्रणतिमतिविख्यातमहिमा
हनूमानव्याद्वः कपिकुलशिरोमण्डनमणिः ॥

एतच्च काव्यं हनूमद्विरचितश्रीरामप्रशस्तिलेखनकर्त्रा मङ्गलार्थमादौ विरचितं तद्व्याख्येयम् । स हनूमान् वः युष्मान् अव्यात् रक्षतु । सइति कः, यस्मिन् हनूमति कृतक्रोधे कृतो विहितः क्रोधः कोपो येन सः तस्मिन् सति अमरनगरी अमरावती, मङ्गलरवा मङ्गलशब्दा अजनि जाता, देवप्रतिपन्थिदैत्यविनाशनात्सुरपुर्यां परमोत्साहः समुत्पेदे इति भावः । तथा यस्मिन् हनूमति वनं वृश्चति छिन्दति सति लङ्का नवातङ्का नवसाध्वसा समजनि, किंविशिष्टः हनूमान् सदा सीताकान्तप्रणतिमतिविख्यातमहिमा सदा शश्वत् सीताकान्ताय रामाय या प्रणतिमतिर्नमस्कारबुद्धिस्तया विख्यातः प्रसिद्धो महिमा माहात्म्यं यस्य सः पुनः किंविशिष्टः कपिकुलशिरोमण्डनमणिः कपिकुलस्य वानरसमूहस्य शिरोमण्डनमणिरिव यः स कपिकुलशिरोमण्डनमणिः ॥ १ ॥

इहहि श्रीरामप्रशस्तिः खण्डप्रशस्तित्वेन कथमजनीत्ये तदाह ॥

पुरा श्रीदशरथाज्ञया श्रीरामः सलक्ष्मणः सीतासहायः समादाय कार्मुकमेकं मुक्त्वा च पुरग्रामादिकं विजनवनान्तं निर्ययौ, तत्र च ते त्रयोपि विपिने तरुफलान्येव भुञ्जते न कृष्टक्षेत्रोत्पन्नसस्यानीत्येवं कालं सुखेन गमयन्ति स्म, अन्यदा श्रीरामजनीं सीतामेकाकिनीं विनीतां कामपत्नीस्वरूपां सुरूपामवगम्य स्त्रीलोलुपतया रावणस्तां सीतामपहर्तुकामः कनकमृगं मायया व्यधत्त, तं च मायामृगं दृष्ट्वा सा सीता स्वक्रीडार्थं स्वपतिं श्रीरामं विज्ञापयति स्म, यथा च, हे भर्तः कनकमृगं केलिनिमित्तं समानीय मे देहीत्युक्तिः । तादृक्प्रियवचःश्रवणविह्वलतया मायामृगमपि आखेटक्येनाज्ञासीत् । ततः श्रीरामस्तं मायामृगमनुधावति स्म, ततो यावता तन्मायामृगानुगामित्वेनादृश्यतां प्राप्तः श्रीरामस्तावता रावणः पश्चादागत्य तां सीतामेकाकिनीमपाहरत्, स्वनगरीं लङ्कां चानयत्, ततो विफलाशः श्रीरामः समाययौ, यत्र सीता निविष्टासीत्तत्र च तामनवलोकयन्महावियोगदुःखार्तः सा सीता केन नीतेति प्रलपन् स्वस्थीकृतो हनुमता, ततो वानरकुलमुपादाय स समुद्रं दृषद्भिर्बबन्ध, ततस्तां लङ्कां सर्वामपि स्वपुच्छाग्रन्यस्ताग्निनाऽदहत्, ततः श्रीरामोऽपि सलक्ष्मणः समागत्य तस्य रावणदैत्यस्य एकेनैव बाणेन दशापि शिरांसि छित्वा तन्मार्गेणैव सीतां स्वगृहे समानयत् । तत्र च सिन्धुसेतौ दृषद्बद्धे हनूमान् श्रीरामप्रशस्तिमलिखत् । तत्र केचित्सांयात्रिकाः स्वपोतमारुह्य क्रयविक्रयार्हवस्तुसमुदायमादाय समुद्रान्तः प्राविशन्· तत्र च यथेप्सितं द्वीपं गत्वा बहूनि धनान्यर्जयित्वा समागच्छतां तेषां पोतवणिजां पोतः केन चिद्वायुना प्रेरितो

हनूमद्विरचितसमुद्रसेतुमार्गं समागच्छत्, तत्र च हनूमद्विरचितां श्रीरामप्रशस्तिं सिन्धुसेतौ दृष्ट्वा तां ते सांयात्रिका अलिखन्· तत्र च कानि चित्काव्यानि समुद्रकल्लोलैर्दृषदां पातनेन खण्डितान्यपि तानि तैर्लिखितानि, ततस्तस्याः खण्डप्रशस्तिरित्यभिधानं स्फुटतया तैश्च कृतं ततस्ते स्वपुरीमागत्य महतां संख्यावतां तां खण्डप्रशस्तिमदर्शयन्, तेपि सुन्दराण्येतानि काव्यानीति विमृश्य तानि पूरयन्ति स्मेति संबन्धलेशः तत्र च खण्डप्रशस्तौ हनूमद्विरचितायां श्रीरामस्य दशावतारा व्याख्येयाः ॥ तत्क्रमश्चायम् ।

मत्स्यः कूर्मो वराहश्च नारसिंहोऽथ वामनः ।
रामो रामश्च कृष्णश्च बौद्धः कल्की तथैव च ॥

तत्र ग्रन्थारम्भे आदौ मङ्गलं विधेयम्· यतस्तदभावे न विघ्नध्वंसः स्यात्, विघ्नध्वंसाभावे च न प्रारब्धशास्त्रपरिसमाप्तिरतः प्रारब्धशास्त्रसमाप्त्यर्थिना प्रथममवश्यं मङ्गलं विधेयम्, अन्वयव्यतिरेकाभ्यां मङ्गलस्य विघ्नध्वंसं प्रति कारणत्वसाधनात्, न च कृतेऽपि मङ्गले न शास्त्रसमाप्तिः कादम्बर्यादिवत्, अकृतेपि मङ्गले प्रमत्तानुष्ठितशास्त्रसमाप्तिरित्यन्वयव्यतिरेकाभ्यां व्यभिचाराच्च कारणता मङ्गलस्येति वाच्यम्, यतः कादम्बर्यादौ यत् कृतेऽपि मङ्गले न ग्रन्थसमाप्तिस्तत्र विघ्नानां बाहुल्यात् मङ्गलस्याल्पत्वाच्च समग्रा विघ्ना ध्वंसमापुः, यदि बहूनि मङ्गलान्यादौ कृतान्यभविष्यन् तदा सर्वेपि विघ्ना अध्वसिष्यन्त, परं तानि बहुलानि न कृतानि ततस्तेऽपि सर्वे न ध्वस्ता इति यावच्च मङ्गलं कृतं तावान्विघ्नध्वंसस्तत्रापि जात एवेति । तथा, यच्चाकृतेऽपि मङ्गले प्रमत्तानुष्ठितशास्त्रसमाप्तिरित्युक्तं तदपि न चेतश्चमत्कारकारि, यतस्तेन पूर्वजन्मनि यद् विघ्नविरहदशायां ग्रन्थारम्भे मङ्गलं कृतमासीत्, तच्चादग्धदहनन्यायेन यदि तदानीं विघ्ना अभविष्यंस्तदा तान् मङ्गलमध्वंसिष्यत, परं तदानीं तदभावात्तन्मङ्गलमसमाप्तफलकं सत्तज्जन्मन्यकृतेऽपि मङ्गले विघ्नध्वंसं विधाय शास्त्रसमाप्तिं करोतीत्यन्वयव्यतिरेकाभ्यां व्यभिचाराभावात् ग्रन्थसमाप्तिं प्रति पारंपर्येण मङ्गलस्य कारणत्वादादौ विधेयम् ।

तत्र च श्री भगवतस्तत्कृत्यमेव नास्ति यन्मङ्गलरूपतया न स्यात्, अतो मत्स्याकृतेर्भगवतः शक्तिविशेषप्रकटनं मङ्गलरूपं तदेवादौ श्रीरामप्रशस्तिकारकः श्रीहनूमान् स्वश्रेयोर्थं मङ्गलमारभते ।

(२) वियत्पुच्छातुच्छोच्छलितजलगर्भं निधिरपा-
मपां नाथः पाथःपृथुललवदुःस्थो वियदभूत् ।
निधिर्भासामौर्वो दिनपतिरभूदौर्वदहन-
श्चलत्काये यस्मिन्त्स जयति हरिर्मीनवपुषा ॥

स हरिर्विष्णुर्मीनवपुषा मीनाकृत्या जयति सर्वोत्कर्षेण वर्तते दशावतारित्वाद्विष्णोः प्राक् मीनाकृत्या यद्वर्णनं तत्समुद्रशायित्वेन भगवतो मत्स्याकृतेरतीववल्लभत्वादिति । अथ मत्स्याकृतेर्हरेः शक्तिविशेषमाविष्कुर्वन्नाह । यस्मिन्हरौ चलत्काये चलन्कायः शरीरमस्येति तस्मिन् वियदाकाशं शून्यरूपं अपां निधिः समुद्रोऽभूद्बभूव, किंविशिष्टं वियत् पुच्छातुच्छोच्छलितजलगर्भम्, पुच्छेन लाङ्गूलेनातुच्छानि बहून्युच्छलितानि जलानि तानि गर्भे मध्यप्रदेशेऽस्येति । तथा· अपां नाथः समुद्रो वियन्नभोऽभूत्· कीदृगपां नाथः, पृथुललवदुःस्थः पाथसामम्भसां पृथुलो विपुलो यो लवस्तेन दुःस्थो दरिद्रोऽभूत् । पानीयरहितो बभूवेति भावः । तथा भासां निधिः श्रीसूर्य और्वो वडवानलोऽभूत् । यतः, पानीयं यदा मीनाकृत्या भगवतास्वपुच्छेनोच्छालितं तदा सर्वमपि सामुद्रं जलं वियति गतं तत्र च रविर्वर्तत एव स वडवानलाकृत्या मेने बुधैः । तथा और्वदहनो वाडवाग्निर्दिनपतिरभूत् । यतः, समुद्रे पानीयाभावात्समुद्रस्याकाशकल्पना, तत्र च वाडवाग्निः सूर्योपमेति भावः ॥ १ ॥

---

## THE VAISÉSHIKA APHORISMS OF KANÁDA.

### THIRD BOOK, FIRST DAILY LESSON

Examination of the mind

आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावो ऽभावश्च मनसो लिङ्गम् ॥ १ ॥

Aph. 1 Existence and non-existence of knowledge on contact of the soul with the objects of sense are the mark of the existence of an internal organ.

Distinction of real and fallacious arguments is the subject of the (preceding) daily lesson. In order now

---

[1] हेतुहेत्वाभासविवेक आह्निकार्थः। इदानीमात्मपरीक्षाशेषं वर्तयिष्यन् उद्देशक्रमलङ्घनेन मनःपरीक्षामवतारयन्नाह । मनोगतिमात्मनो लिङ्गं वक्ष्यति तद् यदि मनो ज्ञानकरणत्वेन मूर्तत्वेन च परीक्षितं भवति तदा यत्प्रेरितं मन इन्द्रियान्तरादभिमतविषयग्राहिणि इन्द्रिये सम्बध्यते स आत्मेति सिद्धं भवतीत्येतदर्थं क्रमलङ्घनम् । आत्मेन्द्रियार्थसन्निकर्षे सति यस्मिन् इन्द्रियसन्निकृष्टे ज्ञानस्य भाव उत्पादः असन्निकृष्टे ज्ञानस्याभावो ऽनुत्पादस्तन्मन इत्यर्थः ननु मनोवैभवे ऽपि करणधर्मत्वादेव ज्ञानायौगपद्यमुपपद्यते किञ्च मनो विभु विशेषगुणशून्यद्रव्यत्वात् कालवत् ज्ञानासमवायिकारणसंयोगाधारत्वादात्मवत् स्पर्शात्यन्ताभाववत्त्वादाकाशवदित्यादि वैभवसाधकं प्रमाणमिति चेत् मैवं यदि मनो विभु स्यात् तदा सर्वेन्द्रियसन्निकृष्टात् ततः सर्वेन्द्रियकमेकमेव ज्ञानं स्यात् कार्यविरोधान्नैवमिति चेन्न न हि सामग्री विरोधाविरोधमाकलयति येन चाक्षुषत्वराषन-

to bring the investigation of soul to a conclusion, by a breach of the order of enunciation (i. e of the order in which the substances were enumerated), an examination of mind (or the internal organ] is instituted It will be shown that mental movement is the mark of the soul's existence. If, then, the mind be examined as being an instrument of cognition, and as having form, then soul is proved to exist as that by which the internal organ is actuated when it is brought into connection with an organ of sense apprehensive of its proper object in consequence of the other [and internal ?] organ. This is the reason of the breach of the order [of enumeration ] That is mind which, there being contact of the soul and an object of sense, being in connection with an organ of sense, knowledge exists or comes into being, and which not being in connection with an organ of sense knowledge does not exist, or does not come into being. It may be urged that though mind is an all-pervading substance, all cognition is not necessarily simultaneous, because of its property as an instrument; further, that mind is an all-pervading substance, because, like time, it is a substance void of any peculiar attribute; because, like soul, it is the substratum of conjunction with the non-cohesive cause of knowledge; because, like ether, it possesses absolute negation of sound; and so forth. If this argument to prove that it is an all-pervading substance be adduced, we reply that it is not so, for were the mind an all-pervading substance, then as it would be in contact with all the sensual organs, cognition would be one only and composed of all sensation If it be replied that such is not the case because there is a contrariety among the effects, we deny this, for the instrument is not concerned with contrariety or non-contrariety, so that one should be apprehensive of a contrariety between visibility and sapidity and the rest, or that there should be a variegated form, as there is a variegated colour. If you object that there is [such simultaneous and complex sensation] in the case of eating a long ear of corn [which is at once seen and tasted], we deny this, for in that case also confusion is observed. If you ask how it is that you are conscious of simultaneous perceiving colour, taste, smell, and touch, we reply that neither is this the case, for this is merely a sense of simultaneity in five cognitions presented in memory and produced [successively] by the rapidly shifting internal organ. If it be urged that the confusion depends on the property of the instrument, we deny this, for the answer has been already stated If it be maintained that the confusion depends on the desire of knowing, we deny this, for on that supposition it would follow that when there was a desire to know all there would be a total presentation of all objects, whereas the only result of a desire to know is connection of the internal organ with the sensual organ percipient of its proper object. Inasmuch, therefore, as non-simultaneity of cognition would be otherwise impossible, the mind is proved to possess a minimum of divisibility. U.

त्वादिविरोधाय बिभ्येत् चित्ररूपवत् चित्राकारमेव वा स्यात् भवत्येव दीर्घशष्कुलीभक्षणस्थले इति चेन्न तत्रापि व्यासङ्गदर्शनात् तर्हि रूपरसगन्धस्पर्शान् युगपत् प्रत्येमीति कथमनुव्यवसाय इति चेन्न शीघ्रसञ्चारिमनोजनितेषु पञ्चसु स्मृत्युपनीतज्ञानेषु यौगपद्याभिमानात् व्यासङ्गो ऽपि करणधर्माधीन इति चेन्न उक्तोत्तरत्वात् बुभुत्साधीनो व्यासङ्ग इति चेन्न सर्वबुभुत्सायां सर्वविषयकसर्वोदयप्रसङ्गात् बुभुत्साया अपि अभिमतार्थग्राहीन्द्रियमनःसम्बन्धमात्रफलकत्वात् तस्माज्ज्ञानायौगपद्यान्यथानुपपत्त्या सिध्यति अणु मनः ॥

## तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २ ॥

Aph. 2. Its substantiality and eternity are explained by air.

[1] It may be urged that the internal organ which is proved to exist by the inference that a sense of pleasure &c is effected by an instrument because it is an action, like the sense of colour &c., or because simultaneous cognition is impossible, is proved to exist because it is an instrument: whence, then, its substantiality and eternity? It is therefore stated that, as an aerial atom inferred to exist by reason of the compound substance [air] is a substance because it possesses qualities and actions, so mind which is inferred from the impossibility of simultaneous cognitions is a substance because it possesses qualities. For without conjunction with the organs of sense it would not be productive of cognition, so that there would be no possession of qualities. Moreover presentation of pleasure &c. must have a sensitive organ as its instrument, because, like the presentation of colour &c., it is a presentation. Therefore mind is proved to exist as an organ The essence of an organ is the being a substratum of conjunction of the mind with the cause of a cognition. It is therefore established without any difficulty that mind is a substance. Its eternity is proved by its having no substratum, and that it has no substratum follows from the absence of any warrant in imagining constituent portions of it. U.

[1] ननु सुखाद्युपलब्धिः करणसाध्या क्रियात्वात् रूपोपलब्धिवदित्याद्यनुमानात् युगपज्ज्ञानानुपपत्त्या वा यन्मनः सिद्धं तत्करणतया तथा च तस्य द्रव्यत्वं नित्यत्वञ्च कुत इत्यत आह । यथा ऽवयविद्रव्यानुमितो वायुपरमाणुर्गुणवत्त्वात् क्रियावत्त्वाच्च द्रव्यम् तथा युगपज्ज्ञानानुपपत्त्या ऽनुमितं मनो गुणवत्त्वाद्द्रव्यं न हि तस्य इन्द्रियसंयोगान्तरेण ज्ञानोत्पादकत्वं येन गुणवत्त्वं न स्यात् किञ्च सुखादिसाक्षात्कार इन्द्रियकरणकः साक्षात्कारत्वात् रूपादिसाक्षात्कारवदितीन्द्रियत्वेन मनः सिद्धम् इन्द्रियत्वं ज्ञानकारणमनःसंयोगाश्रयत्वमित्ययत्नसिद्धमेव मनसो द्रव्यत्वम् नित्यत्वञ्च तस्यानाश्रितत्वात् तस्यावयवकल्पनायां प्रमाणाभावादनाश्रितत्वमिति ॥

² As there is in an aerial atom substantiality inasmuch as it possesses originative conjunction and other attributes; and eternity inasmuch as there is no warrant for assuming that it has constituent parts; so the substantiality and eternity of the mind follow from its possession of conjunction productive of cognition and its possession of other attributes, and from absence of proof of its production and destruction V

**प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम् ॥ ३ ॥**

Aph. 3 Because of non-simultaneity of volitions, and non-simultaneity of cognitions [mind] is one [in each body]

³ A decision is stated with reference to the doubt whether mind be one in individual bodies or more than one. The words 'minds' and 'in each body' are to be supplied If there were in each single body many internal organs or minds, there would be simultaneity of cognitions and volitions. The opinion that many volitions are simultaneously exerted, since we see simultaneous action in the arms, legs, fingers, and toes of a dancer, is erroneous, for this arises merely from the rapid transition of the internal organ U

⁴ The unity of the mind in individual bodies is established When there is conjunction between the mind and any member of the body, a volition is exerted with restriction to that member, and not with restriction to other members It must not, therefore, be said that the mind being manifold two volitions are [simultaneously] exerted because conjunction between the mind and each of two members at the same time is possible and that by restriction to the ten fingers and ten toes twenty acts of volition are produced at the same time [for otherwise how would the corresponding actions be produced?], for the conviction of simultaneity in those actions, as of that in the scattering of the hundred petals of a lotus, is erroneous, inasmuch as they are produced in successive moments merely by the rapid transition of the mind So, if the internal organ were manifold, then since each internal organ might be in conjunction with simultaneous sensations of smell, taste, &c simultaneous production of cognitions derived from the organs of smell, taste, &c, would be possible. Mind therefore, [since this is not the case] is in each individual body one only and not manifold If it be objected that the internal organ must necessarily be manifold since we observe action in the two parts of a scorpion and the like when cut in two, we reply that this is not the case for such action is possible through the mere accession of a new internal organ by the influence of fate; and because multiplicity of mind cannot be allowed owing to the authoritativeness of [the argument from] non-simultaneity of volition and non-simultaneity of cognition Some have held that simultaneity and non-simultaneity of volitions to cognitions are the result of the contraction and expansion of the inner organ after the manner of a tortoise and an elephant's trunk. This is not satisfactory for there is great complication in the assumption of endless particles, of their previous and subsequent non-existences, and of their endless atoms

Existence of Soul proved

**प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्च चात्मनो लिङ्गानि ॥ ४ ॥**

Aph 4 The ascending and descending vital airs, the opening and closing of the eyes, life, motions of the mind, affections of the other organs of sense, pleasure and pain, desire and aversion, and volition are marks of the existence of Soul

¹ The completion of the remainder of the inquiry into

---

² यथा वायवीयपरमाणौ आरम्भकसंयोगादिरूपगुणवत्त्वाद् द्रव्यत्वं तदवयवकल्पनायां प्रमाणाभावान्नित्यत्वं तथा ज्ञानजनकसंयोगादिरूपगुणवत्त्वात् तदुत्पादविनाशयोः प्रमाणाभावाच्च मनस्यपि द्रव्यत्वं नित्यत्वञ्चेत्यर्थः ॥

³ तत् किं प्रतिशरीरमेकमनेकं वेति सन्देहे निर्णायकमाह । मनः प्रतिशरीरमिति शेषः यद्येकैकस्मिन्नपि शरीरे बहूनि मनांसि स्युस्तदा ज्ञानप्रयत्नानां यौगपद्यं स्यात् यत्तु नर्तकीकरचरणाङ्गुलीषु युगपत् कर्मदर्शनाद्युगपदेव बहवः प्रयत्ना उत्पद्यन्ते इति मतं तदयुक्त मनसः शीघ्रसञ्चारादेव तदुपपत्तेः ॥

⁴ प्रतिशरीरं मनस एकत्वं व्यवस्थापयति । यदङ्गेन मनसः संयोगो यदा भवति तदा तदङ्गावच्छेदेन प्रयत्न उत्पद्यते नान्यावच्छेदेन एवञ्च मनसो नानात्वे एकदा ऽङ्गद्वयेनापि एकैकस्य मनसः संयोगसम्भवात् प्रयत्नद्वयमुत्पद्यते न च विंशत्यङ्गुल्यवच्छेदेन एकदेव विंशतिः प्रयत्ना उत्पद्यन्ते कथमन्यथा एकदेव तेषां क्रिया उत्पद्यन्ते इति वाच्यम् उत्पलपत्रशतव्यतिभेद इव तासु यौगपद्यप्रतीतेर्भ्रमरूपत्वात् मनस आशु सञ्चारादेव भिन्नभिन्नक्षणेषु तासामुत्पादात् एवं मनसो नानात्वे युगपदेव घ्राणरसनादिभिः सह तेषामेकैकस्य संयोगसम्भवात् घ्राणजरासनादीनामपि युगपदुत्पादापत्तिरितः प्रतिशरीरं मन एकमेव न तु नानेत्यर्थः । ननु छिन्नवृश्चिकादिखण्डद्वय एव क्रियादर्शनान्मनसो नानात्वमावश्यकमिति चेन्न तदानीमदृष्टवशेन मनोऽन्तरसन्निवेशादेव तत्सम्भवात् अन्यत्र प्रयत्नायौगपद्यस्य ज्ञानायौगपद्यस्य च प्रामाणिकत्वेन मनसो नानात्वस्वीकारस्य कर्तुमशक्यत्वादिति । कूर्मशुण्डादिवन्मनसः सङ्कोचविकाशाभ्यामेव प्रयत्नानां ज्ञानानाञ्च यौगपद्यायौगपद्ययोर्निर्वाहः एकमेवैकस्मिन् शरीरे मन इति केचित् तदपि न मनोरमम् अनन्तावयवानां तत्प्रागभावानां तत्प्रध्वंसानाम् अनन्ततत्परमाणूनाञ्च कल्पने महागौरवादिति संक्षेपः ॥

¹ इदानीं क्रमलङ्घनप्रयोजनमादर्शयन्नेवात्मपरीक्षाशेषं वर्तयिष्यन्नाह प्रसिद्धिर्ज्ञानमेव केवलमात्मनो लिङ्गमिति न मन्तव्यं प्राणादयो ऽपि सन्ति आत्मनो लिङ्गानि तथाहि शरीरान्तश्चारिणि समीरणे प्राणापानलक्षणे ऊर्ध्वाधोगती उत्क्षेपणावक्षेपणे मुशलादाविव प्रयत्नं विना ऽनुपपद्यमाने यस्य प्रयत्नाद्भवतः स नूनमात्मा न हि तिर्यग्गमनस्वभावस्य वायोरेवं स्वभावविपर्ययो विना प्रयत्नात् न च विरुद्धदिक्क्रिययोर्वाय्वोः सलिलयोरिवोर्ध्वगतिः स्यादिति वाच्यम् एवं सत्यूर्ध्वगमनमेव स्यान्न त्वधोगमनं फूत्कारादौ वा तिर्यग्गमनम् तथा चास्ति कश्चित् यः प्रयत्नेन वायुमूर्ध्वमधो वा प्रेरयति सुषुप्तिदशायां कथं प्राणापानयोरूर्ध्वाधोगती इति चेन्न तदानीं योग्यप्रयत्नाभावे ऽपि प्रयत्नान्तरस्य सद्भावात् स एव जीवनयोनिः

the soul is commenced; showing the purpose of the breach of the order [in which the substances were enumerated.] It is not to be supposed that consciousness or knowledge alone is the mark of the existence of the Soul. The ascending vital air and the rest also are marks of the existence of the soul. For that is soul in consequence of the volition of which the upward and downward motions in the air moving within the body, and known as the upward and downward vital air, take place, not being produced otherwise than by volition, just as the throwing upwards and downwards [of a pestle &c.] in a mortar &c., are not produced without volition. For the nature of this air which is to move horizontally could not be thus changed except by volition. Nor can it be objected that two airs with differently directed motion may like two pieces of [confluent] water have an upward motion. Were this the case there would be an upward but not a downward motion, or in exsufflations and the like there would be horizontal motion. There is then a being, who, by his volition, impels the vital air upwards or downwards. It is no valid objection to ask how there could be upward and downward motions of the vital air in a condition of deep sleep; for at that time though volition proper does not exist, there exists another kind of volition, which is called volition the source of vitality. In like manner the opening and closing of the eyes causes us to infer a ruler of the body, for closing the eyes is an action productive of conjunction of the eyelids, and the opening of the eyes is an action productive of disjunction of the eyelids. These two actions being constantly manifested without any visible cause such as motive force, are not produced otherwise than by volition. As the dancing of a doll depends upon some one's volition, so also is the gesticulation of the eyelids. Therefore a being who exerts volition is inferred. Similarly vitality is also a mark of the existence of the soul, for by the word life the effects of vitality such as growth, recovery of what is hurt or broken &c., are indicated by implication. For as the owner of a house builds up the broken edifice or enlarges a building which is too small, so the ruler of the body effects by food &c., the increase or enlargement of the body which is to him in the stead of a habitation, and with medicine and the like causes what is wounded to grow again, and broken hands or feet to grow together again. Thus like the master of a house, is proved a guardian of the body. In a like manner the motions of the mind are also a mark of the existence of the soul. For it has been proved in the foregoing section that mind is possessed of form and of indivisibility. Its appliance to an organ of sense cognisant of its proper object depends on desire and effort. The desire and effort which actuate the internal organ are inferred to be identical with the soul. This may be exemplified by a child standing in a corner of a room, who throws a ball or a handful of red powder about the room. It may be objected that the doll, the master of the house, and the child are not other than body that they should be adduced as examples and that it is in the body that consciousness resides, inasmuch as the body is an object of sense of self, for the conviction of being pale, stout, and the like is produced by community of substratum with the sense of personal identity. Moreover, (it may be urged), that which was experienced in childhood is remembered in youth or in old age, whereas in the case

---

प्रयत्न इत्युच्यते एवं निमेषोन्मेषावपि शरीरस्याधिष्ठातारमनुमापयतः तथाहि निमेषस्तावत् अक्षिपक्ष्मणोः संयोगजनकं कर्म्म उन्मेषस्तयोरेव विभागजनकं कर्म्म एते च कर्म्मणी नोदनाभिघातादि दृष्टिकारणमन्तरेण निरन्तरमुत्पद्यमाने प्रयत्नं विना नोत्पद्येते यथा दारुपुत्रकनर्त्तनं कस्यचित् प्रयत्नात् तथा ऽक्षिपक्ष्मनर्त्तनमपि तेन प्रयत्नवाननुमीयते एवं जीवनमप्यात्मलिङ्गं तथाहि जीवनपदेन लक्षणया जीवनकार्य्यं वृद्धिक्षतभग्नसंरोहणादि लक्षयति तथाच यथा गृहपतिर्भग्नस्य गृहस्य निर्म्माणं करोति लघीयो वा गृहं वर्द्धयति तथा देहाधिष्ठाता गृहस्थानीयस्य देहस्याहारादिना वृद्धिमुपचयं करोति क्षतञ्च भेषजादिना प्ररोहयति भग्नञ्च करचरणादि संरोहयति तथाच गृहपतिरिव देहस्याप्यधिष्ठाता सिध्यतीति एवं मनोगतिरप्यात्मलिङ्गं तथाहि मनस्तावन्मूर्त्तमणु चेति पूर्वप्रकरणे साधितम् तस्य चाभिमतविषयग्राहिणि इन्द्रिये निवेशनम् इच्छाप्रणिधानाधीनम् तथा च यस्येच्छाप्रणिधाने मनः प्रेरयतः स आत्मेत्यनुमीयते यथा गृहकोणावस्थितो दारकः कन्दुकं लाक्षागुटकं वा गृहाभ्यन्तर एव इतस्ततः प्रेरयति ननु दारुपुत्रनर्त्तयिता गृहपतिर्दारको वा न शरीरादन्यो यो दृष्टान्तः स्यात् किञ्च शरीरमेव चैतन्याश्रयः अहङ्कारास्पदत्वात् भवति हि गौरोऽहं स्थूलोऽहमित्याद्यहङ्कारसामानाधिकरण्ये न प्रत्ययः यत्तु बाल्येऽनुभूतं यौवने वार्द्धके वा स्मरति तत्र चेच्छरीरच्छरीरभेदेऽपि स्मरणं न स्यत् नान्यदृष्टं स्मरत्यन्य इति तत्र चेच्छरीरयोर्भिन्नसन्तानत्वेन प्रतिसन्धनं माऽस्तु बाल्यकौमारभेदेऽपि सन्तानैकत्वात् कार्य्यकारणभावेन प्रतिसन्धानमुपपत्स्यत इति तत्र ब्रूमः पित्राऽनुभूतस्य पुत्रेणापि स्मरणप्रसङ्गः तत्र शरीरभेदग्रहोबाधक इति चेत् वृद्धेन बालशरीराभेदेनैव स्वशरीरस्य ग्रहात् प्रतिसन्धानानुपपत्तेः अनुपलब्धपितृकस्य बालस्य शरीरभेदाग्रहस्यापि सत्त्वात् मम शरीरमिति ममकारसामान्येनाहङ्कारस्य भानात् ममात्मेत्यत्रापि तथेति चेन्न तत्र ममकारस्यौपचारिकत्वात् राहोःशिर इतिवदभेदेऽपि षष्ठ्युपपत्तेः हिंसादिफलञ्च कर्त्तरि न स्यात् शरीरस्यान्यान्यत्वात् पातकमिच्छतोभूतचैतनिकस्य कृतहानमकृताभ्यागमश्च दोष इति दिक् इन्द्रियान्तरविकारात् खल्वपि दृश्यते हि नागरङ्गस्य चिरं बिल्वस्य वा रूपविशेषसहचरितं रसविशेषमनुभूय पुनस्तादृशं फलमुपलभमानस्य रसगर्द्धिप्रवर्त्तितो दन्तोदकसंप्लवः स च नाम्लरसानुमितिमन्तरेण अनुमितिर्न व्याप्तिस्मृतिमन्तरेण सा च न संस्कारं विना स च न व्याप्त्यनुभवमन्तरेण स च न भूयोदर्शनमन्तरेणेति इयं ज्ञानपरम्परा नैकं कर्त्तारमन्तरेण कार्य्यकारणभूता सम्भवतीति तथाच गौतमीयं सूत्रम् इन्द्रियान्तरविकारात् इति सुखादयश्च ज्ञानवदेवात्मलिङ्गानि द्रष्टव्याः तथाहि सुखादिकं क्वचिदाश्रितं द्रव्याश्रितं वा कार्य्यवस्तुत्वात् गुणत्वाद्वा रूपादिवदितीतरबाधसहकृतं सामान्यतोदृष्टमेव अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं विषयीकरोति नहि पृथिव्याद्यष्टकानाश्रिता इच्छा द्रव्याश्रितेति प्रतिज्ञा अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं प्रकारमनादाय पर्य्यवस्यति यत्र तु प्रथमं न बाधावतारस्तत्राष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं व्यतिरेकिसाध्यमिति विभागः व्यापकतावच्छेदकप्रकारिकैवानुमितिरिति तु तुच्छम् येन विना प्रतीतिर्न पर्य्यवस्यति तस्यैव तत्र प्रकारत्वात् अन्यथाद्व्यणुकं कार्य्यानाश्रितं सत् क्वचिदाश्रितम् अवयवित्वादित्यादावकार्य्याश्रितत्वप्रकारिकाऽनुमितिर्न स्यात् ॥

of separate bodies as those of Chaitra and Maitra there would be no act of memory, as it is said, One man remembers not that which another saw In the latter case there will be no recollection because Chaitra and Maitra are the offspring of different parents; but, though childhood and youth be different, the act of recollection will take place in the order of cause and effect, because there is but one individual To this argument we reply that it would follow that the son would remember what was experienced by the father. If it be rejoined that perception of difference of body prevents this, we reply that an old man, by having a body different from that which he had as a child, through perception of his body would be incapable of remembering [what he experienced as a child]. A child that never knew his father has no perception of difference of body The notion 'my body' as generally in the case of the word 'my,' belongs to the sense of personal identity. If you reply that so also is the notion 'my soul,' we reply that such is not the case, for the word 'my' is usual tropically, since the genitive may be used where no difference is implied as in the case of 'Ráhu's head' [where Ráhu and Ráhu's head are one and the same thing] Moreover on your supposition there could be no result of injuries and the like [i. e. no rewards or punishments] to the doer, for the body is constantly different [in the transmigratory state]; whereas the harm done by one who has consciousness, and the result unfulfilled, are an objection. It is also inferred from affections of the other organs [that there is a soul], for after experiencing the particular taste which accompanies the particular colour of an orange or *chira-villa* fruit, on again observing such fruit, there arises in one desirous of tasting it a watering in the mouth. This can only take place by an inference respecting the acid flavour, the inference only by remembering the invariable co-existence [of the colour and taste,] the rememberance only by a permanent impression *(Sanskára)*, the permanent impression only by observation of the universal co-existence, and observation only by seeing it repeatedly, and this series of cognitions in the order of cause and effect is impossible unless there be one and the same agent in all. Accordingly the aphorism of Gautama, 'From the affection of other organs of sense.' Pleasure and the like are also to be regarded, like knowledge, as marks of the existence of the soul. For pleasure and the like must inhere in something or have some substance as their substratum, because it is a thing produced or a quality like colour &c. Hence an inference by analogy *(sámányato drishṭam)*, accompanied by a residual inference *(itara-bádha)*, takes for its subject inherence in a substance other than eight substances For the proposition that desire which does not inhere in earth and seven other substances, inheres in a substance, is incomplete unless it assumes as its matter inhesion in a substance other than those eight substances. But if the residual method be not first employed, inhesion in a substance other than eight substances will have to be proved by negative conditional reasoning, and thus the division will be made It is absurd to say that inference has for its matter only that which is essential to universal co-existence, for that is the matter of conviction without which the conviction is incomplete. Otherwise there could be no inference having for its matter inhesion in what is uncaused, such as, an aggregate of two atoms, which does not inhere in anything caused [or produced], inheres in something, because it is composite U

तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ५ ॥

Aph 5. Its substantiality and eternity are explained[1] by air

[1] It may be said, Granted that the soul is perdurable, but why is it eternal, and why a substance? It is therefore stated, that as there is no warrant for assuming that an aerial atom has parts, and therefore it is eternal so also is soul eternal; and that as an aerial atom is a substance because it possesses attributes, so also is soul a substance U.

## THE APHORISMS
### OF THE
## YOGA PHILOSOPHY,
### OF
### PATAÑJALI.

*(Continued from p. 225.)*

*a* Having stated the external Siddhis, he (now) proceeds to explain the internal ones.*

नाभिचक्रे कायव्यूहज्ञानम् ॥ ३० ॥

Aph. 30. A knowledge of the particular structure of the body (arises in an ascetic who performs his restraint) with regard to the circle of the navel.

*b*. The particular structure of the body; that is the constitution of the essential humour (Rasa), the excretion (Mala), the principle (Dhátu) and veins &c of the body:—a knowledge about this structure arises in an ascetic by his performing restraint with regard to the circle of the navel situated in the body called Nábhi

[1] ननु सिद्ध्यतु आत्मा स्थिरः स तु नित्य इति कुतः कुतश्च द्रव्यमित्यत आह यथा वायुपरमाणोरवयवकल्पनायां न प्रमाणमतो नित्यत्वं तथात्मनोऽपि यथा गुणवत्त्वाद्वायुपरमाणुर्द्रव्यं तथात्माऽपीत्यर्थः ॥

* बाह्याः सिद्धीः प्रतिपाद्यान्तरीः प्रतिपादयितुमुपक्रमते ।

which is endowed with sixteen angles The true meaning of this is that the circle of the navel being situated in the middle of the body is a root or origin of veins &c. which are extended throughout ( the body ), and consequently by performing restraint with regard to the circle of the navel, the whole constitution of the body becomes exactly known to the ascetic. *

*a.* He (now) states another Siddhi †

**कण्ठकूपे क्षुत्पिपासाविनिवृत्तिः ॥ ३१ ॥**

Aph 31 A cessation of hunger, thirst, &c (takes place in an ascetic by performing his restraint) with regard to the well of (his) throat

*b.* There is a place like a pit below the tongue in the throat (which is called) the well of the throat, a contact of the vital airs with this well causes the manifestation of hunger, thirst, &c And these inclinations cease in an ascetic who performs a restraint with regard to that (well), *i. e* a superhuman faculty of this nature (is invariably at the command of an ascetic) on account of his brooding upon this stream (*i e* the well of the throat which is situated) below the uvula ‡

*a* He (now) states another Siddhi §

**कूर्मनाड्यां स्थैर्यम् ॥ ३२ ॥**

Aph 32. A firmness (of mind takes place when an ascetic performs his restraint) with regard to the vein (called) kúrma (tortoise)

*b.* A firmness of mind is produced when the ascetic performs his restaint with regard to the vein called kúrma which is situated below the well of the throat.—that is fickleness of mind does not take place when the ascetic (by the efficacy of his meditation) enters the spot (i e the vein) or firmness is produced in the body (of the ascetic) that is, it cannot be moved by anything ||

*a* He (now) states another Siddhi ¶

**मूर्द्धज्योतिषि सिद्धदर्शनम् ॥ ३३ ॥**

Aph. 33. (The ascetic) sees siddhas the divine personages or spirits (when he performs his restraint) with regard to the light—Jyotis—of the head

---

* शरीरवर्त्ति नाभिसंज्ञकं यत्षोडशारं चक्रं तस्मिन् कृतसंयमस्य योगिनः कायगतो योऽसौ व्यूहो विशिष्टरसमलधातुनाड्यादीनामवस्थानं तत्र ज्ञानमुत्पद्यते । इदमुक्तं भवति । नाभिचक्रं शरीरस्य मध्यवर्त्ति सर्वतःप्रसृतानां नाड्यादीनां मूलभूतमतस्तत्र कृतावधानस्य समग्रः सन्निवेशो यथावभाति ।

† सिद्ध्यन्तरमाह ।

‡ कण्ठे गले कूपः कण्ठकूपो जिह्वातोऽधस्तात् कूप इव कूपो गर्ताकारः प्रदेशः प्राणादेर्यत्संस्पर्शनात्क्षुत्पिपासादयः प्रादुर्भवन्ति तस्मिन् कृतसंयमस्य योगिनः क्षुत्पिपासादयो निवर्तन्ते घण्टिकाधस्तात्स्रोतस्यवधार्यमाणे तस्मिन्भावित भवत्येवंविधा सिद्धिः ।

§ सिद्ध्यन्तरमाह ।

|| कण्ठकूपस्याधस्ताद्या कूर्माख्या नाडी तस्यां कृतसंयमस्य चेतसः स्थैर्यमुत्पद्यते । तत्स्थानमनुप्रविष्टस्य चञ्चलता न भवतीत्यर्थः । यदि वा काये स्थैर्यमुत्पद्यते न केनचित् स्पन्दयितुं शक्यत इत्यर्थः ।

¶ सिद्ध्यन्तरमाह ।

*b.* An aperture called Brahmarandhra in the skull (of every body) is a light (Jyotis) on account of its being a reservoir of light.—as the spreading light of a gem situated in the inside of a house collects in the key-hole of the door, so in the same manner the luminousness of sattva of mind, being spread collects in the aperture called Brahmarandhra of the skull (Therefore) when the ascetic performs his restraint with regard to this aperture or light (as just expounded), he catches sight of the divine spirits who dwell in the (wide) space between the earth and sky and who cannot be seen by any other beings (but the ascetic) : that is he sees and converses with them. *

*a.* He (now) states another expedient for omniscience †

**प्रातिभाद्वा सर्वं सर्वनिमित्तानपेक्षम् ॥ ३४ ॥**

Aph. 34 Or (the ascetic disregarding all other instrumental causes (knows) every thing from (only) Prátibhá (a knowledge called Táraka )

*b.* A right knowledge instantly produced from (the operations of ) mind only is called Pratibhá, and a restraint being performed with regard to this, Táraka (i e preserver) a knowledge antecedent to a discriminating faculty of mind Vivekakhyáti, arises As the twilight appears before sun-rise, so Táraka, a knowledge concerning all things, manifests (itself in the ascetic) before the Vivekakhyáti (That is, when this is the case, the ascetic, having then no need of any other restraint, knows every thing

*a* He (now) states another Siddhi ‡

**हृदये चित्तसंवित् ॥ ३५ ॥**

Aph 35. A knowledge about mind—Chitta—(arises in an ascetic, when he performs his restraint) with regard to the internal organ—Hṛidaya.

*b.* "Hṛidaya" a particular part of the body :—in this part, there is the site of the internal organ within a small inverted lotus, and when the ascetic performs his restraint with regard to that site, a knowledge of his own mind as well as that of others arises in him. that is he knows all fancies of his own mind as well as the passions &c, of the minds of others §

---

* शिरः कपाले ब्रह्मरन्ध्राख्यं छिद्रं प्रकाशाधारत्वात् ज्योतिः । यथा गृहाभ्यन्तरस्थस्य मणेः प्रसरन्ती प्रभा कुञ्चिकाविवरप्रदेशे घट्टते तथा हृदयस्थः सात्त्विकः प्रकाशः प्रसृतस्तत्र संपीडितत्वं भजते । तत्र कृतसंयमस्य ये द्यावापृथिव्योरन्तरालवर्त्तिनः सिद्धा दिव्याः पुरुषास्तेषामितरप्राणिभिरदृश्यानां दर्शनं भवति तान् स पश्यति तैश्च संभाषत इत्यर्थः ।

† सर्वज्ञत्व उपायान्तरमाह ।

‡ मनोमात्रजन्यमविसंवादकं द्रागुत्पाद्यमानं ज्ञानं प्रतिभा तस्यां संयमे क्रियमाणे प्रातिभं विवेकख्यातेः पूर्वभावि तारकं ज्ञानमुदेति । यथोदेष्यति सवितरि पूर्वं प्रभा प्रादुर्भवति तद्वद्विवेकख्यातेः पूर्वं तारकं सर्वविषयकं ज्ञानमाविर्भवति । तस्मिन् सति संयमान्तरानपेक्षः सर्वं जानातीत्यर्थः ।

§ सिद्ध्यन्तरमाह ।

|| हृदयं शरीरस्य प्रदेशविशेषस्तस्मिन्नधोमुखस्वल्पपुण्डरीकाभ्यन्तरेऽन्तःकरणस्य स्थानं तत्र कृतसंयमस्य स्वपरचित्तज्ञानमुत्पद्यते स्वचित्तगताः सर्वा वासनाः परचित्तगतांश्च रागादीन् जानातीत्यर्थः G. D. Ś.

PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्कुरश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

# THE PANDIT.

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 50. Benares, July 1st, 1870. Vol. V.


## ॥ उपदेशसहस्र्याः पद्यप्रबन्धः ॥

अहंकृतेरेवात्मत्वमिति मन्यमानस्तस्य चिन्निभत्वमाक्षिपति ।

(११६) नात्माभासत्वसिद्धिश्चेदात्मनो ग्रहणात् पृथक् ॥ ५२९॥
मुखादेश्च पृथक् सिद्धिरिह त्वन्योन्यसंश्रयः ।

नात्मेति । आत्मनः केवलस्य ग्रहणादवभासनात् पृथगेवात्माभासत्वस्य सिद्धिश्चेन्न भवेदाभासावभासेनैवात्मभासो भवेत्तदा इह त्वस्मिन्मते ऽन्योन्यसंश्रय इति योजना । दृष्टान्तश्च विषम इत्याह । मुखादेरिति । दर्पणादिगताभासव्यतिरेकेण ग्रीवास्थत्वेन मुखस्य सदा सिद्धिरस्तीति न तत्रान्योन्यसापेक्षतेत्यर्थः ॥ ११६ ॥

अन्योन्याश्रयमेव स्पष्टयति ।

(११७) अध्यक्षस्य पृथक् सिद्धावाभासस्य तदीयता ॥ ५३०॥
आभासस्य तदीयत्वे ह्यध्यक्षव्यतिरिक्तता ।

अध्यक्षस्येति । तथा चाहमिति प्रतीयमानोहंकृत्यात्मक एव चेतन आत्मेति युक्तमित्यभिप्रायः ॥ ११७ ॥

अहंकृत्यात्मकस्यान्तःकरणस्य स्वप्ने दृश्यत्वेनैव व्यवस्थितत्वात्तदाभासनिरपेक्ष एवात्मा तत्र सिद्ध इति नोक्तदृष्टान्तासङ्गतिरिति परिहरति ।

(११८) नैवं स्वप्ने पृथक् सिद्धेः प्रत्ययस्य दृशेस्तथा ॥ ५३१॥
रथादेस्तत्र शून्यत्वात्प्रत्ययस्यात्मना ग्रहः ।

नैवं स्वप्न इति । प्रत्ययस्यान्तःकरणस्य दृशेरात्मनश्च स्वप्नावस्थायां तथा मुखतत्प्रतिबिम्बवत्पृथगन्योन्यनिरपेक्षतयैव सिद्धेरित्यर्थः । कुत एतदित्यपेक्षायामाह । रथादेरिति । न तत्र रथा न रथयोगा न पन्थानो भवन्तीत्यादिना स्वप्ने रथादिदृश्यराहित्यस्य श्रूयमाणत्वात् प्रत्ययस्यैव रथाद्याकारमापन्नस्य तत्रात्मना स्वप्रकाशचैतन्येन ग्रहः, तथा चात्मा प्रत्ययसंवलनविनिर्मुक्तः स्वप्रकाशतया भासमान एव स्वप्ने विषयाकाराकारितप्रत्ययसाक्षी सिद्ध इत्यर्थः ११८ ॥

स्वप्नपर्यालोचनया चिदात्मनः प्रत्ययाद्विवेकं दर्शयित्वा जाग्रत्स्वभावालोचनयापि तमाह ।

(११९) अवगत्या हि संव्याप्तः प्रत्ययो विषयाकृतिः ॥ ५३२॥
जायते स यदाकारः स बाह्यो विषयो मतः ।

अवगत्या हीत्यादिना । विषयस्याकृतिरिवाकृतिर्यस्य, अथ वा विषयस्याकृतिरेवाकृतिर्यस्य स विषयाकृतिरिति विग्रहः । आत्मचैतन्यव्याप्ते विषयाकारे प्रत्यये जायमाने तस्मिन् यो विषयाकारः स बाह्यो विषय इष्ट इत्यर्थः ॥ ११९ ॥

किं च ।

(१२०) कर्मेप्सिततमत्वात्स तद्वान्कार्ये नियुज्यते ॥ ५३३॥
आकारो यत्र चार्प्येत करणं तदिहोच्यते ।

कर्मेप्सितेति । स बाह्यो विषय ईप्सिततमत्वात्कर्तुः साध्यतयोद्देश्यत्वेनेष्टतमत्वात्कर्म भवति तद्वांस्तद्विषयेच्छावान्कार्ये नियुज्यते कुर्विति प्रेर्यते यत इत्यध्याहारः । आकारसमर्पकस्य कर्मकारकतया विषयत्वमुक्त्वा प्रत्ययस्य करणत्वमाहाकारो यत्रेति । यत्र बुद्धिपरिणामे विषयेणाकारोऽर्प्यतेऽर्प्यते तदिह विषयाभिव्यक्तौ करणमुच्यते तत्तद्बाह्येन्द्रियविशेषिता तत्तदर्थाकारा बुद्धिवृत्तिर्विषयप्रमितिं प्रति करणमित्यर्थः ॥१२०॥

विषयकरणे व्युत्पाद्य कर्तारं व्युत्पादयति ।

(१२१) यदाभासेन संव्याप्तः स ज्ञातेति निगद्यते ॥५३४॥
त्रयमेतद्विविच्यात्र यो जानाति स आत्मवित् ।

यदाभासेनेति । यस्य चित्प्रतिबिम्बस्याभासेन संव्याप्तोऽहंकारः परिणमते स चिदात्मप्रतिबिम्बो ज्ञातेति निगद्यते कथ्यते । एवं साक्ष्यं निर्दिश्य ततः साक्षिणं पृथगुपलम्भयति । त्रयमिति । एतत्त्रयं ज्ञाता ज्ञानं ज्ञेयं चेति विविच्यासाधारण्येनावगम्यात्र त्रये परस्परापेक्षसिद्धिके आगमापायिनि वर्तमान स्वतः सिद्धं तदवधिभूतमनागमापायिसाक्षिणं यो जानाति सम्यगवगच्छति स आत्मवित् त्वंपदलक्ष्यप्रत्यगात्मविदिति योजना । तदुक्तं श्रीभागवते ।

"एकमेकतराभावे यदा नोपलभामहे ।
त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः"
इति ॥ १२१ ॥

विवेकप्रकारमेव विशदयति ।

(१२२) सम्यक् संशयमिथ्योक्ताः प्रत्यया व्यभिचारिणः ॥५३५॥
एकैवावगतिस्तेषु भेदस्तु प्रत्ययार्पितः ।

सम्यगिति ॥ १२२ ॥

भेदस्तु प्रत्ययार्पित इत्येतद्दृष्टान्तेन स्पष्टयति ।

(१२३) आधिभेदाद्यथा भेदो मणेरवगतेस्तथा ॥५३६॥
अशुद्धिः परिणामश्च सर्वं प्रत्ययसंश्रयात् ।

आधिभेदादिति । मणेः स्फटिकादेः प्रत्ययसंश्रयादहंकारप्रतिबिम्बक्तनाभाससंश्रयान्निमित्तादित्यर्थः ॥ १२३ ॥

ननु ग्राह्यग्रहणग्राहकातिरिक्तात्मसिद्धौ किं प्रमाणमुक्तमेतावता भवतीत्यपेक्षायां तदाह ।

(१२४) प्रथनं ग्रहणं सिद्धिः प्रत्ययानामिहान्यतः ॥५३७॥
आपरोक्ष्यात्तदेवोक्तमनुमानं प्रदीपवत् ।

प्रथनमिति । प्रत्ययानां विषयाकाराणां जाग्रत्स्वप्नावस्थानां प्रथनं स्फुरणं ग्रहणमुपादानं स्थितिर्वा व्यवहारो वा सिद्धिः स्वरूपलाभश्चेह व्यवहारभूमौ अन्यतो ऽन्यस्मादापरोक्ष्यादपरोक्षस्वभावाद्भवितुमर्हति, अचित्स्वभावत्वादचित्स्वभावत्वं चागमापायित्वात्प्रदीपवदित्येतदेवानुमानमिहोक्तमित्यर्थः । विमताः प्रत्ययाः, स्वविलक्षणान्याधीनप्रथनग्रहणसिद्धिकाः, अचित्स्वभावत्वात्, प्रदीपादिवदिति प्रयोगः । एवं सामान्यतो दृष्टानुमानेनात्रायं पुरुषः स्वयंज्योतिरात्मैवास्य ज्योतिस्तस्य भासा सर्वमिदं विभातीत्यादिश्रुतिप्रसिद्धस्वप्रकाशे आत्मनि संभावना दर्शितेति द्रष्टव्यम् ॥ १२४ ॥

एवमनुमानमात्मन्युपन्यस्य विधिमुखेन प्रमाणेनात्मसिद्धिरुक्ता, तत्र केचिन्निषेधमुखेनैव प्रमाणेनात्मसिद्धिर्न विधिमुखेनापीति मन्यन्ते तन्मतनिराकरणाय विकल्पयति ।

(१२५) किमन्यद्ग्राहयेत्कश्चित्प्रमाणेन तु केन चित् ॥५३८॥
विनैव तु प्रमाणेन निवृत्त्या ऽन्यस्य शेषतः ।

किमन्यदिति । प्रथमस्तुशब्द एवकारार्थः, द्वितीयस्तुर्वाशब्दार्थः, किं कश्चिद्वादी केन चित्प्रमाणेनैव देहादिभ्यो ऽन्यदात्मतत्त्वं ग्राहयेत्किं वा प्रमाणेन विनैवान्यस्य निवृत्त्या परिशेषत इति विकल्पार्थः ॥ १२५ ॥

प्रथमपक्षे विधिमुखेनैव प्रमाणप्रवृत्तिः सिद्ध्यतीतीष्टहानिः स्पष्टेत्यभिप्रेत्य द्वितीयं प्रत्याह ।

(१२६) शब्देनैव प्रमाणेन निवृत्तिश्चेदिहोच्यते ॥५३९॥
अध्यक्षस्याप्रसिद्धत्वाच्छून्यतैव प्रसज्यते ।

शब्देनैवेति । शब्देन प्रमाणेनानात्मनिवृत्तिरेव चेदिहोच्यतइति संबन्धः, तदा ऽध्यक्षस्य अध्यक्षसद्भावस्यान्यतो ऽप्रसिद्धत्वात्परिशेषासिद्धेः शून्यतैवावशिष्येत नात्मेत्यर्थः ॥१२६॥

ननु चेतनाचेतनयोर्विरुद्धरूपत्वकथनेनान्यनिवृत्तिः शब्देन क्रियते, तथा चाचेतनविरुद्धश्चेतनः परिशिष्यतइति न शून्यताप्रसङ्ग इत्याशङ्क्य परिहरति ।

(१२७) चेतनस्त्वं कथं देह इति चेन्नाप्रसिद्धितः ॥५४०॥
चेतनस्यान्यतः सिद्धावेवं स्यादन्यहानतः ।

चेतनस्त्वमिति । अप्रसिद्धितो नैवमित्युक्तं साधयति । चेतनस्येति । अयमर्थः । सिद्धे हि धर्मिणि प्रतियोगिनि चायमयं न भवतीति तादात्म्यनिषेधेन विरुद्धरूपत्वापदेशः स्यात्र चाद्यापि चेतनपदार्थः पृथक् सिद्ध इत्यनेनैव तत्साधने ऽन्योन्याश्रयः स्यादिति ॥ १२७ ॥

आत्मा नात्यन्तमप्रसिद्धस्तस्य स्वतः सिद्धत्वादित्याशङ्कते ।

(१२८) अध्यक्षः स्वयमस्त्येव चेतनस्यापरोक्षतः ॥५४१॥
तुल्य एवं प्रबोधः स्यादन्यस्यासत्त्ववादिना ।

अध्यक्ष इति । चेतनस्य स्वतो ऽपरोक्षत्वादित्यर्थः । दूषयति । तुल्य इति । एवं सत्यन्यस्यासत्त्ववादिना शून्यवादिना तुल्यः समः प्रबोधः स्यात्, यथा शून्यवादिनः प्रमाणं विना स्वतःसिद्धशून्यमात्मेति न प्रबोधसिद्धिस्तथाध्यक्षस्यापि तवेत्यर्थः ॥ १२८ ॥

इदानीं स्मृतिबलेन स्वतःसिद्धाध्यक्षसिद्धिं शङ्कते ।

(१२९) अहमज्ञासिषं चेदमिति लोकस्मृतेरिह ॥५४२॥
करणं कर्म कर्त्ता च सिद्धास्त्वेकक्षणे किल ।

अहमज्ञासिषमिति । अहमिदमज्ञासिषमितीह व्यवहारे लोकस्य युगपत्स्मृतिदर्शनादननुभूते स्मृत्यभावात्करणकर्मकर्त्तारस्त्रयोप्येकक्षणे प्राग्येन सिद्धाः सोस्त्यध्यक्षः स्वतः सिद्ध इति गम्यते किलेत्यनभिमतत्वद्योतनात्पूर्वपक्षता द्योतितेत्यर्थः ॥ १२९ ॥

एतन्निराकरोति ।

(१३०) प्रामाण्येपि स्मृतेः शैघ्र्याद्यौगपद्यं विभाव्यते॥५४३॥
क्रमेण ग्रहणं पूर्वं स्मृतेः पश्चात्तथैव च ।

प्रामाण्येपीति । स्मृतेः पूर्वानुभवगमकत्वेन प्रामाण्येपि न युगपत्त्रितयसिद्धिगमकत्वं, यतः पूर्वं क्रमेण कर्त्रादीनां ग्रहणमभूत्तथैव च पश्चादुत्तरकालं स्मृतेः संभवो ऽतः शैघ्र्यान्नैरन्तर्येणाविलम्बाद्यौगपद्यं विभाव्यते मृषैवेत्यक्षरार्थः । अर्थत्रयस्यैकस्मृत्यवभास्यत्वे निश्चिते सत्येवं स्यान्न तु तन्निश्चेतुं शक्यते, यतो ऽहमिदं जानामीति क्रमेण व्यपदिश्यते, ऽतो ग्राह्यस्फुरणस्य ग्राहकग्रहणाकारता ऽसंभवात्तत्काले तयोर्न भानं संभवति, एवं ग्राहकस्य प्रतीचः स्फुरणसमये ग्राह्यस्य पराचो नास्ति स्फुरणं विरुद्धाकारद्वयस्यैकस्मिन्नप्रमाणज्ञाने स्फुरणासंभवात्तथा ज्ञानस्यापि विषयैकाकारत्वात्तत्स्फुरणेन ज्ञातृस्फूर्त्तेरिति क्रमेणैव ज्ञात्रादिसिद्धिः प्रागुन्नेया । तस्मादुत्पलपत्रशतभेदनयौगपद्याभिमानवद्युगपत्स्मृतिरित्यभिमानः शैघ्र्यनिबन्धन इति भावः ॥ १३० ॥

स्मृतेर्यौगपद्याभावे कारणान्तरमाह ।

(१३१) अज्ञासिषमिदं मां चेत्यपेक्षा जायते ध्रुवम् ॥५४४॥
विशेषोपेक्ष्यते यत्र तत्र नैवैककालता ।

अज्ञासिषमिति । इदमित्याकारो हि प्रत्यगपेक्षयोल्लिख्यते, तथा मामिति परागपेक्षया धीर्जायते, तथा च यत्र विशेषोन्यप्रतियोगिकोपेक्ष्यते, तत्रैककालता यौगपद्यं नैव घटतइत्यर्थः ॥ १३१ ॥

स्मृतेर्विषयतः स्वरूपतश्च यौगपद्यासंभवात्कर्त्रादिसिद्ध्यैक्यानुमापकत्वानुपपत्तिरित्युक्तं, संप्रति कर्त्रादीनां युगपदनुभवसाधनाभावादपि न युगपत्तत्सिद्धिसंभावनेत्याह ।

(१३२) आत्मनो ग्रहणे चापि त्रयाणामिह संभवात् ॥५४५॥
आत्मन्यासक्तकर्तृत्वं न स्यात्करणकर्मणोः ।

आत्मन इति । अयमर्थः । यथा विषयस्य ग्रहणे कर्त्ता करणं कर्म चेति त्रितयमपेक्ष्यते एवं प्रत्येकं कर्त्रादिग्रहणेपि त्रितयमपेक्षणीयं, तथा चात्मनः प्रमातुश्चकारात्प्रमेयस्य प्रमाणज्ञानस्य च ग्रहणेपि त्रयाणां कर्त्रादीनामिहापेक्षासंभवात्तत्तत्कर्त्रादिस्फुरणमन्तरेण तत्तदर्थस्य तदनुभूतत्वनियमासिद्धेः कर्त्राद्यनवस्था प्रसज्येतेत्यर्थः । तैरेव कर्त्रादिभिः स्वस्वरूपसिद्धिसंभवात्किमित्यनवस्थेति शङ्कां वारयति । आत्मनीति । आत्मन्येकस्मिन्नेव स्वसिद्धावासक्तमुपक्षीणं यत्कर्तृत्वं तदैव करणकर्मणोः सिद्धौ तन्न स्यादित्यर्थः । तथा चैकस्मिन्नवभासे कर्त्रादिभावेनान्वीयमानानां तदैवावभासान्तरसाधनत्वान्वयायोगान्न कर्त्रादित्रितयस्य युगपदनुभवसाधनसंभावनेति तदसिद्धिस्तदवस्थेत्यर्थः ॥ १३२ ॥

कर्त्रादीनां युगपत्सिद्ध्यभ्युपगमे व्याकरणविरोधोपि स्यादित्याह ।

(१३३) व्याप्तुमिष्टं च यत्कर्तुः क्रियया कर्म तत्स्मृतम् ॥५४६॥
अतो हि कर्तृतन्त्रत्वं तस्येष्टं नान्यतन्त्रता ।

व्याप्तुमिति । कर्तुः क्रियया यद्व्याप्तुमिष्टतमं तत्कर्म स्मृतं "कर्तुरीप्सिततमं कर्मे"ति पाणिनिना स्मृतमित्यर्थः । हि यस्मादेवमतः तस्य कर्मणः सकलकारकप्रयोक्तृस्वतन्त्रकर्तृतन्त्रत्वमिष्टं न तद्व्यतिरिक्ताध्यक्षतन्त्रता, उक्तन्यायेन तत्साधकासिद्धेरित्यर्थः ॥ १३३ ॥

तस्माद्विधिरूपेण प्रवृत्तादेव प्रमाणादभिमतवस्तुसिद्धिर्नान्यनिषेधमात्रावसानादिति निर्णीतमित्युपसंहरति ।

(१३४) शब्दाद्वाऽनुमितेर्वापि प्रमाणाद्वा ततोन्यतः ॥५४७॥
सिद्धिः सर्वपदार्थानां स्यादक्षं प्रति नान्यथा ।

शब्दाद्वेति । अन्यतोन्यस्मात्प्रत्यक्षादेवेत्यर्थः ॥ १३४ ॥

जडानां प्रवृत्तप्रमाणादेव सिद्धिरस्तु, न स्वयं चेतनस्येत्याशङ्क्याह ।

(१३५) अध्यक्षस्यापि सिद्धिः स्यात्प्रमाणेन विनैव वा ॥५४८॥
विना स्वस्य प्रसिद्धिस्तु नाक्षं प्रत्युपयुज्यते ।

अध्यक्षस्यापीति । येयमध्यक्षस्य सिद्धिरक्षस्य सा प्रमाणाधीना न वेति विकल्प्यान्त्ये स्वरूपप्रकाशमात्रस्य विना प्रमाणेन सिद्धावपि नाक्षं प्रत्यध्यक्षता तस्य सिद्ध्यतीति दूषयति । विना स्वस्येति ॥ १३५ ॥

अध्यक्षस्वरूपमपि विकल्प्य प्रमाणाधीनसिद्धिकतां तस्य दर्शयन्नाद्यं पक्षमभ्यनुजानाति ।

(१३६) तस्यैवाक्षत्वमिष्टं चेज्ज्ञानत्वे ऽन्या मतिर्भवेत् ॥५४९॥
अन्यस्यैवाक्षतायां च तद्विज्ञाने ध्रुवा भवेत् ।

तस्यैवेति । तस्यैव ज्ञानस्वरूपस्य चेतनस्यैवाक्षत्वमिष्टं चेत्तदा तस्य ज्ञानत्वे चेतनत्व ऽन्या प्रमाणजन्या मतिरपेक्षणीया भवेत्, अन्यस्यैवाचेतनस्याहंकारस्यैवाक्षतायां तद्विज्ञाने ऽध्यक्षविज्ञाने चान्या मतिर्ध्रुवा भवेदिति योजना । उभयथापि विधिमुखप्रमाणाधीना ऽध्यक्षसिद्धिरित्यर्थः ॥ १३६ ॥

अध्यक्षस्य सिद्धस्वरूपत्वान्मानापेक्षा नास्तीत्याशङ्क्य सिद्धिशब्दार्थ एव तर्हि वक्तव्य इत्याह ।

(१३७) ज्ञातता स्वात्मलाभो वा सिद्धिः स्यादन्यदेव वा ॥५५०॥
ज्ञातत्वे ऽनन्तरोक्तौ त्वं पक्षौ संस्मर्तुमर्हसि ।

ज्ञाततेति । किं ज्ञानं सिद्धिः स्वरूपलाभो वा स्यादन्यदेव वोभयान्यप्रकारो वेति विकल्पार्थः । तत्राद्ये दोषमाह । ज्ञातत्वइति । अनन्तरोक्तौ तस्यैवाज्ञत्वमिष्टं चेदित्यादिना पूर्वश्लोकोक्तौ, पूर्वोक्तविकल्पदूषणप्रसरान्नाद्यः कल्पः साधुरित्यर्थः ॥ १३७ ॥

द्वितीयमनूद्य दूषयति ।

(१३८) सिद्धिः स्यात्स्वात्मलाभश्चेद्यत्नस्तत्र निरर्थकः ॥५५१॥
सर्वलोकप्रसिद्धत्वात्स्वहेतुभ्यस्तु वस्तुनः ।

सिद्धिः स्यादिति । निरर्थकत्वे हेतुमाह । सर्वलोकेति । वस्तुनः सर्वस्य स्वहेतुभ्यः स्वात्मलाभरूपा सिद्धिरिति सर्वलोकप्रसिद्धत्वात्तत्र प्रमातृप्रमाणप्रयासो व्यर्थः स्यादित्यर्थः ॥१३८॥

तृतीयं पक्षमप्रसिद्धिपराहतं मत्वा वक्ष्यमाणपक्षविशेषज्ञापनार्थमुक्तं पक्षं निगमयति ।

(१३९) ज्ञानज्ञेयादिवादे ऽतः सिद्धिर्ज्ञातत्वमुच्यते ॥५५२॥
अध्यक्षाध्यक्ष्ययोः सिद्धिर्ज्ञेयत्वं नात्मलाभता ।

ज्ञानज्ञेयादीति । ज्ञानं ज्ञेयं ज्ञाता चास्तीति यस्य वादस्तस्मिन्वादे ज्ञातत्वमेव सिद्धिरुच्यते, अध्यक्षाध्यक्ष्ययोस्तु पुनर्ज्ञेयत्वमेव सिद्धिर्न त्वात्मलाभ इत्यर्थः ॥ १३९ ॥

अध्यक्षस्यापीत्यादेरपरा योजना । अहमज्ञासिषं चेदमित्याख्येयता यऽयेन कर्तृकर्मकरणानां विधिमुखेन प्रवृत्तप्रमाणादेव सिद्धिर्नान्यथेति प्रासङ्गिकमुपपादितमुपसंहृत्याध्यक्षस्यापि वस्तुत्वाविशेषात्प्रवृत्तप्रमाणादेव सिद्धिरिति प्रकृतमनुसरन्नाह । अध्यक्षस्यापीति । वाशब्दः कटाक्षे । अध्यक्षस्यापि द्रष्टुर प्रमाणेन विनैव सिद्धिः स्याद्वेति योजना, नैव स्या दत्यर्थः । चेतनत्वादध्यक्षस्य प्रमाणेन विना कथं न सिद्धिरित्यत आह । विनेति । प्रमाणेन विना स्वस्य वस्तुनः प्रसिद्धिस्तु ज्ञानं प्रमितिं विना नाज्ञं प्रत्युपयुज्यते, ज्ञानस्यैव स्वरूपस्फुरणे प्रमाणानपेक्षा, न ज्ञातुरध्यक्षस्येत्यर्थः ॥

कथमिति चेत्तत्र वक्तव्यम्, अध्यक्ष एवाज्ञः सन् प्रमाणेन विनार्थसिद्धिं साधयिष्यति, किं वा ऽन्यो ऽन्तःकरणादिति, तत्राद्यमनूद्य दूषयति ! तस्यैवेति । चेतनस्याध्यक्षस्यैवेत्यर्थः । ज्ञानत्वे ऽहमध्यक्ष इति ज्ञानवत्त्वे ऽन्या मतिः प्रवृत्तप्रमाणजन्या मतिरपेक्षिता भवेदागन्तुकसिद्धेरन्यनिमित्तत्वादित्यर्थः । द्वितीयमनूद्य दूषयति । अन्यस्यैवेति । तद्विज्ञान इति तस्यान्यस्यान्तःकरणादेरध्यक्षविषयविज्ञाने ऽन्या प्रमाणजन्या मतिर्ध्रुवा भवेदिति योजना । उभयथा ऽपि विधिमुखेन प्रवृत्तप्रमाणादेवाध्यक्षसिद्धिरित्यर्थः ॥

ज्ञातता ज्ञानवत्ता सिद्धिरिति पक्षे तस्यैवाज्ञत्वमिष्टं चेदिति पूर्वश्लोकोक्तविकल्पदूषणप्रसरणमनिवारणं स्यादित्याह । ज्ञातत्वे ऽनन्तरोक्ताविति । यथा व्याख्यातौ स्वपक्षावित्यर्थः । अन्यत्समानम् ॥

ननु ज्ञातता ऽऽत्मलाभातिरिक्ताप्यस्ति स्पष्टता नाम सिद्धिरतो नाप्रसिद्धं पक्षान्तरमिति भट्टमतमाशङ्क्य परिहरति ।

(१४०) स्पष्टत्वं कर्मकर्त्रादेः सिद्धिता यदि कल्प्यते ॥५५३॥
स्पष्टतास्पष्टते स्यातामन्यस्यैव न चात्मनः ।

स्पष्टत्वमिति । स्पष्टत्वं प्राकट्यं कर्मकर्त्रादेः, स्पष्टतास्पष्टते अप्यन्यस्यैव कर्त्रादिविलक्षणस्य साक्षिणश्चिदाभासजननेन स्यातां, न त्वात्मनः कर्त्रादिस्वरूपस्य, जडत्वादित्यर्थः ॥ १४० ॥

एतदेव व्यतिरेकप्रदर्शनेन स्पष्टयति ।

(१४१) अद्रष्टुर्नैव चान्धस्य स्पष्टीभावो घटस्य तु ॥५५४॥
कर्त्रादेः स्पष्टतेष्टा चेद् द्रष्टृता ऽध्यक्षकर्तृका ।

अद्रष्टुरिति । अन्धस्य दर्शनवृत्तिरहितस्य ज्ञातुर्विषयीभूतस्य घटस्य यः स्पष्टीभावः स नैव ज्ञानविषयतातिरिक्तो भट्टमते संभवतीत्यर्थः । एवं सति भाट्टमतानुसारिणा कर्त्रादेः स्पष्टता प्राकट्यरूपेष्टा चेत्तदा द्रष्टृता तद्विलक्षणाध्यक्षकर्तृका ऽवश्यमेष्टव्या, तस्मात्कर्मादेर्जडस्य स्पष्टतायाः प्रकाशापरपर्यायाया असंभवान्न स्पष्टता सिद्धिशब्दार्थः, किं तु ज्ञानविषयतैवे,ति कर्त्रादिगतचिदाभासद्वारा तदधिष्ठानभूतश्चिदात्मा विधिमुखेनैव प्रदीपादिदृष्टान्तानुमानादिना प्रमाणेनावगन्तव्य इति भावः ॥ १४१ ॥

अत्र कर्तृकर्मविहीन एव प्रत्ययः स्वयमाभासत इति वदन् विज्ञानवादी बौद्धः प्रत्यवतिष्ठते ।

(१४२) अनुभूतेः किमन्यस्मिन् स्यात्तवापेक्षया वद ॥५५५॥
अनुभवितरीष्टा स्यात्सोप्यनुभूतिरेव नः ।

अनुभूतेरिति । अनुभूतेः संवेदनस्यान्यस्मिन्कर्त्रादावपेक्षया तव किं फलं स्यात्तद्वद, न किं चित्फलं, तस्याः स्वप्रकाशत्वादित्यर्थः । अनुभवितरि आश्रयभूते सेष्टव्या स्यात्तस्यास्तदधीनत्वदर्शनादिति चेत् त्वं ब्रूयास्तर्हि सोप्यनुभविता नोस्माकं मते ऽनुभूतिरेव न ततः पृथक् तत्सत्त्वे प्रमाणाभावादित्यर्थः ॥ १४२ ॥

कथं तर्ह्यनुभूतिरनुभविता ऽनुभाव्य इति भेददर्शनमित्यत आह ।

(१४३) अभिन्नोऽपि हि बुद्ध्यात्मा विपर्यासितदर्शनैः ॥५५६॥

ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ।

अभिन्नोऽपि हीति । बुद्ध्यात्मा बुद्धिस्वभावो ऽभिन्नोऽप्येकोऽपि विपर्यासितदर्शनैर्भ्रान्तबुद्धिभिः पुरुषैर्ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते प्रतीयते संवित्तिशब्दो ग्रहणशब्दपर्यायः ॥ १४३ ॥

बुद्धेः कारकत्वानङ्गीकाराच्च न कर्त्राद्यपेक्षेत्याह ।

(१४४) भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते ॥५५७॥

सत्त्वं नाशित्वमस्याश्चेत्सकर्तृत्वं तथेष्यताम् ।

भूतिरिति । येषां मते या भूतिरनुभूतिः सैव क्रिया सैव कारकमुच्यते । क्षणभङ्गुरत्वेन विरम्य व्यापारायोगात्तेषां मते कस्तस्याः स्वव्यतिरिक्तोऽपेक्षणीयः स्यादित्यर्थः । प्रथममनुभूतेरन्यानपेक्षत्वं निराकरोति सिद्धान्ती । सत्त्वमिति । अनुभूतेरस्याः सत्त्वं स्वरूपसत्त्वं नाशित्वं क्षणभङ्गुरत्वमिष्टं चेत्तर्हि तथा सकर्तृत्वमपीष्यतामनुभवस्यात्रापि सद्भावादित्यर्थः ॥ १४४ ॥

अथ सत्त्वादिरपि धर्मो नेष्यते इति मतं, तदा क्षणिकत्वपक्षस्याप्यसिद्धिरित्याह ।

(१४५) न कश्चिच्चेष्यते धर्म इति चेत्पक्षहानता ॥ ५५८ ॥

न कश्चिदिति ॥ १४५ ॥

ननु नास्माभिर्विज्ञानस्य क्षणिकत्वादयो धर्मा इष्यन्ते, किं त्वक्षणिकत्वाद्यपोहरूप एव क्षणिकत्वादिरिष्यते, ऽतो नोक्तदोष इति शङ्कते ।

(१४६) नन्वस्तित्वादयो धर्मा नास्तित्वादिनिवृत्तयः ।

न भूतेस्तर्हि नाशित्वं स्वालक्षण्यं मतं हि ते ॥ ५५९ ॥

नन्विति । निराकरोति । नेति । एवं चेत्तर्हि भूतेरनुभूतेर्नाशित्वं न सिद्ध्येत्, हि यस्मात्ते तव भूतेः स्वालक्षण्यं मतं स्वेनैव लक्ष्यते ज्ञायतइति स्वलक्षणं तस्य भावः स्वालक्षण्यं निर्विकल्पकमात्रमिति यावत्, ततः सविकल्पकत्वात्क्षणिकत्वासत्त्वानाशित्वासत्त्वादिव्यावृत्तेरनुभूतेश्च सविकल्पकज्ञानागोचरत्वाच्च सत्त्वनाशवत्त्वादिधर्मसिद्धिरित्यर्थः ॥ १४६ ॥

एतदेव स्फुटयति ।

(१४७) स्वलक्षणावधिर्नाशो नाशो ऽनाशनिवृत्तिता ।

स्वलक्षणेति । अयमर्थः । कार्यं विनश्यच्च निरवधि नश्यति । इदमत्र नास्ति, इदमिदानीं नास्ति, नष्टमिति, वा नाशो व्यवह्रियते यस्मात्तस्मात्किमप्यस्ति विनाशावधिभूतमविनश्यदनुत्पन्नं स्वतः सिद्धं चेत्यभ्युपेयं, तदेतदाह । स्वलक्षणावधिर्नाश इति । स्वरूपमेव लक्षणं प्रमाणं धर्मो वा यस्य स स्वलक्षणः सोऽवधिः सीमा यस्य विनाशस्य स तथेति विग्रहः । तथा च त्वन्मते आविर्भावतिरोभावयोरवधिभूतस्य स्थिरस्याभावान्न सत्त्वविनाशयोः सिद्धिरित्यर्थः । किं चापोहपक्षे ऽन्योन्याश्रयश्च प्रसज्येतेत्याह । नाश इति । सिद्धे, नाशे तद्विरोधिनो ऽनाशस्य सिद्धिस्तत्सिद्धौ तदपोहरूपनाशसिद्धि रित्यर्थः ॥ १४७ ॥

यत्तु सामान्यमनभ्युपगच्छता बौद्धेनागोव्यावृत्तिर्गोलक्षणमित्यभ्युपगम्यते, तदनुपपन्नमन्योन्याश्रयस्य तादवस्थ्यादित्यभिप्रेत्याह ।

(१४८) अगोरसत्त्वं गोत्वं ते न तु तद्गोत्वलक्षणम् ॥ ५६० ॥

क्षणवाच्योऽपि योऽर्थः स्यात्सोऽप्यन्याभाव एव ते ।

अगोरिति । गोरन्यस्याश्वत्वादेरगोपदाभिधेयस्यासत्त्वं निवृत्तिरभावो गोत्वमिति ते मतं, तत्तु न गोत्वलक्षणं सिद्ध्यति, अश्वत्वस्यापि गोत्वव्यावृत्तिलक्षणतया परस्परापेक्षसिद्धित्वादित्यर्थः । अपोहवादे दोषान्तरमाह । क्षणवाच्यो ऽपीति । अन्याभावो ऽक्षणिकाभावः क्षणिक इति ते प्रसज्यते, अतः स्थिरोऽपि क्षणिकताविरोधी त्वया ऽभ्युपगतः स्यादित्यर्थः ॥ १४८ ॥

नन्वभावो नाम न सतो निवृत्तिरिष्यते येनातिप्रसङ्गः स्या,त्किं तु निरुपाख्यगोत्वमेवान्यव्यावृत्त्यात्मना ऽभिलप्यतइति शङ्कते ।

(१४९) भेदाभावे ऽप्यभावस्य भेदो नामभिरिष्यते ॥ ५६१॥

नामभेदैरनेकत्वमेकस्य स्यात्कथं तव ।

भेदाभावेपीति । अभावस्य स्वरूपतो भेदाभावेपि अगोत्वमश्वत्वमनश्वत्वं गोत्वमित्यादिनामभिः स्वरूपभेद इष्यतइत्यर्थः । दूषयति । नामभेदैरिति । एकस्य निःस्वभावस्याभावस्य नामभेदैर्निरर्थकसंज्ञाभेदैरनेकत्वमनेकपदार्थासाधारणतया व्यावृत्त्यात्मत्वं तव कथं घटेतेत्यर्थः ॥ १४९ ॥

किं च भिन्नानां व्यावृत्तिरपोहो ऽभिन्नानां वा, तत्राद्यमनूद्य दूषयति ।

(१५०) अपोहो यदि भिन्नानां वृत्तिस्तस्य कथं गवि ॥ ५६२॥

नाभावा भेदकाः सर्वे विशेषा वा कथं चन ।

अपोहो यदीति । भेदप्रतियोगिनामानन्त्यात्तदवगममन्तरेण तदपोहानवगमात्तस्यापोहस्य गवि वृत्तिः कथं सिद्ध्येदिति शेषः । तदसिद्धौ च किंचिदभावस्य क्व चित्सुलभत्वाद् व्यवहारानियमप्रसङ्ग इति भावः । द्वितीये दोषमाह । ना-

भावा इति। सर्वेप्यभावा अजत्वाश्वत्वाद्यपोहरूपा न भेदका न गोरितरेतरव्यावृत्तत्वबुद्धिजनकाः स्युस्तथा विशेषा वा भावरूपाः खण्डमुण्डत्वादयो भेदका न स्युर्भेद्यभेदकयोर्भेदासिद्धेरित्यर्थः ॥ १५० ॥

एवं चापोहवादे खण्डो गौर्नीलमुत्पलमित्यादिविशिष्टव्यवहारासिद्धिरियं गौरित्याद्यसाधारणस्वरूपव्यवहारासिद्धिश्च स्यादित्यभिप्रेत्यापोहनिराकरणमुपसंहरति ।

( १५१ ) नामजात्यादयो यद्वत्संविदस्ते ऽविशेषत: ॥ ५६३ ॥

नामजात्यादय इत्यर्द्धेन । ते तव मते संविदो ऽविशेषतो निर्विशेषत्वान्नामजात्यादयो यद्वच्च विशेषणम्, एवं गवादीनामगवादिव्यावृत्तयः खण्डादयो वा न विशेषणमिति विशिष्टव्यवहारलोप एवेति जीवनमपि ते दुर्लभमिति भावः ॥ १५१ ॥

यदुक्तं भूतिर्येषां क्रिया सैवेत्यत्र संविदः क्रियाकारकभेदापेक्षा नास्तीति, तत्प्रत्यक्षमनुमानं वेति प्रमाणद्वयाभ्युपगमविरुद्धमित्याह ।

( १५२ ) प्रत्यक्षमनुमानं वा व्यवहारे यदीच्छसि ।
क्रियाकारकभेदैस्तदभ्युपेयं ध्रुवं भवेत् ॥ ५६४ ॥

प्रत्यक्षमिति । स्पष्टार्थः ॥ १५२ ॥

तथा च संवेदनातिरिक्तवेद्यवेदितृस्वरूपमनिच्छताप्यभ्युपेयमिति बौद्धमतनिराकरणमुपसंहरति ।

( १५३ ) तस्मान्नीलं तथा पीतं घटादिर्वा विशेषणम् ।
संविदस्तदुपेयं स्याद् येन चाप्यनुभूयते ॥ ५६५ ॥

तस्मादिति । येन चाप्यनुभूयते सोपि ज्ञाता ऽभ्युपेयः स्यादित्यर्थः ॥ १५३ ॥

संवित्साक्षिण्यनुमानं प्रमाणमाह ।

( १५४ ) रूपादीनां यथान्यः स्याद्ग्राह्यत्वाद्ग्राहकस्तथा।
प्रत्ययस्य तथान्यः स्याद् व्यञ्जकत्वाच्च दीपवत्॥ ५६६॥

रूपादीनामिति । यद्ग्राह्यं तत्स्वान्यग्राह्यं यथा रूपादिग्राह्या संविदिति बौद्धं प्रति प्रयोगो योज्यः, तथा ऽवभासको ऽवभास्यादन्यो व्यञ्जकत्वाद् घटादेः प्रदीपवदित्यास्तिकान् प्रति प्रयोक्तव्यमित्यर्थः। तथा रूपादीनां ग्राह्यत्वाद्ग्राहकोन्यः स्यात्तथा प्रत्ययस्य ग्राह्यत्वाद्ग्राहकोन्यः स्यात्तथा ग्राहकश्च ग्राह्यादन्यः स्याद्व्यञ्जकत्वात्प्रदीपवदिति श्लोकयोजना ॥१५४॥

कस्तर्हि प्रत्ययाध्यक्षयोः संबन्ध इत्यपेक्षायामाह ।

( १५५ ) अध्यक्षस्य दृशेः कीदृक् संबन्धः संभविष्यति ।
अध्यक्षेण तु दृश्येन मुक्तान्यो द्रष्टृदृश्यताम् ॥ ५६७ ॥

अध्यक्षस्येति । स्पष्टम् ॥ १५५ ॥

द्रष्टृदृश्यसंबन्धाभ्युपगमे बलादाभासो ऽभ्युपगन्तव्य इति दर्शयितुं विकल्पयति ।

( १५६ ) अध्यक्षेण कृता दृष्टिर्दृश्यं व्याप्नोत्यथापि वा ।
नित्याध्यक्षकृत: कश्चिदुपकारो भवेद्धियाम् ॥ ५६८ ॥

अध्यक्षेणेति । अध्यक्षेण प्रत्ययेन दृशेरात्मनः कीदृक् संबन्धो भविष्यति, पारमार्थिको वा ऽपारमार्थिको वेति विमर्शार्थः । तत्राद्यो दृशेः परिणामादिविकारप्राप्तिप्रसङ्गात् सावद्य इत्यभिप्रेत्य द्वितीयमङ्गीकरोति। नित्याध्यक्षेति॥ १५६॥

कोसावुपकार इत्यपेक्षायामाह ।

( १५७ ) स चोक्तस्तन्निभत्वं प्राक् संव्याप्तिश्च घटादिषु।
यथा ऽऽलोकादिसंव्याप्तिर्व्यञ्जकत्वाद्धियस्तथा ॥ ५६९ ॥

स चोक्त इति । स च नित्याध्यक्षकृतो बुद्धेरुपकारस्तन्निभत्वं चिन्निभत्वं प्राक् पूर्वमेव मुखप्रतिबिम्बदृष्टान्तेनोक्त इत्यर्थः। उक्ताभासद्वारा ऽऽत्मनो दृश्यं बाह्यविषयसंबन्धं वक्तुं साभासाया बुद्धेर्विषयव्याप्तिं सदृष्टान्तमाह । संव्याप्तिश्चेति। यथा घटादिष्वालोकादिसंव्याप्तिर्व्यञ्जकत्वात्तथा धियो दृश्यघटादिव्याप्तिरित्यर्थः ॥ १५७ ॥

उक्तमेव स्फुटयति ।

( १५८ ) आलोकस्थो घटो यद्वद्बुद्ध्यारूढो भवेत्तथा ।
धीव्याप्तिः स्याद्घटारोहो धियो व्याप्तौ क्रमो भवेत्॥५७०॥

आलोकस्थ इति । यद्वद्यथा ऽऽलोकनिविष्टो घट आलोकारूढो भवेत्तथा बुद्धिनिविष्टो बुद्ध्यारूढो भवेत्, आरूढ इत्युक्ते पुरुषाश्वयोरिवोपर्यधोभाव इति शङ्कां वारयति । धीव्याप्तिः स्यादिति । यद्येवं विषयव्याप्तिमात्रमेव धियो विषयव्यञ्जकत्वं तर्ह्यात्मनो बुद्धेश्च को विशेष इत्याशङ्क्य विशेषमाह । धियो व्याप्तौ क्रमो भवेदिति ॥ १५८ ॥

धियो विषयव्याप्तौ क्रमो भवेन्नात्मन इत्यर्थादुक्तं विशेषं विशदयति ।

( १५९ ) पूर्वं स्यात्प्रत्ययव्याप्तिस्ततो ऽनुग्रह आत्मनः ।
कृत्स्नाध्यक्षस्य सो ऽयुक्तः कालाकाशादिवत्क्रमः ॥५७१॥

पूर्वमिति । धियो विषयव्याप्तिः पूर्वं प्रथममिव प्रथमं स्यात्ततो विषयाकारतायां सिद्धायामात्मनो ऽनुग्रहस्तदाकारप्रतिबिम्बभावस्तद्बलाच्च विषयव्यञ्जकत्वमिति क्रमद्रष्टृत्वमन्यशेषत्वं च धियः सिध्यति न तथात्मन इत्याह । कृत्स्नाध्यक्षस्येति । प्रत्यये परिणामभेदेन व्यञ्जकत्वाद्बुद्धेरेव क्रमो युक्तः कृत्स्नाध्यक्षस्य सर्वविक्षेपास्पदतया सर्वदा सर्वत्रानुगतप्रकाशरूपस्यापरिच्छिन्नस्यात्मनो न युक्तः स क्रम इत्यर्थः ।

देशतः कालतो वा क्रमाभावे दृष्टान्तः, कालाकाशादिवदिति ॥ १५९ ॥

नन्वध्यक्षस्यापि भोग्यविषयावभासकत्वाद्बुद्धेरिव परिणामः प्राप्नोतीत्याशङ्क्याह ।

(१६०) विषयग्रहणं यस्य करणापेक्षया भवेत् ।

सत्येव ग्राह्यशेषे च परिणामी स चित्तवत् ॥ ५७२ ॥

विषयग्रहणमिति । करणापेक्षया कर्त्रादिकारकापेक्षया ग्राह्यशेषे स्वासंसृष्टविषयान्तरावशेषे च सति यस्य विषयग्रहणं भवेत्स परिणामी स्याच्चित्तवत्, नैवमात्मनो विषयावभासनं, किं तु नित्यसिद्धप्रकाशस्वभावेन युगपत्स्वाध्यस्तसमस्तावभासनमित्यतो न तस्मिन् परिणामशङ्कावकाश इत्यर्थः ॥ १६० ॥

यद्यपि तस्योक्तरीत्या भोग्यविषयाकारपरिणामो नास्ति, तथापि ब्रह्मज्ञानाकारेण परिणामः स्याद् ब्रह्मणः स्वात्मत्वे सत्यपि तदाकारावभासस्यागन्तुकज्ञानसापेक्षत्वादित्याशङ्क्याह ।

(१६१) अध्यक्षोहमिति ज्ञानं बुद्धेरेव विनिश्चयः ।

नाध्यक्षस्याविशेषत्वान्न तस्यास्ति परो यतः ॥ ५७३ ॥

अध्यक्षोहमिति । तत्त्वमस्यादिवाक्याद्ध्यक्षः परमात्मैवाहमिति यज्ज्ञानं जायते तन्नाध्यक्षस्य साक्षिणः परिणामस्तस्याविशेषत्वात् स्वतः परतो वा निरवयवस्यासङ्गस्य विशेषासंभवात्, किं तु बुद्धेरेव साभासाया विनिश्चयो ऽवस्याविशेष इत्यक्षरार्थः । एतदुक्तं भवति । अनेकजन्मानुष्ठितयज्ञादिकृतादृष्टदोषनिवृत्तिसंस्कारवत्याः सगुणब्रह्मोपासनानिराकृतचाञ्चल्यायाः सांप्रतं विवेकवैराग्यशमादिगुणसंस्कृतायाः पदार्थद्वयपरिशोधनज्ञानाहितदृढसंस्कारायाश्च बुद्धेस्तत्त्वमस्यादिवाक्यश्रवणसमनन्तरशोधितपदार्थगतकल्पितभेदांशतिरोधानेनाखण्डाकारा का चिदवस्था जायते तस्यां प्रतिबिम्बितश्चिदात्मा तादृग्वृत्त्यविविक्ताकारेणाहमिति परामृश्य ततो विविक्ताकारमेवोपाध्यंशापोहेन स्वमेव रूपं ब्रह्मेति प्रतिपद्यतइति, न तस्मिन् कोपि विशेष उपजायतइति । चिदात्मनः परिणामाभ्युपगमे परिणामिनश्चित्तवत् स्वान्यवेद्यत्वनियमादात्मनो ऽप्यन्यः साक्षी कल्प्येत, तदनुपपन्नमनवस्थानादप्रमाणकत्वाच्चेत्यभिप्रेत्याह । न तस्यास्ति परो यत इति ॥ १६१ ॥

यद्यप्येवमन्तःकरणस्यैव ज्ञानाकारपरिणामस्तथापि तस्य न ज्ञानफलभागिता, किं त्वात्मन एवेत्यभिप्रेत्याहंकर्तुः फलसंबन्धे दोषमाह ।

(१६२) कर्त्ता चेदहमित्येवमनुभूयेत मुक्तता ।

सुखदुःखविनिर्मोक्तो नाहंकर्त्तरि युज्यते ॥ ५७४ ॥

कर्त्ता चेदिति । कर्त्ता विकारिणा चेदहं मुक्त इति मुक्तता ऽनुभूयेत तदा नाहं कर्त्तेति कर्तृत्वोपमर्देन सुखदुःखविनिर्मोक्तो ऽसंबन्धस्तस्मिन्न युज्यते, कर्तुः सुखादिमत्त्वानुभवविरोधादित्यर्थः । कर्तुरपि क्रियया सह तदा विलीयमानत्वाच्च तस्य फलसंबन्ध इति भावः ॥ १६२ ॥

आत्मन्यपि कथं फलसंबन्धस्तस्य कूटस्थनित्यत्वादित्याशङ्क्य, तत्त्वज्ञानोदयाव्यान्तरीयकतया बाध्यमानाध्यस्तानात्मसंभेदावभासस्य फलत्वोपचारात्तस्य चात्मन्येवोपपत्तेरित्यभिप्रेत्याह ।

(१६३) देहादावभिमानोत्थो दुःखीति प्रत्ययो ध्रुवम् ।

कुण्डलिप्रत्ययो यद्वत्प्रत्यगात्माभिमानिना ॥ ५७५ ॥

बाध्यते प्रत्ययेनेहाविवेकेनाविवेकवान् ।

देहादाविति । दुःखीत्युपलक्षणं, सुखी कृशः स्थूलः कामी क्रोधीत्यादेः, कुण्डलस्य स्वसंबन्धित्वाभिमानकृते तत्संयोगवियोगयोः सुखदुःखे यद्वदिति दृष्टान्तार्थः । एवं बाध्यस्याध्यस्तत्वमुक्त्वा तस्य बाधमाह । प्रत्यगात्माभिमानिनेति । अविवेकवानाभिमानिकप्रत्ययोविवेकेन प्रत्यगात्माभिमानिना शुद्धत्वंपदार्थात्माभिमानिना प्रत्ययेन बाध्यतइत्यन्वयः । प्रत्यगात्माभिगामिनेति पाठान्तरं सुगमम् । अत्र प्राग्वृद्धेनार्द्धेन सह गणनयेह वृद्धमर्द्धमेकीकृत्य ॥ १६३ ॥

अविवेकवता विवेकी प्रत्ययः कस्माच्च बाध्यते, विरोधस्य समत्वादित्यत आह ।

(१६४) विपर्यासे ऽसदन्तं स्यात्प्रमाणस्याप्रमाणतः ॥ ५७६ ॥

विपर्यास इति । वैपरीत्ये प्रमाणस्याप्रमाणतापातात् सर्वमसदन्तं शून्यान्तं स्यात् प्रामाणिकस्यार्थस्यासत्त्वे प्रतिभासस्य निरालम्बनत्वापत्तौ निरवधिको बाध इति शून्यान्ततापसङ्ग इत्यर्थः । अयमर्द्धोप्येकः ॥ १६४ ॥

विवेकेनाविवेकबाधो भवतीति पूर्वमुक्तं प्रपञ्चयति ।

(१६५) दाहच्छेदविनाशेषु दुःखित्वं नान्यथा ऽऽत्मनः ।

नैव ह्यन्यस्य दाहादावन्यो दुःखी भवेत्क्वचित् ॥ ५७७ ॥

दाहच्छेदेति । दाहादिदेहोपघातनिमित्तं हि दुःखमनुभूयते, नान्यथा, तच्च देहाभिमाननिबन्धनमन्यथा सुषुप्तावपि प्रसङ्गादात्मा च देहादेरन्य इति प्रमाणसिद्धमतोन्यगतदाहादिना ऽन्यस्य दुःखे ऽतिप्रसङ्गादध्यासनिबन्धनं दुःख्यहमस्मीति ज्ञानमित्यर्थः ॥ १६५ ॥

आत्मनः स्वतो दाहादिसंबन्धाभावे प्रमाणमाह ।

(१६६) अस्पर्शत्वाददेहत्वान्नाहं दाह्यो यतः सदा ।
तस्मान्मिथ्याभिमानोत्थं मृते पुत्त्रे मृतिर्यथा ॥ ५७८ ॥

अस्पर्शत्वादिति । फलितं सदृष्टान्तमुपसंहरति । तस्मादिति ॥ १६६ ॥

॥ शेष उत्तराङ्के ॥

---

## ॥ अथ बालभारतस्य ॥

॥ पञ्चमः सर्गः ॥

शितिद्युतिः सत्यवतीतनूजः
पुनातु सूर्येन्दुविलोचनो वः ।
बभौ महाभारतशब्दनाम्ना
गुणेन संक्षिप्तमिवाम्बरं यः ॥ १ ॥

अथो पृथासुनुसभाविभूति-
स्पर्धासमुत्पादितपातकेन ।
च्युता सुधर्मेव दिवः पृथिव्यां
शुभा सभाकारि सुयोधनेन ॥ २ ॥

धुनीतनूजे मयि च स्थितेन्त-
र्नैवानयः स्यादिति संप्रबोध्य ।
दुरोदरार्थं विदुरो निषेधन्
नृपेण पार्थानयने नियुक्तः ॥ ३ ॥

हरित्वरापीतमहत्पथेन
रथेन धीमान् व्यथमानचेताः ।
तत् खाण्डवप्रस्थपुरं स हस्ति-
पुराज्जवेनोपपुरादिवाप ॥ ४ ॥

कृत्वा सुहृद्द्यूतकृते कुरूणां
प्रभुः सभामाह्वयते द्रुतं त्वाम् ।
इत्युक्तवन्तं विदुरं प्रपूज्य
हसन्निवाचष्ट तपस्तनूजः ॥ ५ ॥

वशंवद द्यूतगुणेन वेद्मि
छद्मैतदातन्यत सौबलेन ।
युद्धैरजय्यो हि यथा तथापि
जेयो रिपुः स्यादिति साधु तद्धीः ॥ ६ ॥

जयाजयाख्याजुषि संयतीव
द्यूतेऽपि हूतो न निवर्तते यः ।
स त्वचगोचैकपतिस्ततोऽह-
मेष्यामि तस्यां पुरि यद्भविष्यः ॥ ७ ॥

इत्येव निश्चित्य सहानुयातैः
कृष्णापुरोगैरनुजैश्चतुर्भिः ।
रथस्थितो हस्तिपुरं प्रतस्थे
श्रीहानये भानुरिवापराब्धिम् ॥ ८ ॥

पितामहद्रोणविचित्रवीर्य-
पुत्रादिपूजाकृतकृत्यमेतम् ।
दुर्योधनः पूजयति स्म वाह-
मेधक्रतोर्वाहमिवावनीशम् ॥ ९ ॥

अथापरेद्युर्धृतराष्ट्रभीष्म-
मुख्यैर्वृतायामभितः सभायाम् ।
दुर्योधनो धर्मसुतेन रन्तुं
सारैः शकुन्यन्तरितः प्रवृत्तः ॥ १० ॥

अष्टापदाष्टापदमूर्ध्नि यात्य-
मानौ समुत्पाद्य मुहुस्तदाक्षौ ।
युधिष्ठिरश्रीहरणे प्रवृत्तौ
वृत्तौ स्वनैस्तैनतुरट्टहासम् ॥ ११ ॥

गृहान्तरारोपणसारबुध्न-
घात्कारभारप्रतिनाददम्भात् ।
भविष्यदात्मप्रभुमृत्युदुःखा-
च्चकार हाकारमहो सभापि ॥ १२ ॥

सारा दधुः केऽपि कुभूपमृत्यु-
ध्यानैकतानाः किल कालिमानम् ।
भेजुः पृथासूनुविभूतिकृष्टि-
ध्यानेन मन्येऽरुणरूपमन्ये ॥ १३ ॥

उत्थापितारोपितबद्धमुक्तैः
श्यामैश्च रक्तैश्च नृपैरिवैतौ ।
सारैर्विचिक्रीडतुरेकचित्तौ
ग्रामं चरेऽप्यादधतावलङ्घ्यम् ॥ १४ ॥

हाकारधिक्कारपरेषु धर्म-
पुष्टेषु दुष्टेषु च हर्षितेषु ।
यद्यत् पृथाभूः पणतां निनाय
जिगाय तत् तच्छकुनिश्छलज्ञः ॥ १५ ॥

पराजितीभूतसमस्तराज्य-
भरोऽप्यसंभावितरोषदोषः ।
पणेन बन्धूनपि हारयित्वा
स्वं हारयामास स धर्मसूनुः ॥ १६ ॥
सा विद्यतेऽद्यापि तवैव कृष्णा
द्यूतं तया क्रूरपणं विधेहि ।
अपीति पार्थं प्रति धार्तराष्ट्रे
वदत्यमर्षी विदुरो जगाद ॥ १७ ॥
रेरेऽन्धसूनोऽन्धविवेक केयं
क्रूरा कुलोच्छेदकरी मतिस्ते ।
स्वमृत्यवे केसरिणोऽङ्घ्रिघाते-
रमून् किमुत्थापयसि प्रसुप्तान् ॥ १८ ॥
जन्मक्षणोत्थक्षतजास्थिवृष्ट्या
त्रातोऽपि पापान्धतमेन पित्रा ।
न जातमात्रोऽपि हतोऽसि हा धिक्
शशाङ्कवंशैकघुणस्त्वमेव ॥ १९ ॥
कालक्षयज्ञः स्वकुले भवन्तं
मत्वा भविष्यन्तमतिप्रमत्तम् ।
जगत्त्रयीप्रीतिकरो बभार
प्रागेव देवः कलुषत्वमन्तः ॥ २० ॥
रे कौरवाः क्रूरविपाकमन्त-
र्दुष्टं व्रणं वो मरणाय जातम् ।
उन्मूल्यतामेष विशेषशस्त्र-
कर्मप्रगल्भैर्यदि जीवितेच्छा ॥ २१ ॥
इत्यालपत्यालमिवालमस्मिन्
हसन्निवाचष्ट वशंवदात्मा ।
पणीकृता धर्मसुतेन कृष्णा
जितेयमेवं शकुनिर्बभाषे ॥ २२ ॥
दासीयमासीदिति धार्तराष्ट्रः
स्वं प्रातिकामाख्यमयुङ्क्त सूतम् ।
आनेतुमेतां द्रुपदस्य पुत्रीं
कुलक्षयायेव विषस्य वल्लिम् ॥ २३ ॥
निवेद्य वृत्तान्तमथामुनेय-
माहूयमानेति जगाद कृष्णा ।
स्वं हारयित्वा पणितां नृपेण
जेता जयेत् तामिति पृच्छ सभ्यान् ॥ २४ ॥
इत्युक्तिमागत्य वदत्यमुष्मिन्
दुर्योधनो द्रागनुजं न्ययुङ्क्त ।
समानयैनामजयं जयं वा
सभ्यान् स्वयं पृच्छतु संसदीति ॥ २५ ॥
एह्येहि दासी त्वमसीति कोपात्
दुःशासने जल्पति तत्र याते ।
अन्तःपुरान्तः कुरुपुंगवस्य
गन्तुं प्रवृत्तातिभयेन कृष्णा ॥ २६ ॥
क्व यासि दासि त्वमिति क्रुधान्धो
वदन्ननूत्पत्य कचैर्गृहीत्वा ।
चकर्ष कृष्णामधमोऽयमात्म-
द्रोही स्वकानामिव कालरात्रिम् ॥ २७ ॥
स्त्रीधर्मनिर्मापितपारवश्यां
मां मेति कर्षेति शनैर्वदन्तीम् ।
इमां विशेषात् स चकर्ष हर्ष-
परः किमुद्भ्रान्तहृदामकृत्यम् ॥ २८ ॥
गृहीतदुर्योधनशासनेन
दुःशासनेन प्रसभेन कृष्टाम् ।
आलोक्य तां तत्कुलकालवह्नि-
धूम्यामिवाकम्पत राजलोकः ॥ २९ ॥
देवव्रतद्रोणकृपेषु कोऽपि
स्वेदः कुलैकक्षयसूचकोऽभूत् ।
सभाजनः किंच चकार हाहा-
कारस्वरैकार्णवमन्तरिक्षम् ॥ ३० ॥
अधोमुखो निःश्वसितप्रवाह-
संप्लाव्यमानोदररोमराजिः ।
तत् कर्म पश्यन् विदुरो दुरन्तं
शिरो धुनीते स्म धृतं कराभ्याम् ॥ ३१ ॥
इह क्षणेऽप्यस्फुटितं स्फुटाश्म-
रूपं स्मरन्तः स्वमुरो नरेन्द्राः ।
दुःखानलप्लुष्टमतीव चूर्णी-
कर्तुं जलैर्दृग्गलितैरसिञ्चन् ॥ ३२ ॥

महीभुजां कौरवपक्षभाजां
मुखेष्वराजन्त महाट्टहासाः ।
आसन्नसंभावितजीवितव्य-
प्रयाणभेरीप्रणदप्रकाशाः ॥ ३३ ॥
तां वीक्ष्य भीमः कुपितो बभाषे
युधिष्ठिर द्यूतकरौ करौ ते ।
धक्ष्यामि साक्षात् सहदेव वह्निं
यच्छेति कोपे सति को विवेकी ॥ ३४ ॥
ऐन्द्रिस्तमाचष्ट चिराद्विवेक-
निधे धियस्ते किमु विप्लवन्ते ।
अस्मान् विभुः क्षत्रधृतव्रतो य-
दहारयद्भीम यशस्करं तत् ॥ ३५ ॥
इत्यर्जुनोक्त्या शमभाजि भीमे
दुःशासनः संसदमानिनाय ।
तां याज्ञसेनीं प्रसभादकीर्ति-
प्रतानिनीकन्दलवत् कुरूणाम् ॥ ३६ ॥
रजस्वला संसदमेकवासा
विकञ्चुका तेन शठेन नीता ।
सा रोषरूक्षं कृपणं च चक्षु-
स्त्रपानतेषु न्यधित प्रियेषु ॥ ३७ ॥
जितासि किं दासि विलोकसेऽमून्
दुर्योधने निक्षिप मङ्क्षु चक्षुः ।
दुःशासनेनेत्यभिलोडितासौ
सती नमस्कृत्य गुरून् जगाद ॥ ३८ ॥
विष्णोः सखीं पार्षतभूपपुत्रीं
पाण्डोर्धरित्रीकमितुर्वधूटीम् ।
दासीति किं मामयमाह धर्मं
विचार्य वार्यः कुमतिर्भवद्भिः ॥ ३९ ॥
भीष्मो बभाषेऽथ तवाभिभूत्या
कुलक्षयं चेतसि चिन्तयन्तः ।
वत्से वयं मूढहृदो न विद्म-
स्त्वत्प्रश्नमप्यादृतधर्मशास्त्राः ॥ ४० ॥
द्यूते जितास्माभिरसौ न वेति
दुर्योधन पृच्छति धर्मतत्त्वम् ।
सभ्येषु भीत्या खलु यद्वदेषु
प्रोचे विकर्णो धृतराष्ट्रसूनुः ॥ ४१ ॥
सभ्या भयं किं भवतां विभाव्य
धर्मक्रमं ब्रूत यथार्थमेव ।
जितेन राज्ञा पणिता जितासौ
न स्याद्ध्रुवं पञ्चवशा हि कृष्णा ॥ ४२ ॥
इत्यस्य वाचं चिरमभ्यनन्दन्
सभ्या नृपः किंतु रुषाभ्यधत्त ।
विकर्ण नो वेत्सि जितैव कृष्णा
प्राक् क्लृप्तसर्वस्वपणेन साकम् ॥ ४३ ॥
अस्त्राणि वस्त्राणि च पाण्डवानां
जितानि च स्वीकुरु को विलम्बः ।
पञ्चप्रियायाः प्रसभादसत्या
गृहाण वासश्च विचित्रमस्याः ॥ ४४ ॥
अनेकभार्यापि वहत्त्वपात्रं
गीयेत या गौरिव राजतेऽसौ ।
वासस्तदस्या रभसेन कर्ष
गावोऽधिकं भान्ति विनांशुकेन ॥ ४५ ॥
इत्यस्य वाक्यादपि पाण्डुपुत्रा
मुक्तोत्तरीयाः सदसि व्यराजन् ।
समुज्झिताः शारदवारिदौघैः
कराः खरांशोरिव विस्फुरन्तः ॥ ४६ ॥
विचित्रवीर्याङ्गजनिर्विशेषं
सभाजने तत्क्षणमीलिताक्षे ।
दुःशासनः शासनतोऽङ्गभर्तु-
श्चकर्ष चीरं द्रुपदाङ्गजायाः ॥ ४७ ॥
कुतूहलोत्तानहताशनैश्चै-
रपूर्णवाञ्छैं रिपुभिर्न्यरूपि ।
आविर्भवन् नूतनमेव वास-
स्तद्रूपमाच्छादितरूपमस्याः ॥ ४८ ॥
यथा यथासौ वसनं चकर्ष
तथा तथात्युज्ज्वलमाविरासीत् ।
नवं नवं तत्र सुवृत्तभाजि
जवेन वाप्यामिव वारि हारि ॥ ४९ ॥

अनुज्ञया चीवरकर्षणस्य
मुहुर्मुहुः कम्पि शिरः कुरूणाम् ।
अस्त्राधिदेवैरिव पाण्डवीयैः
प्रारब्धमुन्मूलयितुं रराज ॥ ५० ॥

अतिप्रकर्षेऽशुककर्षणाना-
ममर्षतोऽभाषत भीमसेनः ।
अनध्वनीनां श्रवणाध्वनीमां
मम प्रतिज्ञां शृणुत क्षितीशाः ॥ ५१ ॥

दुःशासनस्यास्य विदार्य वक्षः
पिबामि नासृक् चुलुकत्रयं चेत् ।
लिप्ये तदस्यैव दुराशयस्य
पापेन साध्वीपरितापजेन ॥ ५२ ॥

देव्या मणीभासुरदिव्यवासो-
राशिस्तदा संसदि कृष्टमुक्तः ।
बभौ महीयान् धृतराष्ट्रवंश-
दाहाय दावाग्निरिव स्वयंभूः ॥ ५३ ॥

दुःशासने चीवरकर्षखिन्ने
ह्रिया निषण्णेऽथ वधूः पृथायाः ।
अनाथवन्नाथवतीं सतीं मा-
मयं ह हाकर्षदिति व्यलापीत् ॥ ५४ ॥

सूतात्मजस्तामथ भाषते स्म
क्व ते सतीत्वं प्रचुरप्रियायाः ।
जितेत्यनाथासि तदाशु नाथ-
वती भवैकं वृणु कौरवेषु ॥ ५५ ॥

वदत्यदः सूतसुते मदान्धः
पापाब्धिरचोपविशेति जल्पन् ।
मूर्खो मुमूर्षुर्द्रुपदाङ्गजाया
दुर्योधनोऽदर्शयदूरुदेशम् ॥ ५६ ॥

क्रुधोच्छ्वसन् कर्णमुखारिरन्ध्र-
कीर्णाग्निकीलोऽभ्यधिताथ भीमः ।
विनिर्यदौर्वाग्निशिखो युगान्त-
विमुक्तमर्याद इवाम्बुराशिः ॥ ५७ ॥

आस्फालयंश्चीरमपोह्य यं रे
प्रदर्शयः संसदि यज्ञजायाः
दुर्योधनाज्ञौ गदयानयाहं
तं वाममूरुं तव चूर्णयिष्ये ॥ ५८ ॥

इत्युन्नदन्तं दृढकोपपिष्ट-
दन्तं निरूप्य प्रसरन्मदं तम् ।
कम्पं दधुः केचन विष्टरेभ्यः
पेतुः परे मूर्च्छनमापुरन्ये ॥ ५९ ॥

अद्यैव वा श्वोऽप्यथवायमेव
कालः कुरूणां कुमते गुरूणाम् ।
एवं बभूवुर्विदुरापगेय-
शारद्वतद्रोणमुखेषु वाचः ॥ ६० ॥

मुखेन मुञ्चन् शिखिनः शिखौघं
वदन्निवाशेषकुलस्य दाहम् ।
तदग्निहोत्रे कुरुपार्थिवस्य
गोमायुरुच्चैः स्वरमुन्ननाद ॥ ६१ ॥

मत्वेत्यरिष्टं विदुरो दुराशा-
मुन्मुच्य भीचुम्बितचित्तवृत्तिः ।
कदर्थितस्वान्तमकीर्तिशब्दै-
र्दुर्योधनं धीनयनो जगाद ॥ ६२ ॥

ज्येष्ठस्य बन्धोर्दयिता स्वसेव
मातेव वन्द्यैव यथा तथास्तु
सतीशतस्तुत्यपदां सदोऽन्त-
रिमां किमित्थं तु वदस्यबुद्धे ॥ ६३ ॥

त्वं तेजसा स्वेन सतीमयेन
वत्से जगद्भस्मयितुं समर्था ।
न दुर्नयेऽस्मिन्नपि कोपनासि
तुष्टोऽस्मि पाञ्चालि वरं वृणीष्व ॥ ६४ ॥

अथावदत् पाण्डवधर्मपत्नी
तव क्रतौ भूमिभुजः समस्ताः ।
यस्याययुः कर्मसु किंकरत्व-
मकिङ्करः सोऽस्तु तपस्तनूजः ॥ ६५ ॥

वृणु द्वितीयं वरमित्यमुत्र
गुरौ पुनर्जल्पति सा जजल्प ।
अमी सहास्त्रा रथिनः परेऽपि
भवन्त्वदासा नृप पाण्डुपुत्राः ॥ ६६ ॥

निमज्जतामापदि पाण्डवाना-
मसौ भृशं नीरजनिष्ट कृष्णा ।
इत्युक्तयः सभ्यजनस्य भीम-
क्रोधानलान्तर्दधुरिन्धनत्वम् ॥ ६७ ॥
स्त्री नौः किमस्मासु विपत्पयोधिं
वयं तरामो भुजलीलयैव ।
एष द्विषो हन्मि रुषेति जल्पन्
गदामुदस्योत्थित एव भीमः ॥ ६८ ॥
तं वीक्ष्य दुर्योधनकर्णदुःशा-
सनादिषु द्विषिषु कम्पितेषु ।
धृत्वा भुजे धर्मसुतस्तमेषां
वधान्तरायं रचयांचकार ॥ ६९ ॥
प्राक् सुयोधनवधोद्धतानुज-
क्रोधरोधमधुरे युधिष्ठिरे ।
भारतीमथ विचित्रनन्दन-
श्चन्दनद्रवनिभामभाषत ॥ ७० ॥
वत्स मत्सरिषु हृच्छरायित-
क्रूरदूरवचनेषु वल्गिषु ।
विप्रियाणि रुषि दग्धुमीश्वरः
को न कुप्यति महासहायवान् ॥ ७१ ॥
मुञ्चतीन्दुमणिरप्यहो महा-
घर्षणेन तमसि स्फुलिङ्गकान् ।
ईदृशोपशमचारुचेतसः
कस्तवोपमितिमेतु हेतुभिः ॥ ७२ ॥
सोदरैः सह हहस्रदीधिति-
स्पर्धिवर्धितमहो महोद्यमैः ।
आद्रियस्व निजराज्यमुज्ज्वलं
पावनीं कुरुकुलावनीमिमाम् ॥ ७३ ॥
सद्गुरूक्तमिव चित्ततः क्वचि-
न्नोपकारमवतारयन्त्यहो ।
अर्थिदत्तमिव वित्तमुत्तमा
न स्मरन्त्यपकृतं परैः कृतम् ॥ ७४ ॥
संसहस्व कुनयं सुयोधने
स्वानुजैर्व्रज निजां पुरीमपि ।
सा पृथाभव भवद्वियोगिनी
क्लेशलेशविवशा भविष्यति ॥ ७५ ॥
तूर्णमित्ययमनुज्ञया पितुः
स्वं पुरं प्रति चचाल धर्मसूः ।
सोदरैः सह मुहुर्मुहुर्महा-
मर्षनिश्वसितहर्षितायुधैः ॥ ७६ ॥
रोषदोषकलुषाः प्रयान्त्यमी
तात मृत्युरयमात्मनः कुले ।
तैः समं समरकर्म दुष्करं
द्यूतमेतदिह वर्ततां पुनः ॥ ७७ ॥
द्वादशैव शरदो वनावनीं
ते व्रजन्त्वजिनवाससो जिताः ।
खञ्जना इव शुचौ त्रयोदशे
गुप्तमेव विचरन्तु वत्सरे ॥ ७८ ॥
इत्यजेयसमरो भवामि ते-
द्वादशाब्दबलवद्बलोच्चयः ।
एवमङ्गजगिरा कुरूद्वहो
धर्मनन्दनमजूहवत् पुनः ॥ ७९ ॥
विशेषकम् ।
क्षत्रधर्ममधिकृत्य धर्मसू-
र्यद्वविध्यहृदयः सभां गतः ।
निर्जितः शकुनिना दुरोदरे
सोदरैः सह वनाय चेलिवान् ॥ ८० ॥
दत्तराज्यविभवः सुयोधने
कृत्तिचीवरधरो युधिष्ठिरः ।
शैलकाननविलासमानसः
शंकरप्रियमशिश्रियत् तदा ॥ ८१ ॥
पाण्डवाननु यतीमथावदद्
द्रौपदीमिति सुयोधनानुजः ।
मुञ्च पञ्च दयितानकिंचना-
नेकमेव वृणु कौरवेश्वरम् ॥ ८२ ॥
पावनिस्तमवदच्चतुर्दशे
वत्सरे निबिडमत्सरेरितः ।
त्वगणकौरवशतार्पितक्रमः
कौरवेशमुकुटे नटाम्यहम् ॥ ८३ ॥

कृत्तिवेष्टितवपुः किमद्य गौ-
गौरयं वदति काननोचितः ।
एवमुद्गिरि सुयोधनानुजेऽ-
हासि कर्णशकुनिक्षितीश्वरैः ॥ ८४ ॥
हन्तुमुद्यतरमन्तुकारिणः
कर्णसौबलकशेषभूपतीन् ।
प्रत्यजानत धृतक्रुधस्त्रय-
स्तेऽपि संसदि वृकोदरानुजाः ॥ ८५ ॥
वीक्ष्य कानपि विनम्य कानपि
स्वान्तचिन्तिततदङ्गमङ्गलान् ।
साग्रहस्य विदुरस्य मन्दिरे
ते विमुच्य जननीमथाचलन् ॥ ८६ ॥
अभिवाद्य पदद्वयं वधूं
चलितां कृच्छ्रमथावदत् पृथा ।
कुसुमास्तरवृन्तभीरु ते
भविताङ्गं सति कर्करातिथिः ॥ ८७ ॥
सुकुमारतयानयाश्रयद्
घुसृणं मौक्तिकमण्डनानि च ।
रविधाम सहिष्यते कथं
भवती स्वेदलवांश्च सा वने ॥ ८८ ॥
जगदेकजितोऽपि यान्त्वमी
सति सत्यव्रतपालिनो वनम् ।
प्रतिपालय मामिहैकिकां
किमु वत्से त्वमपीति मुञ्चसि ॥ ८९ ॥
भवदीयमुखेन्दुनामुना
विकसत्कोमलकान्तिना विना ।
नकुल क्व कुलैककैरव-
प्रतिमं मेऽक्षि विकाशमेष्यति ॥ ९० ॥
यदि सत्यमपालि सोदरै-
र्नियतं पालितमेव तत् त्वया ।
त्वमिहैव कृतस्थितिः शुचः
सहदेव प्रियपुत्र पाहि माम् ॥ ९१ ॥
सकृपः कृतदुर्नयेऽप्यरौ
विजयिन् यः समभूः सभाभुवि ।
अकृपः स कथं स्थितोऽधुना
रुदतीं मां न दृशापि पश्यसि ॥ ९२ ॥
जतुमन्दिरतो विकृष्य मां
निजपृष्ठेन वहन्नहर्निशम् ।
किमु भीम गतस्तदा खिदां
यदिदानीं रुदतीं विमुञ्चसि ॥ ९३ ॥
निजमौलिमणीगणोन्मृजा-
शुचिशोभेषु नमन्नहर्मुखे ।
मम पादनखेषु को युधि-
ष्ठिर कर्ता वदनावलोकनम् ॥ ९४ ॥
उपलानपि सा विलापिनी-
त्यवशारोदयदत्र नाद्भुतम् ।
यदशोच्यत तैस्तदा सुयो-
धनदुःशासनकर्णसौबलैः ॥ ९५ ॥
अधिपाः किमु यान्त्यमी ह हा
वनभूमीमिति नागरो जनः ।
सकलोऽपि रुरोद रोदसी-
दरदूरोदरपूरणारवः ॥ ९६ ॥
माहं दृशा कुपितया धृतराष्ट्रराष्ट्र-
दाहाय भूवमतिदम्भगृहीतराज्यः ।
इत्येष चीरपिहितास्यविभातिभूत-
जीमूतगोपितविधुः प्रचचाल राजा ॥ ९७ ॥
कालेन कालकवलीकरवैरवार्त-
मेतेन कौरवकुलं कलहोत्कटेन ।
विस्तार्य बाहुयुगमित्यगमन्निकाम-
कोपारुणोरुनयनः पवनाङ्गजन्मा ॥ ९८ ॥
एवं किरन् शरकदम्बकमाम्बिकेय-
सेनासु दुर्धरधनुर्धरधैर्यरोधम् ।
युद्धे करोम्यहमिति प्रववर्ष गच्छन्
विष्वक् शतक्रतुसुतः सिकतावितानम् ॥ ९९ ॥
आच्छिद्य मेदुरदुरोदरदम्भजृम्भ-
माणप्रभावबलिनं युधि सौबलेयम् ।
स्याद्युक्तमस्य विशदत्वमिति स्वमास्यं
लिप्त्वा मखीभिरगमत् सहदेववीरः ॥ १०० ॥

रङ्गत्यरातिनिकरे चिरमङ्गमङ्ग
शृङ्गारितं भुजभृतां निभृतं न भाति ।
इत्यङ्गनाजनमनोरमरूपरोचि-
र्धूलीविलेपशबलो नकुलो जगाम ॥ १०१ ॥
इत्यातुरं विशतु हस्तिपुरं पुरन्ध्री-
वर्गो दिनैः कतिपयैरपि कौरवाणाम् ।
इत्याललाप बहुशापमबद्धकेशा
सा पाण्डुपुत्रसुदती रुदती प्रवासे ॥ १०२ ॥
अल्पैरहोभिरिति कौरवकैरवाह्यो
गीतानि बिभ्रतु शपन्निति कोपशोणः ।
धौम्यो जगौ परिपतन् पथि याम्यरौद्र-
सामानि नैर्ऋतदिगुद्धृतदर्भपाणिः ॥ १०३ ॥
उत्पाताः शतशोऽभवन् पुरि समागत्य स्वयं नारदो
वंशोच्छेदमथादिशत् कुरुपतेश्चिन्ताज्वलच्चेतसः ।
तद्भीत्येव समागतेषु शरणं दुर्योधनाद्येषु च
द्रोणो वीररसैकवार्धिरभयं दत्वास्रजन्मङ्गलम् ॥ १०४ ॥
भेजे श्रीजिनदत्तसूरिसुगुरोरर्हन्मतार्हस्थितेः
पादाब्जभ्रमरोपमानममरो नाम व्रतीन्द्रः कृती ।
तत्कीर्त्योकसि बालभारतमहाकाव्ये द्वितीयं सभा-
पर्वैतत् कविगर्वपर्वतपविः प्राप्तं समाप्तेः पदम् ॥ १०५ ॥
अमुष्मिन् पञ्चभिः सर्गैः सभापर्वण्यनुष्टुभाम् ।
जातानि अधिकाशीतिसंयुतानि शतानि षट् ॥ १०६ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते श्रीबालभारतनाम्नि महाकाव्ये वीराङ्के सभापर्वणि पाण्डवप्रवासो नाम पञ्चमः सर्गः ॥ ५ ॥ :: :: ::

---

## ॥ अथ बालभारतस्यारण्यपर्वारम्भः ॥

### ॥ तत्र प्रथमः सर्गः ॥



रामादपि श्लाघ्यगुणः श्रियेऽस्तु
व्यासो मुनिः श्रीदयितावतारः ।
विनिर्मितो येन परार्थमेव
भवार्णवे भारतसेतुबन्धः ॥ १ ॥
अथेन्द्रसेनादिभिरिन्द्रसेना-
जयेऽप्युदारैः सह चारिदारैः ।
भक्तैश्चतुर्भिर्दशभिश्च पार्थो
वीरै रथस्थैः पथि पर्यवारि ॥ २ ॥
वैचित्रिणा नु प्रहितं विचित्रं
रथादिसत्कारमवाप्य पार्थाः ।
संबोध्य संमान्य निवर्त्य पौरां-
स्तन्नित्तचौरा ययुरभ्युदीचीम् ॥ ३ ॥
योगेद्धया धर्मसुतोऽनुगामि-
द्विजव्रजाग्रेसरशौनकोक्त्या ।
शुचं निशायाममुचत् त्रिमार्गा-
तटे प्रयागस्य वटे स्थितोऽसौ ॥ ४ ॥
श्रीविप्रयुक्तेन च भूरिविप्र-
युक्तेन च क्षोणिभुजा विभासे ।
अक्षय्यरूपा रसवत्यवापि
धौम्योपदिष्टेन रवेः स्तवेन ॥ ५ ॥
सरस्वतीमुख्यसरस्वतीभिः
श्लाघ्यं कुरुक्षेत्रमुपास्य भूपः ।
दुरोदरं दूरतरं प्रशंसन्
स जग्मिवान् काम्यककाननाय ॥ ६ ॥
आस्थाय पन्थानमिह प्रथीयान्
स्थितो निशीथे बकदैत्यबन्धुः ।
किर्मीरवीरः समवर्तिसख्य-
वर्ती रणेऽकारि बकारिणाशु ॥ ७ ॥
निन्द्योऽर्वनिं द्योतयिता कथं ते
सूनुः कलेरंश इति त्यजामुम् ।
इत्यादिवादी विदुरो निरस्तः
प्रज्ञादृशा प्राप वनेऽत्र पार्थान् ॥ ८ ॥
संमानितो बन्धुवियोगतप्र-
धीदृष्टिदिष्टेन स संजयेन ।
पुनः पुरेऽगाद्विदुरोऽन्धपुत्र-
कुमन्त्रबोधार्थमभीष्टपार्थः ॥ ९ ॥
घात्या विसैन्या रिपवोऽधुनेति
कर्णोक्तिभिः पार्थवधाय धावन् ।
अनीतिपङ्के किमु मज्जसीति
व्यासेन रुद्धोऽथ सुयोधनो द्राक् ॥ १० ॥

पार्थाग्निशिखासु कराहतोरुं
निरादरं संसदि कौरवेन्द्रम् ।
शशाप मैत्रेयमुनिर्मरुद्भू-
गदाहतोरुर्भव संयतीति ॥ ११ ॥
पार्थे वनं द्वैतवनं गतेऽथ
मित्राणि धात्रीपतयः समीयुः ।
हृदि प्रविष्टे प्रशमे समन्ताद्
गणा गुणानामिव गौरवाय ॥ १२ ॥
यो राजसूयावभृथार्द्रमौलि-
र्यो धर्मसूर्यो मतधर्मतत्त्वः ।
शुचां शुचीनामिव तत्प्रसङ्गाद्
भागं गृहीत्वा क्षितिपैर्गतं तैः ॥ १३ ॥
देशाय सूनुर्द्रुपदस्य साकं
कृष्णासुतैः पञ्चभिरङ्गति स्म ।
तदा यदूनां च विभुः सुभद्रा-
भिमन्युयुक्तोऽगमदुग्रमन्युः ॥ १४ ॥
प्रमोदवल्लीं द्विषदुग्रदाव-
दग्धां प्ररोहाभिमुखीं प्रतन्वन् ।
कृष्णो मुनिर्मेघ इवैत्य पार्थे
प्रतिस्मृतिं नाम ववर्ष विद्याम् ॥ १५ ॥
सरस्वतीसङ्गसदापवित्रं
गतास्ततः काम्यककाननं ते ।
प्रतिस्मृतिं साधयितुं किरीटी
जगाम जाग्रन्महिमा हिमाद्रिम् ॥ १६ ॥
ददाह संक्रन्दननन्दनस्य
दिनैश्च कैश्चिद्द्रववद्वियोगः ।
मनो वनोर्व्यां विततानि तेषां
श्रीशोषशोकद्रुमकाननानि ॥ १७ ॥
इहान्तरे शान्तरसः शरीरी
श्रीलोमशो नाम दिवोऽवतीर्णः ।
ववर्ष देवर्षिवरः कृतार्थे
कर्णानुजे कर्णरसायनं गाम् ॥ १८ ॥
त्वं वर्धसे धर्मतनूज दिष्ट्या
धन्योऽसि मन्यस्व जितानरातीन् ।
जगत्त्रयीजैत्रभुजस्य भीमा-
नुजस्य राजन्नमरास्त्रलाभैः ॥ १९ ॥
गतो हिमाद्रेस्तटमिन्द्रकील-
मिन्द्रेण विप्राकृतिना तपोऽर्थे ।
विमोचितोऽप्यस्त्रमसावमुञ्चन्
स्फुटात्मनाभाषि शिवं भजेति ॥ २० ॥
तपोवनं चाह ततो गतोऽसौ
तपःस्थितो वासविरेकमासम् ।
दिनत्रयानन्तरपारणानि
चकार कारुण्यकलः फलानि ॥ २१ ॥
परं तपस्तत्र ततो वितन्वन्
परंतपः किंचिदचिन्तनीयम् ।
प्रकाशयामास स मासमात्रं
षड्वासरीपारणकं फलानि ॥ २२ ॥
सृजन्नथो मासमुदासवृत्ति-
र्वपुष्यपि त्रीवयशास्तपांसि ।
बभञ्ज पत्रान्तरितानि शीर्ण-
पर्णान्यपर्णापतिदत्तचित्तः ॥ २३ ॥
स्वयं मरुद्भिः परितः स्फुरद्भिः
कृताहूतिर्मासि ततश्चतुर्थे ।
निष्कम्पमूर्ध्वं दधदङ्गमङ्गी-
चकार ताराणि तपांसि पार्थः ॥ २४ ॥
हिमाद्रिशृङ्गाणि हिमार्दितानि
रसादसाराणि विमुच्य चक्रुः ।
नीलाश्मशृङ्गभ्रमतस्तदङ्गे
दिग्दन्तिनो दन्तहतीरतीव ॥ २५ ॥
रजस्तमोलङ्घनजाङ्घिकेन
क्रोडीचकाराशु हृदा तदानीम् ।
सत्त्वं स्थितं भूतमिवाष्टमूर्ति-
र्जगत्त्रयीमूर्तिमसौ महेच्छः ॥ २६ ॥
तेनाथ तीव्रव्रतलीलयैव
निहन्यमानैरिव भीतभीतैः ।
तस्मिन् प्रदेशे सकलोऽप्यमोचि
द्वेषादिदोषैरसुमत्समूहः ॥ २७ ॥

पुच्छं चमर्यास्तरुगुच्छलग्न-
ममोचयत् सिंहयुवा नखाग्रैः ।
श्रान्तं रतान्ते कलविङ्कयुग्मं
सर्पैर्मृदु व्यज्यत फूत्कृतेन ॥ २८ ॥
शुष्यज्जलादाशु तटादुदस्य
तिमिर्दकेऽमोचि वकेन भूरौ ।
अपाययन्मातृवियुक्तमेण-
मेणारिनारी कृपया पयांसि ॥ २९ ॥
समं समग्रैर्ऋतुभिर्व्यभूषि
वनावनी तत्र विमुक्तवैरैः ।
आविर्बभूवार्जुनमर्जुनस्य
यशो लतापुष्पततिच्छलेन ॥ ३० ॥
अंसद्वयोत्तंसकृपाणचापं
निषङ्गयुग्मव्यतिषङ्गिपृष्ठम् ।
तपांसि तादृंशि च तप्यमानं
तं वीक्ष्य विक्षोभमगुर्दिगीशाः ॥ ३१ ॥
प्रीतोऽद्भुतैस्तस्य तपोभिरेभिः
कुतूहली सत्त्वविलोकनाय ।
तत्राययौ सानुचरः किरात-
रूपं विरूपाक्षविभुर्विभाव्य ॥ ३२ ॥
स्वसंमुखं क्रूरतरस्तरस्वी
मूकासुरः शूकरमूर्तिरुद्यन् ।
पुरः शरेणाशु तवानुजेन
जघ्नेऽनुजघ्ने शशिशेखरेण ॥ ३३ ॥
अयं मयाङ्गीकृत एव कोलः
कुतस्त्वयाहन्यत हन्मि तत् त्वाम् ।
इत्युक्तिभिर्दूतमुखोदिताभिः
पार्थं रणार्थं विभुराबभाषे ॥ ३४ ॥
अथोदितास्त्रे शशिभृत्किरीट-
भिल्ले किरीटी भुजभृत्किरीटः ।
आरोप्य चापं रचयांचकार
ब्रह्माण्डमुन्मण्डपमेव काण्डैः ॥ ३५ ॥
तेनेषुजालेन भिया कराले
त्रस्ते समस्ते गणचक्रवाले ।
प्रभावतस्तस्य धनुर्निषङ्गा-
द्दूरोऽहरद्विस्मितमानसस्य ॥ ३६ ॥
कोशादथाकृष्य कृपाणमुद्य-
त्पाणिः प्रतापी प्रति तं किरातम् ।
तवानुजो भानुजयोग्रजाग्र-
द्दृग्दीप्तिसंदीप्तदिगुच्चचाल ॥ ३७ ॥
हृते कृपाणेऽप्यकृपाणि पाणि-
पातैः विपन्मङ्क्षु शिलाकुलानि ।
भीमानुभूरेष पुरो रुरोध
क्रोधैकवीरः प्रधनेऽन्धकारिम् ॥ ३८ ॥
क्षीणद्रुपाषाणगणायुधोऽथ
प्रफुल्लमल्लत्वविधिः स धीरः ।
करेण धृत्वा चरणे स्मरारि-
मबिभ्रमज्ज्वेचपटीमिवाजौ ॥ ३९ ॥
चूलागलद्गाङ्गजलः कपाली
शूली जटालः स्फुटबालचन्द्रः ।
प्रत्यक्षतां तस्य गतस्त्रिनेत्रः
क्षणेन सत्त्वप्रसरेण तुष्टः ॥ ४० ॥
पृथाभवाय प्रथितस्तवाय
ततः प्रभुः पाशुपतास्त्रमस्मै ।
अमानवक्षेप्यमदात्मदान्ध-
सुरासुरश्रेणिजयोज्ज्वलश्रि ॥ ४१ ॥
दास्यत्यसौ नः सुपतीनितीव
देवीभिरभ्यार्चि स पुष्पवृष्ट्या ।
तदा द्युलक्ष्मीमदगर्जिताभो
नभोऽन्तरा दुन्दुभिरुन्ननाद ॥ ४२ ॥
एष प्रसन्नैरथ पर्यवारि
वृन्दारकैरिन्द्र इवेन्द्रसूनुः ।
ददत्युदात्ते सुमनस्त्वभाजः
प्रभोः सुतेऽपि प्रभुवत् प्रभुत्वम् ॥ ४३ ॥
प्रस्वापनास्त्रं धनदः प्रचेताः
पाशान् ददौ दण्डधरश्च दण्डम् ।
जगज्जयामीभिरुदारवीर-
मुदीरयन्तः स्वयमित्यमुष्मै ॥ ४४ ॥

धन्योऽधुना मातलिसारथौ तं
रथेऽधिरोप्य प्रथमानमानम्[1] ।
द्विषन्निकायद्रुतसूदनाय
द्युनायकः स्वर्भुवनं निनाय ॥ ४५ ॥
अर्धासने तं विनिवेश्य शक्रः
किमेतदेतत् परिपृच्छतो मे ।
साक्षान्नराख्यानयुतं समस्त-
मिदं चरित्रं कथयांचकार ॥ ४६ ॥
सगद्गदस्मेरमुखे सहर्ष-
दृग्बद्धबाष्पाम्भसि हृष्टरोम्णि ।
ईदृक्चरित्रश्रवणामृतौघ-
मग्नाशये भूभुजि सानुजेऽपि ॥ ४७ ॥
पुनर्मुनीन्दुर्निजगाद राजन्
भूतीर्थयात्रासु मयि प्रवृत्ते ।
इदं मदीयेन मुखेन पार्थः
कृतप्रणामस्तव संदिदेश ॥ ४८ ॥
युग्मम् ।

संवत्सरैः पञ्चभिरुत्प्रपञ्च्य
दिव्यास्त्रचक्रं रचितेन्द्रकार्यः ।
श्वेताद्रिमौलौ भवदङ्घ्रिपद्मे
रोलम्बयिष्यामि शिरोजराजीः ॥ ४९ ॥
तस्मिन्निति व्यक्तगिरि प्रमोदं
प्रपद्य पृथ्वीपतिरित्युवाच ।
त्वया करिष्ये सह तीर्थयात्रां
प्रसीद सीदन्तु ममाद्य संघाः ॥ ५० ॥
श्रीलोमशेनानुमते मतेऽस्मिन्
वृद्धं जनं काम्यकतो निवर्त्य ।
स्थितस्त्र्यहं पर्वतनारदादि-
कथाभिरद्वेषहृदेष पार्थः ॥ ५१ ॥
नृपोऽन्वहं वर्त्मनि लोमशेन
धौम्येन चादिष्टविशिष्टतत्त्वः ।
चचाल पूर्वां प्रति मार्गशीर्ष-
विरामपुष्योदयवासरेऽसौ ॥ ५२ ॥

सत्स्नानदानार्चितविश्वतीर्थः
पार्थः पथा नैमिषकाननस्य ।
सोद्रेकगङ्गायमुनाम्बुसेकं
प्रयागमागःक्षयदक्षमागात् ॥ ५३ ॥
महानदीभाजमयं गयाद्रि-
मगात् पवित्रं शिरसा गयस्य ।
अब्दस्तदा ग्रीष्मजयेन गर्जन्
विभूषयामास नभोऽन्तरालम् ॥ ५४ ॥
धौम्योऽथ पार्थं निजगाद धर्म्या
न युज्यते पार्थिव तीर्थयात्रा ।
वर्षासु वर्षाम्बुवशप्रभूता-
विर्भूतजीवाकुलभूमिकासु ॥ ५५ ॥
क्ष्मापाल कालः पुनरेष रम्यः
स्थानस्थितानां न तु यात्रिकाणाम् ।
दृक्प्रीतिकृद्धस्यसमस्तवस्तु-
र्जम्बालजालाम्बुकरालवर्त्मा ॥ ५६ ॥
तथाहि पश्याब्दमृदङ्गनादै-
र्नृत्यन्ति नूनं नृपदिक्पुरन्ध्यः ।
आसामतश्चञ्चलरत्नभूषा-
विभासिभा भात्यचिरप्रभासौ ॥ ५७ ॥
और्वाग्निकीला नियतं पयोधेः
समं पयोभिः पपिरे पयोदैः ।
यतास्तदेतेषु तडिद्वितान-
च्छलाज्ज्वलन्त्युज्ज्वलदिग्विभागाः ॥ ५८ ॥
उत्तेज्यते मन्मथसैनिकास्त्र-
गणोऽब्दशाणेषु तडिन्मिषेण ।
तस्य स्फुलिङ्गैरिव पश्य पिङ्गै-
र्द्योति खद्योतकुलैश्चलद्भिः ॥ ५९ ॥
पतिर्द्युतीनां पिहितः पयोदै-
स्तत्कान्तयस्त्रिदिवि तद्वियुक्ताः ।
भ्रमन्ति मूर्च्छन्ति पतन्ति वात-
वीचीचलन्नीपरजोऽपदेशात् ॥ ६० ॥
जित्वा दवाग्नीन् निजधर्मपुत्र-
द्रुमद्रुहः पश्य मुदाम्बुदानाम् ।

१—मेनम् इति पा० ।

गर्जोद्गृहासैर्हसतां लसन्ति
दन्ता इवैता धवला बलाकाः ॥ ६१ ॥

नायं पयोदोऽर्जुन एष नील-
द्युतिर्दिवोऽभ्येति तडित्किरीटी ।
धारापदेशान्नृप दर्शयंस्तेऽ-
भ्यस्तेषुपातान् कलितेन्द्रचापः ॥ ६२ ॥

निरीक्ष्य नीराणि पतन्ति गर्भा-
धानस्य बीजानि भुजंगमीनाम् ।
विभाव्य संभावि सुभिक्षमेते
नदन्ति नृत्यन्ति च नीलकण्ठाः ॥ ६३ ॥

सुजातिभाजः समयस्य राज-
न्नमुष्य पुत्रीः सरितो रसाढ्याः ।
समुद्वहन्तस्त्रपया महान्तः
पयोधयः संप्रति संकुचन्ति ॥ ६४ ॥

वियोगिनीहृद्दलदारणाय
दधाति कामः क्रकचानि कामम् ।
उत्कण्टकान्यागतभृङ्गसङ्ग-
नीलस्फुटत्केतककैतवेन ॥ ६५ ॥

गूढाङ्घ्रयः पङ्कपरंपरासु
श्यामाः स्वरामाविरहार्तिदुःखैः ।
फूत्कारिणो मार्गवशेन वक्रं
सर्पन्ति सर्पा इव पश्य पान्थाः ॥ ६६ ॥

कृतां पयोदैः सरितं स्मराज्ञा-
रेखामिवोल्लङ्घितुमप्यशक्ताः ।
प्राणान् परित्याजयितुं नदद्भि-
र्हृता इवैते पथि पार्थ पान्थाः ॥ ६७ ॥

पान्थस्य दुःखं नलिनस्य नाशं
जलस्य मालिन्यमिनस्य लोपम् ।
पश्याम मा स्मेति विशुद्धपक्षाः
प्रागेव जग्मुर्नृप राजहंसाः ॥ ६८ ॥

सुप्तोऽधुना विष्णुरितीव तीव्र-
मयूखपीयूषमयूखबिम्बे ।
तल्लोचने रोचयतो न रोचि-
ष्णुचयेन विश्वं तिमिरार्तमेतत् ॥ ६९ ॥

स विश्वनाथः स्वपिति स्म पार्थे
तीर्थानि सर्वाण्यपि यन्मयानि ।
इहैव तत् संप्रति तिष्ठ तस्मिन्
विद्राणनिद्रे कुरु तीर्थयात्राम् ॥ ७० ॥

इत्युक्तिभिर्धौम्यपुरोहितस्य
नृपश्चतुर्मासमुवास तत्र ।
मठद्विजास्यादशृणोच्च वृत्तं
राजर्षिराजस्य गयस्य विश्वम् ॥ ७१ ॥

पश्यन्नगस्त्याश्रमदुर्नयादि-
तीर्थान्यथो पार्थिवपुंगवोऽसौ ।
पुरातनानां चरितानि शृण्वन्
जगाम गङ्गान्वितसागराय ॥ ७२ ॥

तस्मिन् कृती पञ्चनदीशतेषु
स्नातो गतः पुण्यकलः कलिङ्गान् ।
अद्वैतधीर्वैतरणीं स्रवन्ती-
मुत्तीर्य तेने पितृतर्पणानि ॥ ७३ ॥

उत्पन्नमत्राखिललोकवृत्त-
विलोकनज्ञानममुष्य राज्ञः ।
तथाशृणोत् षष्टिसहस्रगव्यू-
त्यन्तर्गतानां यमिनां जपं सः ॥ ७४ ॥

दानं ददद्भार्गवसङ्गमाय
गिरा मुनीन्द्रोरकृतव्रणस्य ।
अथ स्थितः कश्यपवेदिकायां
चतुर्दशीं यावदसौ नरेशः ॥ ७५ ॥

नत्वाथ भास्वन्महसं महेन्द्र-
महाद्रिमौलौ भृगुनन्दनर्षिम् ।
क्षोणीशमुख्यो दिशि दक्षिणस्यां
परिस्रुतं नाम नदीं जगाम ॥ ७६ ॥

गोदावरीस्नानकरीकृतश्री-
रगस्त्यतीर्थं द्रविडेषु नत्वा ।
पराक्रमं शक्रसुतस्य नारी-
तीर्थेषु नत्वा स ययौ प्रभासम् ॥ ७७ ॥

आनन्दसंवादविशारदाभ्यां
रामाच्युताभ्यां परिपूजितेन ।

तत्र स्थितं भूमिभुजा समीर-
पयोभुजा द्वादश वासराणि ॥ ७८ ॥

ततो विदर्भेषु गतः स तेने
स्नानं पयोष्णीसरितः पयोभिः ।
तत्र स्थितः शक्रसहासनस्थं
ध्यानेन दृष्ट्वानुजमुन्मदोऽभूत् ॥ ७९ ॥

आननं द्रुपदराजसुतायाः
सर्वतीर्थविहितस्नपनायाः ।
यद्व्यलोकि कमलैः क्व तदेषां
प्रीतये भवतु शीतमरीचिः ॥ ८० ॥

ददत् प्रतिपदं मुदा द्विजजनाय दानान्ययं
नयं च जनयन् जनैर्जगति धर्मवीरोत्तमः ।
उपास्य परितोऽप्युदक्ककुभि सर्वतीर्थावलीः
सुबाहुपुरमासदत् तदनु मेदिनीकामुकः ॥ ८१ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते श्री-बालभारतनाम्नि महाकाव्ये वीराङ्के आरण्यके पर्वणि तीर्थोपासनो नाम प्रथमः सर्गः ॥ १ ॥ :: ::

---

## ॥ अथ बालभारतस्य ॥

### ॥ द्वितीयः सर्गः ॥

कनीनिकीभवन् ध्यानदृशि दर्शयतां सताम् ।
संसारपारावारस्य पारं पाराशरो मुनिः ॥ १ ॥

व्यासादासाद्य तत् कर्णविषं पार्थकथानकम्[1] ।
दिनानि तानि गान्धारीजानिर्दुःखादवाहयत् ॥ २ ॥

ततश्चरणचारेण वैचित्रतनयास्तु ते ।
परिमुक्तरथा युक्तं चेलुर्भूभृद्विभुं प्रति ॥ ३ ॥

भूधराधिपतिभानिभालनो-
त्तालभालतरलं विलोचनम् ।
लोमशस्तदनु सोमवंशजं
चित्तवल्लभमभाषत क्षितेः ॥ ४ ॥

शैलाधिपोऽयमिह राज्यमपास्य पाण्डु-
स्तस्थौ चिरं तव पिता मृगयाविरक्तः ।

1—कथामिषम् इति पा॰ ।

तत्कृप्रनिर्भरतपःप्रभवैर्यशोभिः
शुभ्रैर्विभाति वपुरस्य सुधांशुशुद्धम्[1] ॥ ५ ॥

ध्रुवमवनिधरादतः पितुः स्वात्
किमपि वशीकरणौषधं गृहीत्वा ।
अहरत वपुरर्धमेव गौरी
पदमदित द्युधुनी तु मूर्ध्नि शंभोः ॥ ६ ॥

नृपाल बालश्चिरमद्रिभर्तुः
क्रोडेऽस्य विक्रीडितवान् यतस्त्वम् ।
तत् त्वद्वियोगैरिव तापितोऽयं
प्रालेयजालानि तनौ तनोति ॥ ७ ॥

मूलस्रुतैदृक्स्रुतिविश्वगर्भै
प्रत्यन्तशैलप्रभवैर्भुवोऽन्तः ।
शिरश्च्युतैरस्य हिमाम्बुपूरै-
रन्तर्मरुद्वेश्म ररङ्ग गङ्गा ॥ ८ ॥

ग्रीष्मे दिवाकरकरप्रकरार्दितानां
मध्यंदिनेषु नृप किंनरदंपतीनाम् ।
अस्मिन् गलत्तुहिनबिन्दुकदम्बकानि
धारागृहश्रियमयन्ति गुहागृहाणि ॥ ९ ॥

तपसि दृढतरो दधाति मूर्ध्ना
विबुधमणीन् वहति क्षमां समन्तात् ।
धरणिधर भवन्तमित्यवश्यं
सुहृदमिवेक्षितुमेष नित्यमूर्ध्वः ॥ १० ॥

हेलाविलङ्घितहिरण्मयरत्नशृङ्गाः
शृङ्गारभासुररुचः सहचारिकान्ताः ।
कान्तारभूवसतयोऽच चरन्ति सारं
सारङ्गचञ्चलदृशो मरुतां महेलाः ॥ ११ ॥

रत्नावनीरुचिचयेन मिथोऽप्यलक्ष्या-
वेकच वासरसिकाविह हस्तिसिंहौ ।
जानन्तु मुग्धहृदया इति किं नु वेद्मि
तादृक्तपोधनतपःप्रभवं प्रभावम् ॥ १२ ॥

बहुकासारः सारः
सारस्वतवारिभिर्महानेषः ।

1—शुभ्रम् इति पा॰ ।

निजकान्तारं तारं
तारं वहति व्रजं मरुताम् ॥ १३ ॥

उत्तीर्य तूर्णतरमङ्कतटात् तटिन्यः
पेतुः सुता इव गिरेरिह पादपीठे ।
तल्लब्धरत्नमयभूषणभारभाजो
गच्छन्ति विस्तृतरसा दयितं पयोधिम् ॥ १४ ॥

विश्वैकशत्रुशरणागतमन्धकारं
संरक्ष्य भानुमति वीक्षणभाजि शैलः ।
भ्रान्त्वा दिनं गतवतीह गुहागृहान्त-
राकृष्य मुञ्चति निशि ज्वलितौषधीकः ॥ १५ ॥

भात्येष मेरुरुचिरोऽपि नमेरुशोभी
कृत्स्नामिलामपि वहन्ननिलाभिरामः ।
सव्यालवालमपि चन्दनपादपानां
नव्यालवालमभितो वहते समूहम् ॥ १६ ॥

खेलत्यन्तर्वनस्यास्मिन् रतिभूतरुचारुणः ।
सुरौघः श्रीसखो रवेरतिभूतरुचारुणः ॥ १७ ॥

वन्येभप्रकरकराग्रभग्नवंश-
प्राग्भारप्रभवनवीनमौक्तिकोऽयम् ।
कान्तारप्रसवपरागपिङ्गमूर्ति-
र्नक्षत्रावलिवृतमेरुवद्विभाति ॥ १८ ॥

भित्त्वा भित्त्वा कुवलयदलश्याममभासः सशब्दा-
नब्दानस्मिन् गुरुतरशिलासङ्गसंपीडिताङ्गः ।
सारङ्गाणामपि पतिरपि प्रत्यह हन्ति जातं
मातङ्गानां नहि गुरुरवं संनिधावप्यशङ्कम् ॥ १९ ॥

करिपरिणतदन्ताभ्याससंभग्नशृङ्ग-
च्युतमणिचयमिश्रैरस्य पूरैर्नदीनाम् ।
अपि मृगमृगनाभिभ्राजमानान्तराले-
रुदधिरजनि रत्नस्थानकं मेचकश्च ॥ २० ॥

धूमायमान इव लोलपयोदजालैः
कीलानुबद्ध इव रत्नशिरःसमूहैः ।
स्फारस्फुलिङ्ग इव कान्तिपिशङ्गपङ्क्ति-
व्यूहैरयं वियदुदन्वति वाडवाग्निः ॥ २१ ॥

अस्मिन् महीभृति महाकटकाभिरामे
तुङ्गा विभान्ति शिखराः किल धीरवीराः ।
मौलिस्थितद्रुममिषेण धृतातपत्राः
क्रीडद्भुजंगकपटप्रचलत्कृपाणाः ॥ २२ ॥

गोप्रसङ्गोज्ज्वलच्छायो हरिच्छविपरिच्छदः ।
एष भूमीधरो भाति जगत्त्रितयवस्तुवत्* ॥ २३ ॥

लसन्नीलग्रावच्छविभरविनीलेऽम्बरतले
सदा वर्षाहर्षादिह तटवनेषु क्षितिभृतः ।
समीरप्राग्भारप्रहतनिपतन्निर्झरकणै-
र्मयूरा नृत्यन्ति स्फुरति परितश्चातकचयः ॥ २४ ॥

चूलाचञ्चन्मणिगणविभाकृष्टकोदण्डकेलिः
कीलालोलस्फुरदुरुतडिद्दम्भदम्भोलिशोभी ।
कालेनाब्दच्छलनवभवत्पक्षपक्षोऽयमद्रि-
र्जैत्रं शत्रुं हरिमिव पराजित्य जग्राह शस्त्रे ॥ २५ ॥

प्राचीमञ्चति चण्डरोचिषि चिरे प्राप्ते प्रतीचीं प्रति
प्रातः शीतकरे करैरुभयतो गाङ्गेयभङ्गोज्ज्वलः ।
हैमं कुण्डलमेकतः कलयतः कापालमप्यन्यतो
भूतेशस्य वधूविभक्तवपुषः सैष श्रियं पुष्यति ॥ २६ ॥

त्वद्बन्धुबन्धुरतपोवशदर्शितात्मा
जामातृसङ्गमसुखानि चिरादवाप ।
अभ्यापतन्तमयमित्यधुना भवन्तं
लीलाभिराह्वयति शाखिशिखाङ्गुलीभिः ॥ २७ ॥

इति लोमशोक्तिभिरयं नृपतिः
कुतुकी विलोकयितुमेवमगम् ।
अकृत द्रुतामपि गतिं बत यां
अदधायि सापि वरला पतिभिः ॥ २८ ॥

पुरश्चरद्भीमपदान्तघात-
समीकृतोरुस्वपुटोपलेन ।
पथारुरोहाथ धराधरं तं
धराधवोऽन्यैरनुगम्यमानः ॥ २९ ॥

गन्धमादनवनान्तयायिनो
वायुवर्धितरजोऽम्बुवृष्टिजम् ।

१—शिखा—इति पा० ।

* अनन्तार्थोऽयं श्लोकः ।

घ्नन्ति विघ्नमथ कुञ्जपुञ्जिता
ध्यानशुद्धशुचिचेतसः स्म ते ॥ ३० ॥

आकुले द्विजकुले पथि वध्वां
पातभाजि नकुलेन धृतायाम् ।
अस्मरच्च मनसाथ मरुद्भू-
राजगाम च घटोत्कचवीरः ॥ ३१ ॥

व्योमाङ्गणाग्रसरलोमशदर्शितेन
मार्गेण मेघपरिरब्धतडिल्लताभाः ।
ऊढा घटोत्कचचमूसुभटोच्चयेन
शैलेन्द्रमूर्धनि ययुर्बदरीवनं ते ॥ ३२ ॥

पतिभ्यो निर्विशेषायाः कृष्णायाः सुखदुःखयोः ।
सत्याः स्नानेन गङ्गा स्वं तच्च पुण्यममन्यत ॥ ३३ ॥

कृष्णा तत्र कृतानल्पा कल्पा बिन्दुसरोऽम्बुजैः ।
मुदा मुकुरयामास कैलासस्य गिरेः शिलाः ॥ ३४ ॥

सप्तमेऽहनि कैलासतटे स्वमुखबिम्बवत् ।
पूर्वोत्तरमरुत्कृष्टं कृष्णा हेमाब्जमैक्षत ॥ ३५ ॥

अब्जानि मह्यमीदृंशि यच्छेति प्रेरितस्तया ।
मारुतिः पितृभक्त्येव मरुतः संमुखोऽचलत् ॥ ३६ ॥

गन्धमादनमारुह्य मुह्यद्गन्धर्वगुह्यकम् ।
सशङ्खनादं नादं स चक्रे चकितदिग्गजम् ॥ ३७ ॥

वसन्निह वने हेमकदलीखण्डमण्डने ।
तद्ध्वानजायदुत्तानसंभ्रमो हनुमानभूत् ॥ ३८ ॥

पुच्छाच्छोटेन स पविप्रहारं स्मारयन् गिरिम् ।
उत्तस्थौ कुम्भकर्णादीन् नाकस्थानपि कम्पयन् ॥ ३९ ॥

मत्वायान्तमथ घ्राणाद्बान्धवं गान्धवाहिना ।
तस्थे तस्य प्रियाकर्तुं संकटे पथि सुप्तवत् ॥ ४० ॥

खिन्नो भीमः सुसंरम्भाद्धेमरम्भावनाध्वनि ।
क्वापि तापं सरस्यौज्झत् पानस्नानैर्द्विपेन्द्रवत् ॥ ४१ ॥

गच्छन् पुरः कपीन्द्रं तमथ रुद्धमहापथम् ।
स हेमाद्रिमिवाद्रीन्द्रसेवायातमलोकयत् ॥ ४२ ॥

अपसर्पेत्वसौ मार्गादिति मारुतिरुन्नदन् ।
तूर्णं घूर्णोत्पतन्मुह्यज्जीवक्लीबमगं व्यधात् ॥ ४३ ॥

अथोन्मील्य दृशौ किंचित् किंचिदाकुञ्च्य कन्धराम् ।
मन्दं मन्द इवोवाच वानरोऽयं नरोक्तिभिः ॥ ४४ ॥

महात्मन इवाकारस्तवाचारस्तु नीचवत् ।
यतो वृथा व्यथापाचं जीवान् जनयसि स्वनैः ॥ ४५ ॥

निद्रागुणक्षणक्षीणरोगभोगपृथुव्यथम् ।
किं मां जागरयन् मूढ कृतवान् सुकृतं भवान् ॥ ४६ ॥

मर्त्योऽस्यमर्त्यदेशोऽयं निवर्तस्व किमत्र ते ।
सुखं निद्रां करोम्येष सुखं जीवन्तु जन्तवः ॥ ४७ ॥

निजं कुलं स कार्यं च प्रथयित्वा पृथासुतः ।
ययाचे वैरिमन्थानः पन्थानमथ वानरम् ॥ ४८ ॥

ऊचे कपिरपि स्वात्मज्ञानाच्चेन्[1]मां न लङ्घसे ।
तद्गच्छ पुच्छमुत्क्षिप्य रुग्णोऽहं चलनाक्षमः ॥ ४९ ॥

नात्मवान् लङ्घनीयः स्यादस्य पुच्छमुदस्य तत् ।
इतो यामीति भीमस्तदुत्क्षेप्तुमकरोत् करम् ॥ ५० ॥

अक्षमः स तदुत्क्षेप्तुमहं दृष्टोऽस्मि केनचित् ।
इति दिक्षु क्षिपन्नक्षि कपिना तेन भाषितः ॥ ५१ ॥

लज्जतां मा स्म सामीरे यदहं भवदग्रजः ।
वत्स त्वद्दर्शनोत्कण्ठी प्राप्तः श्रीरामकिंकरः ॥ ५२ ॥

अथानन्दपरिस्यन्दस्यन्दमानस्वमानसः ।
बकारिः शिरसि न्यस्य पाणी वाणीमिमां जगौ ॥ ५३ ॥

मायालब्धमपि प्रेक्ष्य त्वां प्रीतोऽस्मि दृढं प्रभो ।
अतिप्रीणय मामब्धिजयोग्रस्फूर्तिमूर्तिभृत् ॥ ५४ ॥

कल्पान्तक्रमवर्धितानलभयं भ्रान्तद्युसद्दानवं
रुक्मच्छन्नशिरःकिरीटतिलकग्रीवामणिद्यामणि ।
रोमस्तोमशिखातिखर्वितनगं निःसीम भीमस्तदा-
पश्यद् भ्रातुरकातरेण मनसा तद्वर्धमानं वपुः ॥ ५५ ॥

नासाश्वासवशोदरागतमुहुर्यातोडुजातो मुख-
श्वासव्यासनतोन्नतक्षितिधृतिव्यग्रोरगग्रामणीः ।
अङ्गव्याप्तिसमाप्तदिग्भुवनो नाद्यापि वक्षश्च्युत-
स्वेदार्णःकणवर्णमर्णवमसावैक्षिष्ट किं वर्ण्यताम् ॥ ५६ ॥

तत्पुच्छाहतिनिम्नभूतलपथात् पाथोऽभवन्निम्नगा-
स्तच्छ्वासाज्जलधेर्गतैरित इतोऽर्णोभिश्च सप्तार्णवाः ।
तद्धुत्कारबलात् तदा स्फुटितवत्यद्रीन्द्रवृन्दे गुहा-
विद्धे व्योमनि तत्तनूरुहमुखैश्छिद्राणि कक्षच्छलात् ॥ ५७ ॥

---

[1] स्वात्महितं चे- इति पा० ।

कृतं तत्तेजोभिः किमपि रथपृष्ठे प्रसृमरं
स्वबिम्बस्यच्छायावलयमवलोक्य द्युतिपतिः ।
त्रसन् राहुभ्रान्त्या समुपहसितो दूरगतिना
मृगाङ्केण स्वाभिः सह सहचरीभिः खलु तदा ॥ ५८ ॥

कर्णनासाननच्छिद्रैः पञ्चग्रासीकृताम्बरः ।
स बभौ ब्रह्मचारीन्द्रः कपीन्द्रो मरुतां मुदे ॥ ५९ ॥

अदर्शि दर्शनीयं ते रूपं कपिकुलोत्तम ।
भाति यद्वर्णने दीना मुनीनामपि कापि वाक् ॥ ६० ॥

मानहीनस्तवाकाशप्रासादः स्वर्धुनीध्वजः ।
तमेकादशरुद्र द्राङ्मुञ्च चञ्च सतां हृदि ॥ ६१ ॥

कौन्तेयमिति जल्पन्तं द्रागल्पितवपुः कपिः ।
आलिलिङ्ग च सानन्दबाष्पो मूर्ध्नि चुचुम्ब च ॥ ६२ ॥

ऊचे च त्वमभीतो मद्रूपं भीतेन्द्रमैक्षथाः ।
उत्तारणीयमात्मानं तद्वीर्यस्यादधे मुदा ॥ ६३ ॥

अद्यादि सिंहनादस्ते मन्नादेन विमिश्रितः ।
भविता वैरिमर्माविद्विषलिप्तः शरो यथा ॥ ६४ ॥

स्वयं रणक्षणे स्फूर्जन्नर्जुनस्यन्दनध्वजे ।
करिष्ये बाढबूत्कारैर्गतबोधान् विरोधिनः ॥ ६५ ॥

इत्युक्त्वास्मिन्नदृश्यत्वं हनूमति गते सति ।
भीमस्याभूत् तदा दुःख प्रमोदरससंकरः ॥ ६६ ॥

ततो निशातधीः शातकुम्भरम्भावनावनौ ।
हेमपद्मनदीयोगि सोऽगात् सौगन्धिकं वनम् ॥ ६७ ॥

तत्रैलविलशैलाग्रवननिर्झरसंभवाम् ।
सुवर्णपद्मिनीं रक्षोरक्षितामयमैक्षत ॥ ६८ ॥

तस्यां पद्मानि कान्तास्यश्रीसद्मानि निरीक्ष्य सः ।
प्रियामनोरथोऽपूरि मयेत्युत्पुलकोऽभवत् ॥ ६९ ॥

भविष्यद्वल्लभापाणिस्पर्शात् पुलकिते करे ।
तामब्जिनीं स जग्राह रक्षारक्षःक्षयक्षमः ॥ ७० ॥

मिलद्भिःपलभुग्योधैररोधि क्रोधिभिः पुनः ।
उद्यद्भिर्वियदग्रं स मशकैरिव कुञ्जरः ॥ ७१ ॥

उग्रभ्रमित्वराटोपचक्राकारविडम्बिनीम् ।
स गदां भ्रामयामास मूर्ध्नि दैत्यभयंकरीम् ॥ ७२ ॥

तस्मिन् याति तदा तेनुः शिलावर्षाणि राक्षसाः ।
तान्यस्मिन्नपतन् कान्तामुक्तलीलारविन्दवत् ॥ ७३ ॥

अथोत्पातेषु जातेषु कृष्णादिष्टेन वर्त्मना ।
राजा घटोत्कचव्यूढस्तत्रागात् सपरिच्छदः ॥ ७४ ॥

प्रबोध्य द्वेषिरक्षांसि भीमं भूमिपतिः स्वयम् ।
समाश्लिष्यन्नसंतप्तं चक्रे रविमिवाम्बुदः ॥ ७५ ॥

कल्याणकदलीखण्डचारुतामोहितास्ततः ।
तत्रैवास्थुरमी राज्यसंपद्यपि निरादराः ॥ ७६ ॥

शंसन् भास्करशिष्यं स्वं जटाशाली जटासुरः ।
विप्रवेषी छलान्वेषी तानुपेत्येह तस्थिवान् ॥ ७७ ॥

घटोत्कचान्विते भीमे मृगयायां गतेऽन्यदा ।
भुजद्वयवियुक्तेव रेजे यौधिष्ठिरी चमूः ॥ ७८ ॥

एधिष्यन् भीमकोपाग्नेः प्राग् हृत्वास्त्राणि मायया ।
क्षणेऽस्मिन् पाण्डवान् कृष्णायुतान् जह्रे जटासुरः ॥ ७९ ॥

संस्तम्भितगतिं राज्ञा माद्रेयक्षोभितं च तम् ।
चक्रे यमपुरीपान्थं द्रुतमन्वेत्य मारुतिः ॥ ८० ॥

अमी पुनः समागत्य नरनारायणाश्रमम् ।
श्वेताश्वदत्तसंकेताश्चतुर्वर्षीमपूरयन् ॥ ८१ ॥

ते मृगीकण्ठकण्डूभिर्मृगारातिनखाङ्कुरम् ।
ततोऽगमन् शमिपतेराश्रमं वृषपर्वणः ॥ ८२ ॥

स्थित्वा नृपोऽत्र सप्ताहं सत्कृतो वृषपर्वणा ।
भास्वानिव सहस्यान्तेऽचलत् प्रत्युत्तरां दिशम् ॥ ८३ ॥

ततः किरीटिसंपर्कमनोरथमिवोज्ज्वलम् ।
श्वेताद्रिमारुरोहाह्नि चतुर्थे पार्थपार्थिवः ॥ ८४ ॥

अथ गौरीनवोद्वाहप्रसन्नशिवसेवितम् ।
ते ययुः कृतमेरुश्रीनन्दनं गन्धमादनम् ॥ ८५ ॥

कीरोक्तिभग्नसंदेहपठद्वटुकमण्डले ।
महर्षेरार्ष्टिषेणस्य तत्र ते तस्थुराश्रमे ॥ ८६ ॥

पञ्चवर्णदलैः पुष्पैः समीरणसमीरितैः ।
कृष्णाथ लोभिता भीमं प्रैषीत् तद्ग्रहणेच्छया ॥ ८७ ॥

अथाधिरुह्य शैलाग्रमालोक्यार्येऽलकां पुरीम् ।
स नादक्षोभितोदन्वदम्बकम्बुमवादयत् ॥ ८८ ॥

तदा तदाननं तादृक्कम्बुचुम्बितवैभवम् ।
मरालभ्राजिराजीवभ्रमतः शिश्रिये श्रिया ॥ ८९ ॥

त्रुट्यत्तारातितिक्षस्यदकोशस्तस्य कम्बुभूः ।
नादो विघटमानेन्दुकलासंधिरवर्धत ॥ ९० ॥

नादस्तत्कम्बुभूर्भूभृद्गुहोद्भूतप्रतिस्वनः ।
दिशि क्वासौ बभूवेति निश्चिकाय न कश्चन ॥ ६१ ॥

तासु प्रतिध्वनत्कम्बुध्वानश्चूलासु बिम्बितः ।
प्रीतो भीमः प्रियादेशात् कोटिमूर्तिरिवाभवत् ॥ ६२ ॥

हनुमन्नादमिश्रेण सिंहनादेन मोहयन् ।
गन्धर्वान् पुष्पपङ्क्तिं तां सोऽग्रहीद्गन्धमादनात् ॥ ६३ ॥

गन्धमादनवनाधिपालकः
कोपमाप्य मणिमान् महाबलः ।
भीमदक्षिणकरव्यथाकर-
क्षिप्रशक्तिरमरैरनूयत ॥ ६४ ॥

स्वव्यथाहितरुषेव बाहुना
दक्षिणेन हठदक्षिणेन सः ।
क्षिप्रगुप्रकरमार्जिताभिधं
तं व्यधादथ समीरनन्दनः ॥ ६५ ॥

आर्ष्टिषेणमुनिसद्मनि कृष्णां
न्यस्य बन्धुभिरसावथ वव्रे ।
आययौ हतपलादकुलोक्ति-
क्रोधतश्च धनदः प्रधनाय ॥ ६६ ॥

प्रेक्ष्य पाण्डवमपोह्य च रोषं
गुह्यकाधिपतिरेतदवोचत् ।
पुण्यमस्ति मयि नूनमुपेतो
यः स्वयं त्वमिह धर्मतनूजः ॥ ६७ ॥

भूचक्रशक्र मम केलिवनान्यमूनि
नित्यं कृतार्थय यथासुखखेलनेन ।
अत्रैव ते निवसतो मधुसेकमेक-
मासेन दास्यति दृशोस्त्रिदशेन्द्रसूनुः ॥ ६८ ॥

इत्युक्त्वा स्वपदं गते सति धनाधीशे धनाधीश्वरो
भीमं वीररसैकनिर्मितमिवाश्लिष्य प्रशान्तिं नयन् ।
संप्राप्तः पुनरार्ष्टिषेणसविधे मासावधिं तन्मय-
ध्यानोऽयं निरवाहयद्गुरुसुतप्रेक्षाक्षणोत्कण्ठितः ॥ ६९ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते श्रीबालभारतनाम्नि महाकाव्ये वीराङ्के आरण्यकपर्वणि हिमवदधिरोहणो नाम द्वितीयः सर्गः ॥ २ ॥ :: ::

## ॥ खण्डप्रशस्तिः ॥

(२) चन्द्रादित्योरुनेत्रः कमलभवभवस्फारपृष्ठप्रतिष्ठो
भास्वत्कालाग्निजिह्वः पृथुलगलगुहादृष्टनिश्शेषविश्वः ।
अद्भिः पुच्छोच्छ्रिताभिश्चकितसुरवधूनेत्रसंसूचिताभि-
र्मत्स्यश्छिन्नाब्धिवेलं गगनतलमलं क्षालयन्वः पुनातु ॥

मत्स्यः मत्स्याकृतिर्भगवान् वः युष्मान् पुनातु पवित्रीकरोतु, किं कुर्वन्, गगनतलं अलमत्यर्थं क्षालयन्, कीदृग्गगनतलम्, छिन्नाब्धिवेलं छिन्नाद्वैधीकृताः पुच्छचापल्येन आकाशं गच्छन्त्योऽन्तरालेऽब्धिवेलाः समुद्रजलवृद्धयो यस्मिन् तत्, इदं क्रियाविशेषणं वा । काभिः क्षालयन्, अद्भिः पानीयैः, कीदृशीभिः, पुच्छोच्छ्रिताभिः पुच्छादुच्छ्रिताभिः ताडूकसमुद्राच्छोटनादुद्गताभिः, पुनः किंविशिष्टाभिः, चकितसुरवधूनेत्रसंसूचिताभिः चकितानि भयविह्वलानि यानि सुरवधूनामप्सरसां नेत्राणि तैः संसूचिताभिः सविस्मयं दृष्टाभिः, कीदृशो मत्स्यः, चन्द्रादित्योरुनेत्रः चन्द्रश्चादित्यश्च चन्द्रादित्यौ तावेव उरुणी गरिष्ठे नेत्रे यस्येति, पुनः किंविशिष्टः, कमलभवभवस्फारपृष्ठप्रतिष्ठः कमलभवभवा वेदास्तेषां स्फारे गरिष्ठे पृष्ठे स्वपृष्ठप्रदेशे प्रतिष्ठा स्थानं यस्येति, अत्राम्नायः पुराहि शङ्खदैत्यो ब्रह्मणः सकाशाद्वेदान् लात्वा समुद्रस्य शरणं गतः ततस्त्रयस्त्रिंशत्कोटिदेवविज्ञप्त्या कृष्णेन मात्स्यं रूपं धृत्वा दैत्यं निगृह्य समुद्राद्वेदाः स्वपृष्ठे क्षिप्त्वा समानीता इति, अथ वा कमलभवाद् ब्रह्मणस्सकाशाद् भवमुत्पन्नं ब्रह्माण्डं तस्य स्फारे विस्तीर्णे पृष्ठे प्रतिष्ठा यस्य सः, अतिमहागरिष्ठरूपत्वाद् ब्रह्माण्डं मत्स्यपृष्ठे लग्नमस्तीति भावः । यद्वा, कमलभवो ब्रह्मा तद्भवो महेशस्तद्वत् स्फारा बहुला पृष्ठे प्रतिष्ठा यस्येति, पुनः किंविशिष्टः, भास्वत्कालाग्निजिह्वः भास्वान् देदीप्यमानो यः कालो यमः, स च ज्जगज्जन्तुदाहकत्वेनाग्निरिवाग्निः स एव जिह्वाऽस्येति, पुनः किंविशिष्टः, पृथुलगलगुहादृष्टनिश्शेषविश्वः पृथुलगलगुहायां विस्तीर्णकण्ठकुहरे अदृष्टं निश्शेषं विश्वं जगद्यस्येति, सर्वस्यापि जगतो गलगुहायां निक्षिप्तत्वात्परैरदृश्यमानतेति भावः । अथवा पृथुलगलगुहायां दृष्टं निश्शेषं विश्वं यस्मिन् सः ॥ २ ॥

(३) जीयासुः शकलाकृतेर्भगवतः पुच्छच्छटाच्छोटना-
दुद्यन्तः शतचन्द्रिताम्बरतलं ते बिन्दवः सैन्धवाः ।
यैर्व्यावृत्य पतद्भिरौर्वशिखिनस्तेजोजटालं वपुः
पानाध्मानवशादरोचकरुजां चक्रे चिरायास्पदम् ॥

शकलाकृतेर्मत्स्याकृतेर्भगवतः पुच्छच्छटाछोटनात् पुच्छच्छटाभिर्यदाछोटनमितस्ततः आलोडनं तस्माच्छतचन्द्रिताम्बरतलं यथास्यात्तथा शतचन्द्रितं शतमित्युपलक्षणं अनेके संजाताश्चन्द्रा अस्येति तारकादित्वादितच् ततः शतचन्द्रितमम्बरतलं शतचन्द्रिताम्बरतलं तलशब्दोऽत्रोपरितनभागवाची आदर्शतलादिवत्, उद्यन्तऊर्ध्वं गच्छन्तस्ते सैन्धवाः सिन्धौ भवाः सैन्धवाः भवार्थे अण् बिन्दवः पृषतो जीयासुः, ते इति के यैर्बिन्दुभिः प्रागाकाशं गच्छद्भिः पश्चाद्व्यावृत्य निवृत्य पतद्भिः और्वशिखिनो बडवाग्नेस्तेजोजटालं तेजांस्येव जटा अस्येति तत्, प्राणिस्थादातोलजन्यतरस्यामितिमत्वर्थीयो लच्, तेजोव्याप्तमिति भावः । ईदृग्वपुः शरीरं अरोचकरुजां अरुचिरोगाणां चिराय चिरकालं आस्पदं स्थानं चक्रे, कथमरुचिर्जातेत्याह । पानाध्मानवशादिति, पानेन अतिजलपानेन अध्मानमग्निसंयोगाभावः । "ध्माशब्दाग्निसंयोगयोरिति" तद्वशादन्योऽपि यस्तादृग्ङ्निदाघज्वरादिरुगाक्रान्तो बहुपानीयं पिबति तस्य पश्चात्पानीयस्यारुचिर्जायते तथैतस्येति भावः । अथवा पानेनातिजलपानेनाध्मानवशाद् वातव्याकोपवशादरोचकरुजां चिरायास्पदं चक्रे, अतिपानेनाध्मानमरुचिश्च जायते इति निदानविदः ॥ ३ ॥

(४) दिश्याद्वः शकलाकृतिः स भगवान्नैश्श्रेयसीं सम्पदं
यस्य स्फूर्जदतुच्छपुच्छशिखरप्रेङ्खोलनक्रीडनैः ।
क्षुभ्यद्वार्धिसमुच्छलज्जलभरैर्मन्दाकिनीसङ्गतै-
र्गङ्गासागरसङ्गमप्रणयिनी जाता विहायस्थली ॥

स भगवान् शकलाकृतिर्मत्स्याकृतिर्नैःश्रेयसीं संपदं मोक्षलक्ष्मीं दिश्यात् देयात्, "दिशअतिसर्जने" स इति कः, यस्य स्फूर्जदतुच्छपुच्छशिखरप्रेङ्खोलनक्रीडनैः स्फूर्जदतुच्छं गरिष्ठं यत्पुच्छशिखरं पुच्छाग्रं तदेव प्रेङ्खोलनं दोला तेन क्रीडनं क्रीडाकरणं येषु तैः ईदृग्विधैः क्षुभ्यद्वार्धिसमुच्छलज्जलभरैः क्षुभ्यन् क्षोभं प्राप्नुवन्यो वार्धिः समुद्रस्तस्मात्समुच्छलन्तऊर्ध्वं गच्छन्तो ये जलभरास्तैः, किंशिष्टैः मन्दाकिनीसङ्गतैः मन्दाकिनीसुरसरित्तां सङ्गता मिलिता ये तैः विहायःस्थली आकाशस्थली गङ्गासागरसङ्गमप्रणयिनी गङ्गासागरयोः सङ्गमे मिलने प्रणयः स्नेहः संजातोऽस्या इति गङ्गासागरसङ्गप्रणयिनी जाता बभूव, यतः सागरजलं मत्स्यपुच्छेनोच्छालितं सुरनद्याः सङ्गमवाप ततो गङ्गासागरसङ्गमतीर्थं नभस्यपि जज्ञे इति ॥ ४ ॥

(५) मायामीनतनोस्तनोतु भवतां पुण्यानि पङ्कस्थितिः
पुच्छाच्छोटसमुच्छलज्जलगुरुप्राग्भाररिक्तोदधेः ।
पातालावटमध्यसङ्कटतया पर्याप्तकष्टस्थिते-
र्वेदोद्धारपरायणस्य सततं नारायणस्य प्रभोः ॥

मायामीनतनोः मायया शङ्खदैत्यनिर्भर्त्सनचिकीर्षितकपटेन मीनाकृतिर्मत्स्याकारा तनुः शरीरं यस्य स तस्य, नारायणस्य प्रभोः स्वामिनः पङ्कस्थितिः पङ्कावस्थानं भवतां पुण्यानि तनोतु विस्तारयतु, ननु पङ्कप्लवनं किं पुण्यकर्तृत्वेन भविष्यतीति न वाच्यम् । यतो महतां सर्वमपिकृत्यं श्रेयसे भविष्यतीति । किंविशिष्टस्य प्रभो पुच्छाच्छोटसमुच्छलज्जलगुरुप्राग्भाररिक्तोदधेः पुच्छाच्छोटेन पुच्छोल्लालनेन समुच्छलन् यो जलस्य गुरुर्गरिष्ठः प्राग्भारस्तेन रिक्तो निर्जलः उदधिः समुद्रो यस्मात्स तस्य, पुनःकिंविशिष्टस्य, पातालावटमध्यसङ्कटतयापर्याप्तकष्टस्थितेः पातालमेवावटो भूरन्ध्रं तस्य यन्मध्यं तत्सङ्कटतया तत्सङ्कीर्णतया पर्याप्ता प्राप्ता कष्टस्थितिर्येन स तस्य पुनः किंविशिष्टस्य वेदोद्धारपरायणस्य वेदस्योद्धारः समुद्राद्वेदानामाविष्करणं तत्र परायणस्य तत्परस्य सततं निरन्तरमिति ॥ ५ ॥

(६) मग्ने मेरौ पतति तपने तोयबिन्दाविवेन्दा-
वन्तर्लीने जलधिसलिले व्याकुले देवलोके ।
मात्स्यं रूपं मुखपुटतटाकृष्टनिर्मुक्तवार्द्धि
श्रीकान्तस्य स्थलजलगतं वेत्यलक्ष्यं पुनातु ॥

श्रीकान्तस्य विष्णोर्मात्स्यं रूपं स्थलगतं जलगतं वेत्यलक्ष्यं पुनातु पवित्रीकरोतु, भक्तानिति शेषः । किंविशिष्टं मात्स्यं रूपं मुखपुटतटाकृष्टनिर्मुक्तवार्धि मुखपुटतटेनाकृष्टः पूर्वं पीतः पश्चान्निर्मुक्तो वार्धिः समुद्रो येन तत्, कस्मिन्सति, जलधिसलिले मेरौ मग्ने सति, तथा तत्रैव तपने सूर्ये पतति सति तथा तत्रैव इन्दौ चन्द्रे तोयबिन्दाविवान्तर्लीने उदकान्तः प्रविष्टे सति तथा देवलोके व्याकुले संजाते सति, मात्स्यं रूपं अलक्ष्यतया वृत्तमिति किं स्थलगतं जलगतं वेति भावः ॥ ६ ॥

(७) जृम्भाविस्तृतवक्त्रपङ्कजविधेर्हृत्वा श्रुतीः सागरे
लीनं त्रस्तसमस्तनक्रनिकरं शङ्खं जघानाजिरे ।
पुच्छोत्क्षिप्तजलोत्करैः प्रतिदिशं संतर्प्य यो वै धरां
पायाद्वः स मृणालकोमलतनुर्मीनाभिधानो हरिः ॥

स मृणालकोमलतनुर्मृणालवत्कोमला तनुर्यस्य स मीनाभिधानो मत्स्याख्यो हरिर्विष्णुर्वो युष्मान्पायाद्रक्षतु, स इति कः, यः शङ्खं शङ्खदैत्यं आजिरेऽर्थाद्रणाङ्गणे जघान अहनत् किं विशिष्टं शङ्खं, जृम्भाविस्तृतवक्त्रपङ्कजविधेर्हृत्वा श्रुतीः सागरे लीनं जृम्भया मुखविवरणेन विस्तृतं वक्त्रपङ्कजं मुख-

कमलं यस्य, ईदृग्विधो यो विधिर्ब्रह्मा तस्माद् ब्रह्मणः सकाशात् श्रुतीर्वेदान् हृत्वा चोरयित्वा सागरे समुद्रे लीनं तत्रोषितं, पुनः किं विशिष्टं, त्रस्तसमस्तनक्रनिकरं त्रस्तो भयविह्वलः समस्तो नक्रनिकरो यस्मात्स तं, किं कृत्वा जघान, पुच्छोत्क्षिप्तजलोत्करैः पुच्छेन ऊर्ध्वं क्षिप्ता जलकणा ये तैः धरां पृथ्वीं दिशं दिशं प्रतीति प्रतिदिशम् "वीप्सायामव्ययीभावः शरत्प्रभृतित्वात्समासान्तष्टच्" संतर्प्य भृत्वेति ॥ ७ ॥

(८) यं दृष्ट्वा मीनरूपं स्फुरदनलशिखायुक्तसंरक्तनेत्रं
लोलद्विस्तीर्णकर्णक्षुभितजलनिधिं नीलजीमूतवर्णम् ।
श्वासोच्छ्वासानिलौघैः प्रचलितगगनं पीतवारिं मुरारिं
दिङ्मूढोऽभूत्स शङ्खः स भवतु भवतां भूतये मीनरूपः ॥

मीनरूपो भगवान् भवतो भूतये लक्ष्म्यै भवतु, स इति कः, यं मीनरूपं मुरारिं दृष्ट्वाऽवलोक्य स शङ्खो दिङ्मूढो व्याकुलोऽभूत्, किंविशिष्टं हरिं स्फुरदनलशिखायुक्तसंरक्तनेत्रं स्फुरती अनलशिखायुक्ते संरक्ते लोहिते नेत्रे यस्य सतं, पुनः कीदृशं, लोलद्विस्तीर्णकर्णक्षुभितजलनिधिं लोलद्विस्तीर्णकर्णक्षुभितो जलनिधिर्यस्मात्सतं, पुनः किंविशिष्टं, नीलजीमूतवर्णं नीलमेघाकृतिं, पुनः किंविशिष्टं, श्वासोच्छ्वासानिलौघैः श्वासोच्छ्वासवायुसमूहैः प्रचलितं गगनं यस्मात्सतं, पुनः किंविशिष्टं, पीतवारिं पीतं वारिजलं येन सतम् ॥ ८ ॥

(९) हंहो मीनतनो हरे, किमुदधे, किं वेपसे, शैत्यतः
स्विन्नः किं, बडवानलात्, पुलकितः कस्मात्, स्वभावादहम् ।
इत्थं सागरकन्यकामुखशशिव्यालोकनेनाधिक-
प्रोद्यत्कामजचिन्हनिन्हुतिपरः शौरिः शिवायास्तु वः ॥

इत्थं उक्तप्रकारेण सागरकन्यकामुखशशिव्यालोकनेन लक्ष्मीमुखचन्द्रवीक्षणेन अधिकानि प्रोद्यन्ति यानि कामजचिन्हानि तेषां यानिन्हुतिरपलपनं तत्र परः सावधानः शौरिः "अपत्यैर्थेऽतइञिति शूरादिञ्" वः युष्माकं शिवाय कल्याणायास्तु, इत्थमिति किम् हंहो इति सम्बोधने, समुद्रः प्राह भो मीनतनो हरे इति, सम्बोधितो हरिराह हे उदधे किं पृच्छसीति शेषः, इत्युक्ते समुद्र आह किं वेपसे, हरिराह शैत्यतः समुद्रोत्थशीतलसमीरणस्पर्शात्, पुनराहसमुद्रो हरिं प्रति, तर्हि स्विन्नः प्रस्वेदाकुलः किम्, हरिराह बडवानलात् बाडवाग्नेरुष्णत्वात्तत्संयोगे स्वेदः संभवतीति, पुनः प्रश्नितस्तेन कस्मात्पुलकितो रोमाञ्चितः हरिरूचे स्वभावात्, अहं हरिः, यत एते भावाः कामिनां कामिनीमुखावलोकनाज्जायन्ते तत्र च हरेरपि समुद्रमथनादुद्भूतायां लक्ष्म्याः सत्त्वादेते भावाः समुत्पेदिरे, परं श्वशुरस्य ह्रिया तान् भावान्हरिरपजुन्हुवे इति ॥ ९ ॥

(१०) दिङ्मूढं तं सुरारिं किल शितदशनैः पीडयमानं रटन्तं
हृत्वा तीरे पयोधेः करतलकलितं पूरयामास शङ्खम् ।
नादेनाक्षोभ्य विश्वं प्रमुदितविबुधं त्रस्तदैत्यं सदेवैर्-
दत्तार्घः पद्मयोनेः प्रहसितवदनः पातु वो दत्तवेदः ॥

स मीनरूपो देवः वो युष्मान्पातु रक्षतु; किं भूतः सः, देवैर्दत्तार्घो वितीर्णपूजाविशेषः, पुनः किं भूतः, प्रहसितवदनः प्रहसितं प्रकर्षेण हसो हास्यं जातोऽस्येति तत्प्रहसितं प्रहसितं सुस्मितोपेतं वदनमाननं यस्य स ईदृग्विधः सन् पद्मयोनेर्ब्रह्मणो दत्तवेदः दत्ता वेदा येनेति सः, स इति कः, यो भगवान् तं दिङ्मूढं कान्दिशीकं सुरारिं दैत्यं, किलेतिनिश्चये, शितदशनैस्तीक्ष्णदन्तैः पीडयमानं अत एव रटन्तमाक्रन्दं कुर्वाणम्, पयोधेः समुद्रस्य तीरे तटे हृत्वा नीत्वा करतलकलितं पाणितलधृतं शङ्खं पाञ्चजन्यं पूरयामास वादयामासेत्यर्थः, किं भूतं शङ्खम् नादेन शङ्खरवेण विश्वं जगत् आक्षोभ्य क्षोभमापाद्य प्रमुदितविबुधं प्रमुदिता अन्तर्भूतण्यर्थत्वात्प्रमोदं प्रापिता विबुधा देवा येन स तम्, पुनः किं विशिष्टम्, त्रस्तदैत्यं त्रस्ता भयाकुला दैत्या यस्मात्स तम् ॥ १० ॥

"इति श्रीगुणविनयविरचितायां खण्डप्रशस्तिवृत्तौ मीनावतारहरिवर्णनविवरणम्"

काशिकराजकीयपाठशालायां
ज्योतिश्शास्त्राध्यापको
वामनाचार्यः

---

## THE

## VAIŚESHIKA APHORISMS

### OF

## KAṆĀDA.

### THIRD BOOK, FIRST DAILY LESSON.

(*Continued from page 27.*)

Objections to the preceding arguments.

यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद्दृष्टं लिङ्गं न विद्यते ॥ ६ ॥

Aph. 6. In the contact [of the organs of sense and the object] from which the judgment 'This is Yajnadatta,' is derived, there being no perception, there exists no visible mark.

[1] There being contact, if in the judgment 'This is Yajnadatta' there is no act of perception, there is no visible mark, no mark by which a universal co-existence is ascertained from perception. There is no visible mark establishing the existence of soul, as there is a visible mark in the case of fire, viz. smoke observed concomitant with fire perceived. U.

[2] Though there be contact of the eye and other organs with the body of Yajñadatta, yet, since there is no ocular or other perception of the soul which presides over that body, there is no visible mark, i. e. no mark which by being included is an object of perception. How, then, is an inference of the existence of the soul possible? For, there being contact with fire &c, after the perception of it, an inference as to fire &c. meets with no obstacle, because universal concomitance therewith has been observed; [but this is not the case with the present inference.] V.

सामान्यतो दृष्टाच्चाविशेषः ॥ ७ ॥

Aph. 7. Moreover, from that which is observed generally [there results] no distinction.

[3] Though there is a generally observed mark, yet there is no proof therefrom of the existence of the soul, by means of the notion of soul, or of a substance over and above eight substances. It would be thereby established only that desires &c. must inhere in something but there is nothing to suggest the thought of a soul. Therefore it is stated that there results no distinction U.

[4] From that which is generally observed, i. e. from observation of inclusion in something determined by a general attribute, there results no distinction, i e. no inference by means of a particular property, according to the rule that there must be observed in that which determined the character of the subject of an inference the nature of being determinant of that which is inclusive [of the subject.] V.

[1] सन्निकर्षे सति अयं यज्ञदत्त इति चेत् प्रत्यक्षं नास्ति तदा दृष्टं प्रत्यक्षतो गृहीतव्याप्तिकं लिङ्गं नास्ति यथा वह्निना प्रत्यक्षेण सहचरितो गृहीतो धूमो वह्नौ दृष्टं लिङ्गं तथात्मसाधकं लिङ्गं दृष्टं नास्तीत्यर्थः ॥

[2] यज्ञदत्तशरीरे चक्षुरादिसन्निकर्षे सत्यपि तदधिष्ठातुरात्मनश्चाक्षुषाद्यभावात् दृष्टं व्याप्यत्वेन प्रत्यक्षविषयीभूतं लिङ्गं नास्तीत्यतः कथमात्मानुमानं सुघटम् वह्न्यादौ सन्निकर्षे तत्प्रत्यक्षानन्तरं तद्व्याप्तिप्रत्यक्षाद्वह्न्याद्यनुमानन्तु निराबाधमेवेति भावः ॥

[3] सामान्यतो दृष्टमपि लिङ्गं भवति न तु तत आत्मत्वेन अष्टद्रव्यातिरिक्तत्वाद्द्रव्यत्वेन वा स्यादात्मसिद्धिः किन्तु तेनेच्छादीनां क्वचिदाश्रितत्वमात्रं सिध्येत् तत्र आत्ममननौपयिकमित्यर्थः तदेतदाह अविशेष इति ।

[4] सामान्यतो दृष्टात् सामान्यधर्मावच्छिन्नव्याप्यत्वग्रहात् अविशेषः विशेषधर्मप्रकारेण नानुमितिः व्यापकतावच्छेदकत्वग्रहस्यैवानुमितिविधेयतावच्छेदकत्वे तन्त्रत्वादित्यर्थः ॥

तस्मादागमिकः ॥ ८ ॥

Aph. 8. Therefore the soul is proved to exist by revelation only.

[1] The existence of the soul &c rests on revelation, for, inasmuch as there is no mark of an observed universal co-existence, any inference of the existence of the soul is impossible. The existence, then, of the soul rests solely on the authority of revelation. Thus this system for cogitation on the soul is useless V.

Objections answered.

अहमिति शब्दस्य व्यतिरेकान्नागमिकम् ॥ ९ ॥

Aph. 9 [The evidence of the existence of the soul] is not [solely] from revelation, because of exclusion of the word 'I' [from other designates]

[2] Revelation is not the sole evidence of the existence of the soul; but that there is a soul is established also by the inference that the word 'I' or the word 'soul' [or 'self'] has some designate because it is a term, like the terms 'water-pot' &c. It might be said, let earth &c. be its designates. Hence the words 'because of its exclusion,' i e. because of the exlusion or separation of the word 'I' from earth &c. For there never arises any such supposition or assurance as 'I am earth,' 'I am water,' 'I am light,' 'I am air,' 'I am ether,' 'I am time,' 'I am space,' 'I am mind.' If you object that such conviction arises with respect to the body, we reply that it is not so, for it would be equally applicable to the bodies of others if, that it arises with respect to

[1] आगमिक इत्यस्य आत्मेत्यादि यतो गृहीतव्याप्तिकलिङ्गाभावादात्मनो ऽनुमितिर्न सम्भवति अत आत्मा आगममात्रप्रमाणक इत्यर्थः । तथा चात्ममननार्थमेतच्छास्त्रं विफलमिति भावः ॥

[2] नागममात्रं प्रमाणमात्मनि किन्त्वहमिति पदं वा साभिधेयं पदत्वात् घटादिपदवत् इत्यनुमानादप्यात्मसिद्धिः । ननु पृथिव्यादि तदभिधेयं स्यादित्यत आह व्यतिरेकादिति पृथिवीत्यादितो ऽहमिति पदस्य व्यतिरेकाद्व्यावृत्तेरित्यर्थः । न हि भवत्यहं पृथिवी अहमापः अहन्तेजः अहं वायुः अहमाकाशम् अहं कालः अहं दिक् अहं मन इति व्यपदेशः प्रत्ययो वा शरीरे भवतीति चेन्न परशरीरे तत्प्रसङ्गात् स्वशरीरे भवतीति चेन्न स्वस्यात्मभिन्नस्यानिरुक्तेः मम शरीरमिति वैयधिकरण्येन प्रत्ययाच्च नन्विदमपि सामान्यतो दृष्टमेव तच्च विशेषापर्यवसन्नमिति दूषितमेवेति चेन्न अहम्पदे ऽहन्त्वमात्मत्वमेव प्रकारः तथा च पक्षधर्मताबलादेवाहन्त्वस्य प्रवृत्तिनिमित्तत्वं पर्यवसन्नं तच्चानन्यसाधारणमेवेति विशेषसिद्धेः एवं सामान्यतो दृष्टादपि बाधसहकृताद्विशेषसिद्धिः यच्चोक्तं श्रवणादेव साक्षात्कारः किमनेनेति तदयुक्तं न हि मननमन्तरेण सङ्कशुकस्याश्रद्धामलक्षालनम् न च तदन्तरेण तत्र निदिध्यासनाधिकारः न च निदिध्यासनमन्तरेण सवासनमिथ्याज्ञानोन्मूलनक्षमस्तत्त्वसाक्षात्कारः न हि शाब्दमानुमानिकं वा ज्ञानं मिथ्याज्ञानोन्मूलनक्षमं दिङ्मोहादौ दृष्टमिति भावः । ननु तथापि परोक्षे आत्मनि कथं सङ्केतग्रह इति चेत् क एवमाह नात्मा प्रत्यक्ष इति किन्तु मनसा संयोगप्रत्यासत्त्यात्मग्रहः कथमन्यथाहं सुखी जानामीच्छामि यते दुःखीत्यादिप्रत्ययः न ह्ययमवस्तुकः सन्दिग्धवस्तुको वा नीलादिप्रत्ययवत् अस्यापि निश्चितवस्तुकत्वात् न च लैङ्गिकः लिङ्गज्ञानमन्तरेणापि जायमानत्वात् नापि शाब्दः तदनुसन्धानाननुविधानात् प्रत्यक्षाभासो ऽयमिति चेत् तर्हि क्वचिदनाभासविषयो ऽपि न ह्यप्रमितमारोप्यते इत्यावेदयिष्यते ॥

the body of oneself, we reply that this is not so, for there is not intended a self different from soul, and because the conception 'my body' involves a difference of substrata If you urge that this also is merely observed generally, and therefore, not being determined by a particular attribute, involves a fallacy; we reply that it is not so, for in the term 'I' the notion 'I' or the notion 'soul' is the form or essence, and that in virtue of being the attribute of the subject it is determined that the notion 'I' is the cause of actuality, and this is not common to other objects, being a proof of a particular object. In like manner there is proof of the particular even from the generally observed accompanied with the argument from impossibility. Whereas it is said, 'From merely hearing results realisation, what need of this proof'? this is wrong; for without reflection the dross of unbelief in wavering minds cannot be purged away; without this purification there can be no aptitude for profound meditation on this subject; and without profound meditation there can be no realisation of truth capable of uprooting false knowledge together with its impressions. For it is by practice only that the sad lover can realise [a mental image of] his beloved For knowledge from verbal information or from inference is unable to uproot false knowledge, as is seen in the case of delusion in regard to direction in space, and similar instances. If it be asked, how whereas soul is invisible, can a sign [of its existence] be apprehended, we rejoin, 'Who has maintained that the soul is unknowable by perception?' But soul is cognised by its proximity to conjunctions with the internal organ · else how such assurances 'I am happy,' 'I know,' 'I desire,' 'I will,' 'I am in pain?' since such assurance is not without matter or of doubtful matter, for like an assurance of blueness &c this has a definite matter. Nor is it derived from argument, for it arises without any knowledge of an argument Nor is it derived from verbal communication, for it does not follow upon inquiry for that. If it be maintained that it is a mere appearance of perception, we reply that there must be some object not merely apparent, for it will be shown in the sequel that that which is not an object of certain knowledge cannot be applied by metaphor to another object. U.

**यदि दृष्टमन्वक्षमहं देवदत्तो ऽहं यज्ञदत्त इति ॥ १० ॥**

Aph. 10. If the notion, 'I Devadatta,' 'I Yajñadatta' is a perception' [what need of any inference?]

[1] An opponent says, 'If this be so, what need of an inference?' The word *iti* marks the form of the notion, and the word *drishta* ends in the affix *kta* used in a passive sense. 'Perception' means 'observation.' The sense, therefore, is as follows: If the percept or perception which has for its form 'This Devadatta,' 'This Yajñadatta, is only a perception, what occasion is there for the trouble of making an inference? For 'On seeing an elephant those who infer do not infer him to be one from his screaming.' U.

**दृष्टयात्मनि लिङ्गे एक एव दृढत्वात् प्रत्यक्षवत् प्रत्ययः ॥ ११ ॥**

Aph 11. If a mark of the existence of the soul were observed, there would be one and one only conviction because of its certitude, as in the case of perception

[1] The anticipated objection is refuted. The completed sense is that if a mark of the soul's existence were observed or apprehended by the internal organ, there being an inference, there would be one and one only primary conviction, in the same form as a perception in the case of perception. Whence its primary nature? The being a primary conviction or being of recognised validity, results from its certitude or power of removing doubts of invalidity. As, for instance, when the distant water of a lake &c has been seen, there arises a doubt as to the evidence for such a perception, there being a doubt whether it may not be a mirage or the like; and afterwards there being an inference by means of cranes, &c the mark [of its being a lake], the doubt ceases on the recognition of the evidence by means of discussion; so, although the soul is perceived, a doubt arises as to the validity of the conception, on account of counter probabilities, &c., but afterwards, the soul being recognised by inference, the certitude of such recognition, which certitude consists of capability of removing suspicion of invalidity through the recognition in that case of validity by means of argumentation, is easily demonstrated. It has accordingly been declared by the sage that 'The logicians desire to understand by inference even that which is fully established by perceptions.' V.

**देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरे प्रत्ययः ॥१२॥**

Aph. 12. The judgment 'Devadatta goes,' Yajñadatta goes,' is applied by a metaphor to the body

[1] एवञ्चेत् किमनुमानेनेति पूर्वपक्षवादी आह । इति शब्दो ज्ञानप्रकारमाह दृष्टमिति भावे क्तप्रत्ययान्तम् अध्यक्षमित्यध्यक्षं तेनायमर्थः अयं देवदत्तः अयं यज्ञदत्त इति प्रकारकं दृष्टं दर्शनं अध्यक्षमेवास्ति यदि किमनुमानप्रयासेन न हि करिणि दृष्टे चीत्कारेण तमनुमिमते ऽनुमातारः ॥

[1] आशङ्कां निरस्यति । दृष्टे मनसा गृहीते आत्मनि लिङ्गे अनुमाने सति प्रत्यक्षवत् प्रत्यक्षसमानाकारक एक एव मुख्य एव प्रत्ययः भवतीति शेषः मुख्यत्वं कुतः दृढत्वात् अप्रामाण्यशङ्कानिवर्तनक्षमत्वात् मुख्यत्वञ्च गृहीतप्रामाण्यकत्वम् यथा दूरस्थे सरोवरादिसलिले दृष्टे ऽपि मरीचिकादिसन्देहात्तादृशप्रत्यक्षे ऽप्रामाण्यशङ्का उदेति ततो बलाकादिलिङ्गेन तदनुमाने सति तदनुमाने सति संवादेन तत्र प्रामाण्यग्रहात्तादृशशङ्का निवर्तते तथात्मनि दृष्टे ऽपि विपरीतसम्भावनादिना तज्ज्ञाने ऽप्रामाण्यशङ्का सञ्जायते ततो ऽनुमानेनात्मनि गृहीते संवादेन तत्र प्रामाण्यग्रहादप्रामाण्यशङ्कानिवर्तनक्षमत्वरूपं दृढत्वं तादृशग्रहस्य सुघटमेव तदुक्तं मिश्रैः प्रत्यक्षपरिकलितमप्यनुमानेन बुभुत्सन्ते तर्करसिका इति ॥

[1] It may be objected that if the notion 'I Yajnadatta' refers to the soul, such a judgment of community of substratum with motion, as 'Yajnadatta goes' is impossible. It is therfore stated that there are such judgments as 'I am fair-complexioned,' 'I am stout,' and there are such complex concepts as 'my body.' Of these in the judgment 'Devadatta goes' the perception of a community of substratum with motion, and the use of language to express it, are tropical, whereas the notion 'mine' is true. Although the notion Devadatta is a class or universal idea existing in the body, and accordingly the use of the proposition 'Devadatta moves' is correct even in its primary sense, as also the judgment; yet if the term Devadatta be employed with regard to the soul determined thereby, it is then to be understood metaphorically. U.

[2] It may be asked how, if such a notion as 'I Yajnadatta' has the soul for its object, the judgment 'Yajnadatta goes' can apply to the soul, for the soul has not the power of motion. It is therefore stated that the conviction excited by the proposition 'Devadatta goes' arises from the observation of the implication in the word 'Devadatta' &c. of the [meaning of the] body. Since such propositions as 'Devadatta knows, wishes, acts, hates' &c., are used in their primary sense, the term Devadatta must have the power of expressing a soul limited to a heterogeneous body. For, as in the meaning of these propositions there is a manifold application the complication [of this hypothesis] is inoperative [i. e. does invalidate it ;] and it may be considered that the primary sense possibly belongs to such application to the expression of volition in the proposition 'He goes.' V.

सन्दिग्धस्तूपचार : ॥ १३ ॥

Aph. 13. The metaphor, however, is doubted

[3] The word 'however' points out the opponent's view. The notion and the use of the word 'I' are observed to refer both to the soul and the body. The doubt in this case is which are the primary and which the metaphorical [notion and expression.] U.

अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्षः॥१४॥

Aph. 14. The notion 'I' is a perception of something other [than the body], since it arises in the case of one's own soul, and not in the case of another's.

[1] A notion in which something different, of the nature of soul, is observed, is a perception of something different. The meaning is as follows :—since the notion 'I' arises with reference to one's own soul, and not with reference to another's, it is proper to regard the reference to something else, i. e. to one's own soul as primary. If, on the other hand, the primary reference were to the body, the notion would be produced by the external organs of sense, for the body is not an object of mental perception, and the notion 'This being I' is mental being produced without any operation of the external organs of sense. Such notions as 'I am sorry', 'I am glad', 'I know', 'I will', 'I wish', arise from the mind's taking as its object the soul accompanied by its appropriate particular attributes. Such a notion is not inferred, since it is produced without seeking any mark of co-existence. It is not verbally communicated, since it is produced without reflection on words. It, therefore, belongs to the internal organ, and to the internal organ independent of the external organs, not being concerned with the body, &c. Moreover if it be urged that if it referred to the body it would refer to the bodies of others, and if it be referred to one's own soul it would refer to the souls of others ; we deny this, for the soul of one man is beyond the senses of another, since its particular attributes are incapable [of being perceived], and it is so capable only by apprehension of perceptible particu-

[1] ननु यदि यज्ञदत्तो ऽहमिति प्रत्यय आत्मनि तदा यज्ञदत्तो गच्छतीति गमनसामानाधिकरण्यभानमनुपपन्नमित्यत आह। अस्ति हि अहं गौरः अहं स्थूल इति प्रत्ययः अस्ति च मम शरीरमिति भेदप्रत्ययः तत्र देवदत्तो गच्छतीति गतिसामानाधिकरण्यानुभवो भक्तः ममेति प्रत्ययस्य यथार्थत्वात् यद्यपि देवदत्तत्वं शरीरवृत्तिर्जातिस्तेन देवदत्तो गच्छतीति मुख्य एव प्रयोगो यथार्थ एव च प्रत्ययः तथापि देवदत्तपदं तदवच्छिन्नात्मनि प्रयुक्तञ्चेत् तदौपचारिको बोद्धव्यः ॥

[2] नन्वहं यज्ञदत्त इत्यादिप्रत्यक्षं यद्यात्मविषयकं तदा यज्ञदत्तो गच्छतीति प्रत्ययः कथं स्यादात्मनि गतिमत्त्वस्याभावादित्यत आह। देवदत्तो गच्छतीति वाक्यजन्यप्रत्ययः देवदत्तादिपदस्य शरीरे लक्षणाग्रहाद्भवति देवदत्तो जानाति इच्छति करोति द्वेष्टीत्यादि प्रयोगानां मुख्यतया देवदत्तादिपदस्य विजातीयशरीरावच्छिन्नात्मनि शक्तेरावश्यकत्वात्तदर्थे भूरिप्रयोगसत्त्वेन गौरवस्या ऽकिञ्चित्करत्वात् गच्छतीत्यत्राख्यातस्य यत्नार्थकत्वे तादृशप्रयोगस्य मुख्यत्वमपि सम्भवतीत्यपि द्रष्टव्यम् ॥

[3] तुशब्दः पूर्वपक्षद्योतकः। आत्मशरीरयोस्तावदहमिति प्रत्ययः प्रयोगश्च दृश्यते तत्र क्व मुख्यः क्व वौपचारिक इति सन्देहः ॥

[1] अर्थान्तरात्मस्वरूपं प्रत्यक्षं यत्र प्रत्ययो स प्रत्ययो ऽर्थान्तरप्रत्यक्षः अयमर्थः अहमिति प्रत्ययस्य प्रत्यगात्मनि स्वात्मनि भावात् परत्र परात्मनि अभावात् अर्थान्तरे स्वात्मन्येव मुख्यः कल्पयितुमुचितः यदि तु शरीरे मुख्यः स्यात् तदा बहिरिन्द्रियजः स्यात् न हि शरीरं मानसप्रत्यक्षं मानसश्चायमहमिति प्रत्ययः बहिरिन्द्रियव्यापारमन्तरेणापि जायमानत्वात् अहं दुःखी अहं सुखी जाने यते इच्छाम्यहमिति योग्यविशेषगुणोपहितस्यात्मनो मनसा विषयीकरणात् नायं लैङ्गिको लिङ्गानुसन्धानमन्तरेणापि जायमानत्वात् न शाब्दः शब्दाकलनमन्तरेणापि जायमानत्वात् तस्मान्मानस एव मनसश्च बहिरस्वातन्त्र्येण शरीरादावप्रवृत्तेरिति भावः। किञ्च यदि शरीरे स्यात् परशरीरे स्यात् स्वात्मनियदिस्यात् तदा परात्मनि स्यादिति चेन्न परात्मनः परस्यातीन्द्रियत्वात् तद्विशेषगुणानामयोग्यत्वात् योग्यविशेषगुणोपग्रहेण तस्य योग्यत्वात् न केवलमात्मन इदं शीलं किन्तु द्रव्यमात्रस्य द्रव्यं हि योग्यविशेषगुणोपग्रहेणैव प्रत्यक्षं भवति आकाशमपि तर्हि शब्दोपग्रहेण प्रत्यक्षं स्यादिति चेत् स्यादेवं यदि श्रोत्रं द्रव्यग्राहकं भवेत् आकाशं वा रूपवत् स्यात् आत्मनो ऽपि नीरूपत्वं तुल्यमिति चेत् बहिर्द्रव्यमात्र एव प्रत्यक्षतां प्रति रूपवत्त्वस्य तन्त्रत्वात् प्रत्यगित्ययं शब्दो ऽनन्यावृत्तमाह ॥

lar attributes. Nor is this the nature of soul only, but of all substance, for substance becomes perceptible by apprehension of particular attributes capable [of being perceived] If you rejoin that on this ground ether also should be perceptible by the apprehension of sound, we reply that such would be the case were the organ of hearing capable of apprehending a substance, or if ether possessed colour. If you object that the soul is equally devoid of colour, we reply that it is in the case of external substances only that possession of colour is a requisite with regard to perceptibility. U.

[1] The notion 'I' and the expressions 'I Yajñadatta am happy &c,' are the notion of different objects, the perception or conception of a different object, of one different from the body &c, since it produced verbal information the subject of which is different from the body. Such is the sense resulting [from the aphorism.] The application, accordingly, which is to the soul which is different from the body is primary, that to the body is metaphorical. Why so? The answer is because of existence, viz., the existence of pleasure, &c in one's own soul, and because of non-existence, viz., the non-existence of pleasure, &c., elsewhere, i. e. in the body. There is not therefore so much as the shade of a doubt that of the diverse application, since [pleasure and the like] exists in the soul only, that the application to the soul is primary, and that to the body, &c, metaphorical V.

देवदत्तो गच्छतीत्युपचारादभिमानात्तावच्छरीरप्रत्यक्षो ऽहङ्कारः ॥ १५ ॥

Aph. 15. Since the expression 'Devadatta goes,' is by metaphor, i. e. by reference to self, self-consciousness is percipient of the body.

[2] Again a doubt is raised. Self-consciousness is the assurance of 'myself.' This is percipient of the body, and that is percipient of the body, of which the object of perception is the body. You have concluded that the proposition or judgment 'Devadatta goes' is merely by

[1] अहमितीति अहं यज्ञदत्तः सुखीत्यदिव्यवहारः अर्थान्तरप्रत्यक्षः अर्थान्तरस्य शरीरादिभिन्नस्य प्रत्यक्षं ज्ञानं यस्मात् शरीरादिभिन्नविषयकशाब्दबोधजनकइति फलितार्थः तथा च शरीरादिभिन्न एवात्मनि तादृशप्रयोगो मुख्यः शरीरे त्वौपचारिकः कुत एवमत आह प्रत्यगात्मनि स्वात्मनि भावात् अर्थात् सुखादेः सत्त्वात् परत्र शरीरे ऽभावात् सुखादेरसत्त्वात् तथा च भूरिप्रयोगस्यात्मन्येव सत्त्वात्तत्रैव तादृशप्रयोगस्य मुख्यत्वं शरीरादावौपचारिकत्वमिति न सन्देहगन्धो ऽपीति ॥

[2] पुनः शङ्कते। अहङ्कारो ऽहमिति प्रत्ययः स च शरीरप्रत्ययः शरीरं प्रत्यक्षं विषयो यत्र स शरीरप्रत्यक्षः। देवदत्तो गच्छतीत्युपचारात् तावत् प्रयोगः प्रत्ययो वा त्वया समाहितः स चोपचारः आभिमानिकः यतो ऽहं गौरः अहं कृशः सौभागिनो ऽहं पुनरुक्तजन्मेत्यादयः प्रत्ययाः प्रयोगाश्चोपचारेण समन्वयितुमशक्या इत्यर्थः ॥

metaphor: but this metaphor is self-regarding, for the judgments and propositions 'I am fair-complexioned,' 'I am stout,' 'I am thin,' 'I am fortunate,' and the notion of repeated births cannot be arrived at by a metaphorical use of language. U.

सन्दिग्धस्तूपचारः ॥ १६ ॥

Aph. 16. The metaphor, however, is doubted.

[1] This word 'however,' points out a true principle. This metaphor is self-regarding, but whereas it has been said that this notion 'I' refers to the body, there is a doubt on this subject. Since, therefore, the notion is on both sides a false witness, we must endeavour to find a particular limitation. Since on making this endeavour, we observe the notion 'I' even when the eyes are closed, we must hold that it refers to an object different from the body, and not an object of the external organs of sense. If it referred to the body, it would refer to the bodies of others also, and would not be independent of the body. If it be asked how there can be the possession of a common substratum in 'I who am stout (or thin) am happy', we reply that in this case the notion of the body is possible under the condition of pleasure, as in the proposition 'This forest is resonant with the roar of a lion' The notion 'I' being in contiguity with the internal organ is transferred to the body, just as the heat presented by the organ of touch in the judgments 'The water is hot,' 'The body is hot.' U.

[2] The metaphor is doubted. It is doubted whether the metaphor be in 'Yajñadatta goes', or in 'I Yajñadatta am happy,' and because, there being no criterion of the diverse application to the body and the soul, it is impossible to choose one final alternative. The word 'however' is intended to point out a fixed principle. V.

A. E. G

*(To be continued)*

[1] तु शब्दो ऽयं सिद्धान्तमभिव्यनक्ति उपचारो ऽयमाभिमानिकः किन्तु शरीर एवायमहम्प्रत्यय इति यदुक्तं तत्रापि सन्देह एवेत्यर्थः तथा च प्रत्ययस्योभयत्रापि कूटसाक्षित्वेन विशेषावधारणाय यतितव्यं तत्र यत्ने क्रियमाणे निमीलिताक्षस्याप्याहमिति प्रत्ययदर्शनात् शरीरभिन्ने बहिरिन्द्रियागोचरे वस्तुनि स मन्तव्यः शरीरे भवन् परशरीरे ऽपि स्यात् चक्षुर्निरपेक्षेण न च स्यात् अहं कृशः स्थूलो वा सुखीति कथं सामानाधिकरण्यमिति चेन्न सुखाद्यवच्छेदकत्वेनापि तत्र शरीरभानसम्भवात् सिंहनादवदिदं गहनमितिवत् अहन्त्वमात्रं शरीरे समारोप्यते मानसोपस्थितम् त्वगिन्द्रियोपनीतमौष्ण्यम् उष्णं जलम् उष्णं शरीरमितिवत् ॥

[2] उपचारः सन्दिग्धः किं यज्ञदत्तो गच्छतीत्यत्रोपचारः उत यज्ञदत्तो ऽहं सुखीत्यत्र शरीरे आत्मनि च भूरिप्रयोगस्याविशिष्टत्वेनैकतरस्य कर्तुमशक्यत्वादित्यर्थः तु शब्दः सिद्धान्तद्योतनार्थः ॥

## RÁMÁYAṆA, BOOK I.

*(Continued from page 276.)*

Deformed, terrific, murderous, dread,
Swift as the levin on she sped,
Like cloudy pile in autumn's sky,
Lifting her two vast arms on high,
When Ráma smote her with a dart,
Shaped like a crescent, to the heart
Sore wounded by the shaft that came
With lightning speed and surest aim,
Blood spouting from her mouth and side,
She fell upon the earth and died
Soon as the Lord who rules the sky
Saw the dread monster lifeless lie,
He called aloud, Well done! well done!'
And the Gods honoured Raghu's son
Standing in heaven the Thousand-eyed,
With all the Immortals, joying cried :
'Lift up thine eyes, O Saint, and see
The Gods and Indra nigh to thee
This deed of Ráma's boundless might
Has filled our bosoms with delight.
Now, for our will would have it so,
To Raghu's son some favour show.
Invest him with the power which naught
But penance gains and holy thought
Those heavenly arms on him bestow
To thee entrusted long ago
By great Kriśáśva best of kings,
Son of the Lord of living things.
More fit recipient none can be
Than he who joys in following thee ;
And for our sakes the monarch's seed
Has yet to do a mighty deed'

He spoke ; and all the heavenly train
Rejoicing sought their homes again,
While honour to the saint they paid.
Then came the evening's twilight shade.
The best of hermits overjoyed
To know the monstrous fiend destroyed,
His lips on Ráma's forehead pressed,
And thus the conquering chief addressed :
'O Ráma gracious to the sight,
Here will we pass the present night,
And with the morrow's earliest ray
Bend to my hermitage our way.'
The son of Daśaratha heard,
Delighted, Viśvámitra's word,
And as he bade, that night he spent
In Táḍaká's wild wood, content.
And the grove shone that happy day,
Freed from the curse that on it lay,
Like Chaitraratha[1] fair and gay.

### THE CELESTIAL ARMS
### XXIX

That night they slept and took their rest,
And then the mighty saint addressed,
With pleasant smile and accents mild,
These words to Raghu's princely child
'Well pleased am I High fate be thine
Thou scion of a royal line
Now will I, for I love thee so,
All heavenly arms on thee bestow
Victor with these, whoe'er oppose,
Thy hand shall conquer all thy foes
Though Gods and spirits of the air
Serpents and fiends, the conflict dare.
I'll give thee as a pledge of love
The mystic arms they use above,
For worthy thou to have revealed
The weapons I have learnt to wield[2]
First, son of Raghu, shall be thine
The arm of Vengeance, strong, divine
The arm of Fate, the arm of Right,
And Vishṇu's arm of awful might
That before which no foe can stand,
The thunderbolt of Indra's hand ,
And Śiva's trident, sharp and dread,
And that dire weapon Brahmá's Head.
And two fair clubs, O royal child,
One Charmer and one Pointed styled
With flame of lambent fire aglow,
On thee, O Chieftain, I bestow
And Fate's dread net and Justice' noose
That none may conquer, for thy use .
And the great cord, renowed of old,
Which Varun ever loves to hold.
Take these two thunderbolts, which I
Have got for thee, the Moist and Dry.
Here Śiva's dart to thee I yield,
And that which Vishṇu wont to wield.

*(To be continued.)*

[1] The famous pleasure-garden of Kuvera the God Wealth

[2] 'The whole of this Canto together with the following one regards the belief, formerly prevalent in India, that by virtue of certain spells, to be learnt and muttered, secret knowledge and superhuman powers might be acquired To this the poet has already alluded in Canto xxiii These incorporeal weapons are partly represented according to the fashion of those ascribed to the Gods and the different orders of demigods, partly are the mere creations of fancy . and it would not be easy to say what idea the poet had of them in his own mind, or what powers he meant to assign to each.' SCHLEGEL.

PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्करश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

# THE PANDIT.

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 51. Benares, August 1st, 1870. Vol. V.


## ॥ उपदेशसहस्त्याः पद्यप्रबन्धः ॥

प्रागुक्तं दृष्टान्तं विवृण्वन्विवेकिप्रत्ययेनैवाविवेकी बाध्यतइत्युपपादितमुपसंहरति ।

(१६७) कुण्डल्यहमिति ह्येतद्बाध्यतेव विवेकिना ।
दुःखीति प्रत्ययस्तद्वत्केवलाहंधिया सदा ॥ ५७६ ॥

कुण्डलीति । केवले शुद्धे ब्रह्मण्येवाहंधीः केवलाहंधीस्तयेति विग्रहः ॥ १६७ ॥

नन्वदुःखिनो मोक्षोपदेशानुपपत्तेरात्मनोपि दुःखित्वमवगम्यते, ततस्तत्सिद्धये शक्तिमत्त्वं गम्यते, ऽतो नान्यगतेन निमित्तेनैव दुःखी, किं तु स्वतोपीति सुषुप्त्यादावपि शक्तिमत्त्वमनिवारितमिति चेत्तत्राह ।

(१६८) सिद्धं दुःखित्वमिष्टं स्यात्तच्छक्तिश्छन्दसा ऽऽत्मनः ।
मिथ्याभिमानतो दुःखी तेनार्थापादनक्षमः ॥ ५८० ॥

सिद्धमिति । कस्यां चिदवस्थायां यद्यात्मनः केवलस्य दुःखित्वं प्रमाणसिद्धं स्यात्तथा सति छन्दसा इच्छया तच्छक्तिर्दुःखित्वशक्तिः कल्प्येत, न सा कल्पयितुं शक्यते, दुःखदर्शनस्यान्यथोपपत्तेरित्याह । मिथ्येति । अत्र ह्यन्वयव्यतिरेकौ दर्शितौ, तेन मिथ्याभिमाननिबन्धनत्वेनार्थापादनक्षमो दुःखित्वानुभव इति योजना । अर्थादनुपपत्त्या यद् दुःखित्वशक्तिमत्त्वापादनं तस्य क्षमः समर्थो ऽयमनुभव इत्यन्यथोपपत्तिरित्यर्थः । तथा च यथादर्शनं दुःखशक्तिमत्त्वमपि मिथ्यैवेति भावः ॥ १६८ ॥

तामेवान्यथोपपत्तिं साधयति ।

(१६९) अस्पर्शोपि यथा स्पर्शमचलश्चलनादि च ।
अविवेकात्तथा दुःखं मानसं चात्मनीक्षते ॥ ५८१ ॥

अस्पर्शोपीति । निरवयवस्य पूर्णस्यात्मनो यथा स्पर्शचलनादिदर्शनमविवेकादेव, आदिशब्दाच्छयनोत्थानोपवेशनादि गृह्यते, चकारात्परिच्छिन्नत्वाभिमानः । तथा मानसं मनःकल्पितं च दुःखमविवेकादेवात्मनीक्षतइत्यर्थः ॥ १६९ ॥

अविवेकादेव दुःखदर्शनमात्मनीत्येतदन्वयव्यतिरेकाभ्यामुपपादयति ।

(१७०) विवेकात्मधिया दुःखं नुद्यते चलनादिवत् ।
अविवेकस्वभावेन मनो गच्छत्यनिच्छतः ॥ ५८२ ॥

विवेकेति । विवेकरूपया ऽऽत्मधियेत्यर्थः, चलनादिवत्, यस्मात्स्थूलदेहाविवेकात्मज्ञानेन चलनादि स्थूलदेहसंबन्धि मिथ्याध्यस्तमात्मनि निवर्त्यते तथा सूक्ष्मदेहाविवेकनिमित्तं दुःखं ब्रह्मात्मज्ञानेन समूलं निवर्त्यतइत्यर्थः ॥ १७० ॥

अनिच्छतोप्यविवेकस्वभावान्मनश्चलतीति निमित्तमुक्त्वा नैमित्तिकमाह ।

(१७१) तदा तु दृश्यते दुःखं नैश्चल्येनैव तस्य तत् ।
प्रत्यगात्मनि तस्मात्तद्दुःखं नैवोपपद्यते ॥ ५८३ ॥

तदेति । नैश्चल्ये सति तस्यात्मनः तद् दुःखं नैवेत्यन्वयः । उपसंहरति । प्रत्यगात्मनि तस्मादिति ॥ १७१ ॥

एवं युक्तितः प्रत्यगात्मनो निर्दुःखस्वाभाव्ये सिद्धे वाक्यादेव ब्रह्मास्मीत्यपरोक्षं ज्ञानं भवतीत्याह ।

(१७२) त्वंसतोस्तुल्यनीडत्वान्नीलाश्ववदिदं भवेत् ।
निर्दुःखवाचिना योगात् त्वंशब्दस्य तदर्थता ॥ ५८४ ॥
प्रत्यगात्माभिधानेन तच्छब्दस्य युतेस्तथा ।

त्वंसतोरिति सार्द्धेन । इदं वाक्यमखण्डार्थनिष्ठं भवेत् त्वंसतोस्त्वंसत्पदयोस्तुल्यनीडत्वादेकार्थवृत्तित्वान्नीलाश्वपदवदित्यन्वयार्थः । नीलाश्व इतिपदयोर्यद्यपि गुणगुणिरूपेण संसृष्टार्थविषयत्वं तथाप्येकद्रव्यपर्यवसायित्वेन सामानाधिकरण्ये दृष्टान्त इति द्रष्टव्यम् । कथं पदयोरेकार्थनिष्ठत्वं तद्दर्शयति । निर्दुःखेति । निर्दुःखवाचिना सच्छब्देन योगात्सामानाधिकरण्यात्त्वंशब्दस्य तदर्थता सच्छब्दार्थता तथा प्रत्यगात्माभिधानेन त्वंशब्देन तच्छब्दस्य सच्छब्दस्य युतेर्योगात्सामानाधिकरण्यादपरोक्षात्मता सिद्ध्यतीत्यर्थः ॥ १७२ ॥

वाक्यमप्यपरोक्षवस्तुप्रतिपादकमित्यत्र दृष्टान्तमाह ।

(१७३) दशमस्त्वमसीत्येवं वाक्यं स्यात्प्रत्यगात्मनि ॥ ५८५ ॥

दशमस्त्वमसीति ॥ १७३ ॥

ननु तत्त्वंपदयोरेकार्थनिष्ठत्वे पर्यायत्वापत्तौ सहप्रयोगायोग इति चेन्नास्ति पर्यायत्वं प्रवृत्तिनिमित्तभेदादित्यभिप्रेत्याह ।

(१७४) स्वार्थस्य ह्यप्रहाणेन विशिष्टार्थसमर्पकौ ।
प्रत्यगात्मावगत्यन्तौ नान्योऽर्थोऽर्थाद्विरोध्यतः ॥ ५८६ ॥

स्वार्थस्य हीति । प्रत्यक्त्वपरोक्षत्वलक्षणस्वार्थस्य स्ववाच्यार्थस्याप्रहाणेनापरित्यागेनैव त्वंसच्छब्दौ विशिष्टार्थसमर्पकौ, अतो वाच्यभेदान्न पर्यायतेत्यर्थः । एवं तर्ह्यखण्डार्थत्वं न स्यादित्याशङ्क्याह । प्रत्यगात्मेति । प्रत्यगात्मनः शुद्धसाक्षिणोवगतिस्तत्त्वावगतिरन्तोवसानं ययोस्तौ तथा श्रूयमाणं पदयोः सामानाधिकरण्यं मिथो विरुद्धवाच्यार्थसंसर्गे ऽन्यतरविशिष्टे ऽन्यतरस्मिन् वा पर्यवसानमगच्छत्कल्पितभेदपरामर्शेन लक्षणया विगतपरोक्षत्वापरोक्षत्वाद्यंशे स्वरूपमात्रे सोयं देवदत्त इति वदखण्डे पर्यवस्यतीति प्रत्यगात्मावगत्यन्तौ तत्त्वंशब्दावुक्तावित्यर्थः । ननु तत्त्वंपदयोः सामानाधिकरण्यमंशांशित्वादिविषयतयाप्युपपत्स्यते किमित्यखण्डार्थतापक्षपात इत्यत आह । नान्योर्थ इति । अतो ऽस्मादुक्तादखण्डार्थादेकरसाद्विरोधी अन्योर्थो न वेदान्तेषु प्रतिपाद्यत इत्यर्थः । तदिदं विवक्षितं तत्त्वमर्थयोः सुवर्णं कुण्डलमितिवन्न कार्यकारणभावेन संसर्गः संभवति, "अन्यत्रास्मात्कृताकृता"दिति श्रुतिविरोधात्, नापि भूम्यम्बरादिवदंशांशिभावेन, निष्कलं निष्क्रियमित्यादि, कूटस्थैकरसप्रतिपादकश्रुतिविरोधात्, नापि गुणगुणिभावेन नीलमुत्पलमितिव,न्निर्गुणत्वश्रुतिविरोधात्, नापि जातिव्यक्तिविशिष्टस्वरूपादिप्रकारेण संसर्गः, "एकमेवाद्वितीयमसङ्गो ह्ययं पुरुष" इत्यादिश्रुतिविरोधा,त्तस्माद्विशिष्टसंसर्गविरोधि वस्तुमात्रनिष्ठत्वं वाक्यस्याखण्डार्थत्वमिह विवक्षितं, तथा च विमतमखण्डार्थनिष्ठम्, उपाधिपरामर्शमन्तरेणाविभाव्यमानभेदवस्तुनिष्ठत्वात्, सोयं देवदत्तः खं छिद्रमित्यादिवाक्यवदिति ॥ १७४ ॥

नन्वेवमखण्डार्थनिष्ठत्वेपि वाक्यस्य न तावन्मात्रे पर्यवसानं युक्तं, बोधमात्रात्फलासिद्धेर्यत्नान्तरमेष्टव्यमिति क्रियापर्यवसायिता कस्मान्न कल्प्यत इत्याशङ्क्य मुमुक्षोर्जिज्ञासितमर्थं विहायार्थान्तरपरत्वकल्पने ऽबुभुत्सितार्थपरत्वेन वाक्यस्याप्रामाण्यप्रसङ्गान्मैवमित्यभिप्रेत्य ज्ञानमात्रादेव फलसिद्धिं दृष्टान्तेनोपपादयति ।

(१७५) नवबुध्यपहाराद्धि स्वात्मानं दशपूरणम् ।
अपश्यन् ज्ञातुमेवेच्छेत्स्वमात्मानं जनस्तथा ॥ ५८७ ॥

नवबुद्धीत्यादिना । नवैव वयमिति बुद्ध्या भ्रमरूपया ऽपहारात्तिरोहितत्वात्तिरोधानमात्रनिवृत्तिफलतया दशत्वसंख्यापूरणं स्वात्मानमपश्यन् ज्ञातुमेवेच्छेन्न तु किं चित्कर्त्तुमित्यर्थः । यथा ऽयं दृष्टान्तस्तथा जनो मुमुक्षुरिति स्वमात्मानं केनापि हेतुना विस्मृतं ज्ञातुमेवेच्छति भ्रमनिवृत्तिफलायैवातः क्रियापरत्वकल्पना नावकाशं लभत इत्यर्थः ॥ १७५ ॥

प्रकृते स्वात्मनः केनापहारः कृत इत्यपेक्षायां दार्ष्टान्तिकं विवृण्वंस्तदाह ।

(१७६) अविद्याबद्धचक्षुष्ट्वात्कामापहृतधीः सदा ।
विविक्तं दृशिमात्मानं नेक्षते दशमं यथा ॥ ५८८ ॥

अविद्याबद्धेति । अविद्या ऽनाद्यज्ञानं तया बद्धमाच्छादितं चक्षुर्विवेकदर्शनं यस्य स जीवस्तथा तस्य भावस्तत्त्वं तस्मादिति विग्रहः । आवरणमुक्त्वा विक्षेपमाह । कामापहृतधीरिति । बहिर्विक्षिप्तचित्त इत्यर्थः । सदा सर्वदा दृश्यसंघाताद्विविक्तमेव परमार्थं दृगात्मतत्त्वं नेक्षते न पश्यति यथा नवबुद्ध्यपहृतस्वात्मतत्त्वो नवस्वेव विक्षिप्तचित्तो दशमं नवभ्यो वस्तुतो विविक्तं नेक्षते तथेत्यर्थः ॥ १७६ ॥

कथं तर्ह्यात्मानं जानातीत्यपेक्षायां शास्त्राचार्योपदेशनिमित्तमात्राज्जानातीति सदृष्टान्तमाह ।

(१७७) दशमस्त्वमसीत्येवं तत्त्वमस्यादिवाक्यतः ।
स्वमात्मानं विजानाति कृत्स्नान्तःकरणेक्षणम् ॥ ५८९ ॥

दशमस्त्वमसीत्येवमिति । कृत्स्नान्तःकरणेक्षणमहंकर्त्तुरपि विविक्तं तत्साक्षिणमित्यर्थः ॥ १७७ ॥

ननु

यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।
तच्छब्द एवकारश्च स्यादुपादेयलक्षणम् ॥

इतिन्यायेन प्रथमनिर्दिष्टमुद्देश्यं चरमनिर्दिष्टमुपादेयमिति नियमो वक्तव्यः, इह नोपपद्यते, यतस्तत्त्वमित्यत्र तदर्थस्य प्राथम्यं श्रूयते, अहं ब्रह्मास्मीत्यत्र त्वमर्थस्य, एवं तत्रतत्रान्यथान्यथा श्रूयमाणत्वात्कथमिहोद्देश्यविधेयनियम इत्याशङ्क्य वेदपदानामर्थवशादेव संबन्धो न पाठवशादाहर पात्रं पात्रमाहरेतिवदार्थनियमं विवक्षन्नाह ।

(१७८) इदं पूर्वमिदं पश्चात्पदं वाक्यं भवेदिति ।
नियमो नैव वेदेऽस्ति पदसांगत्यमर्थतः ॥ ५६० ॥

इदं पूर्वमिति । पाठस्यानियमेऽपि प्रसिद्धमुद्दिश्यानूद्याप्रसिद्धो बोध्यतइति न्यायादिदं प्रसिद्धार्थकत्वमहमादिपदं पूर्वमिदमप्रसिद्धार्थकं ब्रह्म सदादिपदं पश्चादित्येवं पदं विन्यस्तं वाक्यं भवेदित्यन्वयव्यतिरेकाभ्यामवधार्य ततो वाक्यार्थबोधनं त्वमर्थस्य तदर्थात्मत्वप्रतिपत्तिरूपं भवेदित्यर्थः ॥१७८॥

उक्तेऽर्थे हेतुमाह ।

(१७९) वाक्ये हि श्रूयमाणानां पदानामर्थसंस्मृतिः ।
अन्वयव्यतिरेकाभ्यां ततो वाक्यार्थबोधनम् ॥ ५६१ ॥

वाक्ये हीति ॥ १७९ ॥

आचार्येण ब्रह्मासीत्युपदिष्टः खलु शिष्यः कथमहं ब्रह्म स्यामिति पृच्छति तदन्यथानुपपत्त्या वाक्यं साक्षाद्बोधजननसमर्थं न भवतीति गम्यतइत्याशङ्क्याह ।

(१८०) यदा नित्येषु वाक्येषु पदार्थस्तु विविच्यते ।
वाक्यार्थज्ञानसंक्रान्त्यै तदा प्रश्नो न युज्यते ॥ ५६२ ॥

यदा नित्येष्विति । नित्येष्वर्थाव्यभिचारिष्वित्यर्थः ॥१८०॥

पदार्थतत्त्वानभिज्ञस्यैव प्रश्नो घटतइत्युक्तं स्पष्टयति ।

(१८१) अन्वयव्यतिरेकोक्तिः पदार्थस्मरणाय तु ।
स्मृत्यभावेन वाक्यार्थो ज्ञातुं शक्यो हि केन चित् ॥५६३॥

अन्वयेति । अन्वयव्यतिरेकोक्तिशब्देनावान्तरवाक्यैस्तदनुकूलैश्च तर्कैरात्मानात्मविवेचनमुच्यते, पदार्थस्मृतिः पदोपस्थापिता वाक्यार्थज्ञानकारणमित्यत्र लोकप्रसिद्धिमाह । स्मृत्यभावइति ॥ १८१ ॥

तत्रापि त्वंपदार्थविवेकेऽतीव यत्नः कार्य इत्यभिप्रेत्याह ।

(१८२) तत्त्वमस्यादिवाक्येषु त्वंपदार्थाविवेकतः ।
व्यज्यते नैव वाक्यार्थो नित्यमुक्तोहमित्यतः ॥ ५६४ ॥

तत्त्वमस्यादीति त्रिभिः श्लोकैः ॥ १८२ ॥

विचारप्रयोजनं द्रढयति ।

(१८३) अन्वयव्यतिरेकोक्तिस्तद्विवेकाय नान्यथा ।
त्वंपदार्थविवेके हि पाणावर्पितबिल्ववत् ॥ ५६५ ॥
वाक्यार्थो व्यज्यते चैवं केवलोऽहंपदार्थतः ।
दुःखीत्येतदपोहेन प्रत्यगात्मविनिश्चयात् ॥ ५६६ ॥

अन्वयव्यतिरेकोक्तिरिति । अत इति पूर्वश्लोकगतं पदमस्मिन् योज्यं, तद्विवेकाय त्वंपदार्थविवेकायेत्यर्थः । पदार्थविवेकफलं स्पष्टयति । त्वंपदार्थविवेके हीति । केवलो भेदसंसर्गशून्यो वाक्यार्थ इत्यन्वयः । तत्र हेतुमाहाहंपदार्थतो दुःखीत्येतदपोहेनेति । अहमिति प्रतीयमानात्पदार्थाद् दुःखीत्येतस्येदमंशस्यापोहेन प्रत्यगात्मनः साक्षिणो विशेषेण निश्चयादित्यर्थः ॥ १८३ ॥

एवमुक्तेन न्यायेन वाक्यादेवापरोक्षाखण्डब्रह्मात्मज्ञानमुपपाद्येदानीं पूर्ववादिकल्पनाया निर्मूलतामाह ।

(१८४) तत्रैवं संभवत्यर्थे श्रुतहानाश्रुतार्थधीः ।
नैव कल्पयितुं युक्ता पदवाक्यार्थकोविदैः ॥ ५६७ ॥

तत्रैवमिति ॥ १८४ ॥

यथाव्याख्यातं वाक्यस्य यथाश्रुतार्थे संभवति श्रुतहान्यादिकल्पनमनवकाशमित्युक्तमयुक्तं, प्रत्यक्षादिविरुद्धार्थे वाक्यस्य बाधदर्शनादिति पूर्ववादी दृष्टान्तेन शङ्कते ।

(१८५) प्रत्यक्षादीनि बाधेरन् कृष्णलादिषु पाकवत् ।
अक्षजादिनिभैरेतैः कथं स्याद्वाक्यबाधनम् ॥ ५६८ ॥

प्रत्यक्षादीनीति । यथा कृष्णलान् श्रपयेदिति कृष्णलशब्दवाच्यसुवर्णमयकणेषु श्रुतोपि पाकः प्रत्यक्षेण बाध्यते तेषु विक्लित्तेरदर्शनात्, किं त्वदृष्टार्थ एव संस्कारस्तत्र पाकक्रियासाध्यः, एवमिहाप्यखण्डार्थतां वाक्यस्य प्रत्यक्षादीनि प्रमाणानि भेदग्राहकाणि बाधेरन्, श्रुतेप्यात्मनो ब्रह्मत्वे पूर्णत्वादर्शनादतः प्रसंख्यानेनात्मसंस्कारार्थता वाक्यस्येति चेत्तत्रोत्तरमाह । अक्षजादीति । भवेदेवं यदि कर्तृत्वादिप्रतिभासस्य प्रत्यक्षप्रमाणता स्या,न्नैतदस्ति, अध्यस्ताहंकाराद्युपरागमन्तरेण स्वत आत्मनि दुःखित्वादिधर्मसबन्धस्य निराकृतत्वादतः प्रत्यक्षाद्याभासैरेतैः प्रमाणभूतवाक्यबाधनं कथं स्यान्नैव स्यादित्यर्थः । "प्रयाजेप्रयाजे कृष्णलं जुहोती"तिवद्ब्रह्मज्ञानसंस्कृतस्यात्मनोऽन्यत्र विनियोगादर्शनादिह न संस्कारार्थत्वं वाक्यस्योपपद्यते । सद्यो ब्रह्मत्वादर्शनं तु पदार्थमतिदार्ढ्याभावादित्युक्तमेवेति भावः ॥ १८५ ॥

नन्वेवं विरोधितालक्षणाप्रामाण्याभावेपि स्यादनुत्पत्तिलक्षणमप्रामाण्यं वाक्यस्येति पूर्ववादी शङ्कते ।

(१८६) दुःख्यस्मीति सति ज्ञाने निर्दुःखीति न जायते ।
प्रत्यक्षादिनिभत्वेपि वाक्यान्न व्यभिचारतः ॥ ५९९ ॥

दुःख्यस्मीति । सतीति । दुःखित्वादिभानस्योक्तरीत्या प्रत्यक्षाद्याभासत्वेपि दुःख्यस्मीति विरोधगन्धिनि ज्ञाने सति वाक्यान्निर्दुःखीति विज्ञानं न जायते, इति योजना । पूर्वसिद्धतया प्रत्यक्षस्यासंजातविरोधित्वेन प्राबल्यमस्तीत्यभिप्रायः । दूषयति । न व्यभिचारत इति ॥ १८६ ॥

तमेव व्यभिचारमाह ।

(१८७) स्वप्ने दुःख्यहमध्यासं दाहच्छेदादिहेतुतः ।
तत्कालभाविभिर्वाक्यैर्न बाधः क्रियते यदि ॥ ६०० ॥

स्वप्नइति। स्वप्ने दाहच्छेदादिहेतुतो निमित्तादहं दुःख्यासं तदा ऽऽप्तोपदेशान्निर्दुःखो ऽभूवमित्यनुभवमिदृत्वान्नात्मधर्मो दुःखित्वादीत्यर्थः । तत्र पराभिनिवेशमनुवदति, तत्कालेति ॥ १८७ ॥

तथापि दुःखमात्मव्यभिचारीत्याह ।

(१८८) समाप्तेस्तर्हि दुःखस्य प्राक्च तद्बाध इष्यताम् ।
नहि दुःखस्य संतानो भ्रान्तेर्वा दृश्यते क्वचित् ॥ ६०१ ॥

समाप्तेरिति । दुःखस्य समाप्तेरूर्ध्वं तद्बाधो दुःखबाध इष्यते, एवं प्राक्च पूर्वमपि दुःखं नाभूदिति तद्बाध इष्यतां, मध्ये दृश्यमानस्य शुक्तिरूप्यवन्मिथ्यात्वाव्यभिचारादित्यर्थः । कुतो बाध इष्यतइत्यत्र हेतुमाह । नहीति । भ्रान्तेर्वेति दृष्टान्तार्थो वाशब्दः, तस्माद्दुःखित्वादेरात्मनि सति व्यभिचारादागन्तुकस्य चाविकारिण्यात्मन्यनुपपत्तेरारोपितत्वसिद्धौ प्रमाणज्ञानं शुक्तितत्त्वज्ञानमिव रजतादिबाधनेन दुःखित्वादिबाधनं कुर्वदेव वाक्यादुदेतीति न वाक्यस्यासामर्थ्यशङ्कावकाश इति तात्पर्यार्थः ॥ १८८ ॥

इतश्च वाक्यं न प्रत्यक्षाद् दुर्बलमित्याह ।

(१८९) प्रत्यगात्मन आत्मत्वं दुःख्यस्मीत्यस्य बाधया।
दशमं नवमस्येव वेद चेदविरुद्धता ॥ ६०२ ॥

प्रत्यगात्मन इति । स्पष्टार्थः ॥ १८९ ॥

विस्तरेणोक्तं न्यायार्थं संक्षिप्याह श्लोकचतुष्टयेन ।

(१९०) नित्यमुक्तत्वविज्ञानं वाक्याद्भवति नान्यतः ।
वाक्यार्थस्यापि विज्ञानं पदार्थस्मृतिपूर्वकम् ॥ ६०३ ॥
अन्वयव्यतिरेकाभ्यां पदार्थः स्मर्यते ध्रुवम् ।
एवं निर्दुःखमात्मानमक्रियं प्रतिपद्यते ॥ ६०४ ॥
सदेवेत्यादिवाक्येभ्यः प्रमा स्फुटतरा भवेत् ।
दशमस्त्वमसीत्यस्माद्यथैवं प्रत्यगात्मनि ॥ ६०५ ॥
प्रबोधेन यथा स्वाप्नं सर्वं दुःखं निवर्त्तते ।
प्रत्यगात्मधिया तद्वद् दुःखित्वं सर्वदा ऽऽत्मनः ॥ ६०६ ॥

नित्यमुक्तत्वेत्यादिना । प्रमा स्फुटतरा अपरोक्षा । निगदव्याख्याताः श्लोकाः ॥ १९० ॥

पुरोक्तकूष्माण्डादिपाकदृष्टान्तवैषम्यं स्फुटयति ।

(१९१) कूष्माण्डादौ प्रमाऽजन्म तदन्यार्था ऽमृदुत्वतः ।
तत्त्वमस्यादिवाक्येषु न त्वेवमविरोधतः ॥ ६०७ ॥

कूष्माण्डादाविति । प्रमाया अजन्म यत्कूष्माण्डादौ न युज्यते यतस्तत्रान्यार्था प्रमा ऽदृष्टार्था न पाकार्था ऽमृदुत्वतो ऽमृदुत्वात्कूष्माण्डानामिति योजना । कूष्माण्डपाके पुरुषस्यानैश्वर्यादशक्यार्थे च नियोगानुपपत्तेरित्यर्थः । प्रकृते न तथाविधो विरोधोस्तीत्याह । तत्त्वमिति ॥ १९१ ॥

"तत्त्वमस्यादिवाक्येषु त्वंपदार्थाविवेकतः ।
व्यज्यते नैव वाक्यार्थः"

इत्युक्तं प्रपञ्चयंस्त्वंपदार्थविवेचने यत्नाधिक्यं सूचयति ।

(१९२) वाक्ये तत्त्वमसीत्यस्मिन् ज्ञातार्थं तदसिद्वयम् ।
त्वमर्थे ऽसत्यसाहाय्याद्वाक्यं नोत्पादयेत्प्रमाम् ॥ ६०८ ॥

वाक्ये तत्त्वमिति । पदत्रयात्मकेस्मिन्वाक्ये तत्पदमसिपदं चेति द्वयं ज्ञातार्थं प्रसिद्धार्थं त्वमर्थे त्वंपदार्थे ऽसत्यविज्ञाते ऽसाहाय्यात्सहायशून्यत्वात्सहकारिविरहाद्वाक्यमेतत्प्रमां नोत्पादयेदपरोक्षनिश्चयरूपामित्यर्थः ॥ १९२ ॥

असिपदस्योपयोगमाह ।

(१९३) तत्त्वमोस्तुल्यनीडार्थमसीत्येतत्पदं भवेत् ।

तत्त्वमोरिति । तुल्यनीडार्थं कुरुचिन्तयेत्यादिक्रियाकाङ्क्षानिवारणेन सामानाधिकरण्यसिद्धैक्यालम्बनत्वस्पष्टीकरणार्थमस्यस्मीत्यादिपदमुपयुज्यतइत्यर्थः ॥ १९३ ॥

निराकाङ्क्षे सामानाधिकरण्ये सति को लाभ इत्यपेक्षायामाह ।

(१९४) तच्छब्दः प्रत्यगात्मार्थस्तच्छब्दार्थस्त्वमस्तथा ॥ ६०९ ॥
दुःखित्वाप्रत्यगात्मत्वे वारयेतामुभावपि ।

तच्छब्द इति । प्रत्यगात्मा ऽर्थो यस्य स प्रत्यगात्मार्थस्तच्छब्दः स्यात्, त्वंपदेन सामानाधिकरण्यादिति योज्यम् । तथा त्वमस्त्वंपदस्य तच्छब्दार्थो ऽर्थो भवेत्तत्पदेन सामानाधिकरण्यादिति योजना । तदा को लाभ इति तमाह । दुःखित्वेति । उभावपि शब्दौ त्वमर्थस्य दुःखित्वांशं तदर्थस्यानात्मत्वपरोक्षत्वांशं च वारयेतामित्यर्थः ॥ १९४ ॥

एवं वाक्यार्थवर्णने ऽद्वितीयत्वपरश्रुत्यविरोधः सिद्धतीत्यभिप्रेत्योपसंहरति ।

(१६५) एवं च नेतिनेत्यर्थे गमयेतां परस्परम् ॥ ६१० ॥

एवं चेति । नेतिनेति वाक्यसिद्धमर्थमित्यर्थः ॥ १६५ ॥

पूर्वपक्षे श्रुतहान्यश्रुतकल्पना निष्प्रामाणिकेत्युक्तमुपसंहरति ।

(१६६) एवं तत्त्वमसीत्यस्य गम्यमाने फले कथम् ।
अप्रमाणत्वमस्योक्त्वा क्रियापेक्षत्वमुच्यते ॥ ६११ ॥

एवमिति । कथंशब्द आक्षेपार्थः ॥ १६६ ॥

यस्मादेवं विचार्यमाणे क्रियाया अनवकाशस्तस्मादित्युपसंहरति ।

(१६७) तस्मादाद्यन्तमध्येषु कुर्वित्येतद्विरोध्यतः ।
न कल्पामो ऽश्रुतत्वाच्च श्रुतत्यागोऽप्यनर्थकः ॥ ६१२ ॥

तस्मादिति । आदौ तत्त्वमसीति प्रथमोपदेशे मध्ये पदार्थपरिशोधनान्वयव्यतिरेकग्रहणकाले ऽन्ते च निर्विचिकित्सब्रह्मानुभवकाले कुर्वित्येतदनुष्ठानकल्पनं तत्तदर्थप्रतिपत्तिविरोधि यतो ऽतो न कल्पामो न कल्पयामः क्रियामिति शेषः । किं चाश्रुतत्वादपि न कल्पयामः । न केवलमश्रुतत्वात्क्रिया त्याज्या श्रुतत्यागस्यानर्थकत्वादपीत्याह । श्रुतेति । नहि तत्त्वमर्थयोः स्वरूपमप्राप्तं चिन्तनीयतया विधातुं शक्यते । तत्प्राप्तेश्चान्यतो ऽसंभवादस्मादेव तत्प्राप्तिमाशंसतो वाक्यभेदादिदोषप्राप्तिरपरिहार्या स्यात्, तत्त्वमोस्तत्त्वसिद्धिमनपेक्ष्यैव यथाकथंचिच्चिन्तनविधानाभ्युपगमे चिन्त्यब्रह्मसाक्षात्कारस्याप्रमात्वादविद्यानिवृत्तिफलासिद्धेर्निरर्थकः प्रसंख्यानविधिरिति भावः ॥ १६७ ॥

उक्तार्थानभिज्ञः पुनराक्षिपति ।

(१६८) यथानुभूयते तृप्तिर्भुजेर्वाक्यान्न गम्यते ।
वाक्यस्य विधृतिस्तद्वद्गोशकृत्पायसी क्रिया ॥ ६१३ ॥

यथेति । भुजेर्भोजनात्तृप्तिः फलं वाक्याद्वाक्यार्थज्ञानमात्रान्न गम्यते मोक्षफलमिति शेषः । तस्माद्यथा गोशकृतो गोमयात् पायसी क्रिया पायसकरणं नोपपद्यते, तस्यातत्साधनत्वात्तद्वद्वाक्यस्य विधृतिर्विधारणमर्थतो ऽवधारणं न वाक्यार्थापारोक्ष्यसाधनमित्यर्थः ॥ १६८ ॥

उत्सर्गतो वाक्यं नार्थापारोक्ष्यार्थमित्येतदङ्गीकुर्वन् प्रकृते तस्यापवादकमाह सिद्धान्ती ।

(१६९) सत्यमेवमनात्मार्थे वाक्यात्पारोक्ष्यबोधनम् ।
प्रत्यगात्मनि न त्वेवं संख्याप्राप्तिवदध्रुवम् ॥ ६१४ ॥

सत्यमिति । प्रत्यगात्मनि तु नैवमध्रुवमनिश्चितं, किं तु संख्याप्राप्तिवद्दशमसंख्याप्राप्तिवदपरोक्षज्ञानसाधनत्वं वाक्यस्य ध्रुवमेवेत्यर्थः ॥ १६९ ॥

कुत इत्यपेक्षायां स्वतो ऽपरोक्षप्रत्यगात्मन एव ब्रह्मत्वोपदेशादित्याह ।

(२००) स्वसंवेद्यत्वपर्यायः स्वप्रमाणक इष्यताम् ।
निवृत्तावहमः सिद्धः स्वात्मनो ऽनुभवश्च नः ॥ ६१५ ॥

स्वसंवेद्यत्वेति । स्वप्रमाणकः प्रमाणनिरपेक्षप्रकाशमानतास्वभाव आत्मेष्यतां स्वयंज्योतिष्ट्वादिश्रुतेरित्यर्थः । तथा च वाक्यादहमो ऽहंकारस्य ब्रह्मभेदकस्य निवृत्तौ स्वात्मनो ऽनुभवश्च सिद्ध एव नोऽस्माकमिति न किं चिदनुपपन्नमित्यर्थः । विमतं परोक्षार्थज्ञानजनकं वाक्यत्वात् संमतवदित्यादिप्रयोगेष्वनात्मविषयत्वमुपाधिर्दशमस्त्वमसीत्यादौ व्यभिचारश्चेत्युक्तं भवति ॥ २०० ॥

अत्र दुःखानुभवविरोधशङ्का न कार्या, दुःखस्य व्यभिचारित्वेनात्मधर्मत्वस्य निरस्तत्वाद्विषयधर्मत्वाच्चेत्यभिप्रेत्याह ।

(२०१) बुद्धीनां विषयो दुःखं तापस्य विषया मताः ।
कुतो ऽस्य दुःखसंबन्धो दृशेः स्यात्प्रत्यगात्मनः ॥ ६१६ ॥

बुद्धीनामिति । दुःख्यहमस्मीति दुःखधर्मवत्त्वेनाहंकर्तुरेवानुभवात्तस्य विषयभूतं दुःखं न बुद्धिवृत्त्याश्रयाहंकर्तृसाक्षिण आत्मनो धर्मः संभवतीत्यर्थः ॥ २०१ ॥

सर्वधर्मरहितश्चेत्प्रत्यगात्मा कथं तस्यानुभव इत्यत आह ।

(२०२) दृशिरेवानुभूयेत स्वेनैवानुभवात्मना ।
तदाभासतया जन्म धियो ऽस्यानुभवः स्मृतः ॥ ६१७ ॥

दृशिरेवेति । दृशेरनुभवस्वभावत्वात्तस्य स्वरूपे को नामान्योऽनुभवो ऽपेक्ष्येतेत्यर्थः । तर्हि कथं तस्य विशेषानुभव इति तत्स्वरूपमाह । तदाभासतयेति । चैतन्याभासव्याप्ततया धियो जन्मैवात्मन आगन्तुकोऽनुभवः स्मृतो विद्वद्भिरित्यर्थः ॥ २०२ ॥

प्रकारान्तरेण प्रसंख्यानप्राप्तिं निराकरोति ।

(२०३) अशनायादिनिर्मुक्तः सिद्धो मोक्षस्त्वमेव सः ।
श्रोतव्यादि तवेत्येतद्विरुद्धं कथमुच्यते ॥ ६१८ ॥

अशनायादीति । सर्वसंसारविनिर्मुक्तो नित्यसिद्धो मोक्षो ब्रह्मत्वमेवेत्याचार्योपदेशे सति तव श्रोतव्याद्यनुष्ठेयं विद्यत इति कथं विरुद्धमुच्यते, नह्यविक्रियं ब्रह्म त्वं कर्ता चेति वचः प्रमाणं स्यादित्यर्थः ॥ २०३ ॥

अथ तत्त्वं सेत्स्यतीति विपरिणाम उपदेशवाक्यस्याभ्युपेयत इति शङ्कामनूद्य तत्रैकं संधित्सतो ऽपरं प्रच्यवत इति न्यायेन मोक्षानित्यत्वप्रसङ्गं दोषमाह ।

(२०४) सेत्स्यतीत्येव चेत्तस्याच्छ्रवणादि तदा भवेत् ।
मोक्षस्यानित्यतैव स्याद्विरोधे नान्यथा वचः ॥ ६१९ ॥

सेत्स्यतीति । एवमुभयथा विरोधे सति वचो वाक्यं नान्यथा न विपरिणामवद्युक्तमित्यर्थः ॥ २०४ ॥

इतश्च प्रसंख्यानवादो ऽनुपपन्न इत्याह ।

(२०५) श्रोतृश्रोतव्ययोर्भेदो यदीष्टः स्याद्भवेदिदम् ।
दृष्टार्थकोप एवं स्यान्न युक्तं सर्वथा वचः ॥ ६२० ॥

श्रोतृश्रोतव्ययोरिति । श्रोत्रादिभेदो यदीष्टः स्यात्तदेदं प्रसंख्यानं भवेत्कर्तृकर्मभेदाभावे कार्यानुपपत्तेरित्यर्थः । अस्तु भेद इति चेत्तत्राह । दृष्टार्थेति । जीवस्य ब्रह्मभावो हीष्टार्थः सो ऽन्यस्यान्यभावायोगाद्विहन्येतातः सर्वथा वचो वाक्यं न युक्तमयुक्तमप्रमाणमेव प्रसंख्यानपक्षे भवेदित्यर्थः ॥ २०५ ॥

न युक्तं वच इत्येतत्प्रकटयति ।

(२०६) सिद्धो मोक्षो ऽहमित्येव ज्ञात्वा ऽऽत्मानं भवेद्यदि ।
चिकीर्षुर्यः स मूढात्मा शास्त्रं चोद्घाटयत्यपि ॥ ६२१ ॥

सिद्ध इति । उक्तप्रकारेणात्मानं ज्ञात्वा यो यदि चिकीर्षुर्भवेत्स मूढात्मेत्यन्वयः । उद्घाटयत्युत्सादयतीत्यर्थः ॥ २०६ ॥

मूढात्मत्वं प्रकटयति ।

(२०७) नहि सिद्धस्य कर्तव्यं सकार्यस्य न सिद्धता ।
उभयालम्बनं कुर्वन्नात्मानं वञ्चयत्यसौ ॥ ६२२ ॥

नहीति ॥ २०७ ॥

ननु किमित्यस्माचिन्दयास्मदभिप्रायमज्ञात्वैवेति पूर्ववादी स्वाभिप्रायमाविष्करोति ।

(२०८) सिद्धो मोक्षस्त्वमित्येतद्वस्तुमात्रं प्रदर्श्यते ।
श्रोतुस्तथात्वविज्ञाने प्रवृत्तिः स्यात्कथं त्विति ॥ ६२३ ॥

सिद्धो मोक्षस्त्वमिति । मुमुक्षोरात्मविज्ञाने प्रवृत्त्यर्थं सिद्धब्रह्मरूपो मोक्षस्त्वमसीति वस्तुमात्रकथनपरमिदं वाक्यं न तत्त्वपर्यवसितमित्यर्थः ॥ २०८ ॥

उक्तमेव विवृणोति ।

(२०९) कर्ता दुःख्यहमस्मीति प्रत्यक्षेणानुभूयते ।
कर्ता दुःखी च माभूवमिति यत्नो भवेत्ततः ॥ ६२४ ॥

कर्त्रेति ॥ २०९ ॥

वाक्यश्रवणानन्तरं मन्तव्य इति श्रुत्या कर्तव्यविधानादप्येवमेवाभ्युपेयमित्याह ।

(२१०) तद्विज्ञानाय युक्त्यादि कर्तव्यं श्रुतिरब्रवीत् ।
कर्तृत्वाद्यनुवादेन सिद्धत्वानुभवाय तु ॥ ६२५ ॥

तद्विज्ञानायेति । त्वमिति कर्तृत्वमनूद्य वस्तुगत्या त्वं सिद्धमोक्षब्रह्मरूपोऽस्यतस्तज्ज्ञानाय यतस्वेति वाक्यतात्पर्यमित्यर्थः ॥ २१० ॥

नेयं कल्पना श्रुत्यनुसारिणीति सिद्धान्ती दूषयति ।

(२११) निर्दुःखो निष्क्रियो ऽकामः सिद्धो मोक्षो ऽहमित्यपि ।
गृहीत्वैवं विरुद्धार्थमादध्यात्कथमेव सः ॥ ६२६ ॥

निर्दुःख इति । निर्दुःखादिविशेषणो मोक्ष एवाहमिति गृहीत्वापीत्यन्वयः । वाक्याद्वाक्यार्थज्ञानं न जायत एवेति न वक्तुमुचितमप्रामाण्यप्रसङ्गादनुभवविरोधाच्च, तथा चोत्पन्ने ज्ञाने तद्विरुद्धप्रतिपत्तिर्न संजाघटीतीत्यभिप्रायः ॥ २११ ॥

यदि वाक्यादेव निर्दुःखादिलक्षणमोक्षात्मसाक्षात्कारः, कथं तर्हि तदा तद्विरुद्धाकारानुभव इति पृच्छति ।

(२१२) सकामः सक्रियो ऽसिद्ध इति मे ऽनुभवः कथम् ।
अतो मे विपरीतस्य तद्भवान् वक्तुमर्हति ॥ ६२७ ॥

सकाम इति । अतः सकामत्वादिरूपाद्विपरीतस्य मे ब्रह्मभूतस्येत्यर्थः ॥ २१२ ॥

अन्यस्वभावस्य सतो ममान्यस्वभावानुभवः कथमित्यस्मिन्नर्थे सकृच्छ्रुतवाक्यस्य पुंसः प्रश्नो घटते युज्यते, न तु कथमहं निर्दुःखादिरूप इति मुक्तत्वानुभवार्थं इति प्रश्नविषयं विविच्य प्रतिवक्ति ।

(२१३) इहैव घटते प्रश्नो न मुक्तत्वानुभूतये ।
प्रमाणेन विरोधी यः सोऽन्यार्थः प्रश्नमर्हति ॥ ६२८ ॥

इहैवेति ॥ २१३ ॥

अज्ञातज्ञापनस्वभावेन प्रमाणेनापूर्वार्थे बोधिते तद्विरोधी यः प्रमाणाभासगृहीतोऽर्थः स प्रश्नमर्हतीत्युक्तं प्रपञ्चयति ।

(२१४) अहं निर्मुक्त इत्येव सदसीत्यन्यमानजः ।
प्रत्यक्षाभासजन्यत्वाद् दुःखित्वं प्रश्नमर्हति ॥ ६२९ ॥

अहं निर्मुक्त इति । सदसीति । यदन्यन्मानं तज्ज इत्यर्थः ॥ २१४ ॥

इदानीं शिष्याकाङ्क्षावशेनापि कार्यकल्पनं न घटत इत्याह ।

(२१५) पृष्टमाकाङ्क्षितं वाच्यं दुःखाभावमभीप्सितम् ।

पृष्टमिति । किं तदाकाङ्क्षितं तदाह । दुःखाभावमभीप्सितमिति । दुःखस्याभावो यस्मिन् तद् दुःखाभावं ब्रह्मरूपं मोक्षलक्षणमित्यर्थः ॥ २१५ ॥

प्रश्नस्वरूपमुपन्यस्य तदनुरूपस्य प्रतिवचनस्य निगमयति ।

(२१६) कथं हीदं निवर्तेत दुःखं सर्वात्मना मम ॥ ६३० ॥
इति प्रश्नानुरूपं यद्वाच्यं दुःखनिवर्तकम् ।

कथं हीति ॥ २१६ ॥

ननु पृष्टमेवोच्यते प्रसंख्यानद्वारेण तद्व्यतिरेकेण श्रुते दुःखापनयनसामर्थ्याभावादित्याशङ्क्य, प्रमाणस्य प्रमेयावबोधनमेव कार्यं न कार्यान्तरमस्तीति परिहरति ।

(२१७) श्रुतेः स्वात्मनि नाशङ्का प्रामाण्ये सति विद्यते ॥ ६३१ ॥
तस्मादात्मविमुक्तत्वप्रत्ययं याति तद्वचः ।
वक्तव्यं तत्तथार्थः स्याद्विरोधे ऽसति केन चित् ॥ ६३२ ॥

श्रुतेरिति । श्रुतेः स्वतःसिद्धप्रामाण्ये सति स्वात्मनि स्वप्रमेये नाशङ्का विद्यते स्वप्रमेयावभाससामर्थ्याभावाशङ्का न विद्यतइत्यर्थः । किं ततः सिद्धं तदाह । तस्मादिति । मुक्तत्वप्रत्ययं प्रति कारणत्वं यातीत्यर्थः । विशेषपरिहारस्य कृतत्वादिति भावः ॥ २१७ ॥

वाक्यस्योक्तार्थानुभवहेतुतां विहाय गत्यन्तरं नास्त्यनुभवमार्गगतमित्याह ।

(२१८) इतोऽन्योऽनुभवः कश्चिदात्मनो नोपपद्यते ।
अविज्ञातं विजानतां विज्ञातारमिति श्रुतेः ॥ ६३३ ॥

इतोऽन्य इति । प्रकारान्तरकल्पना चात्रानुपपन्ना, श्रुतिविरोधादित्याह । अविज्ञातारमिति ॥ २१८ ॥

यदुक्तं पूर्वपक्षिणा प्राक्
"चर्या नो शास्त्रसंवेद्या स्यादनिष्टं तथा सति"
इति, तदन्यथैवोपपत्तेर्न प्रसंख्यानकल्पकमित्याह ।

(२१९) त्वंपदार्थविवेकाय संन्यासः सर्वकर्म्मणाम् ।
साधनत्वं व्रजत्येवं शान्तोदान्तानुशासनात् ॥ ६३४ ॥

त्वंपदार्थेति । "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा ऽऽत्मन्येवात्मानं पश्यती"ति श्रुतेरुपरतिशब्दनिर्दिष्टस्य संन्यासस्यात्मज्ञानं प्रति साधनत्वावगमाच्च तस्याशास्त्रसंवेद्यतया परित्यागप्रसङ्ग इत्यर्थः । तथा च वाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वात्पदार्थावधारणपर्यन्तमेवाश्रमधर्माणां विधितो ऽनुष्ठानं, ततः परं तु वाक्यादवगतब्रह्मात्मतत्त्वस्य मयेदमस्मै कर्त्तव्यमिति नियोज्यविषयप्रयोजनबुद्धेरनुत्पत्तेर्न तस्य क्वापि विधितः प्रवृत्तिः, किं तु साधकावस्थायामभ्यस्तस्य निवृत्तिरूपस्याश्रमधर्मस्य ज्ञानाविरोधिनः संस्कारमात्रेणानुवृत्तिर्भवति, ततश्च न यथेष्टचेष्टा ऽप्यवकाशं लभतइति सर्वमवदातमेवास्मन्मतइति भावः ॥ २१९ ॥

एतदेव प्रपञ्चयिष्यन् वाक्यार्थोदयप्रकारं श्रौतं व्युत्पादयति ।

(२२०) त्वमर्थं प्रत्यगात्मानं पश्येदात्मानमात्मनि ।
वाक्यार्थं तत आत्मानं सर्वं पश्यति केवलम् ॥ ६३५ ॥

त्वमर्थमिति । शान्त्यादिसाधनसंपन्नो भूत्वा ऽऽत्मन्येवात्माभासव्याप्ते स्वकार्यकरणसंघातएव न बहिरात्मानं प्रत्यक्चेतयितारं पश्येदिति श्रुत्यर्थः प्रथमार्द्धेनोक्तः । सर्वमेनं पश्यतीति श्रुत्यर्थमुत्तरार्द्धेनाह । तत इति । एवं शोधितं प्रत्यगात्मानं सर्वं ब्रह्म पश्यतीति श्रुत्यर्थो दर्शित इति द्योतयति । वाक्यार्थमिति ॥ २२० ॥

एवं विज्ञातवाक्यार्थस्य विधिगोचरता नैव संभवतीत्याह ।

(२२१) सर्वमात्मेति वाक्यार्थे विज्ञाते ऽस्य प्रमाणतः ।
असत्त्वे ह्यन्यमानस्य विधिस्तं योजयेत्कथम् ॥ ६३६ ॥

सर्वमात्मेति ॥ २२१ ॥

वाक्यार्थविज्ञानात्प्रागेव विधयो ऽवकाशं लभन्ते नोर्ध्वमित्युपसंहरति ।

(२२२) तस्माद्वाक्यार्थविज्ञानान्नोर्द्ध्वं कर्मविधिर्भवेत् ।
नहि ब्रह्मास्मि कर्त्तेति विरुद्धे भवतो धियौ ॥ ६३७ ॥

तस्मादिति । ऊर्द्ध्वं विध्यसंभवे हेतुमाह । नहीति ॥ २२२ ॥

नन्वैक्यज्ञानेन भेदज्ञानमेव किमिति बाध्यते, विपरीतमेव किं न स्यादित्यत आह ।

(२२३) ब्रह्मास्मीति च विद्येयं नैवं कर्त्तेति बाध्यते ।
सकामो बद्ध इत्येवं प्रमाणाभासजातया ॥ ६३८ ॥

ब्रह्मास्मीति चेति । प्रमाणाभासाज्जाता प्रमाणाभासजाता तयेति विग्रहः ॥ २२३ ॥

स्वभावप्रवृत्ताया बुद्धेः प्रमाणजातया बाध्यत्वं दृष्टान्तेनोपपादयति ।

(२२४) शास्त्राद्ब्रह्मास्मि नान्योहमिति बुद्धिर्भवेद्दृढा ।
यदा ऽयुक्ता तदैवं धीर्यथा देहात्मधीरिति ॥ ६३९ ॥

शास्त्रादिति । दृढा यदा भवेत्तदैवं धीः कर्त्ताहमित्येवं धीरयुक्तेत्यन्वयः । यथा देहात्मधीर्मनुष्योहमित्यादिरूपा शास्त्राद्विदितात्मतत्त्वस्य न भवति तथेत्यर्थः ॥ २२४ ॥

विदितात्मतत्त्वस्य कर्त्ता कामीत्यादिधीरनवकाशेत्युक्तेर्थे दृष्टान्तान्तरमाह ।

(२२५) सभयादभयं प्राप्तस्तदर्थं यतते च यः ।
स पुनः सभयं गन्तुं स्वतन्त्रश्चेन्नहीच्छति ॥ ६४० ॥

सभयादिति । लोकप्रसिद्धार्थानुवादी श्लोकः स्पष्टार्थः ॥ २२५ ॥

यदुक्तं नियोगाभावे ज्ञानिनो यथेष्टचेष्टाप्राप्तिरिति तत्राह ।

(२२६) यथेष्टाचरणप्राप्तिः संन्यासादिविधौ कुतः ।
पदार्थाज्ञानबुद्धस्य वाक्यार्थानुभवार्थिनः ॥ ६४१ ॥

यथेष्टेति । आदिशब्दाच्छ्रवणादिविधिर्गृह्यते, पदार्थयोरासमन्ताज् ज्ञानं पदार्थस्वरूपालोचनं तेन बुद्धस्य देहाद्यभिमानशून्यस्येति यावत् । पदार्थाज्ञानाद्बुद्धस्य प्रतिबुद्धस्येति वा ।

वाक्यार्थानुभवमर्थयमानस्य तत्रैव लग्नचित्तस्य कुतो यथेष्टाचरणप्राप्तिर्निमित्ताभावादवसराभावाच्चेत्यर्थः । प्रबुद्धवाक्यार्थस्य तु मिथ्याज्ञानलेशस्याप्यभावात्तन्मूला यथेष्टचेष्टा नोन्मिषतीति भावः ॥ २२६ ॥

प्रकरणार्थमुपसंहरति ।

(२२७) अतः सर्वमिदं सिद्धं यत्प्रागस्माभिरीरितम् ॥६४२॥

अतः सर्वमिदमिति ॥ २२७ ॥

मुमुक्षोरपि नास्ति यथेष्टचेष्टा, कुतः सा मुक्तस्य स्यादिति कैमुतिकन्यायमाह ।

(२२८) यो हि यस्माद्विरक्तः स्यान्नासौ तस्मै प्रवर्त्तते ।
लोकत्रयाद्विरक्तत्वान्मुमुक्षुः किमितीहते ॥ ६४३ ॥

यो हीति ॥ २२८ ॥

विदुषो नियोगपारतन्त्र्याभावेपि भिक्षाटनादिप्रवृत्तिवद्विषयान्तरेपि प्रवृत्तिः कदा चित्स्यादिति चेत्तत्राह ।

(२२९) क्षुधया पीड्यमानोपि न विषं ह्यत्तुमिच्छति ।
मिष्टान्नध्वस्ततृट् जानन्नामूढस्तज्जिघत्सति ॥ ६४४ ॥

क्षुधयेति । विषयाणां दुःखसाधनतावधारणपूर्वकं प्रागेव विषवत्त्यक्तानां न पुनरुपादानममूढस्य संभवति, भिक्षाटनादेस्तु ज्ञाननिष्ठाविरोधाभावाच्छरीरस्थितिमात्रहेतुतयाऽऽवश्यकत्वेऽप्यपूर्वोपचयहेतुत्वाभावाच्च संस्कारवशादनुवृत्तिरिति न दोष इति द्रष्टव्यम् ॥ २२९ ॥

उत्पन्नतत्त्वज्ञानस्य यद्यपि किमपि कृत्यं नास्ति तथापि गुरुशास्त्रे माननीये एवेति शिष्याञ्छिक्षयन्निव गुरुप्रणामं निबध्नाति ।

(२३०) वेदान्तवाक्यपुष्पेभ्यो ज्ञानामृतमधूत्तमम् ।
उज्जहारालिवद्यो नस्तस्मै सद्गुरवे नमः ॥ ६४५ ॥

॥ इति तत्त्वमसिप्रकरणम् ॥

वेदान्तवाक्येति । नोऽस्मदर्थमित्यर्थः ॥ २३० ॥

इति तत्त्वमसिप्रकरणमष्टादशं विवृतम् ॥ १८ ॥

---

## ॥ अथ बालभारतस्य ॥

॥ तृतीयः सर्गः ॥

सूत्रधार इव मुक्तिपुरैक-
द्वारभारतकृतौ कृतकृत्यः ।
श्रेयसेऽस्तु स मुनिर्महनीये
स्वात्मधामनि सुखेन निषण्णः ॥ १ ॥

श्वेतपर्वततटेषु स खेल-
न्नेकदा नृपतिरैक्षत कान्तिम् ।
द्वादशद्युमणिदीप्तिसहस्रीं
पिण्डितामिव दिवः प्रपतन्तीम् ॥ २ ॥

व्योमकालिमपयोदतमिस्र-
ज्योतिरिङ्गणमशीतमयूखम् ।
विश्वविश्वदृगशक्यविलोकैः
स्वप्रभावविभवैः पिदधानाम् ॥ ३ ॥

विस्फुलिङ्गनिभपिङ्गपतङ्ग-
भ्राजमानसरुचिं वियदब्धौ ।
और्वहेतिपटलीमिव तादृ-
ङ्लीलमच्छलजलानि पिबन्तीम् ॥ ४ ॥

विशेषकम् ।

किं किमेतदिति निश्चिनुतेऽसौ
यावदग्रभुवि तावदुपेतः ।
दीप्तिलिप्तजगदेष महेन्द्र-
स्यन्दनस्तडिदिव द्रुतमभ्रात् ॥ ५ ॥

स्यन्दनावनिगतैः समकालं
वीक्ष्य पादपुरतो विलुठन्तम् ।
कृष्णसर्पमिव जेतुमरातीन्
पार्थमादित करेण नरेन्द्रः ॥ ६ ॥

संमदादथ हृदा परिरब्धः
पार्थिवेन चिरमेष किरीटी ।
कृष्णया पुनरनेन समन्ता-
दान्तरेण भुजदूरगतोऽपि ॥ ७ ॥

मन्दचन्दनरसो विरसेन्दु-
श्रीर्मुधाकृतसुधापरिणामः ।
कोऽपि संमदपदाय तदाभूत्
सोदरेषु परितः परिरम्भः ॥ ८ ॥

स्पृष्टभीमचरणं च यमाभ्या-
मानतं च पुरतो विनिविष्टम् ।
सव्यसाचिनमथ क्षितिपालः
पूजितप्रहितमातलिरूचे ॥ ९ ॥

अस्मदुग्रतरपञ्चवियोगी
पञ्चवह्नितपसा समसाधि ।
यत् त्वया किमपि पञ्चसमाभि-
स्तद्वदारिकरिपञ्चमुख द्राक् ॥ १० ॥

अङ्गकान्तियमुनाजलसङ्ग-
स्वर्धुनीकृतलसद्दशनांशुः ।
शेखरायितकराम्बुजलक्ष्मी-
रभ्यधादथ सुराधिपसूनुः ॥ ११ ॥

अर्जितेयमजरा धनुषि ज्या
वर्म विद्विषदभेद्यमलाभि ।
शिक्षिता च दिवि पञ्चदशास्त्री
त्वत्प्रसादवशतस्त्रिदशेभ्यः ॥ १२ ॥

निष्कपुष्करमयी मयि माला
सेयमुल्लसदमेयमदेन ।
दीयते स्म हरिणायमपाय-
व्रातघातनपटुर्मुकुटश्च ॥ १३ ॥

चित्रसेनममरेशसभाया
भूषणं भरतपुत्रमुपास्य ।
स्वीकृतं भुवनमोहि मयोच्चै-
र्गीतनर्तनकलायुगलं च ॥ १४ ॥

ते निवातकवचा युधि तिस्रः
कोटयः सुरजितोऽम्बुधिकुक्षौ ।
स्वीकृतेन्द्ररथसारथिनास्त्रै-
र्जघ्निरे नृप भवत्पदिकेन ॥ १५ ॥

व्योमचारिणि हिरण्यपुरेऽहं
कालिकेयकपुलोमजदैत्यान् ।
अच्छिदं निहितपाशुपतास्त्रो-
द्भूतभूरिपशुभिः स्मरणात् ते ॥ १६ ॥

सा रतिः क्वचिदभून्न पुनर्मे
यास्ति नाथ भवदङ्घ्रिविलोके ।
पारिजातमधुपस्य कुतः स्यात्
कर्णिकारकुसुमे रसमोहः ॥ १७ ॥

अस्त्रचित्र[1]मिह नः प्रथयेत्थं
तं पृथाप्रथमसूनुरथोचे ।

सोऽपि भूपकुतुकाय वितेने
दैवतायुधशतानि ततानि ॥ १८ ॥

तत्क्षणार्जुनभुजाग्रनियुक्ता-
दग्रशस्त्रविसरप्रसरेण ।
किं किमद्य भवितेति जगद्भिः
क्षोभितासुरसुरैः प्रचकम्पे ॥ १९ ॥

अन्तरेऽच तरलामरमाला-
खेदमेदुरगतिर्द्रुतमेत्य ।
शंकरः स्वयमुदञ्चितपाणिः
प्राणिनामभयदः प्रभु[1]रूचे ॥ २० ॥

वत्स संहरतु संहरतु द्राक्
शस्त्रमस्तु न भवान् भुवनार्त्यै ।
भास्करो यदि करोति तमिस्रं
तत् प्रकाशयति लोकममुं कः ॥ २१ ॥

दैवतायुधगणोऽयमरातौ
क्षिप्र एव कुशलाय न शून्ये ।
किं न तत्क्षणमतोयधिमुक्तो
वाडवाग्निरभिहन्ति जगन्ति ॥ २२ ॥

तद्धनुः परिहरेत्युदितोऽपि
स्थाणुना स्वयमसौ हरिसूनुः ।
वीक्ष्य धर्मतनुजस्य मुखाब्जं
तद्वचैव शमितोऽस्त्रममुञ्चत् ॥ २३ ॥

धार्मिनिर्मितनुतौ ससुरेशेऽ-
दृश्यताविरहितेऽथ महेशे ।
ते परस्परसमागमहर्षो-
त्कर्षतो वनमहीषु विलेसुः २४

त्वां निषेवितुमिहाहमुपेतः
पाण्डुनन्दनमिदं किल जल्पन् ।
काननेषु मधुपीमधुरोक्ति-
र्व्यक्ततामथ ततान वसन्तः ॥ २५ ॥

निश्चितं मधुदिनैः परितक्ष्य
स्वल्पिताः शिशिरदीर्घरजन्यः ।
तल्लताः पतिततत्तनुखण्डा-
नीव रेजुरुरुमण्डलपुष्पाः ॥ २६ ॥

१–वित्त–इति पाठान्तरम् ।

१ पुन– इति पाठान्तरम् ।

तैर्घनाघनघटापरिघट्टैः
खण्डितस्य दिवि चण्डमरीचेः ।
खण्डमण्डलममण्डयदाशा-
मण्डलीं चलतमोमणिमूर्त्या ॥ ४४ ॥

धूमयोनिरुदितः कृतवासं
स्वं पितामहमरण्यमहीषु ।
पावकं दलयति स्म ह हा धिग्-
दुर्विवेकमुदयं मलिनानाम् ॥ ४५ ॥

पाण्डवेद्रुपदजावदनेन्दु-
ज्योत्स्नया कृततमःशमनेषु ।
अप्रवृत्तजलदाम्बुलवेषु
क्रीडितं गिरिगुहान्तगृहेषु ॥ ४६ ॥

यूथिकाकुटजकेतकजाती-
नीपपुष्पकृतपञ्चशरश्रीः ।
आततान मकरध्वजवीरः
सज्जतां त्रिजगतीविजयाय ॥ ४७ ॥

वृष्टितो विरमतापि कदाचित्
तुष्टयेऽनुसरतां पतगानाम् ।
अम्मुचा मुमुचिरे जललेशा-
स्तुङ्गपादपदलेषु गलन्तः ॥ ४८ ॥

गन्धलीनमधुपैररुणत्वं
धारयद्भिरभितोऽपि शिलीन्ध्रैः ।
भूषिता मरकतोपलमिश्रै
रत्नभूषणगणैरिव भूमिः ॥ ४९ ॥

दातुमन्नपटलान्यदिताब्दः
कल्पनाजलमपि त्रुटदब्धेः ।
यज्जगत्यपि जवात् तदवाप-
च्छुभ्रतां शुचियशोभिरिवासौ ॥ ५० ॥

संगतामपतिवद् घनकालः
काननेषु शरदं परिरभ्य ।
तत्क्षणादपि पलायत शृण्वन्
राजहंसजनितध्वनितानि ॥ ५१ ॥

चन्द्रचारुवदना धृतभास्व-
द्दर्पणा सुरधनुर्मुकुटाढ्या ।
हंसहाररुचिरा च तटीय-
क्वाणनूपुररवा शरदागात् ॥ ५२ ॥

पुण्यवानहमनेन समन्तात्
पायिषीय सपदीति मुदाब्धिः ।
उद्गते घटभुवि स्फुटमब्दैः
कर्शितोऽपि भृशमुच्छ्वसिति स्म ॥ ५३ ॥

लोचनैरिव निमेषवियुक्तै-
रम्बुजै रसभृतो भृशमापः ।
ग्रष्यतामगृगयन्त विशुद्धा
मार्गमेव विशदच्छदयूनाम् ॥ ५४ ॥

हन्त भास्करकराग्रगतानां
प्रान्तरे चिरमपां विरहेषु ।
श्यामतां गतवतः कृशमूर्तेः
कर्दमस्य हृदयेन विदीर्णम् ॥ ५५ ॥

जीवितैः किमु स यः समयोऽसौ
साहसादिव ह्रदेषु पतित्वा ।
बर्हिणां छदभरैः पदमापि
छत्रतामुपगतैर्नृपमूर्ध्नि ॥ ५६ ॥

प्रीतिनिश्चलमृगाः करलोल-
त्कङ्कणक्वणपलायितकीराः ।
गीतनृत्तविधिनैव वितेनुः
पालनानि नवशालिषु गोप्यः ॥ ५७ ॥

स्फारितामृतकरामृतकुण्डे
नाकिनागजगती जगतीयम् ।
माधुरीगुणधुरीणधृतेक्षुः
काशिकाशमहसा हसति स्म ॥ ५८ ॥

यद्वनीषु चलखञ्जननेत्रा
सर्वतः शरदसौ विललास ।
तद्बभार भुवि तत्पदलेखा-
विभ्रमं स्थलमहोत्पलवीथी ॥ ५९ ॥

षट्पदो मुहुरयुक्छदपुष्पं
सेवते स्म गजदानसुगन्धि ।
शङ्कितश्रवणतालनिपात-
स्तद्दलादपि चलादतिबिभ्यत् ॥ ६० ॥

बाणपत्त्रनयनेऽसनपुष्प-
स्वर्णधामनि मुखे शरदोऽस्याः ।
कुङ्कुमस्तबकमण्डनलक्ष्मीं
बन्धुजीवकुसुमानि समीयुः ॥ ६१ ॥
षट्पदोऽधरदले दयितायाः
संपतन्नवजयेऽतिविलोलः ।
पञ्चभिश्चलकरैः कुरुवीरैः
शक्यते स्म विनिवारयितुं न ॥ ६२ ॥
जानती मधुनिधानसरोज-
श्रीरिवाभिरपराधपरं स्वम् ।
उत्थिते मधुविरोधिनि जाता
भूरिभीरिव शरद्गमनेच्छुः ॥ ६३ ॥
यामिनीं गुरुतरां तरुणीनां
सोष्म च स्तनयुगं तुहिनेऽपि ।
कल्पयन्नथ सहःसमयोऽभूत्
कामिनीसुकृतपाकवशेन ॥ ६४ ॥
चिन्तयन् हृदि जपामनुरक्तां
षट्पदोऽधित पदं न फलिन्याम् ।
रोध्ररेणुभसितेन सिताङ्ग-
स्तद्दिने भ्रमतु सैष तपस्वी ॥ ६५ ॥
भास्करोऽपि हिमरुग्ण[1] इव द्यो-
सद्मकोणपथ एव चचार ।
वीक्ष्य भानुमिति भानुमणिभ्यः
पावकोऽपि हि बहिर्न बभूव ॥ ६६ ॥
स्म क्रियाव हि पराभवपात्रं
मा हिमैरहमयं च समेतौ ।
इत्यवाप्य हृदि मन्त्रमचालीत्
पावकस्य हरिते खरतेजाः ॥ ६७ ॥
इन्दुरम्बतलेऽम्बुनि पद्मं
म्लानिमापतुरतीव तुषारैः ।
एतयोर्द्युतिरलोकि निलीना
पाण्डवैर्द्रुपदजामुख एव ॥ ६८ ॥
उद्यतेन जगदेव मयेदं
दूनमित्यनुशयीव सहस्यः ।

१—मग्न इति पाठान्तरम् ।

संस्मृतागततपःसमयोऽसौ
वार्द्धके सति परिव्रजति स्म ॥ ६९ ॥
अनिललोललवङ्गरजोभर-
च्छलसुकोमलकेशलवाञ्चितः ।
शिथिलपद्मपदः शिशिरः शिशु-
र्नवसमुद्गतकुन्दरदोऽभवत् ॥ ७० ॥
निशि खलु द्युमणिः फणिविष्टपे
व्रजति तच्चिरसङ्गवशादिव ।
उदकमन्ध्युषु तापगुणं हिमे
भजति शैत्यमिहापरथा तपे ॥ ७१ ॥
हिमभयादुषसि स्फुटमात्मना
हुदनलो वपुरन्तरदीप्यत ।
अजनि तज्जनिधूमसखीमुखे
तनुमतामतिबाष्पततिस्तता ॥ ७२ ॥
हिमगुणैरजयज्जगदप्यदः
समय एष कुचौ न तु योषिताम् ।
इति तयोस्तनुमानिव कुङ्कुम-
स्तबकमूर्तिरदीपि महःशिखी ॥ ७३ ॥
शिखिधिया कपिभिर्नवकृष्णला-
समुदयोऽनुपदं परिपुञ्जितः ।
वनमहीभिरपि स्फुटकुङ्कुम-
स्तबकवत् कलितस्तुहिनागमे ॥ ७४ ॥
अहह चुल्लिगृहेषु वधूकर-
प्रथितभस्ममहावसना अपि ।
गुरुतरामपि जाग्रति यामिनीं
हुतभुजोऽपि हिमैः स्म दुता इव ॥ ७५ ॥
हिमभयान्मदनोऽपि हसन्तिका-
मकृत सद्मनि पद्मदृशां हृदि ।
अपरथा कथमूष्ममनोरमं
प्रियसुखाय तदीयकुचद्वयम् ॥ ७६ ॥
द्रौपदी हिमगिरौ शिशिरार्ता
वीक्ष्य रात्रिषु महौषधिमालाम् ।
अग्निविष्टरधियाभिपतन्ती
पर्यहासि दयितैरनुवेलम् ॥ ७७ ॥

हिमदग्धपुष्पजनिहेतुवनी-
तरुवल्लिपद्धतिरित: शिशिर: ।
कुसुमाकरस्य ऋतुभर्तुरथा-
गमनं विभाव्य चकितश्चलित: ॥ ७८ ॥

पाञ्चाल्या वाचि पुंस्कोकिलकलगिरि तद्रोमपङ्क्तौ शिरीषे
तत्केशान्ते कलापिच्छदमहसि च तल्लोचने खञ्जरीटे ।
तद्वास्ये रोध्रपुष्पोल्लसितरजसि तद्दन्तपङ्क्तौ च कुन्द-
स्तोमे च प्राप्तहर्षै: कुरुभिरिति चतुर्वर्षिका तत्र निन्ये॥७९॥

मत्वा द्यूतदिनादथो दशसमापूर्तिं समापृच्छ्य तं
शैलेन्द्रं बदरीवनाश्रममहीमासाद्य मासं स्थिता: ।
उत्तीर्णास्तदत: सुबाहुनगरन्यस्तान् गृहीत्वा रथान्
भैमिं प्रेष्य च यामुनाचलतटीं ते पञ्च वीरा ययु: ॥ ८० ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते श्री-
बालभारतनाम्नि महाकाव्ये वीराङ्के आरण्यकपर्वण्यर्जुन-
संगमो नाम तृतीय: सर्ग: ॥ ३ ॥ :: ::

---

## ॥ अथ बालभारतस्य ॥

॥ चतुर्थः सर्गः ॥

दृशोराधाय यत्कायकान्तिसिद्धाञ्जनं जन: ।
द्राक् त्रिलोकीविलोकी स्यात् तं सेवे कृष्णयोगिनम् ॥ १ ॥

मिथोलीलास्मितज्योत्स्नालसत्कुसुमसंपदम् ।
खेलै: सफलतां निन्युस्ते यामुनवनावनिम् ॥ २ ॥

तत्र तेषु तलं प्राप्य तन्वानेषु मिथ: कथा: ।
कृतार्थं मेनिरे धाम महौषध्यो निजं निशि ॥ ३ ॥

आहूय नूपुरारावै: शिक्षयन्तीव तद्गिरा ।
कृष्णालीलागतिस्तत्र मरालीनामभूद्गुरु: ॥ ४ ॥

कृष्णालीलोक्तिमाकर्ण्य मधुरां वनदेवता: ।
उद्यन्मधुधिया तत्र सदापु: संभ्रमान्मुदम् ॥ ५ ॥

ऋतूपयुक्तपुष्पस्रग्वती तत्र कृता प्रियै: ।
अलंचकार कान्तारं कृष्णा वल्लीव जङ्गमा ॥ ६ ॥

इह तैर्विहितानेकविनोदैरिन्दुनन्दनै: ।
इत्येकादशमुत्कर्षवद्विवर्षमनीयत ॥ ७ ॥

मृगयायै गतोऽन्येद्युर्महाकायमलोकत ।
कंचिद्वृकोदर: काकोदरं* कन्दरगं गिरे: ॥ ८ ॥

कीनाशनगरीलोहप्राकाराकारविग्रहम् ।
ययौ तं निकषा भीम: कुतूहलितकौतुक: ॥ ९ ॥

दशमद्वारनिर्धूतक्रोधानलसदृग्विष: ।
सोऽप्यधावत दु:प्रेक्ष्य: प्रेक्ष्य भीमं भुजंगम: ॥१०॥

मुखोदरस्फुरत्कालदो:कल्परसनायुगम् ।
तं हन्तुमुद्गदभुज: क्रुधा भीमोऽप्यधावत ॥ ११ ॥

तत्फूत्कृन्मारुतेनैव पातिता मारुतेर्गदा ।
द्विषद्वर्ती द्विषद्वृत्तिं स्वजनोऽपि हि गच्छति ॥ १२ ॥

दोर्दण्डेनैव तं हन्तुं प्रवृत्तोऽथ वृकोदर: ।
आपादकण्ठमावेष्टि स्वेन भोगेन भोगिना ॥ १३ ॥

महाबलयुजा तेन बद्धो धुन्वन् बलाद्वपु: ।
महाबलसुतोऽप्येष नासीन्निर्गन्तुमीश्वर: ॥ १४ ॥

अथोत्पातैरिहायातो भीमं भोगिनियन्त्रितम् ।
धर्मसूर्मृतिसर्वाङ्गालिङ्गिताङ्गमवैक्षत ॥ १५ ॥

भोगी मल्ल: क्व भीमैतत् कोऽप्ययं कोपित: सुर: ।
ध्यात्वेत्यूचे नृपो नागं कस्त्वं बद्धस्तथैष किम् ॥ १६ ॥

सरीसृपो नृपोत्तंसमथोचे मर्त्यभाषया ।
महाभुजभुजंगोऽहमेतद्वननिकेतन: ॥ १७ ॥

जीवा: सर्वत्र मद्भक्ष्यं तान् निघ्नन्नपराधवान् ।
बद्धो मयैष यद्वैरमेकद्रव्यस्पृहा महत्[1] ॥ १८ ॥

केनाप्येकेन जीवेन नाहं तृप्त: पुराभवम् ।
अद्यामुनातिकायेन शेष्ये कुक्षिंभरि: क्षणम् ॥ १९ ॥

अमुं ददामि वा तस्मै स्वभक्ष्यं पारितोषिकम् ।
भवत्युत्तरबुद्धिर्मत्प्रश्नानामुत्तरेषु य: ॥ २० ॥

अवोचदथ पृथ्वीन्दुरित्थं यदि तदुच्यताम् ।
कुर्वे दर्वीकर प्रश्नगर्वं खर्वमहं तव ॥ २१ ॥

किं विषादपि पीयूषं स्यादिति भ्रान्तिदं वच: ।
अथ भूपं प्रति व्यालपतिरालपति स्म स: ॥ २२ ॥

को विप्र: किल क: शूद्र: को मित्रं कश्च शात्रव: ।
क: सुधी: कश्च वैधेय: क: शूर: कश्च कातर: ॥ २३ ॥

किं सत्यं किमसत्यं च को धर्म: किं च पातकम् ।
किं सुखं किमु दु:खं च का मुक्ति: का च संसृति: ॥२४॥

द्विजिह्वत्वादिव प्रश्नद्वितयीमिति पृच्छति ।
तस्मिन् भुजंगमे धीमानभ्यधत्त स्मितानन: ॥ २५ ॥

---

* काकोदरः फणीत्यमरः ।

1—मगात् इति पाठान्तरम् ।

तं जानामि द्विजं नाग यस्य निष्कपटं तपः ।
तपोभिर्द्विजतां याति शूद्रोऽप्युन्मुद्रसंयमः ॥ २६ ॥

विद्धि भोगीन्द्र तं शूद्रं यो रौद्रश्चारुवृत्तमुक् ।
दुर्वृत्ता यान्ति शूद्रत्वं चिवेदीवेदिनोऽपि हि ॥२७॥

श्लाघ्यकर्मोद्यमो मित्रं प्रमादः परमो रिपुः ।
धीमान् भवेद्विरक्तात्मा वैधेयो नास्तिकः पुनः ॥ २८ ॥

स्वकीयेन्द्रियसकेतादपि प्रविशतोऽन्तरा ।
यः शत्रून् हन्ति कामादीन् स शूर इति मे मतिः ॥२९॥

भीरूणामपि नेत्रान्तललितालोकनेन यः ।
कम्पते नाग निर्मुक्तधैर्यः स खलु कातरः ॥ ३० ॥

सत्यं तच्च हितं जन्तोरसत्यमपि यद्वचः ।
असत्यमेव तत् सत्यमपि यत् परदुःखकृत् ॥३१॥

देवे परेषामद्वेषो रागो वंशक्रमागते ।
सुपात्रदुःस्थयोर्दानं क्षान्तिर्धर्मोऽयमुत्तमः ॥ ३२ ॥

उपकारिण्यपि द्रोहः स्वविश्वस्तेऽपि वञ्चना ।
पूज्येऽपि प्रभुतादर्पः सर्वं[1] तद्विद्धि पातकम् ॥३३॥

सुखं सर्वत्र माध्यस्थ्यं दुःखमिच्छाविजृम्भणम् ।
मुक्तिः शिवात्मनोरैक्यं संसृतिर्द्वेषरागधीः ॥३४॥

नरेन्द्रोऽयमिति प्रश्नोत्तरैर्मन्त्राक्षरैरिव ।
अपश्यन्मुक्तमेवाग्रे भीमं न तु भुजंगमम् ॥ ३५ ॥

राजन् जय जयेत्युक्त्वा मुक्त्वा पुष्पाणि मूर्धनि ।
सुरः कोऽपि विमानस्थः स्वस्थं भूपमथावदत् ॥ ३६ ॥

रागद्वेषोग्रकौरव्यशतग्रन्थिविसंष्ठुले ।
वत्स त्वमेक एवास्मद्वंशे मुक्तामणीयसे ॥ ३७ ॥

अहं स नहुषो नाम नृहंस तव पूर्वजः ।
तपोभिरर्जयामास वासवश्रियमुज्ज्वलाम् ॥ ३८ ॥

ऊढेन सर्वगन्धर्वसुपर्वपरमर्षिभिः ।
चलितोऽस्मि विमानेन शचीसंभोगसंविदा ॥३९॥

अथाशु सर्प सर्पेति मयोक्तः कुम्भजो मुनिः ।
सर्पो भवेति मां कोपसंतप्तः शप्तवानसौ ॥ ४० ॥

अनुग्रहं मया राद्धः स मुनिर्मे तदा ददौ ।
स ते प्रश्नोत्तरैरेव प्रत्यक्षो मम मुक्तिदेः ॥ ४१ ॥

तद्वत्स गच्छ कार्येषु यतस्व विजयस्व च ।
इत्युदीर्य ययौ नाकलोकं नहुषनिर्जरः ॥ ४२ ॥

इति तच्चरितानन्दमण्डनाः पाण्डुनन्दनाः ।
काम्यकं वनदेवीभिरापृष्टकुशला ययुः ॥ ४३ ॥

हरिनारदमार्कण्डैरथागत्य कथाततिम् ।
कथयित्वा चिरं तेषां गतमेभिर्यथागतम् ॥ ४४ ॥

पितरं घोषगोवीक्षाच्छलेनापृच्छ्य कौरवः ।
तद्धर्षणाय कर्णाद्या सैन्यैर्द्वैतवनं ययौ ॥ ४५ ॥

स च द्वैतसरस्तीरनिवासेच्छुर्निवारितः ।
तत्क्रीडाबन्धुगन्धर्वचित्रसेनानुचारिभिः ॥ ४६ ॥

द्रागविरथ्यातिरथ्यादीनथ तत्कारणे रणे ।
सानुजं भूभुजं चित्रसेनः सेनाग्रतोऽहरत् ॥ ४७ ॥

पार्थैशमथ राजर्षियज्ञे तद्दिनदीक्षितम् ।
आश्रित्य द्वैतवनगं चक्रन्दुः कौरवप्रियाः ॥ ४८ ॥

अथासौ तत्कथां मत्वा हास्यमुन्मोच्य मारुतिम् ।
आदिशत् कुल्यमोक्षाय धनंजययमान्वितम् ॥ ४९ ॥

भीमार्जुनयमैः शत्रुयमैरथ दिवं प्रति ।
वृष्टं नाराचधाराभिर्विपरीताम्बुदैरिव ॥ ५० ॥

तद्भियाभूद्गतापोऽर्कः स्वैरेव स्वेदवारिभिः ।
सारथिस्तद्रथात् त्रस्तमनाः पङ्गुः करोतु किम् ॥ ५१ ॥

घ्नन्ति त्वद्वंशजाः स्वामिन्निति वक्तुमिवोडुपम् ।
तुल्यमध्यायि नक्षत्रैर्गन्तुं मेरोः परां तटीम् ॥५२॥

धावत्क्रोधान्धगन्धर्वसैन्यदैन्यकरान् शरान् ।
खण्डयन् पाण्डुपुत्राणां चित्रसेनो न्यवर्तत ॥ ५३ ॥

विद्राव्य पावकास्त्रेण शत्रुमायामयं तमः ।
अवधीद्दशगन्धर्वलक्षीं मघवतः सुतः ॥ ५४ ॥

चित्रसेनं गदाचित्रगतिं मित्रमथार्जुनः ।
पुष्पशल्यैरपि शरैश्चक्रे काम इवाकुलम् ॥ ५५ ॥

ऊचेऽथ चित्रसेनस्तं पार्थ स्वार्थेऽपि मा मुहः ।
हन्त कर्षति हन्तव्यसर्पं कः पङ्कतः कृती ॥ ५६ ॥

श्रीमानपश्रियो युष्मान् न्यक्कर्तुं रिपुरापतन् ।
मया शक्राज्ञया जह्रे तन्मुक्त्यै किमु ताम्यसि ॥ ५७ ॥

किंच युष्मासु यन्मूलः प्रतिकूलत्वपादपः ।
नालाभि स तदास्माभिः कर्णस्तूर्णपलायनः ॥ ५८ ॥

१ सर्पं इति पाठान्तरम् ।

पार्थोऽप्यूचे जितं नान्यैः सहन्तेऽरिं जिगीषवः ।
निजं भोजनमुच्छिष्टीकृतमन्यैः क्षमेत कः ॥५९॥

परस्परापराधेषु वयं पञ्च शतं च ते ।
अपरैः परिभूतास्तु प्रयामः काममेकताम् ॥६०॥

किंवा बहूक्तिभङ्गीभिरङ्गीकृतमिदं मया ।
राज्ञः कृपापयोराशेराज्ञया तद्विमोचनम् ॥ ६१ ॥

मुक्तोऽथ चित्रसेनेन यज्ञोर्व्यां सानुजो नृपः ।
नतास्यो मयि तिष्ठेति त्रपामनुनयन्निव ॥ ६२ ॥

द्यां गते चित्रसेनेऽथ वीरान् पार्थहतान् हरिः ।
अजीजिवद्दवप्लुष्टान् निर्वृष्ट्येवाम्बुदस्तरून् ॥ ६३ ॥

वत्स नेदृक् पुनः कृत्यमित्युक्ते धर्मसूनुना ।
दुर्योधनो ह्रिया दीर्यमाणहृज्ज्वलितस्ततः ॥ ६४ ॥

द्विषिभिर्मोचितोऽस्मीति मानी मृत्यून्मुखः पथि ।
स्थितोऽसौ निर्भरं दर्भास्तरणेऽस्तरणोप्सितः ॥ ६५ ॥

कुतोऽप्यागत्य विज्ञातवृत्तेनादित्यसूनुना ।
दुःशासनशकुन्याद्यैर्बोधितोऽपि स नोत्थितः ॥ ६६ ॥

कृत्यया हारयित्वाथ निशि तं निशितौजसः ।
जगदुर्जगदुन्मादभेदिनः शुभ्रदानवाः ॥ ६७ ॥

मा भूर्विषादभूर्भूप रणाय प्रगुणाशय ।
वयं ते हन्त गन्तारो विग्रहाय सहायताम् ॥६८॥

इत्युदीर्य ज्वलद्वीर्यैः प्रहितस्त्रिदशाहितैः ।
संपरायपरायत्तचित्तः पुरि ययौ नृपः ॥ ६९ ॥

तं भीष्मोऽथ सदस्यूचे दिष्ट्यासि कुशली नृप ।
दृष्टस्त्वया स्वयं तादृग्विक्रमः कर्णपार्थयोः ॥७०॥

ततोऽधुनापि संधेहि विभागं देहि भागिषु ।
विरोधक्रोधकीलाभिर्मा कुलं व्याकुलं कृथाः ॥७१॥

इत्युक्तियुक्तेऽवज्ञाते याते सिन्धुसुते नृपः ।
दैत्योक्तिस्मरणस्मेरवैरो वैरोचनिं जगौ ॥ ७२ ॥

सर्वदिग्जैत्रयात्रस्त्वं भव भीमार्जुनादिवत् ।
सूत धर्मात्मजासूयं राजसूयं तनोम्यथ ॥ ७३ ॥

दुरोदरजितो युद्धजेतव्यो जीयतेऽधुना ।
राजसूयमखोत्थेन धर्मसूर्धर्मकर्मणा ॥ ७४ ॥

अथ प्रारब्धसंरब्धनिर्व्यूढप्रौढदिग्जये ।
राधेये राजसूयेच्छुं पुरोधा नृपमभ्यधात् ॥ ७५ ॥

एकस्मिन् सति सम्राजि नान्यः सम्राड्भवेदिति ।
तद्राजन् राजसूयस्य मा भूः कर्मणि कर्मठः ॥७६॥

परीतपुरुहूतार्थं हूतानागतपाण्डवम् ।
ततः प्रतेने राजासौ राजसूयसमं मखम् ॥ ७७ ॥

यज्ञान्ते तं जगौ कर्णो हते युधि युधिष्ठिरे ।
राजसूये त्वया प्राप्ते भजिष्ये हृदि संमदम् ॥ ७८ ॥

करिष्ये पादशौचं तु नाहत्वाहं रणेऽर्जुनम् ।
श्रुत्वेति हस्तगं मूढो मेने दुर्योधनो जयम् ॥ ७९ ॥

इतश्च मृगयाक्षीणैर्विज्ञप्तः स्वप्नगैर्मृगैः ।
कृपालुः काम्यके पार्थस्तृणबिन्दुसरो ययौ ॥ ८० ॥

युद्धाभ्यासेऽथ ते लक्ष्याभ्यासाय मृगयामिषात् ।
तृणबिन्द्वाश्रमे न्यस्य प्रियां पार्था वनेऽचरन् ॥८१॥

विवाहार्थमथानेन पथा शाल्वं जयद्रथः ।
व्रजन् जहार पाञ्चालीं हारगौरं जहौ यशः ॥ ८२ ॥

ततोऽनुपातिभिः पार्थैः पात्यमानचमूचयः ।
ववलेऽत्यवलेपेन धृतराष्ट्रसुतापतिः ॥ ८३ ॥

ततोऽर्जुनशरासारैर्निपेतुस्ते चमूभटाः ।
धाराधराम्बुधाराभिर्निराधारा मृगा इव ॥ ८४ ॥

तदाद्भुतगदापातैर्द्राग्विरथ्य जयद्रथम् ।
त्वद्दासोऽस्मीति वाचालं मुदामुञ्चद्वृकोदरः ॥ ८५ ॥

प्रकटप्रियसामर्थ्यपुलकाङ्कुरमालिनीम् ।
आदाय दयितामीयुरथ पार्था निजस्थितिम् ॥ ८६ ॥

तपो भागीरथीतीरे चरन्नथ जयद्रथः ।
साक्षाद्भूते स भूतेशेऽयाचत् पार्थजये वरम् ॥ ८७ ॥

तं शंभुरभ्यधाज्जेता त्वं चतुःपाण्डवीं युधि ।
कृष्णमित्रं तु केनैन्द्रिर्जैयो येन वयं जिताः ॥८८॥

इत्यादिश्य तिरोभूते शिरोभूते दिवौकसाम् ।
पुरं जयद्रथः पूर्णमनोरथ इवागमत् ॥ ८९ ॥

इतोऽप्यूचे द्विजः कश्चिद्यामि द्वैतवनागतम् ।
एष शृङ्गाग्रलग्नां मे हरते हरिणोऽरणीम् ॥ ९० ॥

अथाशु पाण्डवाश्चण्डचापास्तदनुगामिनः ।
नालोकन्त मृगं सौख्यमिव दुःस्वामिसेवकाः ॥ ९१ ॥

भूभृत्तटेऽवटे क्वापि विश्रान्ता नकुलोऽम्भसे ।
गतश्चिरादनागच्छन्नन्वीये बन्धुभिः क्रमात् ॥ ९२ ॥

क्रमानुगो नृपस्तत्र सरस्तीरे चतुर्मितान् ।
पतितान् दिग्जयस्तम्भानिव भ्रातॄनलोकत ॥ ९३ ॥
ततः किमेतदित्यस्य चिन्तासंतापिचेतसः ।
संभ्रमाय भुवो भर्तुर्भारती नभसोऽभवत् ॥ ९४ ॥
राजन् यक्षोऽस्मि मत्प्रश्नानभित्त्वेहाम्बुपायिनाम् ।
मृत्युः स्यादिति तान् भिन्धि पिब चाम्बु यदृच्छया ॥९५॥
राज्ञोचे बान्धवध्वंसेऽधुना किं मेऽम्बुनामुना ।
तथापि त्वत्प्रियान् प्रश्नान् भेत्स्यामि स्वेच्छया वद ॥९६॥
इत्युक्ते सति राज्ञेति व्योम्नः प्रश्नगिरोऽभवन् ।
इत्युत्तरगिरश्चाशु जगाद जगतीपतिः ॥ ९७ ॥
को देवः स्वीय एवात्मा सद्गुरूक्तिप्रकाशतः ।
किं दैवं प्राक्तनं कर्म सुदुर्लङ्घ्यं सुरासुरैः ॥ ९८ ॥
को धन्यः क्रियते दास्यं यस्यार्त्तैर्विषयाधिपैः ।
कः शुचिः स्नाति यः शश्वत् सत्यवाग्जाह्नवीजलैः ॥ ९९ ॥
का लक्ष्मीः सर्वसंतोषः का विपद्विपुला स्पृहा ।
मोक्षः कश्चित्तमेव स्वं सर्वबुद्धिवियोजितम् ॥ १०० ॥
प्रीतः प्रश्नोत्तरैरेभिरहं जीवतु मद्वरात् ।
तवैकः संमतो भ्राता जाताथ व्योमवागियम् ॥१०१॥
मृत्युधीर्बन्धुदुःखेन कुललालनकाङ्क्षया ।
अथ भूपोऽभ्यधान्माद्रीपुत्रो जीवतु मत्प्रियः ॥१०२॥
सोदर्यतोऽधिकप्रीतिर्विमाचेयेऽथ पार्थिवम् ।
प्रीतः प्रत्यक्षतामेत्य धर्मो निर्मलगीर्जगौ ॥१०३॥
धर्मोऽस्म्यहं स्वपुत्रस्य तवास्येन्दुत्विषा मयि ।
हृतौ पाण्डव माण्डव्यशापतापतमश्चयौ ॥१०४॥
अरणी हरिणीभूय मया त्वां वीक्षितुं हृता ।
सोदरेषु तृषार्तेषु पिबन्तोऽम्बु हतास्त्वमी ॥ १०५ ॥
आनृशंस्यं च सत्त्वं च दृष्ट्वा तुष्टोऽस्मि तेऽधुना ।
अवाप्नुहि जयं धर्म्ये जीवन्तु तव बान्धवाः ॥१०६॥
वर्षं वस विराटेषु मत्प्रसादादलक्षितः ।
इत्युदीर्यारणीं तां च दत्त्वा धर्मस्तिरोदधे ॥१०७॥
सहोदरैः सहोद्यद्भिर्धर्मसूः स्वाश्रमं ययौ ।
ब्राह्मणायारणीं तस्मै तज्जीवितमिवार्पयत् ॥१०८॥
पूर्णां द्वादशवत्सरीमथ परिज्ञाय क्षमानायकः
साग्निं धौम्यमुदीर्य पार्षतपुरीवासाय वर्षावधि ।
किंच द्वारवतीपुराभिगमने तानिन्द्रसेनादिकान्
वीरान् शिक्षयति स्म कर्तुमुदितो गुप्तं विहारं क्वचित् ॥ १०९ ॥
भेजे श्रीजिनदत्तसूरिसुगुरोरर्हन्मतार्हस्थितेः
पादाब्जभ्रमरोपमानममरो नाम व्रतीन्द्रः कृती ।
तल्लीलागिरि बालभारतमहाकाव्ये तृतीयं मनो-
निर्वेदव्ययमेदुरश्रि निरगात् पर्वेदमारण्यकम् ॥ ११० ॥
सर्गैश्चतुर्भिरेतस्मिन् पर्वण्यारण्यकाह्वये ।
चतुःशती सप्तसप्तिविशिष्टासीदनुष्टुभाम् ॥ १११ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते श्रीबालभारतनाम्नि महाकाव्ये वीराङ्के आरण्यकपर्वणि धर्मदेशनो नाम चतुर्थः सर्गः ॥ ४ ॥ :: ::

---

॥ श्रीः ॥

॥ अथ खण्डप्रशस्तिः ॥

॥ तत्र कूर्माकृतेर्भगवतो वर्णनम् ॥

(११) यो धत्ते शेषनागं तदनु वसुमतीं स्वर्गपातालयुक्तां
युक्तां सर्वैः समुद्रैर्हिमगिरिकनकप्रस्थमुख्यैर्नगेन्द्रैः ।
एतद्ब्रह्माण्डमस्याऽमृतघटसदृशं भाति वंशे मुरारेः
पायाद्वः कूर्मदेहः प्रकटितमहिमा माधवः कामरूपी ॥ १ ॥

स कूर्मदेहो माधवो वो युष्मान्पायाद्रक्षतु, स किं विशिष्टः, प्रकटितमहिमा प्रकटितो महिमा माहात्म्यं यस्य सः, पुनः किंविशिष्टः, कामरूपी कामेनेच्छया रूपमस्यास्तीति स्वेच्छाचारीति भावः, स इति कः, यः शेषनागं धत्ते पृष्ठ इति शेषः, तदनु तदुपरि स्वर्गपातालयुक्तां वसुमतीं पृथ्वीं धत्ते, किंविशिष्टां तां, सर्वैः समुद्रैः तथा हिमगिरिर्हिमाचलः कनकप्रस्थः कनकाचलस्तावेव मुख्यौ प्रधानौ येषां ते तैर्नगेन्द्रैः पर्वतराजैर्युक्तां सहितां, तथाऽस्य मुरारेर्वंशे पृष्ठे एतद्ब्रह्माण्डममृतघटसदृशं भाति पीयूषकुम्भोपमं शोभते यतो हिमघनसमये किल सागरादमृतघटः समुत्पन्न इति प्रसिद्धिः स हरिः पायादिति ॥ ११ ॥

(१२) निष्प्रत्यूहमनल्पकल्पचरितस्त्रैलोक्यरक्षागुरुः
क्रीडाकूर्मकलेवरः स भगवान्दिश्यादमन्दां मुदम् ।
कल्पान्तोदधिमध्यमज्जनवशाद्व्यासर्पतः संलुठत्
पृष्ठे यस्य बभूव सैकतकणच्छायं धरित्रीतलम् ॥

क्रीडाकूर्मकलेवरं शरीरं यस्य सः भगवानमन्दामतुच्छां मुदं हर्षं दिश्याद्देयात्, निष्प्रत्यूहं निर्विघ्नं यथा स्यात्तथेति क्रियाविशेषणम् । किंविशिष्टः, अनल्पकल्पचरितः अनल्पं बहुयुगान्ते चरितं यस्येति, पुनः कीदृशः, त्रैलोक्यरक्षागुरुः त्रैलोक्यस्य त्रिभुवनस्य रक्षायां गुरुरिव गुरुः, तथा यस्य कूर्माकारस्य पृष्ठे संलुठत् परिभ्रमत् धरित्रीतलं सैकतकणच्छायं सिकता वालुका तस्या अयं सैकतो यः कणो लेशस्तच्छायं तच्छोभं बभूव, किंविशिष्टस्य हरेः, कल्पान्तोदधिमध्यमज्जनवशाद्व्यासर्पतः कल्पान्तोदधेर्यन्मध्यं तत्र यन्मज्जनं तद्वशाद्व्यासर्पतः प्रसरत इति ॥ १२ ॥

(१३) पुत्रिण्यः कति नात्र सन्ति भुवनेऽभूवन्कियन्त्योऽथवा
सौभाग्यैकमठी तथादिकमठी स्त्रीषु प्रशंसास्पदम् ।
भग्ने भोगिनि भङ्गुरेषु करिषु भ्रष्टोत्सवे दंष्ट्रिणि
क्षोणीं साहसिकाग्रणीस्तुलयितुं जागर्ति यस्याः सुतः ॥

यस्याः कमठ्याः सुतः कूर्मः क्षोणीं धरित्रीं तुलयितुं तुलायां रोपयितुं धारयितुमित्यर्थः जागर्ति, किं विशिष्टः कूर्मः, साहसिकाग्रणीः साहसिकानां महाबलानां मध्येऽग्रणीः मुख्यः, एतदेवाभिव्यनक्ति, यत् पुत्रिण्यः सुतजनन्यः कति कियन्त्यो नात्र भुवने सन्ति विद्यन्ते, अथ वा कियन्त्यः पुत्रिण्यो नाभूवन्, परं तासु स्त्रीषु यत्तदोर्नित्याभिसम्बन्धात्सा कमठी प्रशंसास्पदं श्लाघामन्दिरं किं विशिष्टा कमठी, सौभाग्यैकमठी सौभाग्यस्यकीर्तेरेका मठीव मठी या सा सौभाग्यैकमठी मठस्तापसाश्रमस्त्रिलिङ्गः, स्त्रियाः पुंवदिति पूर्वस्त्रीप्रत्ययस्य पुंवद्भावः, क्व सति धरित्रीं बभारेत्याह, भग्ने भोगिनि शेषे भूभारासहनाद्भग्ने सति, तथा करिषु दिग्गजेषु अष्टसु भङ्गुरेषु विनश्वरेषु भूभारमुद्भर्तुमिति, भञ्जभासमिदो घुरजिति घुरच्, तथा दंष्ट्रिणि वराहे भ्रष्टोत्सवे भ्रष्टोद्यमे जाते सतीति ॥ १३ ॥

(१४) पृष्ठभ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनै-
र्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः ।
यत्संस्कारकलानुवर्तनवशाद्वेलाछलेनाम्भसां
यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥

कमठाकृतेः कूर्माकृतेर्भगवतो विष्णोः श्वासानिलाः श्वासवायवो वो युष्मान्पान्तु रक्षन्तु, कीदृशस्य कमठाकृतेः, पृष्ठभ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनैः स्वस्य पृष्ठे भ्राम्यन्योऽमन्दो मन्दरगिरिस्तस्य यानि ग्रावाग्राणि तेषु यानि कण्डूयनानि तैर्निद्रालोः शयालोः, तथा यत्संस्कारकलानुवर्तनवशात् येषांश्वासवायूनां संस्कारकला आकुञ्चनप्रसारणाद्यास्तस्यानुवर्तनमभ्यासस्तद्वशाद्वेलामिषेण जलनिधेः समुद्रस्याम्भसां नीराणां समुद्रस्य यातायातं गतप्रत्यागतं अतन्द्रितं सर्वदा स्फुरद्रूपं नाद्यापि विश्रान्तिं याति ॥ १४ ॥

(१५) नमस्कूर्मः कूर्मं नमदमरकोटीरनिकर-
प्रसर्पन्माणिक्यच्छविमिलितमाञ्जिष्ठवपुषम् ।
जरीजृम्भड्डिम्भद्युमणिरमणीयांशुलहरी-
परीरम्भस्फूर्जद्बलभिदुपलाद्रिं प्रतिभटम् ॥

कूर्मं नमस्कूर्मः कारकविभक्तेर्बलीयस्त्वाद्द्वितीया, किंविशिष्टः सः, नमदमरकोटीरनिकरप्रसर्पन्माणिक्यच्छविमिलितमाञ्जिष्ठवपुषम् नमन्तो येऽमरास्तेषां यः कोटीरनिकरस्तस्मात्प्रसर्पन्ती उद्गच्छन्ती या माणिक्यच्छविस्तया मिलितं सत् माञ्जिष्ठं लोहितं वपुः शरीरं यस्य स तम्, पुनः किंविशिष्टम्, जरीजृम्भड्डिम्भद्युमणिरमणीयांशुलहरीपरीरम्भस्फूर्जद्बलभिदुपलाद्रिप्रतिभटम् जरीजृम्भन् अतिशयेन विकसन्यो डिम्भस्तरुणो द्युमणिः सूर्यस्तस्य रमणीया या अंशुलहर्यः किरणश्रेणयस्तासां यः परीरम्भआश्लेषस्तेन स्फूर्जन् देदीप्यमानो बलभिदुपलाद्रिः इन्द्रवर्णगिरिरर्थात्पूर्वाचलः सुमेरुर्वा तत्प्रतिभटं तत्प्रतिमल्लं तत्सदृशमिति यावत्, जरीजृम्भदिति यङ्लुकि शतृप्रत्यये रूपम्, वृत्यन्तरे तु दरीजृम्भड्डिम्भ इति पाठो दृश्यते तत्र दर्यां गुहायां जृम्भच्छुदयं कुर्वन् योडिम्भ इत्यादिरर्थः, परमयं पाठोऽपपाठआत्मनेपदित्वाद्धातोरिति ॥ १५ ॥

(१६) भ्रमति गिरिराट् पृष्ठे गर्जत्युपर्यतिसागरे
दहति विततज्वालाजालो जगन्ति विषानलः ।
सविनिहितग्रीवाकाण्डः कटाहकठोदरे
स्वपिति भगवान्कूर्मो निद्राभरालसलोचनः ॥

स कूर्मो निद्राभरालसलोचनो निद्राभरेण अलसे मन्थरे लोचने नेत्रे यस्य सः स्वपिति शेते, किंविशिष्टः सः, कटाहकठोदरे ब्रह्मकटाहतटे विनिहितग्रीवाकाण्डो विनिहितोन्यस्तो ग्रीवाकाण्डो गलनालं येन सः, तथा यस्य पृष्ठे गिरिराट् हिमगिरिर्भ्रमति, तथा यस्योपरि सागरः समुद्रोऽतिगर्जति गर्जारवं कुरुते, तथा यस्य पृष्ठे विषानलो युगान्तानलो जगन्ति त्रिभुवनं दहति ज्वालयति, किंभूतः सः विततज्वालाजालः विततो विस्तीर्णो ज्वालासमूहो यस्य सः, अत्र अतीत्युपसर्गस्य गर्जतीति क्रियापदोत्तरं पाठात्तत्र तस्यान्वयो यद्यप्यव्युत्पन्नस्तथापि छन्दोवत्कवयः कुर्वन्तीति महिम्ना तथा पाठेपि तदन्वयबोधस्य सुघटत्वादिति शम् ॥ १६ ॥

इति श्रीगुणविनयविरचितायां खण्डप्रशस्तिवृत्तौ कूर्मावतारवर्णनम् ॥

मुदासीनवस्तुदर्शनादन्यथा सत्त्वार्थक्रिययोरन्योन्याश्रयापाताद्दित्यर्थः ॥ १६ ॥

असिद्धश्चायं हेतुरित्याह ।

(१७) असिद्धतश्चापि विचारकारणाद्
द्वयं च तस्मात्प्रसृतं हि मायया ।
श्रुतेः स्मृतेश्चापि तथा हि युक्तितः
प्रसिद्धतीत्थं न तु युज्यते ऽन्यथा ॥ ६६२ ॥

असिद्धतश्चापीति । न केवलमनैकान्तिकत्वादेरेवानुमानमप्रमाणम्, अपि त्वस्मदभिमते आत्मनि पक्षासिद्धश्चेत्यपेरर्थः । अर्थक्रियाकारित्वाभावमात्रं हेतुः परमार्थविशेषिततदभावो वा, आद्ये ऽसिद्धिमाह । विचारकारणादित्यादिना । कूटस्थस्यापि सतो धर्मित्वेन विचारप्रवृत्तिकरत्वान्मायया द्वयशब्दवाच्यभेदप्रपञ्चप्रसरणहेतुत्वाच्चेत्यर्थः । मायाया जगद्धेतुत्वं साधयति । श्रुतेरिति ।

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्"
इति श्रुतिः,
"मायाध्यक्षेण प्रकृतिः सूयते सचराचरम्"

इत्यादिस्मृतिः, कार्यस्य वाचारम्भणत्वप्रतिपत्तिसाधकन्यायो युक्तिः, इत्थं कूटस्थस्याप्यर्थक्रियाकारित्व प्रसिद्धत्यतो हेत्वसिद्धिरित्यर्थः । द्वितीयं दृष्टान्तासिद्ध्या दूषयति । न त्विति । अन्यथा परमार्थतो ऽर्थक्रियाकारित्व स्थिरस्य क्षणिकस्य वा न युज्यते, अक्रियस्याकारकत्वात्क्रियाकार्यं प्रत्यपि क्रियावत्त्वापत्तावनवस्थाप्रसङ्गादिति दिक् ॥ १७ ॥

ननु सर्वविकल्पहेतुत्वादद्वयस्य सर्वविकल्पयुक्तत्वमित्याशङ्क्याह ।

(१८) विकल्पनाच्चापि विधर्मकं श्रुतेः
पुरा प्रसिद्धेश्च विकल्पतो ऽद्वयम् ।
न चेति नेतीति तथा विकल्पितं
निषिध्यते ऽत्राप्यवशेषसिद्धये ॥ ६६३ ॥

विकल्पनाच्चापीति । विधर्मकं विरुद्धस्वभावमित्यर्थः । निष्कलं निष्क्रियमित्यादिश्रुतेः, विकल्पतः पुरा प्रसिद्धेरिति युक्तेश्चेत्यर्थः । अद्वयमिति छेदः । नेदं यदिदमुपासते नेति-नेति च निषिध्यमानचेतनाचेतनविकल्पावसानसिद्धये ऽत्रापि निषेधवाक्येष्वपि विकल्पविधर्मकमद्वयं निर्विशेषं सिद्धमित्याह । न चेतीति । यथा विकल्पितं नेतिनेतीति निषिध्यते न च तथा ऽद्वयमात्मतत्त्वं निषिध्यतइति योजना ॥ १८ ॥

यथोक्ते श्रुत्यर्थे ये विकल्पयन्ति ते ऽनर्थं प्राप्नुवन्तीत्याह ।

(१९) अकल्पितेप्येवमजे ऽद्वये ऽक्षरे
विकल्पयन्तः सदसच्च जन्मभिः ।
स्वचित्तमायाप्रभवं च ते भवं
जरां च मृत्युं च नियान्ति संततम् ॥ ६६४ ॥

अकल्पितइति । कूटस्थे भेदविकारसंसर्गशून्ये श्रुतिसिद्धे इति यावत्, सदसदस्तिनास्ति,चकारात्कर्ता ऽकर्ता सविशेषो निर्विशेष इत्यादिप्रकारैः स्वचित्तमायाप्रभवं यथा स्यात्तथा विकल्पयन्तो ये ते जन्मभिस्तिर्यङ्मनुष्यजातिभिर्भवमुद्भव जरां मृत्युं मरणं च संततं निरन्तरं नियान्ति नितरां गच्छन्तीति योजना । स्वचित्तमायाप्रभवमिति भवविशेषणं वा, बुद्धिभ्रमकल्पितमित्यर्थः ॥ १९ ॥

सद्वस्तुनः कूटस्थाद्वयत्वं श्रुत्यादिप्रमाणसिद्धं तदन्यथा विकल्पनं पुरुषापराधनिबन्धनमित्युक्तमिदानीं तदेव युक्तितो द्रढयितुमुपक्रमते ।

(२०) भवाभवत्वं तु न चेदवस्थिति-
र्न चास्य चान्यस्थितिजन्म नान्यथा ।
सतो ह्यसत्त्वादसतश्च सत्त्वतो
न च क्रियाकारकमित्यतो ऽप्यजम् ॥ ६६५ ॥

भवाभवत्वमिति । तुश्चार्थः किं चेत्यर्थः । अद्वैतमुत्पद्यमानस्वभावमनुत्पद्यमानस्वभावमुभयस्वभावं ह्यनुभयस्वभाव वा नाद्यस्तदा सापेक्षत्वेन शुक्तिरजतादिवन्मिथ्यात्वापातात्, न द्वितीयः, सदातनत्वापत्तौ तदभावव्यवहारानुदयप्रसङ्गात्, न तृतीयः, एकस्य विरुद्धोभयस्वभावत्वायोगादित्यभिप्रेत्य चतुर्थं मनूद्य दूषयति । भवाभवत्वमिति । भवश्चाभवश्च भवाभवौ तयोर्भावः भवाभवत्व मस्य द्वैतस्य भवाभवत्वं चेद्विरोधान्नेष्यते तदा ऽवस्थितिरवस्थानसत्त्व न चास्य स्यादिति शेषः । नह्युभयस्वभावविलक्षणं क्व चित्सदुपलब्धमस्तीत्यर्थः । च अपरं यदि द्वैतस्य जन्मेष्यते तदा स्वत एव जन्मासंभवादन्यस्मात्तद्वक्तव्य तदपि सत्स्वभावमसत्स्वभावं वा यतो द्वैतस्य जन्मेत्याकाङ्क्षायां सर्वथापि नोपपद्यतइत्याह । अन्यस्थितिजन्म नान्यथेति । अन्यस्मिन् स्थितौ सति न जन्म सतो न जन्मेत्यर्थः । अन्यथा ऽन्यास्थितौ जन्म नेत्युपरज्यते, असतोपि न जन्मेत्यर्थः । पक्षद्वयेपि दूषणमाह । सत इति । सत उपादानत्वे विकारित्वापत्तौ विनाशादमत्वप्रसङ्गादसतश्चोपादानत्वे सत्त्वतः सत्त्वापत्तेः, नहि शून्यमुपादानं स्यात्तस्य कार्येष्वननुगमादित्यर्थः । तथा च वस्तुनः स्वभाववैपरीत्यायोगान्न सत्कार्यद्वैतात्मना जायते नाप्यसदित्युत्पत्तिपक्षोपि दुर्निरूप इति भावः । एवमुत्पाद्योत्पादकयोः

स्वभावनिरूपणे सत्युत्पत्तितत्कारकविशेषयोः सुतरामनिरूपिताकारता सिद्धेत्याह । न च क्रिया कारकमिति । उपसंहरत्यतो ऽप्यजमिति । उक्तयुक्तितो ऽप्यजं निर्विशेषमद्वयमात्मतत्त्वमित्यर्थः ॥ २० ॥

न च क्रिया कारकमित्युक्तमेव स्फुटयन्नजत्वं वस्तुनः साधयति ।

(२१) अकुर्वदिष्टं यदि चास्य कारकं
न किं चिदन्यन्ननु नास्त्यकारकम् ।
सतो ऽविशेषादसतश्च सच्च्युतौ
तुलां तयोर्यद्वदनिश्चयान्नहि ॥ ६६६ ॥

अकुर्वदिति । अस्य द्वैतजन्मनः कारकमकुर्वदिष्टं निर्व्यापारं कारकमिष्टं चेदित्यर्थः । अन्यदिति द्वितीयपादस्थं पदमादाय यदि वा ऽन्यत्कुर्वदिष्टं चेदित्यर्थः । तत्राद्ये ऽतिप्रसङ्गं दोषमाह । न किं चिन्ननु नास्तीति । ननु निश्चितं किं चिदपि कारकं नास्तीति न, अपि तु सर्वं सर्वस्य सर्वदा कारकं स्यादित्यर्थः । द्वितीये कारकत्वानुपपत्तिदोषमाह । अकारकमिति । अक्रियस्य कुर्वत्त्वायोगात्क्रियावत्त्वे नित्ये सदा कार्यप्रसङ्गादनित्ये च क्रियावदन्तरापेक्षायामनवस्थाप्रसङ्गात्तदनपेक्षायामात्माश्रयापत्तेः कुर्वत्त्वायोगात्क्रियावत्त्वे नित्ये सदा कार्यप्रसङ्गान्निष्क्रिये न किं चिदकारकमिति निराकरणपदान्वयः, सर्वमेव कारकं स्यादित्यर्थः । द्वितीये दूषणं, ननु नास्तीति, कुर्वतः कारकत्वानिरूपणादित्यर्थः । कथमनिरूपणमिति चेत्तत्र वक्तव्यं, किं सदवस्थं कुर्वदसदवस्थं वा,नोभयथापीत्याह । सतो ऽविशेषादसतश्चेति । असतश्चाविशेषादिति संबध्यते, विशेषवत्त्वे वैरूप्यापत्तेरविशेषे च सदा कार्यं स्यान्न वा स्यादित्यर्थः । अथ सतो ऽसतो वा पूर्वसत्त्वासत्त्वप्रच्युत्यवस्थायां कार्यं स्यादिति भवेत्कारकत्वमिति मतं, तत्रावस्थाप्रच्युतिकार्ययोर्यौगपद्यमभिमतं क्रमो वा, नाद्य इत्याह । सच्च्युताविति । उपलक्षणमसच्च्युतौ च तुलाया अन्तयोः कोट्यार्यद्वन्मनोन्नमनमनुभवतोः कार्यकारणभावो न निश्चीयते, तथा कार्यकारणस्वरूपभेदो नहि निश्चीयतइत्यर्थः । द्वितीये ऽनवस्थाप्रसङ्गो ऽवस्थाप्रच्युतेरपि कार्यतया तस्या अपि तथाविधपूर्वकत्वापेक्षणादिति द्रष्टव्यम् ॥ २१ ॥

वस्तुनो ऽवस्थान्तरापत्तिमभ्युपगम्यैतदवोचाम, वस्तुतस्तु सतो ऽसतो वा ऽवस्थान्तरं नोपपद्यतइति न कस्यापि कार्यत्व कारणत्व वा विद्यतइत्याह ।

(२२) न चेत्स इष्टः सदसद्विपर्ययः
कथं भवः स्यात्सदसद्व्यवस्थितौ ।
विभक्तमेतद् द्वयमप्यवस्थितं
न जन्म तस्माच्च मनो हि कस्य चित् ॥ ६६७ ॥

न चेदिति । एवमुक्तदोषापरिहारात्सदसद्विपर्ययश्चेन्नेष्टस्तदा सदसतोः स्वरूपव्यवस्थितौ भवः कथं स्यात् कुतो, यत एतद् द्वयमपि सच्चासच्च परस्परसंसर्गशून्यं व्यवस्थितं न पूर्वापरीभावो ऽनयोर्मिथो वा ऽन्यापेक्षया वेत्यर्थः । हे मनो हि यस्मादेवं तस्मान्न कस्य चिदपि जन्म विद्यते इत्यवधारयेत्यर्थः ॥ २२ ॥

भवतु वा जन्म यस्य कस्यापि तथापि न मे ब्रह्मभूतस्य का चित् क्षतिर्वृद्धिर्वेत्याह ।

(२३) अथाभ्युपेत्यापि भवं तवेच्छतो
ब्रवीमि नार्थस्तव चेष्टितेन मे ।
न हानवृद्धी न यतः स्वतो ऽसतो
भवो ऽन्यतो वा यदि वास्तिता तयोः ॥ ६६८ ॥

अथाभ्युपेत्यापीति । मनसश्चेष्टितेनात्मनो नार्थो ऽस्तीत्येतत् प्रपञ्चयति । न हानवृद्धी इति । न स्त इति योज्यम् । कुत इत्यत आह । न यत इति । यतो यस्मादमत आत्मन्यविद्यमानस्य हानस्य वृद्धेर्वा भव उद्भवः स्वतो ऽन्यतो वा हेत्वन्तराद्वा न संभवतीति योजना । यदि वा तयोर्हानवृद्ध्योर्यद्यात्मन्यस्तिता तथापि तव चेष्टितेन मे नार्थ इति संबन्धः । सिद्धेर्थे त्वच्चेष्टाया अकिंचित्करत्वादित्यर्थः ॥ २३ ॥

हीयमानोपचीयमानयोरात्मनि संबन्धानिरूपणाच्च न हानवृद्धी स्त इत्याह ।

(२४) ध्रुवा ह्यनित्याश्च न चान्ययोगिनो
मिथश्च कार्यं न च तेषु युज्यते ।
अतो न कस्यापि हि किं चिदिष्यते
स्वयं च तत्त्वं न निरुक्तिगोचरः ॥ ६६९ ॥

ध्रुवा इति । ध्रुवाः स्थिराः कूटस्था अनित्याः क्षणिकाश्च पदार्था हि निश्चितमन्ययोगिनो न भवन्ति स्थिराणामविकारित्वात् क्षणिकानामन्यसंबन्धकालपर्यन्तमवस्थानासंभवादित्यर्थः । मिथश्चान्योन्यमपि स्थिरास्थिरयोर्न संबन्धिता संभवति संबन्धस्य संबन्धिसंबद्धत्वासंबद्धत्वविकल्पासहत्वादित्यर्थः । अत एव तेषु न कार्यं किमपि युज्यते घटते । विकारभेदसत्त्वनिराकरणमुपसंहरति । अत इति । न किमपि कस्यापि संबन्धि परमार्थत इष्यतइत्यर्थः । ननु कथमात्मनो ऽन्यसंबन्धाभावो वेदान्तवाक्यप्रमाणं प्रति प्रमेयत्वावगमादित्यत आह । स्वयं चेति । तत्त्वमात्मस्वरूपं स्वयं निरुपाधि-

कं न, निरुक्तेर्वाक्यस्य मुख्यया वृत्त्या गोचरो विषयः, शब्दप्रवृत्तिनिमित्तधर्माभावात्, किं तु लक्षणया शब्दस्य तत्र पर्यवसानमपेक्ष्य वेदान्तप्रमेयत्वं तस्याङ्गीकृतमिति न विरोध इत्यर्थः ॥ २४ ॥

तदेवं दुर्निरूपद्वैतसाक्षिणो ऽसङ्गाद्वयानन्दरूपस्य स्वप्रकाशतया प्रकाशमानं स्वरूपं श्रुतियुक्तिभ्यां निश्चित्य पुमान्कृतकृत्यो भवतीति द्वैताभासनिराकरणफलमुपसंहारव्याजेनाह ।

(२५) समं तु तस्मात्सततं विभा तव
द्वयाद्विमुक्तं सदसद्विकल्पितात् ।
निरीक्ष्य युक्त्या श्रुतितश्च बुद्धिमा-
नशेषनिर्वाणमुपैति दीपवत् ॥ ६७० ॥

समं त्विति । सत्त्वासत्त्वाभ्यां विकल्पिताद् द्वयाद् द्वैताभासाद् विमुक्तमिति संबन्धः । सततं समं विभा तव प्रकाशमानमिति योजना । दीपवत्सहसैवाशेषस्य बन्धस्य निर्वाणं परिसमाप्ति प्रैति निरीक्षणनिर्वाणयोर्न व्यवधान किमप्यस्तीत्यर्थः ॥ २५ ॥

उक्तलक्षणस्यात्मतत्त्वस्य निरीक्षणं किं विषयत्वेनाविषयत्वेन वेति जिज्ञासायामविषयत्वेनैवेत्याह ।

(२६) अवेद्यमेकं यदनन्यवेदिनां
कुतार्किकाणां च सुवेद्यमन्यथा ।
निरीक्ष्य चेत्थं त्वगुणग्रहो ऽगुणं
न याति मोहं ग्रहदोषमुक्तितः ॥ ६७१ ॥

अवेद्यमिति । सर्वसाक्षिप्रत्यगात्मनोन्यच्च भवत्यद्वयं ब्रह्मेति ये वेदिनस्तेषामनन्यवेदिनामवेद्यम्,अन्यथा भेदेन विषयतया वेदिनां कुतार्किकाणां सुवेद्यं परिच्छिन्नतया सुज्ञेयं शास्त्रयुक्तिविचारप्रयासं विना स्वमत्यनुसारेण सुखबोधमित्यर्थः । गुणेषु सत्त्वादिषु सविकारेषु ग्रहो ऽभिनिवेशो यस्य स गुणग्रहो न गुणग्रहो ऽगुणग्रहः पुमान् देहाद्यभिमानहीन इति यावत्,अगुणं निर्विशेषमात्मतत्त्वमित्थमवेद्यमित्याद्युक्तं रूपं निरीक्ष्यालोच्य चकारादपरोक्षतयानुभूय मोहं न याति, तत्र हेतुमाह । ग्रहदोषमुक्तित इति । ग्रहरूपाद्दोषान्मुक्तितो मुक्तेः मोहहेत्वज्ञानतत्कार्यबाधादित्यर्थः ॥ २६ ॥

कस्मादेवं महता यत्नेनाविषयतया ब्रह्मात्मनो वेदनमिष्यते तत्राह ।

(२७) अतो ऽन्यथा न ग्रहनाश इष्यते
विमोहबुद्धेर्ग्रह एव कारणम् ।
ग्रहोप्यहेतुस्त्वनलस्त्वनिन्धनो
यथा प्रशान्तिं परमां तथा व्रजेत् ॥ ६७२ ॥

अतो ऽन्यथेति । अत उक्तविधादात्मज्ञानादन्यथा ऽन्यस्माद्धेत्वन्तरात्प्रकारान्तराद्वा न ग्रहनाशो मिथ्याज्ञाननिवृत्तिरिष्यते,"नान्यः पन्था विद्यते ऽयनाये"ति श्रुतेः । मास्तु तर्हि ग्रहनाश इत्यत आह । विमोहेति । ग्रहे सकारणे सति विमोहबुद्धेर्देहगेहादावहंममेत्याद्यभिनिवेशधियः सर्वानर्थबीजभूताया अनिवृत्तिः स्यादित्यनिर्मोक्षप्रसङ्ग इत्यर्थः । ननु भवतु ग्रहनाशाख्ये हनाशो ग्रहनाश एव कुतो ब्रह्मात्मज्ञानादितिचेद्, न, ज्ञानादज्ञानस्यैव निवृत्तिसंभवाद्ग्रहे निवृत्तिकारणमन्यद्द्रष्टव्यमित्याशङ्क्याज्ञानकार्यत्वाद्ग्रहस्य तन्निवृत्तौ स्वयमेव निवर्त्तत इति सदृष्टान्तमाह । ग्रहोपीति । अहेतुर्निरुपादानः उपादाननिवृत्तौ पुनः प्ररोहहेत्वभावात्परमां निरतिशयां शान्तिमुपशान्तिं मोक्षलक्षणां व्रजेदित्यर्थः ॥ २७ ॥

प्रकरणसमाप्तौ गुरुनमस्काररूपं मङ्गलमाचरति ।

(२८) विमथ्य वेदोदधितः समुद्धृतं
सुरैर्महाब्धेस्तु यथा महात्मभिः ।
तथा ऽमृतं ज्ञानमिदं हि यैः पुरा
नमो गुरुभ्यः परमीक्षितं च यैः ॥ ६७३ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पादपूज्यशिष्यस्य श्रीशंकरभगवतः कृतिः सकलवेदोपनिषत्सारोपदेशसहस्री समाप्ता ॥

विमथ्येति । यथा सुरैर्देवैर्महात्मभिर्महाब्धेः क्षीरसागरादमृतं समुद्धृतं पुरा पूर्वं तथा यैर्महात्मभिर्गुरुभिर्वेदरूपादुदधितो विमथ्यालोड्येदं प्रकरणरूपेण मया प्रकाशितं ज्ञानामृतं ज्ञानरूपममृतं समुद्धृतं पुरा पूर्व तथा यैः परमात्मतत्त्वं चेक्षितमपरोक्षीकृतं तेभ्यो गुरुभ्यो नम इति योजना । अथ वा यैर्गुरुभिर्निमित्तभूतैर्मया परं चेक्षितमिति योजना । "तस्मादात्मज्ञं ह्यर्चयेद् भूतिकाम"इति श्रुतेः ।

"निरपेक्षं मुनिं शान्तं निर्वैर समदर्शनम् ।
अनुव्रजाम्यहं नित्यं पूतयेद् यो ऽङ्घ्रिरेणुभिः" ॥

इति भगवद्वचनाच्च युक्तमत्र गुरुपूजनमित्यर्थः ॥ २८ ॥

उपदेशसहस्रीयं विवृता हि महात्मभिः ।
श्रद्धावेशाद् मया ऽप्यस्याः पदयोजनिका कृता ॥ १ ॥

समस्तवेदार्थरहस्यगद्य-
पद्यप्रबन्धार्थतया ऽवबोधः ।
कथं नु माद्दृङ्मतिबिम्बितः स्या-
दथापि भक्त्या ऽहमिहास्मि नुन्नः ॥ २ ॥

हृद्यन्तराविष्कृतराममूर्ते-
स्तथा गुरूणां विपुलप्रसादात् ।
यथाकथं चिद् रचितेन विष्णु-
रनेन तुष्यत्वखिलान्तरात्मा ॥ ३ ॥

इति श्रीशंकराचार्यकृतोपदेशसहस्र्या व्याख्या कृष्णतीर्थशिष्यश्रीरामतीर्थविरचिता पदयोजनिकाख्या संपूर्णा ॥

## ॥ अथ बालभारतस्य विराटपर्वारम्भः ॥

॥ तत्र प्रथमः सर्गः ॥

कर्ता जगत्पापविषाहृतीनां
स्तात् स श्रिये सत्यवतीसुतो वः ।
जगच्चमत्कारकमुज्जगार
श्रीभारतं नाम सुधारसं यः ॥ १ ॥
पप्रच्छ पृथ्वीशमथो किरीटी-
कुर्वन् किरीटी करकुड्मलाग्रम् ।
छन्नः प्रभो[1] स्थास्यसि कैः प्रकारै-
रिहाब्दमात्रैर्नभसीव भानुः ॥ २ ॥
द्विजं सभास्तारमवेहि धर्म-
सुतस्य मां कङ्क इति प्रतीतम् ।
इत्युक्तिभाक् संसदि मत्स्यभर्तुः
स्थाताहमित्याह महीमहेन्द्रः ॥ ३ ॥
भीमोऽभ्यधादित्यथ वल्लवाख्यः
सूदो भविष्यामि नृपस्य तस्य ।
जयो जगौ राजसुतागुरुत्वं
नृत्ते गमिष्यामि बृहन्नलाख्यः ॥ ४ ॥
स्थास्यामि गोस्वामितयाथ तन्ति*-
पालाख्ययैवं सहदेव ऊचे ।
अश्वाधिभूर्ग्रन्थिकसंज्ञयेह
स्थाताहमित्थं नकुलोऽप्यवोचत् ॥ ५ ॥
उवाच कृष्णाप्यथ मालिनीति
सैरन्ध्र्यहं तव विराटपत्न्याः ।
ध्रुवं भविष्याम्यनवद्यकर्म-
कदम्बसंबद्धमिदं पदं हि ॥ ६ ॥
इत्थं मिथो मन्त्रकथेषु तेषु
मुनीन् विनम्याभ्युदितेषु गन्तुम् ।
धौम्यो धियां धाम सुधामयीभि-
रुवाच वाग्भिर्नयवागुराभिः ॥ ७ ॥

१ छन्नप्रभः इति पा० ।

* तन्तिर्नाम बलीवर्दा यस्यां दीर्घस्थूलरज्ज्वां वणिग्भि-रल्पैर्दामभिर्बध्यन्ते सा गूढाभिसंधौ तु तन्तिर्वाक् तत्पालः, युष्मद्वचनार्थानुष्ठातेत्यर्थः ।

भवद्भिरुद्भिन्ननयैर्विधेया
ध्येयावधानैर्नरदेवसेवा ।
या मृत्यवे शैलशिरोऽधिरोह-
पद्येव सद्यः स्खलितक्रमाणाम् ॥ ८ ॥
अहो अहीनामपि खेलनेभ्यो
दुःखानि दूरं नृपसेवनानि ।
एकोऽहिना मृत्युमुपैति दष्टः
क्ष्मापेन दष्टस्तु सगोत्रमित्रः ॥ ९ ॥
आदौ मयैवायमदीपि नूनं
न तद्दहेन्मामवहेलितोऽपि ।
इति भ्रमादङ्गुलिपर्वणापि
स्पृश्येत नो दीप इवावनीपः ॥ १० ॥
सौरभ्यमेवाप्य सदाप्यहीना-
मानन्दनश्चन्दनपादपोऽभूत् ।
गुणेन केनापि न भूपतीनां
सदा मुदे कोऽपि कथंचन स्यात् ॥ ११ ॥
कुतोऽप्यनासादितजीवनस्य
संदेहदोलागतजीवितस्य ।
तृष्णातिरेकोत्तरलस्य कूप-
झम्पेव सेवा जगतीपतीनाम् ॥ १२ ॥
यद्भूभृते भात्यशुभं शुभं वा
तदेव धूर्तः सततं प्रतन्वन् ।
स्पर्धाभिमानोज्झित एव सेवा-
फलं क्वचित् क्वापि लभेत किंचित् ॥ १३ ॥
इत्युक्तवानात्तदयोऽग्निहोत्री[1]
गुप्तं स पञ्चालपुरं द्रुपदे ।
नृपाज्ञया सौरिपुरीं स चेन्द्र-
सेनादिकः सर्वपरिच्छदोऽगात् ॥ १४ ॥
पङ्क्त्या पदानां द्रुतरक्तयाध्व-
महीषु पद्मप्रकरं किरन्तः ।
कृष्णां पुरस्कृत्य ययुर्विराट-
पुरीं स्वयं पाण्डुसुताः सुगुप्ताः ॥ १५ ॥

१—त्ततदग्निहोत्रो इति पा० ।

विलम्बमानेन शवेन गुप्ता-
न्यमी शमीस्कन्धमनु श्मशाने ।
निधाय तान्यायुधमण्डलानि
च्युतांशुचण्डांशुतुलामवापुः ॥ १६ ॥

जयो जयन्तो विजयश्च पार्थौ
यमौ जयत्सेनजयद्बलाङ्कौ ।
इत्थं मिथःकल्पितगुप्तसंज्ञाः
पृथग्ययुस्ते परिगुप्तवेषाः ॥ १७ ॥

रत्नाक्षधारी धृतविप्ररूपः
कौन्तेयभूपः सदसि प्रविष्टः ।
कोऽसीति मत्स्यक्षितिपेन पृष्टो
वाग्भिः सुधाम्भीवसुधाभिरूचे ॥ १८ ॥

विप्रः प्रियः सत्यसुतस्य कङ्का-
भिधः सभास्तार इति प्रतीतः ।
तद्राज्यविभ्रंशवशान्नृरत्न
जिजीविषुस्त्वामहमभ्युपेतः ॥ १९ ॥

हर्षादथादत्त गिरं विराट-
श्चिरान्मयादर्शि युधिष्ठिरोऽद्य ।
तन्मैत्र्यभावोचितचारुमूर्ति-
र्यद्दृश्यसे तस्य कृती वयस्यः ॥ २० ॥

इदं यथेन्दौ कुमुदं मुदं मे
चक्षुश्च चक्षुस्त्वयि संदधाति ।
ममापि तद् द्यूतसहायभूतः
खेलन् सुखं भुङ्क्ष्व विभूतिमेताम् ॥ २१ ॥

इति क्षितीन्द्रेण वितीर्णपूजे
तपस्तनूजे क्षितिभाजि तत्र ।
दर्वीखजाङ्कः* प्रययौ परेऽह्नि
सूदस्वरूपी बकसूदनोऽपि ॥ २२ ॥

स्वं वल्लवाख्यं स दिशन् नृपेण
सूदः कृतो बाहुबले च योधः ।
कृष्णाप्युपागत्य विराटपत्नीं
चकार सैरन्ध्र्यधिकारयाञ्चाम् ॥ २३ ॥

कृष्णां सुदेष्णाथ नृपस्य पत्नी
विलोक्य तां विस्मयिनी जगाद ।
इयं तनुस्तन्वि तवातिरम्या
सम्यङ् सैरन्ध्र्यधिकारयाचम् ॥ २४ ॥

भाग्यावधिर्विश्वविलोचनानां
निर्माणकर्मावधिरब्जयोनेः ।
हसत्यशेषोपमितीः प्रतीक-
प्रभाभिरेषा तव रूपरेखा ॥ २५ ॥

सामुद्रिकोक्तैरखिलैः प्रधान-
स्त्रीलक्षणैर्लक्षितमूर्तिमब्धिः ।
चक्रे खलु त्वां प्रतिकल्पलक्ष्मी-
शिल्पादनल्पाभ्यसनो मनोज्ञाम् ॥ २६ ॥

अल्पप्रभाणां प्रभवत्प्रभौघ-
मयोग्यमुच्चैर्मणिमण्डनानाम् ।
वदत्यलंकारमतस्तवालं-
कारस्तवानेव तवाङ्गमेतत् ॥ २७ ॥

त्वां वीक्ष्य पुंस्त्वं मनसा श्रयन्ति
स्त्रियोऽपि तद्ध्यानतयैव देवी ।
शक्तिः स्वयं विष्णुरभून्न लेभे
त्वद्भर्तृतां तु क्व नु भाग्यमीदृक् ॥ २८ ॥

न पापवृत्त्यै तव रूपमीदृ-
ग्यथासि तन्नूनमनूनशीला ।
ततः कथं स्थास्यसि भर्तृहीना
श्रीमत्तमद्भर्तरि मद्गृहेऽस्मिन् ॥ २९ ॥

गन्धर्वदेवा नृपपत्नि पञ्च
रक्षन्त्यलक्ष्याः पतयोऽन्वहं माम् ।
क्लिश्नाति तत् कोऽपि न तेषु सत्सु
भास्वत्करेष्वम्बुजिनीमिवेन्दुः ॥ ३० ॥

इतीरितोक्ति नरपालपत्नी
तां मालिनीति प्रथिताभिधानाम् ।
चकार गन्धाधिकृतां कृताङ्घ्रि-
प्रक्षालनोच्छिष्टनिषेधबन्धाम्. ॥ ३१ ॥

युग्मम् ।

* खजा मन्थनदण्डः, खजा मन्थप्रहस्तयोरिति विश्वः ।

तत्रागतोऽन्येद्युरुदीर्णतन्ति-
पालाभिधानो नकुलाग्रजन्मा ।
परीक्ष्य दक्षो वृषलक्षणेषु
क्षोणीभुजाकारि वृषाधिकारी ॥ ३२ ॥

आबद्धवेणिर्धृतकञ्चुकः स्त्री-
जनोचितालंकरणः किरीटी ।
अन्येद्युराच्छाद्य किरीटमागा-
द्विराटसंसद्भुवि षण्डवेषः ॥ ३३ ॥

बृहन्नलास्मीतिवदो द्युलोक-
गन्धर्वमैत्र्याप्तदीयशिक्षः ।
मत्स्याधिनाथेन कृतः सुतायाः
संगीतशिक्षागुरुरुत्तरायाः ॥ ३४ ॥

तमेत्य भूपं नकुलस्तुरंग-
कुलस्य तत्त्वे कलितावबोधः ।
अवाप वाहाधिकृतिं रथानां
बन्धे सुधीर्ग्रन्थिकनामधेयः ॥ ३५ ॥

इत्येषु गुप्तेषु सुखं स्थितेषु
गतेषु मासेषु चतुर्मितेषु ।
दिग्भ्योऽखिलाभ्यः पुरि तत्र यात्रा-
महोत्सवे मल्लभटाः समीयुः ॥ ३६ ॥

भटः प्रतापार्कयशःशशाङ्को
गुणौघनक्षत्रपिधानहेतुः ।
जीमूत इत्यूर्जितगर्जितश्री-
र्मल्लाधिपस्तेषु समुल्ललास ॥ ३७ ॥

लीलासमुल्लङ्घितमल्लपङ्क्ति-
स्तस्य प्रतापैकनिधेर्न कश्चित् ।
रवेरिवास्तंगमितान्यतेज-
स्ततेः पुरोऽभूत् प्रतिमल्लभूतः ॥ ३८ ॥

तस्मिन्नलङ्घ्यप्रधने मदैक-
धनेऽधिकं रङ्गति रङ्गभूमौ ।
भीमं ह्रियाचष्ट चिराद्विराटो
निधार्यतां वल्लव मल्लमल्लः ॥ ३९ ॥

इत्याज्ञया तस्य च कौतुकैश्च
दोर्दण्डकण्डूलतया च नुन्नः ।
त्रिधोद्यदुत्साहरसः ससर्प
तद्दर्पमुच्छेत्तुमसौ पृथाभूः ॥ ४० ॥

भीमस्य दोःस्फालनजस्तदाभू-
न्नादो विदीर्णोतरशैलशृङ्गः ।
किमत्र चित्रं यदभञ्जि तेन
जीमूतगर्वग्रहपर्वतोऽपि ॥ ४१ ॥

मल्लेन्द्रमुद्गर्जमथो सयुद्धं
प्रपात्य दोष्णैव ममर्द भीमः ।
दन्तोरुदन्तप्रहतिच्युतेन
महोपलेनेव महेभमद्रिः ॥ ४२ ॥

विद्रावयत्येव समानकालं
जीमूतजालं जनको यदीयः ।
स एकजीमूतजयस्तवेन
व्यलज्जि लोकैः पवनाङ्गजन्मा ॥ ४३ ॥

भीमं प्रति प्रीतिरसप्रसत्त्या
सुवर्णवृष्टिं नृपतिर्वितेने ।
को वेत्ति देवैस्त्रपया तदानीं
प्रसूनवृष्टिर्न कृता कृता वा ॥ ४४ ॥

गजाश्च सिंहाश्च युधे पुरोऽन्तः-
पुरस्य राज्ञा कुतुकान्नियुक्ताः ।
भीमे ययुर्भङ्गमुदग्रसिंह-
नादे दवार्चिर्निभनेत्रभासि ॥ ४५ ॥

इत्थं लसत्कौतुककौशलाभि-
र्लीलाभिरामोदयतां नरेन्द्रम् ।
मासा दशासन् कुरुकुञ्जराणां
तेषां विशेषार्चनहर्षितानाम् ॥ ४६ ॥

तत्र च पुरि सेनानी-
र्मत्स्यनृपालस्य बलनिधिः श्यालः ।
षष्ठ्युत्तरशतबन्धु-
ज्येष्ठोऽजनि कीचको नाम ॥ ४७ ॥

स कदाचिद्द्रुपदसुतां
ददर्श सदने स्वसुः सुदेष्णायाः ।
नियमितवेणीं मलयज-
लतिकामिव कलितकालाहीम् ॥ ४८ ॥

रूपं निरूप्य निरुपम-
मस्याः स्वशिरः प्रकम्पयांचक्रे ।
दुर्मदमदनप्रस्मर-
शरविसरैरुरसि विद्ध इव ॥ ४६ ॥

अनिमिषदृक् तां पश्यन्
स पञ्चबाणेन पञ्चभिर्बाणैः ।
एकैकेनेव हतो
हृदि तस्या हृद्गतैर्दयितैः ॥ ५० ॥

तस्या नवप्रवेशात्
तस्योरसि रतिरसः खलूद्भ्रान्तः ।
उल्लसति स्म स लोचन-
युगलीविगलितजलच्छलतः ॥ ५१ ॥

सुमुखी सुललितनयना
कोमलतरचरणपाणिरिह केयम् ।
अलिमिव हृदयं भ्रमयति
मम जङ्गमकल्पवल्लिरिव ॥ ५२ ॥

इति पृष्ट्वैव सुदेष्णां
मुदितो विदितेन तत्स्वरूपेण ।
भृशमधिकाधिकविकसित-
रणरणकाकुलितहृदयोऽभूत् ॥ ५३ ॥
युग्मम् ।

अथ तेन द्रुपदसुता
जगदे जगदेकनयनपीयूषम् ।
परिकलितशीललीना
स्मरशिखिकीलार्भितप्रेन ॥ ५४ ॥

इन्दुमुखी कुमुदाक्षी
रम्भोरुः कमलचारुकरचरणा ।
अमृतद्रवलावण्या
हृदयगता देवि किं दहसि ॥ ५५ ॥

त्वं कण्ठगा मुदेऽमी
ददति मृतिं त्वं च पञ्चशरविभवा ।
एते तृणं तदतुले
तुलयामि शुभे किमसुभिस्त्वाम् ॥ ५६ ॥

अयि दयिते हृदयस्य
द्वारे ?वनीं विधातुमुत्कोऽस्मि ।
यदिहान्तरा चरन्ती
शल्यमिव व्यथयसि दृढं माम् ॥ ५७ ॥

यदि भुजयुगलेन दृढं
सुतनो न तनोषि मम तनौ बन्धम् ।
उत्कण्ठाभरपूर्णः
स्फुटितोऽस्मि तदूर्ध्वं एवायम् ॥ ५८ ॥

तदिह कुरु तरुणि करुणां
मदसुषु मदनाभितापितं भज माम् ।
रमणी रमणेन विना
न विभाति विभावरीव चन्द्रेण ॥ ५९ ॥

अथ रोषरूक्षपदमिति
वदति स्म द्रुपदनन्दिनी वचनम् ।
दुर्नयमधिरोहति धी-
र्धिक् ते दशकन्धरस्येव ॥ ६० ॥

गन्धर्वास्त्रिदशैर-
प्यशमितगर्वा भवन्तमुद्भ्रान्तम् ।
मत्पतयो बत गुप्ता
नेष्यन्ते पञ्च पञ्चत्वम् ॥ ६१ ॥

अथ मन्मथविस्मरशर-
दूनमनस्त्रस्तसुनिबिडव्रीडः ।
सपदि सुदेष्णायै स
न्यवेदयत् तद्गतं भावम् ॥ ६२ ॥

मदनासहं सहोदर-
मवलोक्य ततोऽवदत् सुदेष्णा तम् ।
प्रेष्या महोत्सवमिषा-
न्मदिरार्थं मन्दिरमियं ते ॥ ६३ ॥

मधुमधुरवचनरचना
विचित्रवाग्भिस्तथेयमनुनेया ।
अलिनो नलिनीव यथा
सुमुखी विमुखी न ते भवति ॥ ६४ ॥

इत्येष सहोदरया
विहिताश्वासो ययौ निजावासम् ।
पशुरिव गुरुणा तरुणी-
रूपगुणेन प्रबद्धोऽपि ॥ ६५ ॥

तेन मनोऽतिमनोज्ञां
रमणीमभियोजितं ततो मनसा ।
साधु कृतज्ञेन कृतं
तस्य पुरस्तन्मयं भुवनम् ॥ ६६ ॥

शिशिरैः पदार्थविसरै-
र्दूरो न तस्यासमाद शिशिरत्वम् ।
तस्योरसा रयात् पुन-
रासनशिशिराण्यशिशिराणि ॥ ६७ ॥

शिशिरोपचारतरलं
परिवारजनं जगाद स तदानीम् ।
मृदुमन्थरशिथिलोदित-
वर्णपदं समदमदनार्तः ॥ ६८ ॥

अन्तःपरितापभिदे
तथ्यं पथ्यं हि न बहिरुपचारः ।
अमृतमधुमधुरतदधर-
संमुखरसनौषधं कुरुत ॥ ६९ ॥

कदलीदलपटलमद-
श्चालयथ कथं पदस्य पवनेन ।
वर्धेत दावपावक
इव हृदि ननु दीप इव विरहः ॥ ७० ॥

हृदि घृततत्कुचकलशे
स्मरशररन्ध्रेषु चञ्चलैः प्राणैः ।
ज्वलितवियोगानलजुषि
मलयजपङ्कोऽपि तापाय ॥ ७१ ॥

इति दीनतदीयवचः-
प्रचयविलीनावलेपदृढलेपाः ।
जलतरलकातरदृशोऽ-
भूवन्नवरोधसुदृशोऽपि ॥ ७२ ॥

परिबृढदृढविकलतया-
कुलितस्वान्तेन परिजनजनेन ।
दूती सपदि नियुक्ता
गत्वा निजगाद सैरन्ध्रीम् ॥ ७३ ॥

देवि यदादि विलोचन-
गोचरतां कीचकेन गमितासि ।
स तदादि हृच्छयशिली-
मुखविद्धाङ्गो विसंज्ञोऽभूत् ॥ ७४ ॥

स्मरशरभरपरिविद्धे
तितउतुलां सुदति तस्य हृदि याते ।
भवदाशाबद्धपथै-
र्न निर्गमोऽलाभि भृशमसुभिः ॥ ७५ ॥

अबलापि बलवती त्वं
यस्या भुजपञ्जरानुसरणरसः ।
विग्रहरिपुशूर्पकरिपु-
विशिखभयात् कीचकोऽप्यभवत् ॥ ७६ ॥

तव मुखमिति बत चुम्बति
कमलं चक्रौ कुचाविति स्पृशति ।
कर इति कुमुदं दत्ते
हृदि विकलः स किल वापीषु ॥ ७७ ॥

सैरन्ध्रीपदपदवीं
दवीयसीं सपदि देवि परिमुञ्च ।
नमतु पदाम्बुजयोस्तव
तदङ्गनावदनचन्द्रोऽपि ॥ ७८ ॥

परिरम्भदम्भनिभृतं
रसय प्रेमामृतं समं तेन ।
त्रुटदमलहारविगलित-
मुक्तामिषमुक्तबिन्दुचयम् ॥ ७९ ॥

किसलयकमलकुलेर-
प्यगलितमुरुमुरसि तस्य परितापम् ।
स्पर्शगुणेन हरन्ती
निरुपमपाणिर्न किं भवसि ॥ ८० ॥

अनुबन्धं रचय स्वय-
मयमर्थः सिद्धिमेष्यति मृगाक्षि ।
सोदरपरितापभिदे-
ऽभ्युदितसुदेष्णावचोभिरपि ॥ ८१ ॥

स्मरशरनिकरव्यतिकर-
ताडनपरिपीडितस्य तस्य भृशम् ।
यदि जीवितं भवत्कुच-
दुर्गमदुर्गाधिरोहेण ॥ ८२ ॥

* शूर्पकः कामरिपू राक्षसः ।

अमृदितमलयजरसमिव
राजतु तदुरो दृढेऽपि परिरम्भे ।
सुमुखि स्वेदलवार्दित-
विदलितनवहारचूर्णेन ॥ ८३ ॥
स्मरतापभेदनौषध-
पिण्डवदात्मीयकुचयुगं सुमुखि ।
तदुरसि बधान धन्ये
पृष्ठदृढग्रन्थिभुजपाशम् ॥ ८४ ॥
ईदृक्तापभयं परि-
रम्भेऽपि न सुभ्रु तस्य कर्तव्यम् ।
स प्रथमं त्वदवेत्ता-
स्वेदजलैर्यास्यति जडत्वम् ॥ ८५ ॥
गणयिष्यति न सुदेष्णां
न महीपालं निषेधमपि न तव ।
अबले बलेन स बली
ग्रहीष्यति स्वयमिदं रचय ॥ ८६ ॥
हारं तदुरसि रसिके
परिरम्भनिषेधकं सखि द्वेषात् ।
अन्त:कठिनघनस्तन-
संरम्भेण स्वयं दलय ॥ ८७ ॥
कण्ठोपकण्ठमधुना
प्राणा: सुदति स्वयं समायाता: ।
अपि भवती कण्ठगता
प्राणसमा भवतु तस्य जवात् ॥ ८८ ॥
अन्तर्गतया तदुर:
पीडितमेव त्वयैव पूर्वमपि ।
अधुनापि पौनरुक्त्याद्
बहिर्गता पीडय न दोष: ॥ ८९ ॥
इति विरतायां तस्या-
मश्यामलचरितया तयोक्तमिदम् ।
दूति बिभेमि स भेद्यो
गन्धर्वै: पञ्चभि: पतिभि: ॥ ९० ॥
इत्यफलीकृतमस्या
वाचां पटलं तदेकवचनेन ।
मलिनतमममलरुचिना
गृहमणिना तिमिरजालमिव ॥ ९१ ॥
इति गतया दूतिकया
तस्या वचने यथातथं कथिते ।
नलिनतलिनस्थितोऽप्यय-
मतीव समवाप कीचकस्तापम् ॥ ९२ ॥
एह्येहि वल्लभे लघु
विनय कपोलाद् घनाञ्जनं बाष्पम् ।
इति स जगौ मृगलाञ्छन-
मागच्छन्मालिनीमुखभ्रान्त्या ॥ ९३ ॥
दैववशेन स्वप्ने
सैरन्ध्रीमेकवेलयासाद्य ।
स मुहुर्मीलितनयन:
सुष्वाप प्राप न पुनस्ताम् ॥ ९४ ॥
धातस्तात तवासन-
सरोजसंकोचहेतुरयमिन्दु: ।
कुरु राहोर्वपुरखिलं
गिलितो न यथा पुनरुदेति ॥ ९५ ॥
शंकर किं करवाणि
त्वमेव देव: सदा मया महित: ।
वहसि किमु शिरसि चन्द्रं
न दहसि पुनरप्यमुं कामम् ॥ ९६ ॥
इति विकलवचनरचना-
परिचयविधुरीकृताखिलस्वजन: ।
गमयामास तमिस्रां
कष्टमसौ कल्पशतकल्पाम् ॥ ९७ ॥
विशेषकम् ।
मद्यकृते सच्छलया
तद्वत्सलया सुदेष्णाया बलत: ।
सैरन्ध्री दुर्नयभय-
विहितनिषेधाप्यथ प्रहिता ॥ ९८ ॥
तरणिं विधाय शरणं
कीचकसदनाय तदनु सायाह्ने ।
कृष्णा चचाल तस्यां
रक्षायै राक्षसं व्यधादर्क: ॥ ९९ ॥

तस्या विलोक्य वदनं
भासां सदनं स चन्द्रबिम्बमिव ।
उद्भ्रान्तो जलधिरिव
द्विगुणोच्छलदच्छहर्षोर्मिः ॥ १०० ॥

रोमाञ्चद्विगुणतरौ
तरसा बाहू तदा तदीयौ तौ ।
अदलयतां केयूरे
किल दयिताश्लेषविघ्नभयात् ॥ १०१ ॥

तामवदन्मदनार्तः
स सतीं चितिवलयमिलितनयनयुगाम् ।
सुमुखि समेहि समेहि
त्यज लज्जां रचय[1] परिरम्भम् ॥ १०२ ॥

अयमहमियं च संपत्
परिजनजनतेयमेतदपि सदनम् ।
उररीकुरु सकलमदः
कलमदशीली भवामि यथा ॥ १०३ ॥

इति निगदन्तमनन्तर-
मवलोक्य तमुत्सुकं प्रसज्जाय ।
मणिभूषणकपिशतरं
शीललतादवमसौ मेने ॥ १०४ ॥

दुरितद्विरदोन्मूलित-
मिव कीचकमंशुकातिकर्षेण ।
तं भुवि परिपात्य ययौ
राजनिकेताजिरं कृष्णा ॥ १०५ ॥

अभिसृत्य कामकोप-
द्विगुणिततापः कचैरथाकृष्य ।
द्रुपदात्मजां पदासौ
श्रियमिव मूर्खो जघान स्वाम् ॥ १०६ ॥

द्रुपदसुतादेहादथ
रक्षारक्षस्तदाशु निर्गत्य ।
दुरितमिव तस्य मूर्तं
गतचेष्टमपातयद्भुवि तम् ॥ १०७ ॥

१ सुमुखि समेहि परित्यज लज्जां रचयस्व इति पा० ।

इति नृपतिसभायां भीमसेनोऽथ तिष्ठन्
परिभवमवलोक्य स्वप्रियायाः प्रवीरः ।
शमितसमयरोधो बोधयन् क्रोधवह्निं
लघु सुकृतसुतेनारोधि संज्ञाज्ञयासौ ॥ १०८ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते श्रीबालभारतनाम्नि महाकाव्ये वीराङ्के विराटपर्वणि पाण्डवगुप्तिर्नाम प्रथमः सर्गः ॥ १ ॥ :: ::

## ॥ अथ बालभारतस्य ॥

### ॥ द्वितीयः सर्गः ॥

स पराशरनन्दनो मुदे
रिपुनारीनयनाञ्जनाशनैः ।
असिभिर्व्रततीव्रताजितै-
रिव यः कान्तिमिषान्निषेव्यते ॥ १ ॥

अथ पाण्डवजीवितेश्वरी
द्रुतमुत्थाय कृतातुरस्वरा ।
रजसा वृतविग्रहा ययौ
जगतीपालसभां सवल्लभाम् ॥ २ ॥

विकटाचिकटाचितालिलिः
करुणक्रोधगिराच सा जगौ ।
नयमद्य विलोकयामि ते
प्रहतां पश्यसि मत्स्यराज माम् ॥ ३ ॥

युवयोः कलहो रहोऽभवद्
वद किंकारण एष मालिनि ।
इति जल्पति मत्स्यभूपतौ
पुनरप्यादित पार्षती गिरम् ॥ ४ ॥

सुरहूपिषु वल्लभेषु मे
जगतामप्रकटेषु पञ्चसु ।
न महान् यदि जायते शमी
बलवान् कः कुरुते तदीदृशम् ॥ ५ ॥

युधि भीम जयन्तमुत्कटं
दयित त्वां कथयन्ति बान्धवाः ।
अवगण्य गुरोर्गिरं रया-
दहितं संहर मद्विडम्बिनम् ॥ ६ ॥

इति तामतिकोपसंभ्रम-
स्फुटगुप्ताक्षरभाषिणीं क्षणात् ।
निजगाद युधिष्ठिरो गिरा
विकसत्कृत्रिमरोषरूक्षया ॥ ७ ॥
यदि ते विदितः प्रभावभाग्-
युधि भीमः पतिरस्ति कश्चन ।
परिपूरयतात् स ते स्पृहां
व्रज विघ्नीभव मा दुरोदरे ॥ ८ ॥
इति धार्मिगिरा चिरादगा-
द्दधती मन्युभरं कुरङ्गदृक् ।
अभि भूपतिवल्लभामथा-
कथयत् कीचकदुष्टचेष्टितम् ॥ ९ ॥
परपूरुषपाणिदूषिते
समभिक्षाल्य जलेन वाससी ।
जनितस्नपना च सागमन्-
निशि किर्मीरहरं महानसे ॥ १० ॥
स महानसवेदिकातले
नवनिद्रापरिमुद्रितेक्षणः ।
हृदये लुठनं दधानया
परिरब्धो हृदयेश्वरस्तया ॥ ११ ॥
तदनिद्रविलोचनः प्रिया-
मवलोक्य स्वयमागतां चिरात् ।
भुजयुग्मनिपीडनच्युता-
न्तरदुःखव्यसनां चकार सः ॥ १२ ॥
अथ दुःखजबाष्पगद्गदी-
कृतकण्ठस्फुरदस्फुटाक्षरम् ।
द्रुपदक्षितिपालनन्दिनी
प्रतिवक्ति स्म जटासुरद्विषम् ॥ १३ ॥
यदुपेक्षितवान् पुरा भवा-
नपि दुःशासनमुग्रशासनः ।
इति पश्यतु गन्धकारिका-
पदसंकीर्णकिणौ करौ मम ॥ १४ ॥
अधुनापि चकर्ष कीचकः
कचपाशं निजघान च क्रमैः ।
द्रुतमप्रतिकुर्वतोऽग्रतः
किमुरोऽपि स्फुटितं न ते पते ॥ १५ ॥
इति वल्लभया स भाषितः
स्मृतबन्धुव्रजदुःखकष्टितः ।
निजगाद तदा विनिश्वसन्
भुजयोरक्षियुगं मुहुः क्षिपन् ॥ १६ ॥
हृदयेश्वरि धर्मजन्मनः
शममन्त्रेण दृढं नियन्त्रिताः ।
उपलक्षिदशा इवास्त्रिणोऽ-
प्यभिभूतौ किमु कुर्महे वयम् ॥ १७ ॥
सह तेन विलाससंविदं
कुरु मिथ्या निशि नृत्तमण्डपे ।
कमलाक्षि यथा क्षिपामि तं
यमवक्त्रे परिपिण्डितं बलात् ॥ १८ ॥
इति भीमवचःसुधाचय-
च्युतदुःखौघविषा मखाङ्गभूः ।
द्रुतमाट विराटवल्लभा-
भवनं गुप्तगतागतिर्मुदा ॥ १९ ॥
अपरेद्युरुपागतं गृहं
रहसि स्नेहपरेव कीचकम् ।
वचनैर्मधुवादसादरै-
र्निजगाद द्रुपदस्य नन्दिनी ॥ २० ॥
सजने सुभग त्वया कथं
पृथिवीमन्मथ भाषिता तथा ।
विजने निशि नृत्तमण्डपे
समुपेतव्यमहो मदिच्छया ॥ २१ ॥
इति तद्वचनैर्मुदं वह-
न्निदमूचे नरपालशालकः ।
स्वपदागतसुस्थजीवित-
स्फुटकण्ठास्खलदक्षरोदयम् ॥ २२ ॥
सुकृतैः समवर्धि मामकै-
र्विनिपेते द्रुतमद्य पातकैः ।
तृणितत्रिजगत्प्रभुत्वया
स्मितया मां यदवेक्षसे दृशा ॥ २३ ॥

मदिराक्षि मदङ्गसंगम-
भ्रमविभ्राजितशुभ्रकान्तिनोः ।
तव लोचनयोः पयोरुहां
ततिमुत्तारणकं करोमि किम् ॥ २४ ॥
नयनप्रतिमा सरोरुहं
वदनस्य प्रतिहस्तकः शशी ।
चलचारुचकोरलोचने
वरमेकं तव वर्णयामि किम् ॥ २५ ॥
अयमद्य सुधासहोदरः
सुमुखि त्वन्मुखचन्द्रमा वदन् ।
अभवद्विषसोदरोऽपि यः
किमपि ह्यस्तनवासरे ह हा ॥ २६ ॥
सफलं मम जन्म जीवितं
विभुताद्रूपमदो मदोऽप्यभूत् ।
अमृतप्लुतिवन्मयि त्वया
वचनं लोचनमप्यरोचि यत् ॥ २७ ॥
हृदयं विचकास नेशिवान्
परितापः प्रससार संमदः ।
परिरम्भगिरापि ते ततः
परिरम्भे किमहो भविष्यति ॥ २८ ॥
स्फुटितेव कृतार्थिता मिथो
मनसोर्मेलनखेलनेन नौ ।
स भविष्यति कीदृशः क्षणः
खलु सा यत्र शरीरयोरपि ॥ २९ ॥
इति स प्रलपन् घनं तया
प्रहितो लोचनलोलनश्रिया ।
दृढतद्गुणबद्धमानसः
शनकैर्धाम जगाम कीचकः ॥ ३० ॥
प्रहरे प्रथमेऽपि मूढधी-
र्व्ययमह्नः स मुहुः स्म पृच्छति ।
वचनैर्गृहकेलिदीर्घिका-
श्रयकोकद्वयशोककारिभिः ॥ ३१ ॥
निशि तस्य मूर्तिं विचिन्तयन्
कृपया नूनमहो दिवाकरः ।
अकरोद्दिवसं गुरुं हृदा
विकृपं तं स तु मन्यते स्म हा ॥ ३२ ॥
क्षणदावसरेण मृत्युना
खलु तस्य प्रसभं नभोऽन्तरात् ।
ह्रदिनीहृदयाधिपान्तरे
पतिरह्नां परिपातितस्ततः ॥ ३३ ॥
न विधेयमतः परं मये-
त्यतुलं भूषणमेव तन्वतः ।
सह तस्य मुदा स्म वर्धते
रजनी चन्द्रमरीचिनिर्मला ॥ ३४ ॥
दयितावचने रणक्रिया-
गमभीमस्थितिभीमकोटरम् ।
निशि यामयुगक्षणे यया-
वथ संकेतनिकेतनं प्रति ॥ ३५ ॥
पथि दुःशकुना न तेन ते
गणिता नूनमसंख्यतां गताः ।
श्रुतमाप्रभुजंगसंपदा
मदनान्धेन वचः सतां न च ॥ ३६ ॥
परिवारजनं विसर्जयन्
द्रुतमौत्सुक्यपरिस्खलत्पदः ।
प्रविवेश स रङ्गमण्डपं
क्व मृगाक्षि त्वमसीति भाषकः ॥ ३७ ॥
अयमन्ध इवाग्रपाणिना
तमभिस्पृश्य बकान्तकं जगौ ।
न मया कमलाक्षि मण्डनं
विदधे तादृशमुत्सुकात्मना ॥ ३८ ॥
मदवाग्निमनोलयात् प्रिये
परुषं स्पर्शगुणं गतासि किम् ।
रणदारुणवैरिदारण-
क्षणकष्टैः कठिनं हि मद्वपुः ॥ ३९ ॥
दयिताभिभवेन सौरभे-
र्दयिताभोगकृते धृतैरपि ।
प्रधनप्रथया च पावने-
स्त्रिगुणं कोपशिखी तदाज्वलत् ॥ ४० ॥

ददृशे तव रूपमद्भुतं
विभुताबोधि मृधं प्रकाशय ।
इति मन्दमथालपन्मरु-
तनुभूर्न्यस्य तदंसयोर्भुजम् ॥ ४१ ॥
पदपातविकम्पितक्षितिः
करघातध्वनदम्बरस्ततः ।
चकितक्षणदाचरः परः
समरस्तत्र तयोरजायत ॥ ४२ ॥
अथ भीमभुजामहार्गल-
प्रबलाघातचयेन कीचकः ।
रुधिरं वमति स्म हृद्गत-
क्रतुपुत्रीनिविडानुरागवत् ॥ ४३ ॥
अखिलैरपि कीचकाङ्गकैः
समरे भीमकरैरितैर्द्रुतम् ।
हृदि यातमहो बहिः प्रिया-
मनवाप्तां समवाप्तुमुत्सुकैः ॥ ४४ ॥
सुरभीरुविलासविस्मृत-
द्रुपदापत्यरसेऽथ कीचके ।
दयितामभिभाष्य मारुति-
र्मुदितोऽशेत महानसं गतः ॥ ४५ ॥
तदनु प्रहतं प्रहर्षित-
क्रतुजादिष्टमवेक्ष्य कीचकम् ।
अजनिष्ट जनोऽखिलः खलू-
दितविचारसविषादविस्मयः ॥ ४६ ॥
अथ तत्र समं सुदेष्णया
सुदृशस्तस्य सहोदराश्च ते ।
कृतहाकृतिदुःसहस्वनाः
सहसा नृत्तनिकेतने ययुः ॥ ४७ ॥
प्रतिशब्दमिषेण देहिनां
निविडाक्रन्दभृतां पदे पदे ।
अपि कुट्टिमकेलिपर्वत-
त्रिदशावासभरैररुद्यत ॥ ४८ ॥
विजयिन् बलिनः सुशर्मणः
स्मरवीरप्रतिवीरविग्रह ।
अनिमेषकरालालोचनाः
सुरनार्यः स्वदिताः किमद्य ते ॥ ४९ ॥
हरिणा स्वयमर्थितो यदि
प्रिय जेतुं दिवि दानवान् भवान् ।
अवचः परिभाषणो यया-
वपरीरम्भभरोऽपि नः कथम् ॥ ५० ॥
विलसन्तमनङ्गमङ्गिनं
सुदृशस्त्वामिह मेनिरे भुवि ।
अधुना तपसार्जितं प्रिय
क्व वधूस्तादृशमेव मन्यताम् ॥ ५१ ॥
कृतमेतदहो द्युवासिनां
मनसा सिद्धिमुपैति वाञ्छितम् ।
सुरभीरुभिरन्यथा कथं
त्वमकस्मात् परिरभ्यसेऽधिप ॥ ५२ ॥
अनिमेषविलोचनासु चेत्
तव रागः सुरकामिनीष्विह ।
द्रुतमेहि महाशय स्वयं
न निमेषो नयनेषु नः शुचा ॥ ५३ ॥
इति तस्य नितम्बिनीजन-
प्रबलाक्रन्दितगाढदुःखतः ।
स्फुटति स्म किल द्विधा नभः
ककुभो भङ्गमिवाययुस्तदा ॥ ५४ ॥
उपरि स्फुरितस्य दुःखिनः
स्वजनस्य स्वयमश्रुवारिभिः ।
तमपस्नपयद्भिरेव तैः
क्षतजं क्षालितमत्र मण्डपे ॥ ५५ ॥
रुधिरेऽधिकपङ्क्ते कीचकाः
शतमस्याग्निहुतौ ततो मतिम् ।
पुरतोऽङ्गुलिगुप्तनासिकां
ददृशुस्तं च पुरं च मालिनीम् ॥ ५६ ॥
अभिघात्य निजैः प्रियैरमुं
मुदिता द्रष्टुमिहैयमाययौ ।
इति रोषरसेन कीचका
दहने दग्धुमिमां समाकृषन् ॥ ५७ ॥

समनायि ततोऽयतश्चितां
रुदितोद्गर्जनशोकसागरैः ।
निगदन्त्यपि गुप्तनामभिः
स्वपतीन् सा रुदती च कीचकैः ॥ ५८ ॥
द्रुतलङ्घितवप्रमण्डलः
करशस्त्रीकृतमार्गपादपः ।
पदधूतरजोमये तम-
स्यथ भीमस्तदिलातलं ययौ ॥ ५९ ॥
तमवेक्ष्य कृतान्तभीषणं
गुरुगन्धर्वभियोऽथ कीचकाः ।
मुमुचुः सह जीविताशया
द्रुतमेव द्रुपदस्य नन्दिनीम् ॥ ६० ॥
प्रणिहत्य हठेन कीचकान्
सदृशव्याममितेन शाखिना ।
तनयः पवनस्य वल्लभा-
मथ संभाष्य यथागतं गतः ॥ ६१ ॥
विज्ञाय गन्धर्वहतान् नृपस्तान्
नोवाच किंचिच्चकितः स्वयं ताम् ।
सुदेष्णया भूपगिरा तु गेहा-
न्निर्वास्यमानेयमिदं जगाद ॥ ६२ ॥

क्ष्मानाथः क्षमतां त्रयोदशदिनीं देवि प्रवीरास्तदा
भर्तारः स्वपदान्यवाप्य मुदिता नेष्यन्ति मामुत्सुकाः ।
तैर्युक्तश्च जवादवाप्स्यति जयं राजा विराटोऽप्ययं
तद्धीरैव भवेति तद्वचसि सा तूष्णीं सुदेष्णा स्थिता ॥ ६३ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते श्रीबालभारतनाम्नि महाकाव्ये वीराङ्के विराटपर्वणि कीचकवधो नाम द्वितीयः सर्गः ॥ २ ॥ :: ::

## ॥ खण्डप्रशस्तिः ॥

॥ तिलकयुता ॥

॥ अथ वराहावतारवर्णनम् ॥

(१७) न पङ्कैरालेपं कलयति धरित्रीव्ययभया-
न्न मुस्तामादत्तेऽप्युरगनगरभ्रंशभयतः ।
न धत्ते ब्रह्माण्डस्फुटनसघृणो घर्घररवं
महाक्रोडः पायादिति सकलसङ्कोचितमुखः ॥

महांश्चासौ क्रोडश्च महाक्रोडः "आन्महत इत्यात्वम्„ पायाद्रक्षतु, इति हेतोः, सकलसङ्कोचितमुखः सकलात्समस्तात्कृत्यात्सङ्कोचितं पराक् कृतं मुखं येन, सः, इतीति किम्, यो धरित्रीव्ययभयाद् भूविनाशभयात् पङ्कैः कर्दमैः आलेपं विलेपं न कलयति न कुरुते, यद्यहं धरित्र्यां सामुद्रे पङ्के लुठिष्यामि तदेयं भूर्मद्गुपृष्ठेव विलयं यास्यतीति विचार्य कृपया न यः पङ्कालेपं तनुत इति, तथा यो मुस्तां नादत्ते न गृह्णाति, अपिशब्दो निश्चये, कस्मात्, उरगनगरभ्रंशभयतः चेदहं भुवो मुस्तामुत्खनिष्यामि तदा पन्नगनगरोत्खननमपि भविष्यतीति विमृश्य न तामदात्, तथा यो घर्घररवं घर्घरशब्दं न धत्ते, कीदृशः, ब्रह्माण्डस्फुटनसघृणः ब्रह्माण्डस्य यत् स्फुटनं तत्र सघृणः स दयः यद्यहमन्यवराहवद् घर्घररवं विधास्ये तदा ब्रह्माण्डस्फोटो भविष्यतीति, अतएव विश्वस्योपरि दयासत्त्वादितरदपि वराहचरितं तावन्नादृतवानिति ॥ १७ ॥

(१८) पातु त्रीणि जगन्ति सन्ततमकूपारात्समभ्युद्धरन्
धात्रीं कोलकलेवरः स भगवान्यस्यैकदंष्ट्राङ्कुरे ।
कूर्मः कन्दति नालति द्विरसनः पत्रन्ति दिग्दन्तिनो
मेरुः कोशति मेदिनी जलजति व्योमापि रोलम्बति ॥

कोलकलेवरो वराहावतारः स भगवांस्त्रीणि जगन्ति भूर्भुवस्स्वर्लक्षणानि सन्ततं निरन्तरं पातु, किं कुर्वन्, धात्रीं भुवमकूपारात्समुद्रात्समभ्युद्धरन्, स इति कः, यस्य क्रोडस्य एकदंष्ट्राङ्कुरे एकोऽद्वितीयो दंष्ट्राङ्कुरो दंष्ट्रैवाङ्कुरो दंष्ट्राङ्कुरस्तस्मिन्, कूर्मः कन्दति कन्दइवाचरति कन्दति, कूर्मस्य सकलभूभारोद्धारकत्वादधःस्थित्याङ्कुरंप्रति कन्दकल्पना घटत इति, तथा यस्य दंष्ट्राङ्कुरे द्विरसनः द्वे रसने जिह्वे यस्य स द्विरसनः सामान्यतः सर्पवाच्ययमत्र प्रकरणाच्छेषाहेर्वाचकः स नालति नालमिवाचरति नालति, तथैव यस्य दंष्ट्राङ्कुरे दिग्दन्तिनो दिग्दन्ताः पत्रन्ति पत्राणी वाचरन्ति पत्रन्ति, तथा तत्रैव मेरुः कनकाचलः कोशति कोशः कोरकः स इवाचरति कोशति, तथा तत्रैव मेदिनी जलजति जलजं कमलं तदिवाचरति जलजति, तथा यस्य दंष्ट्राङ्कुरे व्योमाप्याकाशमपि रोलम्बति रोलम्बो भ्रमरः स इवाचरति रोलम्बतीति, अत्र कन्दतीत्यादिषु सर्वत्र सर्वप्रातिपदिकेभ्यः क्विविति क्विपि तस्य लोपो ध्येयः ॥ १८ ॥

(१९) पातु श्रीस्तनपत्रभङ्गिमकरीमुद्राङ्कितोरःस्थलो
देवो वः स जगत्पतिर्मधुवधूवक्त्राब्जचन्द्रोदयः ।
क्रीडाक्रोडतनोर्नवेन्दुविशदे दंष्ट्राङ्कुरे यस्य भू-
र्भाति स्म प्रलयाब्धिपल्वलतलोत्खातैकमुस्ताकृतिः ॥

स देवो जगतां पतिर्जगत्पतिर्विष्णुर्वो युष्मान्पातु रक्षतु, कीदृशः, श्रीस्तनपत्रभङ्गिमकरीमुद्राङ्कितोरःस्थलः श्रिया लक्ष्म्या ये स्तने कुचौ तयोर्याः पत्रभङ्ग्यः पत्रलताः कस्तूरिकाविरचितास्तासु या मकर्यस्तासां मुद्रया प्रतिबिम्बेनाङ्कितं चिह्नितमुरःस्थलं हृदयस्थलं यस्य सः यदा हरिणा श्रीःसमालिङ्गिता तदा तत्स्तनाश्लेषे तद्गतमृगमदपत्रलतामकर्यः उरःस्थले प्रतिबिम्बिता इति भावः, पुनः कीदृशः, मधुवधूवक्त्राब्जचन्द्रोदयः मधोर्मधुनाम्नो दैत्यस्य या वध्वो ललनास्तासां यानि वक्त्राब्जानि मुखकमलानि तत्र चन्द्रोदय इव चन्द्रोद्गमइव यः सः, यथा चन्द्रोदयेऽब्जानि सङ्कोचमाप्नुवन्ति तथा हरेरुदयात्तद्वधूवक्त्राम्भोरुहाणि निःश्रीकाण्यभवन्निति भावः, स इति कः, यस्य क्रीडाक्रोडतनोः क्रीडया लीलया धृता क्रोडाकारा तनुः शरीरं येन सः तस्य लीलासूकररूपस्य दंष्ट्राङ्कुरे भूर्भूमिः प्रलयाब्धिपल्वलतलोत्खातैकमुस्ताकृतिः प्रलयाब्धिरेव पल्वलतलमल्पसरोऽधोभागस्तस्मादुत्खाता उत्पाटिता एका अद्वितीया मुस्ताकारा भाति स्म शुशुभे, किंविशिष्टे दंष्ट्राङ्कुरे, नवेन्दुविशदे नवेन्दुवद्बालचन्द्रवद्विशदे निर्मले अर्धचन्द्राकारत्वात्तद्दंष्ट्राया इति ॥ १९ ॥

(२०) निःकन्दामरविन्दिनीं स्थपुटितोद्देशां कसेरुस्थलीं
जम्बालाविलमम्बु कर्तुमितरा सूते वराही सुतान् ।
दंष्ट्रायां प्रलयार्णवोर्मिसलिलैराप्लावितायामियं
यस्या एव शिशोः स्थिता विपदि भूः सा पुत्रिणी पोत्रिणी ॥

सा पोत्रिणी वराही पुत्रिणी पुत्रोऽस्यास्तीति पुत्रिणी पुत्रवतीत्यर्थः पोत्रं वराहमुखाग्रं तदस्या अस्तीति पोत्रिणीति, अथ कथमियमेव पुत्रिणीत्याह, यस्या एव वराह्याः शिशोर्बालकस्य दंष्ट्रायां विपदि प्रलयकाले भूर्वसुमती स्थिता, अन्यथा प्रलयार्णवकल्लोलैर्भूः पातालमगमिष्यद्यद्ययं स्वदंष्ट्रायां नाधारयिष्यत्, अत एव महापदि येन भूर्धृता, बालकेनाप्येतावद्गुरोद्वहनं कृतमितिमहच्चित्रम्, किंविशिष्टायां तस्यां, प्रलयार्णवोर्मिसलिलैराप्लावितायां प्रलयार्णवस्योर्मयः कल्लोलास्तेषां यानि सलिलानि तैराप्लावितायां, स्नानं सवनमाप्लव इति हेमकोशः, अथान्यवराहीसुतानामसत्कृत्य समुद्भावनेनेतरस्यैव विशेषं द्योतयन्नाह, इतरा अन्या, वराही सुतान् सूते जनयति, किं कर्तुम्, अरविन्दिनीमम्भोजिनीं, निःकन्दां समूलोन्मूलितकन्दां कर्तुं, तथा कसेरुस्थलीं कन्दविशेषवतीं, स्थपुटितोद्देशांस्थपुटत्वं विषमोन्नतत्वं विद्यते येषु तेस्थपुटिताः, अत्र भावप्रधानो निर्देशो द्व्येकयोरितिवत्, ईदृग्विधा उद्देशा यस्याः सा तां विषमोन्नतां भूमिं विधातुमित्यर्थः, तथा अम्बु पानीयं जम्बालाविलं जम्बालेन पङ्केनाविलं कलुषं कर्तुं यतोऽन्वहं सरसि मज्जनमेव कुर्वते क्रोडा इति तेषां स्वभाव इति, दंष्ट्रायां पुनरर्णवोर्मिसलिलैरिति वा पाठस्तत्र पुनःशब्दो विशेषार्थे शेषं तथैवेति ॥ २० ॥

(२१) दृप्यद्दैत्यनितम्बिनीजनमनः सन्तोषसङ्कोचनः
कुर्याद्विश्वमनीश्वरं स भगवान्क्रोडावतारो हरिः ।
यद्दंष्ट्राङ्कुरकोटिकोटरकुटीकोणान्तरस्थेयसी
पृथ्वी भात्यवदातकेतकदलालीनेव भृङ्गाङ्गना ॥

स भगवान्क्रोडावतारो हरिर्विश्वं जगत् अनीश्वरं न विद्यते ईश्वरः स्वामी यस्य तादृशं कुर्यात् सर्वेषामपि जगज्जन्तूनां स्वतः स्वामित्वं विदध्यात् न कस्यचित्कश्चिदनुचरः स्यादिति भावः, अनश्वरमिति पाठेत्वनश्वरमक्षयि विश्वं कुर्यादित्यर्थः, किंविशिष्टः, सः, दृप्यद्दैत्यनितम्बिनीजनमनः संतोषसंकोचनः दृप्यन्यौवनमदोत्कटो यो दैत्यनितम्बिनीजनस्तस्य यो मनःसंतोषश्चित्ताल्हादस्तं संकोचयतीतितथाभूतः, स इति कः, यद्दंष्ट्राङ्कुरकोटिकोटरकुटीकोणान्तरस्थेयसी यस्य क्रोडस्य यो दंष्ट्राङ्कुरस्तस्य या कोटिरग्रं सैव कोटरकुटीं निष्कुहभवनं तस्या यत्कोणान्तरं गृहैकदेशान्तरालं तस्मिन्स्थेयसी अतिशयेन स्थिरा स्थेयसी ईयसि प्रियस्थिरेतिस्थादेशः, पृथ्वी अवदातकेतकदलालीना अवदातमुज्वलं यत्केतकस्य दलं पत्रं तस्मिन्नालीना श्रिता भृङ्गाङ्गनेव भृङ्गीव नातिशोभते, तद्दंष्ट्राङ्कुरस्य श्वेतत्वात्केतकदलसदृशत्त्वं तत्र स्थितायाः पृथ्व्या भृङ्गाङ्गनासमानत्वमिति भावः ॥ २१ ॥

(२२) लीने श्रोत्रैकदेशे नभसि नयनयोस्तेजसि क्वापि नष्टे
श्वासग्रासोपभुक्ते मरुति जलनिधौ पादरन्ध्रार्धपीते ।
पोत्रप्रान्तैकरोमान्तरविवरगतां मार्गतश्चक्रपाणेः
क्रोडाकारस्य पृथ्वीमकलितविभवं वैभवं वः पुनातु ॥

क्रोडाकारस्य चक्रपाणेर्विष्णोरकलितविभवमनवगतसमृद्धिं वैभवं विभुत्त्वं वो युष्मान्पुनातु पवित्रयतु, तदेव भगवतो विभुत्वमभिव्यनक्ति, किंविशिष्टस्य तस्य, पोत्रप्रान्तैकरोमान्तरविवरगतां विष्णोः पोत्रप्रान्ते वराहमुखाग्रे यदेकरोमान्तरं लोमान्तरालं तद्विवरगतां तद्रन्ध्रान्तः प्राप्तां पृथ्वीं मार्गतः अवलोकयतः गवेषयत इति यावत् मार्गअन्वेषणे, कदा गवेषणमित्याह, नभस्याकाशे श्रोत्रैकदेशे लीने प्रविष्टे सति, तथा तेजसि सूर्याचन्द्रमसोरितिशेषः नयनयोर्विषये क्वापि नष्टे सति, तथा मरुति वायौ श्वासग्रासोपभुक्ते श्वासग्रासः श्वासग्रहणं तेनोपभुक्तस्तस्मिन्सति, तथा जलनिधौ समुद्रे

पादरन्ध्रार्धपीते पादरन्ध्रं पादविवरं तदर्धेन पीतस्तस्मिन्सति, एवं पञ्चापि महाभूतानि वपुष्येव लीनानि एतावता तद्देहस्यातिगुरुत्वं निवेदितम् ॥ २२ ॥

(२३) अष्टौ यस्य दिशो दलानि विपुलः कोशः सुवर्णाचलः
कान्तं केसरजालमर्ककिरणा भृङ्गाः पयोदावली ।
नालं शेषमहोरगः प्रविततं वारांनिधेर्लीलया
तद्वः पातु समुद्धरन्कुवलयं क्रोडाकृतिः केशवः ॥

वारांनिधेः समुद्रात्तत्कुवलयं पृथ्वीमण्डलं पक्षे नलिनं समुद्धरन्क्रोडाकृतिः केशवो वो युष्मान्पातु, किंविशिष्टं तत्, प्रविततं विस्तीर्णं, अथ भूमण्डले नलिनतौल्यं समुद्भावयति तदिति, यस्य कुवलयस्याष्टदिशो दलानि पत्राणि वर्त्तन्ते नलिनदलवत्, तथा सुवर्णाचलो मेरुर्यस्य विपुलो विस्तीर्णः कोशः कोरकः, तथा यस्य कुवलयस्यार्ककिरणाः सौराः किरणाः कान्तं मनोज्ञं केसरजालं परागवृन्दमभूत्, तथा यस्य पयोदावली मेघश्रेणिः भृङ्गा अभूवन् मेघानां कृष्णत्त्वाद् भृङ्गसाम्यम्, तथा शेषमहोरगः शेषनागो यस्य नालमभूत्, यतः कुवलये नालेन भाव्यं तथैतस्यापीति भावः ॥ २३ ॥

(२४) बिभ्राणोऽभिनवेन्दुकोटिकुटिलं दंष्ट्राङ्कुरं लीलया
क्रोडाकारधरो हरिः स भगवान्भूयाद्विभूतिप्रदः ।
यस्योत्क्षिप्तवतः क्षमाकमलिनीमालम्बमानःक्षणं
लोलद्बालमृणालनालतुलनां भेजे भुजङ्गेश्वरः ॥

स भगवान्क्रोडाकारधरो हरिर्विभूतिप्रदः श्रीदायको भूयात्, किंकुर्वाणः, लीलया क्रीडया अभिनवेन्दुकोटिकुटिलं अभिनवो य इन्दुस्तस्य या कोटिरग्रं तस्यातीववक्रत्वात्तद्वत्कुटिलं दंष्ट्राङ्कुरं बिभ्राणो धारयन्, किं च, यस्य क्रोडाकारस्य विष्णोः क्षमाकमलिनीं पृथ्वीसरोजिनीमुत्क्षिप्तवत उत्पाटितवतः सतः क्षणं यावदालम्बमान आसमन्ताल्लम्बमान उपनमन्सन् भुजङ्गेश्वरः शेषाहिः लोलद्बालमृणालनालतुलनां साम्यं भेजे इति, ॥ २४ ॥

(२५) मुक्तैर्यास्यति कुत्रचिद्वसुमती दंष्ट्राङ्कुरस्थेयसी
कुक्षौ क्षोभमवाप्स्यति त्रिभुवनं रुद्धैरमीभिः क्रमात् ।
इत्यस्वल्पविकल्पमीलितमतेः कण्ठे लुठन्तो मुहुः
क्रोडाकारधरस्य कैटभजितः श्वासानिलाः पान्तु वः ॥

क्रोडाकारधरस्य कैटभजितः कैटभनामानं दैत्यं जयतीति स तस्य विष्णोः श्वासानिलाः श्वासवायवो वो युष्मान्पान्तु रक्षन्तु, किंविशिष्टास्ते, इत्यस्वल्पविकल्पमीलितमतेः इति हेतोः अस्वल्पैर्बहुभिर्विकल्पैः कल्पनाभिः कृत्वामीलिता संकोचमापादिता मतिर्येन स तस्य कण्ठे गलकुहरे मुहुर्वारंवारं लुठन्तोऽन्तर्घोलनामासादयन्तः, इतीतिकिम्, अमीभिः श्वासानिलैर्मुक्तैर्बहिर्मुक्तैः सद्भिर्वसुमती भूः कुत्रचिदुड्डीय यास्यति अदृष्टा भविष्यतीत्यर्थः, किंविशिष्टा सा, दंष्ट्राङ्कुरस्थेयसी दंष्ट्राङ्कुरेऽतिशयेन स्थिरा, अयं भावः, मया यदि श्वासवायवो मोक्ष्यन्ते तदेयं भूःपतङ्गवदुच्छलिता क्व यास्यतीति न जानामि, तथा क्रमात् क्रमेण अमीभिः श्वासानिलैर्मध्ये रुद्धैः सद्भिः कुक्षौ त्रिभुवनं क्षोभमवाप्स्यति अतः श्वासानिलाः कण्ठे एव लुठन्तीति भावः ॥ २५ ॥

(२६) पातु वः कपटकोलकेशवो
यस्य निश्वसितमारुतोद्धुता ।
उच्छ्रितिप्रपतनैरचीक्लृप-
त्केलिकन्दुकतुलामिला मुहुः ॥

स कपटकोलकेशवः कपटेन कोलः कोलाकृतिः कपटकोलः स चासौ केशवश्च कपटकोलकेशवो वो युष्मान्पातु रक्षतु, स कः, यस्य निश्वसितमारुतोद्धुता निश्वसितमारुतैः श्वासवायुभिरुद्धुता उच्छलिता इला भूमिर्मुहुर्वारंवारं केलिकन्दुकतुलां केलेः क्रीडाया यः कन्दुकस्तस्य तुलां साम्यमचीक्लृपत् अकरोदित्यर्थः, कैः कृत्वा, उच्छ्रितिप्रपतनैः उच्छ्रितिरुत्पतनं प्रपतनमधः पतनं तैः, यथाऽन्यः कन्दुकः क्रीडया शिशुभिरुत्क्षिप्यतेऽपक्षिप्यते च तथेयं भूरपि श्वासवायुप्रेरितोर्ध्वाधःपतनैः कन्दुकतुलां तुलयतीति भावः ॥ २६ ॥

(२७) सिन्धुष्वङ्गावगाहः खुरविवरविशत्तुच्छतोयेषु नाप्तः
प्राप्ताः पातालपङ्के न लुठितरुचयः पोत्रमात्रोपयोगात् ।
दंष्ट्रा विष्टेषु नाप्तः शिखरिषु च पुनः स्कन्धकण्डूविनोदो
येनाद्धारे धरित्र्याः स जयति विभुताविघ्नितेच्छो वराहः ॥

स विभुताविघ्नितेच्छो वराहो जयति, विभुतया व्यापकत्वेन विघ्निता विघ्नं प्राप्ता इच्छा यस्य सः, यद्ययं वराहो विभुर्न स्यात्तर्हि सिन्धुष्ववगाहादिसुखमप्याप्नुयात्परं तु विभुत्वान्नाप्तं तेनेति, कथंभूतः सः, येन धरित्र्या भूमेरुद्धारे सिन्धुष्वङ्गावगाहः समुद्रेषु शरीरेण जलक्रीडावगाहनं नाप्तः न लब्धः, किंविशिष्टेषु तेषु, खुरविवरविशत्तुच्छतोयेषु खुरविवरेषु शफरन्ध्रेषु विशत्प्रविशदत एव तुच्छमल्पं तोयं जलं येषु ते तेषु अतोऽङ्गक्षालने जलं न पर्याप्तमिति भावः, तथा च पुनः पातालपङ्के पोत्रमात्रोपयोगात्केवलं तन्मुखाग्रमात्रविलेपात्र लुठितरुचय इतस्ततः पृष्ठपरावर्तनेच्छा न प्राप्ताः, यतः,

पोत्रमित्युच्यते प्राज्ञैर्हलसूकरयोर्मुखम् ।

पङ्कस्य मुखमात्र एवोप योगो जात इत्यर्थः, कि च, स्कन्धकण्डूविनोदः स्कन्धयोरंशयोर्या कण्डूः खर्जूस्तस्या विनोद उपरामः स्फोटनमिति यावत् स शिखरिषु गिरिषु नाप्तो नलब्धः, किंविशिष्टेषु गिरिषु दंष्ट्राविष्टेषु दंष्ट्रास्वाविष्टाः प्रविष्टा ये तेषु, यतः सर्वेऽपि शिखरिणस्तद्दंष्ट्रायामेवाविशन्नतः क्व स स्वस्कन्धखर्जूविनोदमापादयेदिति भावः ॥ २७ ॥

॥ इति श्रीगुणविनयविरचितायां खण्डप्रशस्तिविवृतौ वराहावतारवर्णनम् ॥

---

॥ श्रीः ॥

## ॥ श्रीदशङ्कराचार्यसभाजितपुण्यग्रामस्थसभावृत्तान्तवर्णनम् ॥

अथ गिरीन्द्रनिकेतनगिरीन्द्रतनयाधिष्ठितवामाङ्गपरिचर्यासङ्गिचेतसः शास्त्रगम्भीरवारिधेः सकलसच्छात्रनिकरमनोगताविद्यातिमिरापसारणैकतरणेः श्रीगुरुचरणस्य परिचर्यया परिचितशास्त्रलेशावावां पुण्याख्यनगरे सभायां वृत्तं वृत्तं धर्ममार्गप्रचारसमुत्सुकरसिकजनमनःकुतूहलाय वर्णयावः । मुम्बय्याख्यनगरनिवासिना भट्टविष्णुशास्त्रिनामकेन परमगुरुचरणविरचितविधवोद्वाहशङ्कासमाधिस्थशङ्काग्रन्थान्ननुनचेत्यादिपदरहितान्स्वसिद्धान्तकोटित्वेन पुनःपुन“र्नष्टेमृते”इति वचनं च स्वसिद्ध न्तसाधकतयोपन्यस्य विरचितं मूर्खजनप्रतारणैकफलकं विधवोद्वाहविवेकाख्यं ग्रन्थं यथार्थशास्त्रतत्त्वैकपक्षपातिभ्यः काशिकपाठशालाप्रधानाध्यक्षश्रीमद्ग्रिफिथसाहिबाभिधप्रभुवर्येभ्यः प्राप्य परमगुरुचरणकृतविधवोद्वाहशङ्कासमाधेर्विद्वत्कृतविचारस्यैव तद्ग्रन्थखण्डनसमर्थत्वेपि सकलजनमनःसन्तोषाय दावानलमिव दुर्वृत्तविधवाहृदयकाननेङ्कुरितसतोषाणां, हिमांशुमिव मुकुलितसतीमानससरोजातसुखानां, दोषाभासनिरासनामकं परमगुरुवरश्रीराजारामशास्त्रिभिर्विरचितग्रन्थस्य तिलकं समुपन्यबध्नन्नस्मद्गुरुवर्याः श्रीमद्बालशास्त्रिणः । तमिमं मुद्रितं ग्रन्थं बहुतरविद्वज्जननयनचकोरचन्द्रीभूतं विज्ञाय संजातस्वचिकीर्षितभङ्गविस्रम्भोपि भट्टविष्णुशास्त्री स्वदेशे संस्कृतविद्याह्रासं विलोक्य केवलमपण्डितजनसमाजे यः कोपि पुनर्विवाहस्य शास्त्रसंमतत्वविषये विवदेत तेन सह विवादं करिष्यामीत्येवं प्रालपत् । अथ तत्प्रलापेन संदिहानैः श्रुतिस्मृतिसदाचारशिष्टधर्मतत्त्वनिर्णिनीषुभिस्तद्देशीयैर्महाधनिकैर्नास्तिकमतप्रचारकालिकं श्रीमज्जगद्गुरुशङ्कराचार्यवर्याणामनुष्ठानं स्मरद्भिः परमप्रार्थनया स्वदेशमानीताः श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीऋष्यशृङ्गपुरषड्दर्शनसंस्थापकश्रीकमलानिकेतकरवीरसिंहासनेश्वरश्रीमच्छङ्कराचार्यान्वयसंजाताभिनवश्रीविद्याशङ्करभारतीकरकञ्जोद्भवश्रीविद्यानरसिंहभारतीस्वामिचरणाः स्वागमनमार्गप्रान्तवर्त्तिनगराणि पत्तनानि च भगीरथानीतगाङ्गौघइव पुनन्तः पुण्यग्रामं प्राप्य काशीप्रभृतिविविधक्षेत्रराजधानीस्थपण्डितान् नानादेशीयान् भूपालान् धनिकांश्चाहूय सुधर्मामिव धर्माभासनिरासपूर्वकसनातनसद्धर्मविवेचनाय सभां सभाजयामासुः । तस्यां च वादी भट्टविष्णुशास्त्री प्रतिवादिनो गजेन्द्रगडकरोपनामकनारायणाचार्याः । उभयपक्षीयाः पञ्चपञ्च मध्यस्था इमे, गोडबोलेइत्युपनामकाभिकूशास्त्री, खांबेटेइत्युपनामकदिनकरशास्त्री, खाडिलकरोपनामकआपाशास्त्री, ऐनापुरोपनामकभिकाचार्याः, कोल्टकरोपनामकगणेशशास्त्री, इति । चिपुलकरोपाह्वकृष्णशास्त्री, माटेइत्युपाह्वव्यङ्कटशास्त्री, आगाशेइत्युपाह्वरावजीशास्त्री, शेंडेइत्युपाह्वरघुनाथशास्त्री, गाडीगिलोपाह्वकेशवशास्त्री, इति च वादिप्रतिवादिलिखितशास्त्रार्थपत्राणां सारासारौ विविच्योचितार्थस्य संमन्तारः यत्पक्षेऽधिका मध्यस्थसंमतयस्तत्पक्षस्य जयः समतीनां साम्ये उचितपक्षनिर्णायकस्योभयपक्षीयमध्यस्थानुमतमध्यस्थाऽध्यक्षस्य पण्डितवरगोपालाचार्यस्य संमत्या पक्षजयनिर्णयः अन्ये च सर्वे निषेधकपक्षीया नारायणाचार्यलिखितलेखसहायकाः । उत्तेजकपक्षीयाश्च भट्टविष्णुशास्त्रिलेखसहकारिणः, इत्येवं नियमपुरःसरं कृतशास्त्रार्थस्यायं सारांशाभिप्रायः । उत्तेजकपक्षीयाणां मूर्द्धाभिषिक्तं मनुनारदपराशराणां समानानुपूर्वीकं नष्टे मृते इत्येकं वचनं, तत्र नारदस्मृतिस्थ तूपक्रमोपसंहारानुरोधेन नियोगपरमेव, मनुपराशरोक्तं त्वद्य यावन्मनुभाष्यकृन्मेधातिथिमारभ्य न केनापि ग्रन्थकृता एकदेशिमताभिप्रायेणाप्युत्तेजकपक्षीयानुगुणार्थपरतया व्याख्यातं तादृशार्थपरत्वे न तु नामापीत्यादिबहूनां निषेधकस्मृतिवचसां विपरीतार्थकल्पनाप्रसङ्गाद् इति निषेधकवचनार्थानुसृतार्थपरतया सुयोजत्वे ऽस्य विपरीतार्थं परिकल्प्य परःशतानां पुनर्विवाहनिषेधकवचनानां स्वारसिकार्थपरित्यागो ऽनुचित इति न कथमपि विधवापुनर्विवाहस्य शास्त्रविहितत्वसंभव इति निषेधकपक्षीयाणां मतम् । श्रुतिस्मृतिवचसां तात्पर्यनिर्णयो बाधकश्रुत्याद्यनुगुण एव कर्त्तव्यो न पुनः केवलमापाततः प्रतीयमानेर्थे तात्पर्यमवधार्य तत्तद्विरुद्धवचसां स्वविषयातिरिक्तत्वेन संकोचो युक्तः । अन्यथा “असीवरुणयोर्मध्ये बालरण्डां तपस्विनीम् । बलात्कारेण गृह्णीयात्तद्विष्णोः परमं पदम्” । इत्यादिवचनानां पदैराभासमानमर्थं स्वीकृत्य रण्डाभिगमननिषेधकवचसामसीवरुणान्तःप्रदेशातिरिक्तदेशविषयकत्वेन व्याख्याने महानधर्मः प्रवर्त्तेतेत्याशयस्तेषाम् । मनुनारदपराशरेतरस्मृतिवचसां पुनर्विवाहविधायक-

त्वेनाभासमानानां तात्पर्यं तु तैस्तैरेव ऋषिभिः स्वयं स्पष्टमेव प्रतिपादितम् । यथा कात्यायनः स तु यद्यन्यजातीय इत्याद्युक्तैतद्वचनस्य धर्म्यविवाहबोधकत्वशङ्कानिराकरणाय क्लीबं विहाय पतितं या पुनर्लभते पतिम् । तस्यां पौनर्भवो जातो व्यक्तमुत्पादकस्य स इत्यनेन पुनर्विवाहोत्पन्नसन्ततेः पौनर्भवत्वजात्यन्तरं प्राह । एवं वसिष्ठोपि क्लैब्यपातित्यादिदोषविशिष्टपतिकायाः पुनर्विवाहं विधाय, या वा क्लीबं पतितमुन्मत्तं वा भर्तारमुत्सृज्यान्यं पतिं विन्दते मृते वा सा पुनर्भूर्भवति इति वचनेन पुनर्विवाहसंस्कृतायाः पुनर्भूत्वरूपजात्यन्तरकथनात् पुनर्विवाहस्य धर्म्यत्वं निराकरोत् । एवमन्येपि । ननु व्यभिचारप्रवृत्तानां विधवास्त्रीणां ज्ञातिदण्डादिभयेन गुप्तबालहत्यादिकरणापेक्षयेदृशपुनर्भूत्वरूपाजात्यन्तरं स्वीकृत्य पुनर्विवाहकरणमुचितमिति चेत्सत्यम् । न वयं बालहत्यादिपातकमङ्गीकृत्यापि तादृशविधवानां पुनर्विवाहो न कर्त्तव्य इति ब्रूमः, अपि तु व्यभिचाररता विधवास्तत्समशीलैर्व्यभिचारिपुरुषैरवश्यं विवाह्याः । परं तु तस्या अन्नं नभोक्तव्यं पुनर्भूः सा प्रकीर्त्तितेति वचनेन तया सहाचारादिव्यवहारस्य निषिद्धत्वात् सनातनधर्ममार्गमनुसिसीर्षुभिस्तज्जातीयेन सह भोजनादिव्यवहारो न विधेय इति । परलोकाकाङ्क्षिणीभिः सतीभिर्विधवाभिश्चेदृशशास्त्रविरुद्धमधर्म्यं विवाहमकृत्वा ब्रह्मचर्यव्रतमनुतिष्ठन्तीभिः फलमूलाशनेनायुः क्षपणीयमिति । अयमेवार्थः कामं तु क्षपयेद्देहं फलमूलाशनैः शुभैः न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु इतिवचनेन स्पष्टमभिहितो मनुना । इत्थं संजातविवादोत्तरं षण्णां मध्यस्थानां मध्यस्थाध्यक्षस्य च संमतिः पुनर्विवाहः शास्त्रविरुद्ध इति ब्राह्मणादित्रिषु वर्णेषु विधवानां पुनर्विवाहो नैव कार्य इत्येतदर्थे ऽभूत् । अवशिष्टेषु तत्पक्षीयेषु चतुर्ष्वेकः केवलं नष्टे मृते इत्यस्य पुनर्विवाहोत्तेजकपक्षीयैः कल्पितेनार्थेन शास्त्रसिद्धो भवति। परं तु अद्य यावत् केनाप्यकृतत्वादनेकनिषेधकवचनानुरोधाच्च कलौ न कर्त्तव्य इत्येतदभिप्रायं सममंस्त । अन्येस्त्रिभिर्नष्टे मृते इतिवचनेन सिद्ध्यति पुनर्विवाहस्तथापि तस्य गौणत्वादेकदेशीयमतानुसार्यापद्धर्मत्वादद्य यावदप्रचाराच्च संप्रति स आचारविषयो विधेयो न वेत्यस्य तत्त्वनिर्णयोप्यतिगहनो भयंकरश्चेतीदृशतत्त्वनिर्णये तत्र भवन्तः श्रीमज्जगद्गुरुस्वामिचरणा एव प्रमाणमित्येतदर्थं सममानि । इत्येवं संमतिपत्राणि वादपत्राणि च विलोक्य श्रीमज्जगद्गुरुस्वामिचरणाः अधिकतरसंमतिकत्वात्सयुक्तिकत्वाच्च निषेधपक्षस्य ब्राह्मणक्षत्रियवैश्येषु विधवानां पुनर्विवाहो नैव कर्तव्यः अज्ञानतः कृते तां पुनरूढां हित्वा परित्यज्याश्वलायनोक्तं प्रायश्चित्तं कुर्यादित्यनुशासनं सनातनधर्मपथमनुसंचरतां स्वीयसच्छिष्यवर्गाणां कर्णपथं डिण्डिमघोषपुरस्सरं प्रापयित्वा सभाप्रारम्भदिनमारभ्यासमाप्ति संजातं वृत्तं स्वीयानुशासनसहितं संक्षेपतो महाराष्ट्रभाषया संमुद्र्य देशेदेशे प्रेषयामासुः । ततो भवत्कृतस्यास्मद्गुरुचरणकृतविधवोद्वाहशङ्कासमाधेः खण्डनाभासस्यावलोकनेनैव विद्वद्भिर्मेरुसर्षपयोरिव गुरुचरणानां भवतश्च बोधस्य तारतम्यं स्पष्टं ज्ञायते तथाप्यस्मन्नानादेशीयपण्डितसमाजे ऽस्मदभिमुखं गुरुचरणग्रन्थस्य द्वित्रस्थलानामुपपादनमेवालं भवतो बोधपरीक्षायै खण्डनं तु दूरे । अन्यथा यथेष्ट कानि चित् संस्कृतवाक्यानि संयोज्य केवलं मूर्खजनप्रतारणायैवायं ग्रन्थ उपनिबद्ध इति प्रसिद्धिर्दुर्निवारा वर्त्तत एवेत्येतदर्थबोधकं महाराष्ट्रभाषायां मुद्रितं पत्रं भट्टविष्णुशास्त्रिसमीपमावाभ्यां प्रेषितमवलोक्यापि स विवादाय सभायां नैवागत इति द्वितीयः पराभवस्तस्येति । ततः सर्वे पण्डिताः प्रत्येकं लब्धमहार्हौर्णावस्त्रयुगलसहितशतमुद्रापारितोषिकास्तत्रागतैस्तद्देशीयैश्च धनिकैर्यथायथं कृतसंमाना गृहीतश्रीमज्जगद्गुरुस्वामिचरणप्रसादाशीर्वचनाः स्वंस्वं नगरं ययुरिति शम् ॥

धर्माधिकार्युपाख्यढुण्ढिराजपन्तः
पण्डितशालिग्राममिश्रः

---

# THE APHORISMS
OF THE
# YOGA PHILOSOPHY,
OF
PATAÑJALI.

(*Continued from p 77*)

*a.* He (now) states another Siddhi *

**समानजयात्प्रज्वलनम् ॥ ४१ ॥**

Aph 41. A blazing (takes place) from conquering the air Samána.

*b.* The ascetic appears as if wonderfully blazing by light of the fire of the stomach (Jaṭharágni) being uncovered from conquering, i e., from subduing with restraint, the air called Samána which exists (in the body) surrounding the fire of the stomach.†

*a.* He (now) states another Siddhi. ‡

---

* सिद्ध्यन्तरमाह ।

† अग्निमावेष्ट्य व्यवस्थितस्य समानाख्यस्य वायोर्जयात् संयमेन वशीकारान्निरावरणस्याग्नेरद्भुतं तेजसा प्रज्वलन्निव योगी प्रतिभाति ।

‡ सिद्ध्यन्तरमाह ।

तस्यावश्य साधनमस्ति मनोरथपरंपराहूतचेतसो हि तन्नास्ति यन्न कामनाविषयीभवति । न च तस्य सर्वस्य साधनं भवति सर्वज्ञत्वमपि के चित्कामयन्ति न च तस्योपायसंभवः । अथ तदिच्छावतो ऽतत्साधने कर्तृता नोपपद्यते । तन्न । दृश्यन्ते हि ग्रामाभिगमनकामा हि यादृच्छिकीषु क्रियासु प्रवर्त्तमानाः। अपि च सर्वोभ्युपायार्थ्येव पुरुषस्तथापि प्रायशस्तद्विरोधिष्वे-वेन्द्रियार्थेषु प्रवर्त्तमाना दृश्यन्ते । अत्रोच्यते । स्वर्गादिकं कामयमानस्य तदेव कार्यतया बोद्धुमवकल्पते । यदेव तस्य काम्यमानस्य सिद्ध्यनुगुणमन्यथा हि तत्कामिना सता तत्का-र्यतया ऽनवबुद्धं स्यात् । अपरित्यक्ततत्कामनासबन्धो हि त-त्साधनं कार्यतया ऽवबुध्यते। तस्माद्यत्कामिनो यत्कार्यतयो-पदिश्यते तत्तस्य काम्यस्य साधकमिति नियोज्यकार्यान्वया-ऽनुपपत्त्यैव गम्यते । एवं सति किं फलमित्याह ।

लिङादिस्तत्र कार्यं चेत् क्रियामेवावबोधयेत् ।
समन्वयो नियोज्येन तदानीमेव हीयते ॥

कथमित्याह ।

क्रिया हि क्षणिकत्वेन न कालान्तरभाविनः ।
स्वर्गादेः साध्यमानस्य न शक्ता जननं प्रति ॥
इष्टस्याजनिका सा च नियोज्येन फलार्थिना ।
कार्यत्वेन न संबन्धमर्हति क्षणभङ्गिनी ॥

कार्यविरोधि कर्मेति प्रमाणान्तरसिद्धम् । परिस्पन्दो ह्युत्तर-देशसंयोगोदयापवर्गीत्याशुतरविनाशिनी । स्वर्गश्च नियतदे-शान्तरकालान्तरभोगः। ननु प्रीतिमात्रवचनः स्वर्ग इति षष्ठाद्ये साधितं प्रतीतिसाधनेषु द्रव्येषु स्वर्गशब्दप्रयोगात्, न च तेषु स्वरूपनिबन्धन एव तत्प्रयोगः । प्रीत्यपगमे तदभावात् । न च तत्साधनवचनता तदनभिधाने घटते। तदभिधानाभ्युपगमे न तद्वाचकतैव, लक्षणया तत्साधने प्रयोगोपपत्तेः । तत्र शक्तिकल्पनापरिक्षयात् । अखण्डशब्दतया च दण्डिन्यायस्या-संभवात्तदन्तर्गतस्य दण्डशब्दस्य दण्डप्रत्यायकत्वसंभवात् प्रीतेश्च कर्मानन्तरभावित्वमपि संभवत्येव। उच्यते, न प्रीति-मात्रवचनतया ज्योतिष्टोमादिचोदनासु स्वर्गशब्दस्य प्रयोगो-वगम्यते । अर्थवादेषु दुःखासभिन्नचिरतरोपभोग्याभिलाषोप-नेयप्रीतिश्रवणात् । तत्र यदि विध्युद्देशगतः स्वर्गशब्दस्तथा-विधप्रीतिपरप्रयोगतया वर्ण्यते तदातिपरोक्षार्थवादपदानां वृत्तिरादृता न भवेदिति तदानुगुण्येन तादृश्यामेव प्रीतौ स्व-र्गशब्दः प्रयुक्त इति निश्चीयते। तथावस्या नियतमेवं देशान्त-रभोग्या । अतो न कर्मानन्तरभाविनीति न तत्र कर्मण आ-शुतरविनाशिनः साधनतावकल्पते । यस्मिन्हि पूर्ववर्त्तिनि यविष्याद्यते तत्तस्य साधनमितिलोकप्रतीतिरत एव च विन-ष्टस्यापि कर्मणः शास्त्रेण साधनत्वं बोध्यते इति ये ब्रुवते तेपि निरस्ताः । एवं चासावाशुतरविनाशिनी क्रिया स्वर्गकामिना नियोज्येन सह कार्यतया संबन्धं नार्हति। स्वर्गं प्रति साधनत्वा-नुपपत्तेः ॥

शेष उत्तराङ्के

---

## ॥ अथ बालभारतस्य ॥

॥ तृतीयः सर्गः ॥

सुस्वादुशीतविशदः सुधारसो
यद्वक्त्रपद्मगतिसारसौरभः ।
कर्णप्रियोऽप्यजनि भारतीभवन्
कृष्णं तमानमत योगिनं जनाः ॥ १ ॥
दृष्टा न ते क्वचन पाण्डवा इति
ख्याते चरैः कुरुनरेश्वरस्तदा ।
लक्ष्ये क्व तानिति स चिन्तयाकुलः
पप्रच्छ संसदि नदीसुतादिकान् ॥ २ ॥
भीष्मोऽभ्यधत्त सुलभः शुभैकभू-
र्भूखण्डभूषणमणिर्युधिष्ठिरः ।
एभिश्चरैरमितिभिः स वीक्षितः
सर्वत्र पर्वतधुनीवनादिषु ॥ ३ ॥
यत्रातिशुद्धविधिविप्रमण्डली-
घुष्टत्रयीप्रमुदितस्त्रयीतनुः ।
काले जलं च तुहिनं च शक्तिमान्
धर्मं च मुञ्चति नृणामदुःखदम् ॥ ४ ॥
दुग्धैः सहर्षसुरभीस्तनच्युतै-
रामूलमद्रुतरसासु भूमिषु ।
वापीषु यत्र जलमुद्भवत्यहो
पातालनिर्यदमृतौघसंनिभम् ॥ ५ ॥
सत्कर्मकान्तवपुषाद्भुताद्भुत-
श्रीलक्षणेन सुतवत्सलात्मना ।
धर्मेण सत्यशुचिनाङ्घ्रिणान्वितो
देशोऽस्ति तत्र खलु धर्मनन्दनः ॥ ६ ॥
ऊचे सुशर्मनृपतिस्त्रिगर्तभू-
नाथस्तदा कुरुपतिं कृताञ्जलिः ।

ख्यातं चरैर्मम समस्तभूमिभाग-
देशेषु मत्स्यविषयोऽद्य वर्ण्यते ॥ ७ ॥
तन्निश्चितं चरति गुप्तचर्यया
तत्रैव धर्मतनुजः सहानुजः ।
दृश्यश्च कैश्चन कदाप्युपक्रमैः
स्यान्नैष वो हरिरयोगिनामिव ॥ ८ ॥
तन्मत्स्यराजनगराद्गुरामहे
वृन्दं गवां तदिह चेद् द्विषः स्थिताः ।
तद्गोपरीभवतृषा गमिष्यति
प्रत्यक्षतामसमयेऽपि फाल्गुनः ॥ ९ ॥
तत्रापि ते यदि भवन्ति न ध्रुवं
वीरप्रकाण्ड तदपाण्डवं जगत् ।
तत् तादृगद्भुतविभूतिभूषणं
मत्स्याधिभूर्ननु विगृह्य गृह्यते ॥ १० ॥
यो नाम धामचयधाम कीचक-
स्तस्याजनि क्षितिपतेश्चमूपतिः ।
दैवाज्जगाम जगतां स दुर्जयो
गन्धर्वकोपहुतभुक्पतङ्गताम् ॥ ११ ॥
तन्मत्स्यभूमिविभुरस्तकीचकोऽ-
स्माकं सशल्यरहितेव शर्करा ।
आत्मप्रतापपरितापितात्मना
तं वीर कीर्तिपयसा समं पिब ॥ १२ ॥
गोत्रद्विषं सकलबन्धुमेकतो
दूरेण गोहरणतो हरामि तम् ।
तत्पत्तनं विभवमत्तमन्यतः
स्वामिन् गृहाण विहितोद्यमः स्वयम् ॥ १३ ॥
आदाय संविदमिमां सुशर्मणः
प्रोत्साहितस्तपननन्दनादिभिः ।
राजा रजःकलुषकीर्तिसिन्धुना
सैन्येन गोहृतिमतिस्ततोऽचलत् ॥ १४ ॥
दिग्भ्यो यशः स्वमिव देहतः स्वतः
पुण्यप्रतानमिव पावनं ततः ।
भर्ता त्रिगर्तविषयस्य याम्यदि-
ङ्मुक्त्वा विराटनगराज्जहार गाः ॥ १५ ॥

पूर्णेऽथ धर्मतनयस्य वत्सरे
गुप्ते तदा कलकलाकुलाननः ।
गोपालजालपतिरेत्य संसदि
श्वासोर्मिजर्जरितगीर्जगौ नृपम् ॥ १६ ॥
यः कीचकेन करिणेव पल्वल-
श्चक्रे पुरा स्फुरदकीर्तिकर्दमः ।
देव त्रिगर्तनृपतिः स एव ते
जह्रे पुरस्य सुरभीरभीलुकः ॥ १७ ॥
क्रोधोद्धुरः स धरणीधवो धनु-
र्ध्वानौघरुद्धमरुदध्वकन्दरः ।
प्रच्छन्नपाण्डुसुतसंयुतस्ततः
संनद्धदुर्धरचमूचयोऽचलत् ॥ १८ ॥
तैः सूर्यशङ्खमदिराश्वनामभिः
पुत्रैर्युतः स नृपतिर्द्विषां बलम् ।
प्रापेन्दुशुक्रबुधबद्धसंनिधि-
र्ध्वान्तं प्रगे प्रतिपदंशुमानिव ॥ १९ ॥
भोक्तुं रसेन चतुरङ्गतां गतं
सैन्यं समानसमयं सुशर्मणः ।
तत्कृष्टकार्मुकचतुष्टयच्छला-
ज्जज्ञे यमस्ततचतुर्मिताननः ॥ २० ॥
वीरोत्करेऽवनिविलासशालिनि
स्वर्गाङ्गनासमुदये वियज्जुषि ।
अन्तःपटाभमिषुमण्डपं व्यधु-
स्ते पाणिपीडनमहोत्सवे तयोः ॥ २१ ॥
स्पर्धानुबन्धिसुरसिन्धुमत्सरा-
न्नेतुं सहस्रमुखतां निजं यशः ।
युद्धक्रियानिरवधीन् क्रुधावधीद्
वीरान् सहस्रमथ मत्स्यपार्थिवः ॥ २२ ॥
तादृक्सहस्रमितवीरमर्दन-
प्रोद्भूतदुःसहमहःसहस्रकम् ।
मत्स्यावनीशमवलोक्य लज्जया
क्रम्यां सहस्ररुचिरम्बुधौ व्यधात् ॥ २३ ॥
उद्दण्डकाण्डकृतवैरिमण्डला-
वर्तस्त्रिगर्तनृपतिस्ततः क्रुधा ।

भ्रूभङ्गभीषणमुखः करालदृग्-
द्राङ्गत्स्यभूमिविभुमभ्यधावत ॥ २४ ॥
कुन्त रयेण करमुक्तमाहवे
दूरात् प्रविश्य हृदयेन विद्विषाम् ।
पृष्ठेषु निःसृतमहो मुहुः करे
वेगाय यस्य जगृहुस्तुरङ्गिणः ॥ २५ ॥
दूरे पुरः स्थितमपि द्विषं प्रति
क्रुद्धा विमुच्य विशिखं महारथाः ।
पश्चाद्विमुक्तममुमश्ववेगतोऽ-
पश्यन् मृतं वलितकन्धरा यदि ॥ २६ ॥
निर्भर्त्सितेव भटरक्तसिन्धुभिः
संध्या जगाम विलयं स्वयं तदा ।
अप्यन्धकारनिकरान्निकारवान्
क्षीणः क्षणेन रणरेणुडम्बरः ॥ २७ ॥
वीरासिपातधुतकुम्भिमण्डली-
कुम्भोत्थमौक्तिकगणानुकारिभिः ।
छिन्नोच्छलद्भटशिरोऽर्दिताम्बर-
स्वेदोदबिन्दुभिरिवोडुभिर्बभे ॥ २८ ॥
भ्रश्यत्कृपाणतलयोऽसिधेनुभि-
स्तद्भेदतः प्रबलमुष्टिलीलया ।
तस्यामशक्तिजुषि दन्तिवद्रदै-
स्तेनुस्ततोऽतिबलिनः कलिं भटाः ॥ २९ ॥
एवं बलेन बलिनः सुशर्मण-
स्त्रासं जवेन गमिते बले स्थितः ।
एको विराटजगतीपतिः प्रगे
निस्तारकाततिरिवौषधीपतिः ॥ ३० ॥
स्वस्वाङ्गभूषणमणिप्रभाभर-
ध्वस्तान्धकारविशदं मदात् तदा ।
उत्तालकालचरणं रणोत्सवं
मत्स्यत्रिगर्तनृपती वितेनतुः ॥ ३१ ॥
वर्षत्यमर्षजुषि बाणधोरणीं
क्रुद्धे त्रिगर्तनरभर्तरि क्षणम् ।
वृष्ट्याकुलच्छग इवाथ संकुचन्
कष्टां दशामधित मत्स्यभूपतिः ॥ ३२ ॥

वर्षं यदोकसि यदन्नभोजिनो
यूयं स्थिताः स किमुपेक्ष्यते युधि ।
इत्यात्मवंशतिलकान् कुरूद्वहान्
वक्तुं कृतोद्यम इवेन्दुरुद्ययौ ॥ ३३ ॥
वीरेन्द्रमस्तकमणेः सुशर्मणो
मूर्तेव कीर्तिरुदियाय चन्द्रमाः ।
प्रेम्णेव पर्यरभतैनमङ्कन-
व्याजादकीर्तिरपि मत्स्यभूपतेः ॥ ३४ ॥
बाणोत्करैर्विरथितस्तिरस्कृतः
खड्गादिशस्त्रसमरैरपि क्षणात् ।
मल्लोपमल्लकलया धृतः श्वसन्
बद्धोऽथ मत्स्यनृपतिः सुशर्मणा ॥ ३५ ॥
क्षिप्त्वा रथे तमथ याति वैरिणि
व्याचष्ट मारुतसुतं तपःसुतः ।
अस्मासु सत्सु यदयं द्विषा जित-
स्तद्यौरिवेन्दुमहसा हसत्यहो ॥ ३६ ॥
एवं निगद्य शरपद्यया दिवं
वीरान् सहस्रमनयद् युधिष्ठिरः ।
भीमः शतानि युधि सप्त तत्क्षणं
माद्रीसुतौ दशशतीं सुशर्मणः ॥ ३७ ॥
क्रुद्धस्य योद्धुमभिधावतस्ततो
निर्मथ्य रथ्यरथसारथीन् पदा ।
मौलिं त्रिगर्तनृपतेरलोडयद्
भीमो महेभ इव मूर्च्छितात्मनः ॥ ३८ ॥
मत्स्याधिनाथमभिमोच्य मारुतिः
कारुण्यपुण्यसुकृतात्मजोक्तिभिः ।
वीरोऽमुचत् तमपि वैरिणं हसन्
दासस्तवाहमिति दीनवादिनम् ॥ ३९ ॥
गृह्णीत राज्यमपि मे भवद्बलात्
कीर्तौ च संपदि च संचराम्यहम् ।
अस्माकमेतदिति मत्स्यभूपतेः
कङ्कादिभिः सह मुदोक्तयोऽभवन् ॥ ४० ॥
एवं विमोच्य सुरभी मिलच्चमू-
हर्षस्मितौघमिषमूर्तकीर्तिभाक् ।

दूतैर्निदिश्य नगरे जयोत्सवं
तत्रैव रात्रिमवसद्विराटराट् ॥ ४१ ॥
इति दक्षिणगोग्रहः ॥

एत्य प्रगेऽथ पुरि गोकुलाधिपः
शुद्धान्तधामनि कुमारमुत्तरम् ।
व्याचष्ट पुष्टभयकोपसंचय-
व्याकम्पसंपदपरिस्फुटं वचः ॥ ४२ ॥
एकार्णवं क्षितितलं बलोत्करैः
कुर्वन् कुबेरहरितो जहार गाः ।
शीतद्युतौ द्विगुणयन् सुयोधनः
स्वामिन् कलङ्कमलमात्मपूर्वजे ॥ ४३ ॥
युद्धेऽन्यतश्चरति तत्र भूमिभृ-
त्सिंहेऽस्तभीरिभ इवेह सोऽस्फुरत् ।
जानात्यसौ खलु कुमारसिंह न
त्वामत्र गोत्रतिलकायितश्रियम् ॥ ४४ ॥
चक्षुर्भुजापरिघयोर्मुहुः क्षिपन्
दन्तांशुभिर्विशदयन् मुहुः सभाम् ।
मातुः पुरः प्रणयिनीजनस्य च
प्रोचेऽथ मत्स्यनृपसूनुरुत्तरः ॥ ४५ ॥
तावत् क्रुधेह युधि जाग्रतु द्विषो
यावन्न मे प्रविलसन्ति सायकाः ।
स्याददृ यद्यनुगुणस्तु सारथि-
स्तत् तान् करोम्युदितपार्थशङ्कितान् ॥ ४६ ॥
इत्थं धराधरभुवा धनंजय-
स्पर्धोद्धुरं निगदिते वधूपुरः ।
मन्यूद्भवा बहुलमन्युरग्रही-
दन्तर्विहस्य वचनं मनस्विनी ॥ ४७ ॥
ख्यातः क्षितीन्द्रभव यस्तव स्वसु-
र्नृत्ये गुरुत्वमवहद्बृहन्नला ।
पूर्वं पुरन्दरभवस्य खाण्डव-
प्लोषे स सारथिपदं प्रपेदिवान् ॥ ४८ ॥
यस्तस्य गाण्डिवविखण्डितद्विषो
यन्ताजनिष्ट स न ते किमु क्षमः ।
सारथ्यमर्थयतरां तमुत्तरां
संप्रेष्य नैष यदि मां न मानयेत् ॥ ४९ ॥

श्रुत्वेति तद्वचनमुत्तरोऽनुजां
प्रेष्यानिनाय रयतो बृहन्नलाम् ।
तेनातियत्नमयमर्थितो जयः
सारथ्यभारमुररीचकार तम् ॥ ५० ॥
अन्तःपुरेऽथ परितः कुमारिका
मिथ्यानभिज्ञ इव हासयन्मुहुः ।
पर्यादधार विविधैर्विचेष्टितैः
सौवर्णवर्म शतमन्युनन्दनः ॥ ५१ ॥
इत्युत्तराभ्यधित सस्मिताधरा
तं सज्जितध्वजपटे रथे स्थितम् ।
संख्येंऽशुकान्यहृदा बृहन्नले
हार्याणि मत्कृतकपुत्रिकाकृते ॥ ५२ ॥
इत्थं तदुक्तिमभिगत्य पाण्डुभू-
रारूढवत्यथ रथान्तमुत्तरे ।
तारांस्तथैष तुरगानतत्वरत्
क्ष्मामस्पृशन्त इव ते ययुर्यथा ॥ ५३ ॥
पृष्ठानुयायिजवनानिलत्वरा-
संप्रेरितैरपि निजाश्वपादजैः ।
अप्राप्त एव रजसां भरै रथ-
स्तूर्णं ययौ रिपुसमीपमौत्तरः ॥ ५४ ॥
अग्रे शमीतरुसमीपगः पुरी-
प्रान्तश्मशानभुवि मत्स्यभूपभूः ।
विद्वेषिणां भुवनभीषणारवं
व्यालोकते स्म विपुलं बलार्णवम् ॥ ५५ ॥
विश्वान्तरालचरकालशर्वरी-
संध्यायमानकरिकुम्भवर्णकम्
रङ्गत्तरङ्गखुरपातघातज-
क्षोणीरजःस्थपुटदिक्पुटस्थितिम् ॥ ५६ ॥
चञ्चद्रथोच्चयचलध्वजाञ्चल-
प्रज्वालितप्रबलपौरुषानलम् ।
व्यात्तप्रमत्तयमकिंकरावली-
तुण्डाभकुण्डलितचापमण्डलम् ॥ ५७ ॥
दृष्ट्वा नदीजकृपकुम्भभूकृपी-
संभूतसूतसुतकौरवेश्वरैः ।

सैन्यं निभाल्य पुरतो भयातुरः
प्रोचे शचीवरतनूजमुत्तरः ॥ ५८ ॥
विशेषकम् ।

एतां निरूप्य पृतनां दिनेशरुग्-
दीप्रासिदण्डनिबिडां बृहन्नले ।
आकम्पतेऽद्य हृदयं भयाश्रयं
व्यावर्तयान्तकपुरीपथाद्रथम् ॥ ५९ ॥

श्रुत्वेति तस्य वचनं धनंजयो
व्याचष्ट तं भ्रमितभीरुलोचनम् ।
संग्रामकातरतया त्रपामहे
क्षोणीमहेशसुत शूरसंसदि ॥ ६० ॥

कीर्तिर्युगान्तशतसाक्षिणी नृणां
कायस्तु मत्तकरिकर्णचञ्चलः ।
धैर्यं भजस्व युधि भङ्गसंगमा-
न्मा मा कुलं कुरु कलङ्कसंकुलम् ॥ ६१ ॥

आत्मायुधैर्युधि विशोधितो न चेत्
तन्नामृतद्युतिकपोलदंशकः ।
स्वाद्येत नन्दनवनान्तकेलिषु
प्रेमार्पितोऽमरवधूजनाधरः ॥ ६२ ॥

मातुः स्वसुश्च दयितातनेश्च तां
संधां विधाय पुरतस्तथाविधाम् ।
धिग्धिक् पलायनपरायणोऽधुना
ह्रीमानहीनमनसां जिजीविषाम् ॥ ६३ ॥

श्रुत्वेत्यभाषत सुतः क्षितीशितु-
र्विस्रस्तहस्तगधनुर्विहस्तधीः ।
पश्यन् पुरः कुरुपतेर्वरूथिनीं
दृप्यद्रथीन्द्रवरभैरवारवाम् ॥ ६४ ॥

या कीर्तिरुल्लसति देहनाशत-
स्तां वेसरीसुतजनुःसहोदरीम् ।
रम्भाफलोद्भवसवर्णिनीं जनः
को मूलनाशनकरीं परीप्सति ॥ ६५ ॥

कीर्त्यापि किं तु परलोकगामिनो
या न स्फुटा श्रुतिपुटामृतीभवेत् ।
किं कण्ठपीठलुठिता गतात्मनः
पुंसः सुखं सृजति हारवल्लरी ॥ ६६ ॥

के नाम वामनयनाजनाग्रतो
न स्फोरयन्ति निजबाहुबाहुलम् ।
शक्यं न निष्कृपकृपाणपाटन-
प्राणप्रहारकरणं रणं पुनः ॥ ६७ ॥

द्रोणापगेयकृपकर्णकौरवाः
सर्वे स्फुरन्ति शरदन्तुराम्बराः ।
एकैकमेषु समरे सहेत कः
स्याद्यत्पुरोऽशनिधरोऽप्यधीरधीः ॥ ६८ ॥

उक्त्वेति शुष्यदधराननो रथा-
दुत्प्लुत्य तूर्णपदपातमचलत् ।
पृष्ठे शराहतिमसौ श्लथीभव-
द्धम्मिल्लपुष्पततिपाततोऽविदन् ॥ ६९ ॥

तं पाण्डुसूनुरनुससार वेगतो
व्याधूतवेणिलतिकारुणांशुकः ।
तं चित्ररूपमविचारगोचरं
वीक्ष्यारवैरहसिषुः कुरुद्वहाः ॥ ७० ॥

स्त्रीवेषगुप्ततनुरेष फाल्गुनो
नूनं गजेन्द्रगमनो महाभुजः ।
रोषं विमोक्ष्यति रुषा शरोत्करै-
रित्यूचिरे गुरुकृपापगाङ्गजाः ॥ ७१ ॥

पश्चाद्गतेन रयतः किरीटिना
केशैर्धृतः कृपणमुत्तरोऽवदत् ।
मां मुञ्च मुञ्च रदिनो रथान् हयान्
हेमानि रत्ननिचयं तवार्पये ॥ ७२ ॥

आक्रोशनानि शतमन्युसूनुना
श्रुत्वास्य सस्मितमितीरितं वचः ।
मा भीतिमाश्रय हयास्त्वया निय-
म्यन्तां तनोमि रिपुदारणं रणम् ॥ ७३ ॥

अस्मिन् शमीतरुशिखान्तरुत्तर
न्यस्तास्ति पाण्डुसुतशस्त्रमण्डली ।
अस्याः शुभं मम भुजार्गलोपमं
गाण्डीवमिन्द्रतनयास्त्रमर्पय ॥ ७४ ॥

शङ्का विलम्बिनि शवेऽच मा कृथा
माया हि गूढमियमाहिता मया ।
मूर्धाभिषिक्ततनुजं न योजये
त्वां कर्मणि ध्रुवममङ्गलक्रमे ॥ ७५ ॥
इत्यर्जुनोक्तिमवधार्य मत्स्यभू-
रारोहति स्म तमसौ शमीद्रुमम् ।
तत्रासिसायकधनूंषि चित्रभा-
जूंषि न्यभालयदबालविस्मयः ॥ ७६ ॥
संख्यात्रयेषुधियुतं ततोऽग्रही-
द्गाण्डीवमर्जुनगिरोपलक्ष्य सः ।
तत्रावतीर्य तरुतः क्व ते गताः
पञ्चेति पृष्टवति फाल्गुनो जगौ ॥ ७७ ॥
कङ्कद्विजः सुकृतजो मरुद्भवः
सूदो यमौ तुरगगोपती त्वहम् ।
बीभत्सुरस्मि निरवाहि वत्सरो
गुप्तस्थितिः कृतपणो भवद्गृहे ॥ ७८ ॥
बीभत्सुफाल्गुनकिरीटिजिष्णवः
कृष्णार्जुनौ विजयसव्यसाचिनौ ।
विश्वे धनंजयवलक्षवाहना-
वित्याह्वयान् दश दिशन्त्यहो मम ॥ ७९ ॥
धैर्यं भजस्व विनयस्व वाजिनः
पश्यार्दितां कुरुचमूं शरैर्मम ।
इत्युक्तिभाजि विजये रथाश्रये
हृष्टो हयान् नृपतिभूरथैरयत् ॥ ८० ॥
साकं ततोऽनुगतभूतपङ्क्तिभिः
केतौ निकेतमकरोत् कपीश्वरः ।
यस्यांशुभिर्जययशःश्रियोर्वियद्-
वैदूर्यपद्मरुणार्करत्नयुक् ॥ ८१ ॥
दिक्कुम्भिनो निभृतकर्णतालतां
शैलान् प्रतिध्वनितकुञ्जपुञ्जताम् ।
चक्षुःश्रुतीन् विधुरितावतां नयन्
शङ्खं ततो द्युपतिभूरपूरयत् ॥ ८२ ॥
आश्वास्य शङ्खनिनदेन मूर्च्छितं
मत्स्यक्षितीन्द्रतनयं किरीटिना ।
दिव्यास्त्रदैवततर्तिं यतात्मना
ध्यात्वाधिरोपितमनुद्रुतं धनुः ॥ ८३ ॥
विश्वे कुटुम्बयति कम्पमुत्कटै-
र्ज्याटङ्कृतिव्यतिकरैः किरीटिनः ।
उद्यन्नदात्वकुनिमित्तकोटिभि-
र्भीतोऽभ्यभाषत गुरुः कुरूद्वहम् ॥ ८४ ॥
यत् कौरवप्रवर विष्टपान्तरे
दृष्टाद्य माद्यति निमित्तमण्डली ।
तल्लक्षयामि भटलक्षमांसभुग्-
रक्षोगणभ्रमणभीषणं रणम् ॥ ८५ ॥
दुर्योधन प्रधनकेलिकौतुकी
पार्थः स एष कपिकेतुरीक्ष्यते ।
कोपानले बहुलहेतिहेलया
कक्षीकरिष्यति कुरूनमानसौ ॥ ८६ ॥
एते किरातरणकर्मसाक्षिणः
क्षीवन्निवातकवचान्तकारिणः ।
दृप्यद्धिरण्यपुरदैत्यदारणाः
प्रेङ्खन्ति ते क्षितिप पार्थमार्गणाः ॥ ८७ ॥
एतां गुरूक्तिमुपकर्ण्य कौरवोऽ-
भाषिष्ट भीष्ममिति भूरिमन्युभूः ।
मत्स्याधिपेन सह विग्रहेऽद्य नः
कस्मात् प्रहर्तुमयमेति फाल्गुनः ॥ ८८ ॥
विस्मृत्य संश्रवमुपैति चेत् ततः
का नः क्षतिः स्फुरतु कानने पुनः ।
किंतूद्यते गुरुरयं स्वयं रणा-
रम्भे प्रगल्भयति यो रिपुस्तुतिम् ॥ ८९ ॥
इत्थं प्रजल्पति नृपे नदीजनिः
शृण्वन् जगौ नरशरासनः स्वयम् ।
कालो यथा नियमितः सहाधिकै-
र्मासैर्नरेश निरतारि पाण्डवैः ॥ ९० ॥
पार्थः स एष समितौ समुद्यतः
प्रोद्धूतकेतुकपिभीषणारवः ।
मन्यस्व संधिममुनाधुनाप्यहो
भूयान्महोत्सवमयं जगत्त्रयम् ॥ ९१ ॥

नैवं भवेदिति गिरं तमब्रवीद्
दैवं विरुद्धमवबुध्य सिन्धुभूः ।
यत्ता भवन्तु सुभटा घटामहे
येनामुना समिति सव्यसाचिना ॥ ९२ ॥
किंतु ब्रजन्तु नगराय गोव्रजाः
क्षोणीशसैन्यचतुरंशरक्षिताः ।
पूर्वं हि विग्रहनिमित्तवस्तुनः
शंसन्ति रक्षणविधिं विचक्षणाः ॥ ९३ ॥
अन्येन गच्छतु वृतश्चमूचतु-
र्भागेन नागनगरं नरेश्वरः ।
येनैष एव विजयो रणक्षये
यत् स्वामिरक्षणविधिर्यथातथा ॥ ९४ ॥
द्रोणादिभिस्तु सुभटैर्युतोऽ-
र्जुनं क्ष्माभृद्धुनीरयमिवैष धारये ।
इत्युक्तवत्यथ पितामहे तथा
चक्रे भयातुरतया नृपो रयात् ॥ ९५ ॥
वेगाद्व्रजन्तमथ तं पृथङ्करः
प्रेक्ष्योत्तरं प्रहसितोत्तरं जगौ ।
संगृह्य याति सुरभीः सभीरसौ
यातेऽत्र मेऽत्र समरेण किं फलम् ॥ ९६ ॥
एनं प्रति त्वरयतूत्तुरङ्गमान्
दूरं कुरङ्ग इव मा पलायताम् ।
श्रुत्वेत्यथ त्वरितमुत्तरो रिपुं
पक्षान्वितैरिव हयैरुपाद्रवत् ॥ ९७ ॥
अप्राप्य सन्वरखुरैस्तुरङ्गमै-
र्वेगेन संगतिमुपागते रथे ।
हन्त चसन्तमिदमब्रवीदथो
दुर्योधनं हठधनो धनंजयः ॥ ९८ ॥
भो तिष्ठ तिष्ठ निभृतं भवादृशैः
कुल्यैः कलङ्कविधुरः कृतो विधुः ।
पूर्वं जहार सुरभीर्भवान् ह हा
रुद्धा मयाधम पलायसेऽधुना ॥ ९९ ॥
चापं गृहाण विगृहाण विग्रहिन्
साकं मया समय एष दुर्लभः ।

एकोऽस्मि संगरनियुक्तसंगरो
यूयं पुनः शतमिता धनुर्धराः ॥ १०० ॥
निर्भर्त्सकैरिति गिरां भरै रया-
दुत्साहकैरपि तदा कुरूद्वहः ।
युद्धाय नैव वलते स्म तत्क्रुधा
पार्थो रथस्य रयतो गतोऽग्रतः ॥ १०१ ॥
वामे विमुच्य पृतनामभिद्रुतं
दुर्योधनाय विनिभाल्य फाल्गुनम् ।
भीष्मादिभिः सपदि पर्यवारि तै-
र्व्यावर्तितत्वरितवाहनैर्नृपः ॥ १०२ ॥
एकत्र तत्र मिलितां पताकिनीं
दृष्ट्वा प्रहृष्टहृदयो धनंजयः ।
आकम्पितक्षुभितदेवदानवं
द्रागदेवदत्तमथ पर्यपूरयत् ॥ १०३ ॥
ध्वानैर्ध्वजे कपिवरस्य तत्परी-
वारप्रभूततरभूतबूत्कृतैः ।
तैर्देवदत्तनिनदैश्च विस्फुटद्-
ब्रह्माण्डमण्डलमशङ्कि विष्टपैः ॥ १०४ ॥
आस्फालयंस्तदनु धन्व शिञ्जिनी-
टङ्कारभारमतनोत् तथार्जुनः ।
गावो यथा सपदि पुच्छदण्डका-
मुत्पाद्य मत्स्यपुरमीयुरुत्सुकाः ॥ १०५ ॥
व्यावृत्तिमीयुषि गवां गणे द्विषां
सैन्येषु तेषु विशिखोत्करं क्षिपन् ।
तत्तत्प्रियापरिभवादिदुःखजं
वर्षन्नमर्षमिव शक्रसूर्बभौ ॥ १०६ ॥
एकेन मार्गणगणः किरीटिना
यावानमोचि पिहितार्कमण्डलः ।
तावान् न भूरिभिरपि द्विषां बलै-
र्भिन्नारिणा भृशमभिन्नशत्रुभिः ॥ १०७ ॥
लब्धाप्तिलालसतमानुपेयुष-
स्तीव्रागतीनपरमार्गणव्रजान् ।
दत्तार्धचन्द्रवशनः प्रपातयन्
किं वर्ण्यते स्वकुलमौलिरर्जुनः ॥ १०८ ॥

नाश्वः स कोऽपि न स कोऽपि वारणो
वीरः स कोऽपि न रथः स कोऽपि न ।
तेषां स कोऽप्यवयवोऽस्ति न द्विषां
यत्रार्जुनस्य न शरा व्यधुर्व्यथाम् ॥ १०६ ॥

एकोऽपि सिंह इव केतुकैतव-
व्यालोलपुच्छवलयो महायतिः ।
आसीद्धनंजयरथस्तदा द्विषद्-
भूपालकुञ्जरमदैकशोषकृत् ॥ ११० ॥

साटोपरत्नमुकुटोरुमण्डलं
लोलभ्रु भीषणकनीनिकेक्षणम् ।
आवेशदष्टदशनच्छदं शरैः
शत्रुंतपस्य मुखमैन्द्रिरच्छिदत् ॥ १११ ॥

कौन्तेयकुन्तगणरुग्णविग्रहः
संग्रामजिन्निपतितो विवस्वता ।
मत्पुत्रकर्णपितृभूतसूतसू-
रित्यस्तशङ्कमयमङ्कगः कृतः ॥ ११२ ॥

तस्या विदग्धपृतनामृगीदृशः
कर्णोऽवतंससितपद्मवद्यशः ।
भीमानुजन्मकरपङ्कजोत्थिते-
स्तेने सितेतरतरं शिलीमुखैः ॥ ११३ ॥

शारद्वतोऽपि गुरुरिन्द्रनन्दने
शिष्ये पुरः स्फुरति संगराङ्गणे ।
तत्संगमेच्छुरपि नो जयश्रिया
संश्लिष्यते स्म किल सज्जलज्जया ॥ ११४ ॥

प्रौढप्रतापरविनाशतस्तम-
स्तोमे प्रसर्पति विरोधिना धुतः ।
द्रोणो मलीमसतमाकृतिः क्षणा-
दुड्डीनपक्षततिरातनोतु किम् ॥ ११५ ॥

युद्धाङ्गणे गुणनिबन्धतः क्षणा-
दत्यस्यतो मरणमेव काङ्क्षतः ।
चक्रे धनुर्धरधुरंधरोऽङ्कजं
द्रोणस्य लोचनमिवैकमाकुलम् ॥ ११६ ॥

सेनासरोरुहदृशो विभूषणं
गाङ्गेयमुत्कटमहोर्मिनिर्मलम् ।
पार्थेन पौरुषमयो हृते तदा
विच्छायमेव जनता व्यलोकत ॥ ११७ ॥

धारोद्धुरान् शरभरान् धनंजयो
वर्षन् घनः प्रकटितोन्नरोन्नतिः ।
त्रासोन्मुत्रं समरपल्वलान्तरे
तं धार्तराष्ट्रमकरोत् किलाकुलम् ॥ ११८ ॥

एकैकशोऽपि मिलितानविभ्रमद्
दिव्यास्त्रजालजटिलीकृताम्बरान् ।
एतान् जिगाय युधि वासवाङ्गभू-
राविष्कृतप्रतिमहास्त्रपङ्क्तिभिः ॥ ११९ ॥

कौन्तेयकुन्ततनिपातपातिता
भान्ति स्म भूमिपतिवक्त्रपङ्क्तयः ।
शौर्यश्रियः प्रधनपल्वलोदरे
केलिक्रमाय कमलाकरा इव ॥ १२० ॥

भिन्नप्रभिन्नकरिकुम्भमण्डली-
मुक्ताफलानि विगलन्ति भेजिरे ।
जम्भारिजन्मपरिरम्भसंभवत्-
स्वेदोदबिन्दुसमतां जयश्रियः ॥ १२१ ॥

दुःशासनप्रभृतयस्ततो व्यधुः
सौवर्णपुङ्खविशिखोत्करैर्नरम् ।
नक्तंप्रदीप्रपरितोमहौषधी-
मालोज्ज्वलाञ्जनमहीध्रमञ्जुलम् ॥ १२२ ॥

तानेक एव स शिलीमुखोच्चये-
श्चक्रे विलीनमहसो महेन्द्रसूः ।
धिष्ण्यव्रजानिव दिवाकरो दिवा-
रम्भे क्षणात् खरतरैः करोत्करैः ॥ १२३ ॥

छिन्नैर्नरेषुनिचयेन चामरै-
श्छत्रैर्ध्वजैश्च निपतद्भिराबभे
स्पष्टं पलप्रसनपुष्टिहृष्टिम-
द्रक्षोघटादृहसितैरिवाहवे ॥ १२४ ॥

एकास्तुरङ्गनिकरैस्तरङ्गिता
बाणोत्करेण परिशोष्य वाहिनीः ।
अन्या द्विषां क्षतमुखाम्बुजार्चिताः
प्रावर्तयद् युधि जयोऽस्रवाहिनीः ॥ १२५ ॥

एवं पराजयविवृद्धमन्यव:
शौर्याभिभूतशतमन्यवस्तत: ।
सर्वेऽपि सिन्धुतनयादयोऽर्जुनं
संभूय तत्र ररुधुर्धनुर्धरा: ॥ १२६ ॥
तान् संहतान् पुनरवेक्ष्य रोषत:
स्वं स्वं विभज्य बहुधेव बल्गत: ।
जिष्णोरपूज्यत पराक्रमश्चम-
त्कारोत्तरं सुरवरै: सुमोत्करै: ॥ १२७ ॥
एकोऽप्यनेकवदयं भयंकरो
राज्ञां शिरांसि शरित: शरै: क्षिपन् ।
नूनं सहस्रभुजनेत्रतां जना-
दृश्यां गतोऽयमिति तर्कितोऽपरै: ॥ १२८ ॥
कुन्तीसुतोऽथ मरणैककाङ्क्षिषु
क्ष्मापेषु तेषु विलसद्दयारस: ।
अस्त्रं युधि प्रियमनङ्गधन्विन:
संमोहनाभिधमधाद्धनुर्गुणे ॥ १२९ ॥
निद्रासमागमनहेतुदूतिका
जृम्भा समेत्य वदनेषु विद्विषाम् ।
बाष्पेण सात्त्विकरसादिवोदयं
संबिभ्रताशु नयनान्यपूरयत् ॥ १३० ॥
निद्राधिदैवतनवावतारतो
व्याघूर्णयंश्च वदनं विरोधिन: ।
आलोकयंश्च निखिला: पुनर्दिशो
दृग्भिर्मुहूर्तधृतचेतना मुहु: ॥ १३१ ॥
मुक्तेऽर्जुनेन विशिखे सिषेविरे
निद्रारसं सपदि वैरिणो रणे ।
मांसाशनव्यसनपङ्कशङ्कित:
प्रेतप्रणाशकरघोरघोरिण: ॥ १३२ ॥
सुप्ता: परस्परशरीरसंभ्रमा-
त्कुम्भवेदिसुखशालिनो द्विपा: ।
तेषां च कुम्भयुगलोपरिस्थिता:
प्राप्तप्रियोरसिजविभ्रमा भटा: ॥ १३३ ॥
निद्रारस: समजनिष्ट वाजिनां
कश्चित् तदा स किल फाल्गुनास्त्रत: ।
अद्यापि येन गमनेऽपि तेऽन्वहं
नो यान्ति जागरणकेलिकौतुकम् ॥ १३४ ॥
आसन्नधोमुखनतास्तुरङ्गिण:
स्कन्धेषु वाहनिकरस्य निद्रया ।
वक्ष:स्थितं विजयरत्नमर्जुन-
व्याकृष्यमाणमिव रक्षितुं जवात् ॥ १३५ ॥
निद्रावशेन रथिनां करद्वयात्
कर्णान्तनीतगुणमेव कार्मुकम् ।
भूमौ पपात विशिखैस्तु वेध्यगै-
र्विश्वे निजा सफलता स्म दृश्यते ॥ १३६ ॥
तत्कालमेकसमयं पदातिभि:
प्रौढै: पतद्भिरवनीधरोद्धुरै: ।
दुर्वारभारनतभूमिवञ्चित-
स्वाङ्गो बभौ कमठवत् फणीश्वर: ॥ १३७ ॥
स्मृत्वोत्तरावचनमर्जुनस्ततो
मत्स्येन्द्रसूनुमिदमब्रवीन्मुदा ।
दुर्योधनस्य कदलीदलप्रभे
कर्णस्य काञ्चनरुची हरांशुके ॥ १३८ ॥
एतेषु न स्वपिति सिन्धुसूरसौ
मुक्त्वा तदेनमितरक्ष्माभृताम् ।
अस्त्रैर्विचित्रवसनान्युपाहरे-
त्युक्ते नरेण स तथाकरोद्द्रुतम् ॥ १३९ ॥
आत्तांशुक: श्रितरथोऽथ मत्स्यभू:
पार्थाज्ञयाशु तुरगानतत्वरत् ।
भीष्मे शरैस्तुदति पृष्ठत: परा-
वृत्तो निहत्य तुरगान् जयी ययौ ॥ १४० ॥
मुक्तो रिपु: किमिति कौरवो वदन्
सुप्तोत्थित: स्वयमबुद्धविप्लव: ।
ज्ञात्वांशुकान्यपहृतानि भीतिमान्
भीष्मोक्तिभि: सह चमूभिरत्रसत् ॥ १४१ ॥
बाणै: किरीटशिखरं किरीटिना
दुर्योधनस्य समहारि नश्यत: ।
तस्मिन् शमीतरुवरेऽस्त्रमण्डलं
मुक्त्वा तथैव ववले पुरं प्रति ॥ १४२ ॥

इत्युत्तरगोग्रहः ॥

जित्वा रिपूनथ समागतः पुरे
मत्वा सुतं सपदि षण्डसारथिम् ।
भीष्मादिभिः समरहेतवे गतं
दुःखी विराटनृपतिर्न धर्मसूः ॥ १४३ ॥

यावद्बलानि समनीनहच्चरै-
स्तावत् कुमारविजये निवेदिते ।
भूपः प्रवर्त्य नगरोत्सवं ततः
कङ्कान्वितो व्यधित शारिखेलनम् ॥ १४४ ॥

क्रीडन् नृपोऽभ्यधित कङ्क पश्य मत्-
पुत्रो जिगाय युधि तं सुयोधनम् ।
कङ्को जगाद खलु जीयते सुखा-
द्येनैव सारथिरभूद्बृहन्नला ॥ १४५ ॥

षण्डस्य सारथिपदं वदन्
जये हेतुं रुषा क्षितिभृताक्षताडनात् ।
कङ्कद्विजः स विदधे सभालङ्-
कीलो महेश इव दृश्यशोणितः ॥ १४६ ॥

मानिष्टमत्र विषये प्रवर्ततां
भूषङ्गिमद्रुधिरलीलयेत्ययम् ।
कीलालपाणिरवनीपतिर्बभा-
वागन्तवे घुसृणवानिव श्रिये ॥ १४७ ॥

तूर्णागतद्रुपदनन्दिनीधृते
पात्रे सुवर्णघटिते युधिष्ठिरः ।
चिक्षेप रागमिव मूर्तमात्मनः
प्रेम्णा चिरात् क्षतजनिर्भरं स तम् ॥ १४८ ॥

नेया वयं प्रकटतां दिनत्रये-
णैवेति दत्तदृढशिक्षमुत्तरम् ।
पार्थो विधाय रथिनं तमात्मनो
धात्रीशसौधमनयद्द्रुतं रयात् ॥ १४९ ॥

संसद्भुवि क्षितिपतिं प्रति प्रती-
हारो व्यजिज्ञपदुपेतमुत्तरम् ।
षण्डेन सार्धमतिवर्धिसंमदं
तूर्णं नृपोऽपि तमवीविशत् तदा ॥ १५० ॥

यो मे करोति वपुषि क्षतं क्षितौ
तं प्रेषयेत सकुटुम्बकं दिवि ।
षण्डोऽयमत्र न विमुच्यतामतो
दौवारिकेऽवददिदं युधिष्ठिरः ॥ १५१ ॥

इत्येक एव वचनेन वेत्रिणः
प्रीतः सभान्तरमवापदुत्तरः ।
तं प्रेक्षत क्षतजनिर्झरच्छला-
च्छुण्डालमत्र च नरेन्द्रकुञ्जरम् ॥ १५२ ॥

वृत्तान्तमेतमवगत्य भूपभू-
स्तातं जगाद किमु कोप्यते द्विजः ।
संमान्यतामयमतः सुतोक्तिभिः
कङ्कं नृपः क्षमयति स्म मङ्क्षु तम् ॥ १५३ ॥

कोपावलोकनवशेन पाण्डवः
कर्तुं क्षमोऽपि भुवनानि भस्मसात् ।
यं पट्टबन्धमतनोत् क्षमार्थकं
तेनैव सोऽजनि धुरि क्षमावताम् ॥ १५४ ॥

मौलिक्षते द्विजवरस्य गोपिते
षण्डः सभाभुवि नृपेण मोचितः ।
विद्विषिशाखिशतदावपावकः
प्रापात्मनन्दनविलासमारुतः ॥ १५५ ॥

पप्रच्छ मत्स्यनृपतिस्ततः सुतं
ते वत्स शंतनुसुतादयस्त्वया ।
युद्धे जगत्त्रयजयक्षमाः कथं
ध्वान्तोत्करा दिनकृतेव निर्जिताः ॥ १५६ ॥

केनापि दिव्यपुरुषेण पौरुषं
पुण्येन मे विदधता जिता द्विषः ।
गन्ता दिनैः प्रकटतां स तु त्रिभिः
श्रुत्वा सुतोत्तरमिति स्मितो नृपः ॥ १५७ ॥

कामः काममयं करोति जगति क्रीडोत्सवानेकया
रत्या साकमितीव पाकविषयप्राप्तैरसूयारसैः ।
प्रीतिर्वीरकुमारवीरविजयश्रीसंभ्रमप्रेरिता
तां निष्काश्य तदा चकार सदनं चित्ते पुरीवासिनाम् ॥ १५८ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते श्रीबालभारतनाम्नि महाकाव्ये वीराङ्के विराटपर्वणि दक्षिणोत्तरगोग्रहे पाण्डवजयो नाम तृतीयः सर्गः ॥ ३ ॥

## ॥ अथ बालभारतस्य ॥

॥ चतुर्थः सर्गः ॥

मुदेऽस्तु वः कृष्णमुनिर्यदीय-
भास्वद्वपुर्दन्तनखप्रभाभिः ।
विचित्ररत्नाभरणा न के के
विमुक्तिकान्तासुभगीभवन्ति ॥ १ ॥
स्वयं तृतीयेऽथ दिने दिनादौ
स्नातो विशुद्धाम्बरमाल्यधारी ।
धर्माङ्गजः स्वैरनुजैश्चतुर्भिः
सिंहासने मत्स्यविभोर्न्यवेशि ॥ २ ॥
वृत्तान्तमावेदितमुत्तरेण
मत्वाथ तोषाब्धिविधुर्विराटः[१] ।
आगत्य धर्मात्मजपादयुग्मे
लग्नः क्षमस्वेति मुहुर्ब्रुवाणः ॥ ३ ॥
मग्नस्तदा धर्मतनूजपाद-
नखप्रभावारिणि वीरमुख्यैः ।
उत्थापितो भूमिपतिश्चतुर्भि-
र्भीमादिभिर्भूरिभुजप्रभावैः ॥ ४ ॥
करौ किरीटे नखरत्नराजि-
विराजितौ हेमविधौ विधाय ।
हारं सृजन् वक्षसि दन्तकान्त्या
प्रति प्रभुं वाचमुवाच राजा ॥ ५ ॥
अहं च देशश्च पुरी च नाथ
वर्तामहे स्मस्त्रिजगत्पवित्राः ।
त्वदीयसङ्गादधुना कुलं मे
पुनीहि कन्यां जयिने ददामि ॥ ६ ॥
इत्येतया तोषविशेषसान्द्रो
गिरा विराटस्य धराधिनाथः ।
दृशं भृशं शार्ङ्गिमुखारविन्दे
चिक्षेप लोलभ्रमराभिरामम् ॥ ७ ॥
रदै रुचा प्रत्युपकारगौरै-
रदाम्बरस्याम्बरमाद्दद्भिः ।

१ मोदाम्बुनिधिर्विराटः इति पा० ।

विवेकभूर्वासवभूर्बभाषे
शिष्यां सुतावद्गणयन्ति धीराः ॥ ८ ॥
यद्याग्रहः स्नेहविवृद्धिहेतो-
श्चिराद्विराटस्य चकास्ति चेति ।
सुताय दत्तामभिमन्यवे तत्
सुतां मदीयाय सदृग्वराय ॥ ९ ॥
आलोच्य निश्चित्य सुकृत्यमेत-
च्चरं हृषीकेशपुरे न्ययुङ्क्त ।
भूपः सुभद्रातनयस्य तूर्ण-
माकारणायाकृतिदर्पकस्य ॥ १० ॥
अथागतं द्वारि धनुर्विमुक्त-
बाणत्वराजित्वरनौसवेगम् ।
विज्ञापितो वेत्रिगिरा मुरारि-
रवीविशत् संसदि दूतमेतम् ॥ ११ ॥
कृतप्रणामस्तदयं जगाद
चरः सभायां तिलकानि तन्वन् ।
द्विजन्मचञ्चत्करचन्दनेन
मुरारितेजोमृगनाभिभाञ्जि ॥ १२ ॥
अयुङ्क्त मां युक्तमते मतेन
सहोदराणामिह धर्मसूनुः ।
प्रत्यक्षतां पूरितगोप्यकाल-
स्तन्वन् विवस्वानिव तीव्रतेजाः ॥ १३ ॥
किरीटिने गोग्रहगाढगर्व-
दुर्योधनक्ष्मापजयोज्ज्वलाय ।
दातुं सुतां धर्मसुताङ्घ्रियुग्मे
लग्नो विराटः सह नन्दनेन ॥ १४ ॥
सुतेव शिष्येति धनंजयेन
नैवादृता पार्थिवपुत्रिकेयम् ।
स्नुषा तु पुत्रीव सतां विभाति
ततः सुतार्थं स्वयमर्थिता सा ॥ १५ ॥
ततस्तदाकारणकारणेन
समागतोऽहं जगदेकनाथ ।
स्वामिन् सुभद्रातनयं नयस्व
क्षणान्निजं प्रेषय भागिनेयम् ॥ १६ ॥

सखीसमचं मुकुरे मुखं या
निरीचितुं चेतसि लज्जमाना ।
मुहुः कुमारी मणिकङ्कणेषु
लीलाविलोलं चिपति स्म चतुः ॥ १७ ॥
उरःस्थले मन्मथपार्थिवस्य
मत्वा निवासं कुचदूष्यचिह्नम् ।
विमुच्य यस्याः सरलप्रचारं
कर्णान्तरे दृङ्मृगयुग्ममागात् ॥ १८ ॥
अन्तर्गता शैशवयौवनाभ्यां
या पीड्यमानेव मुहुर्दृढाभ्याम् ।
पर्याकुला वाञ्छति लोलदृष्टिः
कस्यापि पाणिग्रहणं कुमारी ॥ १९ ॥
कुतूहलात् काञ्चनकन्दुके च
करं करोति श्रुतिकुण्डले च ।
मुहुर्विभूषाजुषि या विनोद-
गेहे च देहे च करोति दृष्टिम् ॥ २० ॥
इमां कुमारीं परिणीय राज-
न्नयं कुमारो भुवने विभातु ।
अभ्युन्नतः केतुरिवान्ववाय-
प्रासादमौलौ विलसत्पताकः ॥ २१ ॥
आकर्ण्य मत्वाथ तथेति विष्णु-
र्दूताङ्गभूषं विससर्ज दूतम् ।
सौधं मतीनामभिमन्युशिक्षा-
कृते कृती मन्त्रिणमादिदेश ॥ २२ ॥
राज्ञस्तदाज्ञामधिगम्य सम्यग्-
विशुद्धधीरुद्धवमन्त्रिराजः ।
उवाच वाचः सितकान्तिकान्ति-
भद्राः सुभद्रातनये नयेच्छुः ॥ २३ ॥
मा विश्वसीर्विश्वजनीनशक्तेः
स्त्रियाः श्रिया वा मृगचञ्चलायाः ।
ददाति गाढं व्यसनं जनानां
रक्ता विरक्तापि पदे पदे या ॥ २४ ॥
यतो महात्मन्यपि लम्पटत्व-
मामन्यते लम्पटसंगमेन ।
लोलः शशाङ्कोऽपि विभाति तात
वातप्रणुन्नाम्बुदमध्यवर्ती ॥ २५ ॥
कृतिन्नमात्येषु पुरातनेषु
चिरं स्थिरा राजति राजनीतिः ।
यतः शरावेषु नवेषु वारि
न्यस्तं समस्तं प्रलयं प्रयाति ॥ २६ ॥
ध्वस्ताः समस्ता रिपवो मयेति
निरुद्यमो वीरवरेण्य मा भूः ।
मुक्तोदये भास्वति भूरिशोऽपि
भिन्नं तमोऽभ्येति पुनः कुतोऽपि ॥ २७ ॥
तात प्रतापप्रसराय धीरा:
कुर्वन्ति धैर्यं न पुनर्धनाय ।
न केसरी मौक्तिकपङ्क्तिहेतो-
राहन्ति दन्तिप्रकरं कराग्रैः ॥ २८ ॥
दुरोदरारम्भकथाः कथंचि-
दार्या न कार्यान्तरतोऽपि कुर्युः ।
दुरोदरस्य व्यसनेन पेतु-
र्विपत्पयोधौ पितरस्त्वदीयाः ॥ २९ ॥
प्रभुप्रवृत्तिप्रतिमं चरन्ति
प्रजाश्चिरं चण्डतमं हिमं वा ।
सूर्योपला वह्निमुचः स्वकाले
चन्द्रोपलाः पश्य सुधामुचः स्युः ॥ ३० ॥
अत्यर्थभावेन निषेव्यमाण-
मप्यार्य कार्यं व्यसनं वदन्ति ।
तन्वन् पितुर्वाचमवाप रामो
वनं बलिर्न्यग्गमनं च दानात् ॥ ३१ ॥
इत्यादिभिर्मन्त्रिपतेर्वचोभि-
र्मत्वा विदग्धं भुवि भागिनेयम् ।
विधाय दिव्यास्त्रभरप्रवीणं
हरिः पितुः सद्मनि तं न्ययुङ्क्त ॥ ३२ ॥
रङ्गत्तुरङ्गव्रतभूमिभाग-
रजोभरच्छन्नदिनाधिनाथैः ।
कैश्चित् प्रयाणैरगमत् कुमारो
विराटभूपालपुरोपकण्ठम् ॥ ३३ ॥

नदीप्रवाहप्रमितस्य तस्य
कुमारसैन्यस्य समागतस्य ।
विराटभूपालबलाम्बुराशि-
र्वेलाकुलः संमुखमाचचाल ॥ ३४ ॥

युधिष्ठिरं वीक्ष्य दृशा कृशानु-
तेजाः कुमारस्तुरगं विमुच्य ।
ननामश्चकार चितिनम्रमौलि-
स्तथा च भीमप्रमुखान् क्रमेण ॥ ३५ ॥

न्यञ्चद्वपुः किंचिदुदञ्चिताङ्ग-
भागेन साकं पुरपार्थिवेन ।
कटीतटन्यस्तकरश्चकार
कृती परीरम्भभरं[1] विधिज्ञः ॥ ३६ ॥

समानरूपप्रतिपत्तिमेव
विधाय सङ्गं सममुत्तरेण ।
युधिष्ठिरादेशवशात् कुमार-
स्तुङ्गं तुरङ्गं पुनरारुरोह ॥ ३७ ॥

प्रत्यालयद्वारविमुक्तमुक्ता-
कदम्बकस्वस्तिककैतवेन ।
सर्वाङ्गमानन्दमनोरमश्रीः
प्रस्वेदबिन्दुप्रकरान् बभार ॥ ३८ ॥

परिस्फुरद्वाहसमूहपाद-
प्रपातभिन्नावनिमण्डलोत्थैः ।
वातप्रणुन्ने रजसां विताने-
र्विवर्णतामप्यरीचकार ॥ ३९ ॥

सा देशदेशप्रसरत्प्रमत्त-
मातङ्गचक्रक्रमसंभ्रमेण ।
वसुंधरायां परिकम्पितायां
कम्पानुभावं बिभरांबभूव ॥ ४० ॥

तत्कालसज्जीकृतनीलरत्न-
द्वारतोरणस्तम्भसमुद्भवेन ।
मरीचिवीचिप्रसरेण भूरि
रोमाञ्चमङ्गे रचयांचकार ॥ ४१ ॥

[1]—त्रिधिं इति पा० ।

उच्चैःशिरःसंगतलोकघट्ट-
प्रभ्रष्टहारच्युतमौक्तिकौघैः ।
स्फीतप्रतोलीनयनान्तराला-
दस्रप्रपातं परितस्तताम ॥ ४२ ॥

आयाति सौभाग्यनिधौ कुमारे
विस्तारयामास च बाहुपाशौ ।
द्विधाभवत्संमुखपौरलोक-
व्याजेन नारीव पुरी तदासौ ॥ ४३ ॥

कुलकम् ।

मूर्त्या स मूर्तः किल कामदेवः
कामं विभूषाभरभासमानः ।
स्मितप्रतोलीनयनाध्वनैव
पुरीपुरन्ध्रीहृदयं विवेश ॥ ४४ ॥

आकीर्यमाणा नवतूर्यनादै-
र्नार्यः स्वकार्यप्रसरं विमुच्य ।
कुमारमालोकयितुं विलोला
जालान्तरालाभिमुखं प्रचेलुः ॥ ४५ ॥

औत्सुक्यतः काचन चित्रकार्थे
करे गृहीतां मृगनाभिमेव ।
स्निग्धाञ्जनभ्रान्तिवशात् किरन्ती
नेत्रद्वये तत्र ददौ मृगत्वम् ॥ ४६ ॥

ताडङ्कमेकं कर एव काचित्
तदा वहन्ती चपलं चचाल ।
त्रैलोक्यजैत्रस्मरचक्रवर्ति-
पताकिनीवायविलासिचक्रा ॥ ४७ ॥

क्षिप्रं श्रुतौ कुण्डलमेकमेव
कस्याश्चिदास्यं दधदाबभासे ।
हर्षप्रकर्षाद्रुतमाससाद
द्रष्टुं कुमारं स रविः किमिन्दुः ॥ ४८ ॥

चचाल हारस्य पदे निवेश्य
समुत्सुका काचन काञ्चिदाम ।
सकिङ्किणीध्वानमिदं वहन्ती
सा मूर्तकामद्विपवद्बभासे ॥ ४९ ॥

चक्षुर्गवाक्षं सुदृशां मनोभूः
स्वसद्मनां कौतुकतोऽधिरूढः ।
तदेकतानप्रविलोक्यमान-
किरीटिसूनुप्रतिमानदम्भात् ॥ ५० ॥
आलोकयन् वंश्यममुं कुमारं
भूरीणि रूपाणि विधुर्विधाय ।
स्मितेक्षणश्चन्द्रमुखीमुखानां
मिषेण हर्षी न समाप तृप्तिम् ॥ ५१ ॥
निपीयमानः स्मरविह्वलाभि-
रेवं सुकेशीभिरसौ कुमारः ।
अन्तः प्रविश्याशु मनोऽपहृत्य
तासां क्रमादप्रकटो बभूव ॥ ५२ ॥
निपीय नेत्राञ्जलिसंपुटेन
क्षणेन सौन्दर्यरसं सुकेश्यः ।
चिरादतृप्ता इव नैव जग्मुः
पुरोविभागाद्विगतेऽपि वीरे ॥ ५३ ॥
विनिर्जितेनेव तनुप्रभाभि-
रयं स्वकीयप्रतिमाच्छलेन ।
स्मरेण संवेशितपादमूलः
सौधान्तरं रत्नधरं विवेश ॥ ५४ ॥
बहुश्रुतैः कुण्डलितं द्विजेन्द्रै-
र्निश्चित्य लग्नं शुभभावसूचि ।
पाणिग्रहारम्भमहोत्सवानां
कृते नृपावुत्सुकतां प्रपन्नौ ॥ ५५ ॥
स्वाजन्यजन्यप्रमदावदाताः
स्वयं तदा तारतरत्वराभिः ।
मत्स्यावनीन्दोः पुरि विश्वभूपाः
श्रीविश्वरूपप्रमुखाः समीयुः ॥ ५६ ॥
भ्रान्तभ्रुवो वन्दनमालिकाभि-
श्चलत्कराः केतनचक्रवालैः ।
महोत्सवेऽस्मिन् सदनश्रियोऽपि
नृत्यं वितेनुर्धृतरत्नभूषाः ॥ ५७ ॥
तनूजशुभ्रच्छदजाह्नवीभिः
पतिक्रमाम्भोजमधुव्रतीभिः ।
तिथौ शुभायां द्रुतमुत्तरायां
नितम्बिनीभिः प्रतिकर्म चक्रे ॥ ५८ ॥
साभ्यङ्गभूषा सुभगा बभासे
सिद्धार्थदूर्वाङ्कुरकर्बुराङ्गी ।
उपात्तबाणा ध्वजशोभिहेम-
नीलाश्मचेतोभवचैत्यचारुः ॥ ५९ ॥
रोध्रेण निर्नाशिततैलमङ्ग-
माबिभ्रती कुङ्कुमपङ्कसङ्गम् ।
स्नानक्षणे तूर्यरवप्रमोदैः
सा मूर्तरागप्रसरेव रेजे ॥ ६० ॥
एणीदृशां श्रेणिरिमां कुमारीं
सकुङ्कुमामस्नपयत् पयोभिः ।
शुभ्रांशुकुम्भप्रभवैर्विभाभिः
ससांध्यरागां रजनीं यथाद्याम् ॥ ६१ ॥
सा चन्द्रिकाभं परिधाय वास-
श्चन्द्रानना प्राप विभावरीव ।
भास्वन्मणिस्तम्भचतुर्दिगद्रि-
नभोनिभं केलिवितर्दिमध्यम् । ६२ ॥
प्राचीमुखीं चन्द्रमुखीमथैनां
निवेश्य नेपथ्यविधिर्व्यधायि ।
यस्तोषिणा बन्धुवधूजनेन
स प्राप नेपथ्यमिदं तदङ्गम् ॥ ६३ ॥
विभूषणाभोगधरा वराङ्गी
विलोक्य रूपं मणिदर्पणे सा ।
आकाङ्क्षदात्मन्यभिमन्युभावं
मुदाभिमन्यौ च तदात्मभावम् ॥ ६४ ॥
ततान दीक्षातिलकं सवित्री
तस्या यदास्येऽर्पितचन्द्रदास्ये ।
तत्रैव पर्यङ्कसमे समेत्य
चकार केलिं सरतिर्मनोभूः ॥ ६५ ॥
पूर्णं यदूर्णामयसूत्रमस्या
हस्ते जनन्या जनितं तदानीम् ।
पाणिग्रहारम्भजुषां लभन्ते
न तेन साम्यं मणिकङ्कणानि ॥ ६६ ॥

आबिम्बिता रत्नमयीभिरङ्के
सा गोत्रदेवीभिरपि व्यधायि ।
मातुर्गिरा तारतमं नमन्ती
किमुच्यते बन्धुजनाङ्गनाभिः ॥ ६७ ॥

इतश्च पुत्र्या द्रुपदस्य हर्षात्
तदाभिमन्युः शतमन्युतेजाः ।
अलंकृतो नव्यविभूषणानां
गणेन पाणिग्रहणोचितेन ॥ ६८ ॥

स्फुटाननच्छन्नसमग्रदेहे
चीरे स वीरः कलयन् रराज ।
शुभ्रीकृतश्चन्द्रिकया विकाशि-
शशाङ्कबिम्बः किल पूर्वशैलः ॥ ६९ ॥

यन्निर्ममे निर्मलचन्दनेन
विशेषकं भालतले जनन्या ।
मृगाङ्कबिम्बात् कलयाधिकश्रि
तेनाननं तस्य तदा बभासे ॥ ७० ॥

जितं गुरुत्वेन तदान्तरिक्षं
जगाम तस्यानुचरत्वमेव ।
श्यामं लघूभूय विविक्ततारं
सपुष्पधम्मिल्लनिबन्धदम्भात् ॥ ७१ ॥

मुखेन्दुसङ्गच्युतचन्द्रकान्त-
ताडङ्कयुग्मामृतनिर्झराभाम् ।
बभार हारः शतसंख्यदामा
नृकण्ठधामा घनसारधामा ॥ ७२ ॥

मुखे मृगाङ्कः कुलवत्सलत्वात्
प्रेम्णा च पौत्रस्य हरिर्विभुत्वे ।
चक्रेऽवतारं पितृभागिनेय-
स्नेहेन देहे मदनोऽपि तस्य ॥ ७३ ॥

उद्दण्डदण्डातपवारणस्य
नानामणिश्रेणिभृतो मिषेण ।
तस्मिन् नियुक्तः स्ववशः सशेषः
संपिण्ड्य सिन्धुः किल मातुलेन ॥ ७४ ॥

द्विपं चतुर्दन्तमिवोरुदन्तं
मिथःप्रतिच्छन्दवशाद्विशालम् ।
आरुह्य मुक्ताधवलं स पौत्र-
स्नेहेन दत्तं किल वासवेन ॥ ७५ ॥

उत्तार्यमाणस्य तदा भगिन्या
शुभ्रस्य दम्भाद्दरकुम्भकस्य ।
मुहुः परिभ्रम्य विलोक्यमानः
कुल्यप्रमोदाद्विधुना चचाल ॥ ७६ ॥
युग्मम् ।

दूतेन तूर्यध्वनिनेव तस्य
पुरो वरस्यागमने निदिष्टे ।
विराटगोत्रप्रमदाकुलस्य
मदाकुलस्य स्फुरितं प्रमोदैः ॥ ७७ ॥

स पूर्वशैलादिव दन्तिराजा-
दुत्तीर्य मार्तण्ड इवोरुतेजाः ।
पादप्रचारेण विराटधाम
धाराधराध्वानमिवाविवेश ॥ ७८ ॥

बृहज्जनैः संमुखमापतद्भि-
र्निन्येऽभिमन्युः सविधे स वध्वाः ।
प्रागन्धवाहैरिव गन्धवाहै-
रम्भोरुहिण्या मधुपः समीपम् ॥ ७९ ॥

मौनावलम्बिन्यखिलेऽपि लोके
वर्णां लिपिन्यस्त इव स्थितेऽस्मिन् ।
पदं पदं चाक्षरमक्षरं च
स्फुटं नियुक्तेषु समुच्चरत्सु ॥ ८० ॥

संसाध्य लग्नं सजनौघतालं
स्थालं विशालं परिवादयत्सु ।
संमेलयामास करौ तदीयौ
गुरुर्विराटस्य धृतौ कराभ्याम् ॥ ८१ ॥
युग्मम् ।

ह्रिया मुहुः संप्रसरापसारं
मिथस्तयोर्नेत्रयुगं तदानीम् ।
विश्रम्य विश्रम्य विभां प्रियाङ्गा-
दपादतृप्तं चिरतृष्णयेव ॥ ८२ ॥

प्रदक्षिणास्तौ शिखिनः सृजन्तौ
जायापती निर्मलचीरचारू ।

समापतुः शोणसरोरुहान्तः-
संभ्रान्तशुभ्रच्छदयुग्मशोभाम् ॥ ८३ ॥

गुरोर्नियोगादपि लाजमुष्टिं
निक्षिप्य बाला ज्वलिते कृशानौ ।
आचारधूमं भृशमाददे यं
स चिह्नलीलामगमन्मुखेन्दौ ॥ ८४ ॥

ततः सौभद्रेयः सकलकुलवीरव्रतलता-
तताम्भोदो रोदोजलधिजलपूरायतयशाः ।
प्रियायुक्तो मुक्ताविशदगुणराशिर्गुरुजनं
नमश्चक्रे वक्रेतरहृदयवृत्तिर्द्विजगिरा ॥ ८५ ॥

भेजे श्रीजिनदत्तसूरिसुगुरोरर्हन्मतार्हस्थितेः
पादाब्जभ्रमरोपमानममरो नाम व्रतीन्द्रः कृती।
पर्वैतद्विकटं विराटनृपतेस्तद्बुद्धिसिद्धापगा-
शुद्धोर्मित्विषि बालभारतमहाकाव्ये तुरीयं ययौ ॥ ८६ ॥

सर्गैश्चतुर्भिरप्यासीदस्मिन् वैराटपर्वणि ।
अनुष्टुभां पञ्चशती षडशीतिश्च निश्चिता ॥ ८७ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते श्रीबालभारतनाम्नि महाकाव्ये वीराङ्के विराटपर्वण्यभिमन्युपाणिग्रहणो नाम चतुर्थः सर्गः ॥ ४ ॥ :: ::

---

॥ श्रीः ॥

॥ खण्डप्रशस्तौ ॥

॥ नृसिंहावतारवर्णनम् ॥

(२८) किं किं सिंहस्ततः किं नरसदृशवपुर्देव चित्रं गृहीतो
नैतादृक् क्वापि जीवोऽद्भुतमुपनयमे देव संप्राप्त एषः ।
चापं चापं न चापीन्यह ह ह ह ह ह हा कर्कशत्वं नखाना-
मित्थं दैत्येन्द्रवक्षः खरनखमुखरैर्जघ्निवान्यः स वोऽव्यात्॥

इत्थममुना प्रकारेण यो नृसिंहो दैत्येन्द्रवक्षः खरनखमुखरैः कठोरनखाग्रैर्जघ्निवान्हतवान्स देवोऽव्याद्रक्षतु, इत्थमिति कथम्, यदा हरिर्नृसिंहाकृत्या हिरण्यकशिपुं दैत्यं हन्तुमाजगाम तदा तत्स्ववैर्यागमनमाकलय्य दैत्येन प्रोक्तं रे अनुचर त्वं वद किं किमिति, ततः सिंहोऽयमिति तेन प्रत्युक्ते पुनराहदैत्यस्ततः किमिति ततः किं भयमित्यर्थः, ततोऽनुचरः प्राह नरसदृशवपुर्देवचित्रं गृहीतो नैतादृक् क्वापि जीवोऽद्भुतमिति, हेदेव न केवलं सिंहो न च केवलं मानवः किन्तु विलक्षणरूपं प्राप्तो यच्चेदृशो जीवः क्वापि संसारे दृष्टोऽतोऽद्भुतमेतदित्यर्थः, ततस्तर्हि तं मत्समीपं प्रापयेति दैत्येनोक्तेऽनुचरेणोक्तं स एष स्वयमेवागत इति, ततो दैत्यो विस्मयाद्भीत्या च चापं चापमिति झटिति धनुरानयेत्याह, ततः केनचिद्वृद्धानुचरेणोक्तं हे महाराज नायं चापी किंतु निरस्त्रो यदि च भवांश्चापी तदा न्याययुद्धं न भवेद्धि शूरा अन्यायेन युयुत्सन्ते सास्त्रनिरस्त्रयोरन्याययुद्धमिति हि सुप्रसिद्धमिति, तत इत्थं तयोर्जल्पतोरेव हरिणा खरनखैस्तद्वक्षसि विदार्यमाणे नखानां कर्कशत्वं काठिन्यमित्थं लोके न क्वापि दृष्टमद्भुतमेतत्काठिन्यमित्यहहहहहहेत्यादिशब्दैर्लोके आश्चर्यं ध्वनितमभूदिति शेषः ॥ २८ ॥

(२९) चञ्चच्चण्डनखाग्रभेदविगलद्दैत्येन्द्रवक्षःक्षर-
द्रक्ताभ्यक्तसुपाटलोद्भटसटासंभ्रान्तभीमाननः ।
तिर्यक्कण्ठकठोरघोषघटनासर्वाङ्गखर्वीभव-
द्दिङ्मातङ्गनिरीक्षितो विजयते वैकुण्ठकण्ठीरवः ॥

स वैकुण्ठश्चासौ कण्ठीरवश्च वैकुण्ठकण्ठीरवो नृसिंहाकृतिर्विष्णुर्विजयते, कीदृशः सः, चञ्चच्चण्डनखाग्रैर्दीप्यमानरौद्रकरजकोटिभिः कृतो यो भेदो विदारणं तेन विगलद्वहद्दैत्येन्द्रवक्षस्तस्मात्क्षरद्यद्रुधिरं तेनाभ्यक्ताः सिक्ताः सुपाटलाः सुष्ठु स्वतो लोहिता उद्भटा याः सटास्ताभिः संभ्रान्तं सभयं भीममाननं मुखं यस्य सः, यद्यपि केवलस्याञ्जधातोर्म्रक्षणे घृतादिसेकेऽर्थे वृत्तिः सोपसृष्टस्य तु व्यक्तिगत्योरिति भेदो लोके दृश्यतेऽतोऽत्र सोपसर्गस्याञ्जेः सेकार्थता न घटते तथापि महाकविप्रयोगात्तादृशनियमस्य प्रायिकत्वमनुमीयत इति बोध्यम्, पुनः किंविशिष्टः, तिर्यक्कण्ठेन कठोरा या घोषघटना महाध्वनिविलासः सिंहनादस्तया सर्वाङ्गेण सर्वशरीरेण खर्वीभवन्तो नीचैर्नमन्तो ये दिङ्मातङ्गास्तैर्निरीक्षितोऽवलोकितः ॥ २९ ॥

(३०) वपुर्दलनसंभ्रमात्स्वनखरन्ध्रनष्टे रिपौ
क्व यात इति विस्मयात्प्रहितलोचनः सर्वतः ।
वृथेति करताडनान्निपतितं पुरो दानवं
निरीक्ष्य भुवि रेणुवज्जयति जातहासो हरिः ॥

रिपौ हिरण्यकशिपौ वपुषो देहस्य दलनं विदारणं तस्य संभ्रमाद्भयात्सिंहनखच्छिद्रान्तः प्रविष्टे सति क्व प्रदेशे यातो गत इति विस्मयादाश्चर्यात्सर्वतः सर्वासु दिक्षु प्रहिते प्रेषिते लोचने नेत्रे येन स नृसिंहस्तं रिपुं क्वचिदप्यनवलोकयन्वृथेति मुधैव मयैतावन्तमनेहसं प्रयासः कृत इति सखेदं करताडनादुभाभ्यां पाणिभ्यां तालिकादानात्स्वनखरन्ध्रात्पुरोऽग्रे

भुवि रेणुवन्निपतितं दानवं निरीक्ष्य दृष्ट्वा जातहासः समुत्पन्नहास्यो हरिर्जयति ॥ ३० ॥

(३१) दंष्ट्रासंकटवक्त्रकन्दरललज्जिह्वस्य हव्याशन-
ज्वालाभासुरभूरिकेसरसटाभारस्य दैत्यद्रुहः ।
व्यावल्गद्बलवद्धिरण्यकशिपुक्रोडस्थलास्फालन-
स्फारप्रस्फुटदस्थिपञ्जररवक्रूरा नखाः पान्तु वः ॥

दैत्याय हिरण्यकशिपवे द्रुह्यतीति दैत्यद्रुट् तस्य हरेर्नखा वो युष्मान्पान्तु रक्षन्तु, किंविशिष्टस्य तस्य, दंष्ट्राभिः सङ्कटः संकीर्णो यो वक्त्रकन्दरो मुखगह्वरं तस्मिन् ललन्ती विलसन्ती जिह्वा यस्येति, पुनः किंविशिष्टस्य, हव्याशनोऽग्निस्तस्य ज्वाला अर्चिषस्ताइव भासुरा देदीप्यमाना भूरि बह्व्यो याः केसरसटाः सिंहस्कन्धस्फुरज्जटास्तासां भारः समूहो यस्य स तस्येति, पुनः किंविशिष्टा नखाः, व्यावल्गन् कूर्दन् बलवान्यो हिरण्यकशिपुर्दैत्यविशेषस्तस्य यत्क्रोडस्थलमुत्सङ्गस्थलं तस्य यन्नखैः कृतमास्फालनं विदारणं तेन स्फारो विस्तीर्णः प्रस्फुटन्योऽस्थिपञ्जरं कङ्कालं तस्य यो रवः शब्दस्तेन क्रूरा उग्रा इति ॥ ३१ ॥

(३२) भूयः कण्ठावधूतिव्यतिकरतरलोत्तंसनक्षत्रमाला-
बालेन्दुक्षुद्रघण्टारणितदशदिशादन्तिचीत्कारकारी ।
अव्याद्वो दैत्यराजप्रथमयमपुरीयानघण्टानिनादो
नादो दिग्भित्तिभेदप्रसरसरभसः कूटकण्ठीरवस्य ॥

कूटेन छद्मना कण्ठीरवः सिंहः प्रकृत्या च यो ना हरिरिव तस्य नृसिंहस्य भगवतो नादः क्ष्वेडो वो युष्मान् भूयो स्मान्रक्षतु, किंविशिष्टो नादः, दिश एव भित्तयस्तासां भेदप्रसरे भेदप्रवृत्तौ सरभसो राभस्ययुक्तस्त्वरोत्सुक इति भावः, पुनः किंविशिष्टः, कण्ठावधूतिव्यतिकरे गलकुहरान्दोलनप्रस्तावे तरला चपलोत्तंसोच्चैः स्थायिनी या नक्षत्रमाला नक्षत्रश्रेणिः सा च बालेन्दुर्नूतनचन्द्रश्च तावेव क्षुद्रघण्टा लघुकिङ्किण्यस्तासां यद्रणितं शब्दितं तेन दशसु दिक्षु ये दिग्दन्तिनो दिग्गजास्तेषां चीत्कारं कारयतीति सः, पुनः किंविशिष्टः, दैत्यराजस्य हिरण्यकशिपोः प्रथमो यमपुरीयाने गमने यो घण्टानिनादः स इवेति ॥ ३२ ॥

(३३) अन्तःक्रोधोज्जिहानज्वलनभवशिखाकारजिह्वव-
लीढप्रौढब्रह्माण्डभाण्डः पृथुभुवनगुहागर्भगम्भीरनादः ।
दृप्यत्पारीन्द्रमूर्तिर्मुरजिदवतु वः सुप्रभामण्डलीभिः
कुर्वन्निर्धूमधूमध्वजनिचितमिव व्योमरोमच्छटानाम् ॥

दर्पयुक्तसिंहमूर्तिर्मुरजिद्विष्णुर्वो युष्मानवतु रक्षतु, स किंविशिष्टः, अन्तश्चित्ते क्रोधएवोज्जिहान उत्पद्यमानो यो ज्वलनोऽग्निस्तस्मादुद्भवोत्पन्ना शिखाकारा रक्तत्वसाधर्म्याद्या जिह्वा तयाऽवलीढमीषदास्वादितं प्रौढं गरिष्ठं ब्रह्माण्डभाण्डं येन सः, पुनः किंविशिष्टः, पृथुर्विस्तीर्णा या भुवनगुहा त्रिजगद्गह्वरं तस्या यो गर्भो मध्यं तत्र गम्भीरो नादो यस्य सः, किंकुर्वन्निव, रोमच्छटानां स्कन्धस्फुरत्केसराणां सुप्रभामण्डलीभिः शोभनकान्तिश्रेणीभिर्व्योमाकाशं निर्धूमधूमध्वजनिचितं निर्धूमाग्निव्याप्तं कुर्वन्निव, यतस्तद्रोम्णां प्रभारक्ता भवन्ति ततश्चाकाशं गच्छन्त्यो निर्धूमाग्निभ्रान्तिं जनयन्तीति भावः ॥ ३३ ॥

(३४) सोमार्धायितनिष्पिधानदशनः सन्ध्यायितान्तर्मुखो
बालार्कायितलोचनः सुरधनुर्लेखायितभ्रूलतः ।
अन्तर्नादनिरोधपीवरगलत्वक्कूपनिर्यत्तडि-
त्तारस्फारसटावरुद्धगगनः पायान्नृसिंहः स वः ॥

स नृसिंहो वः पायात्, किंविशिष्टः सः, सोमार्धं चन्द्रार्धमिवाचरन्ति ते सोमार्धायिताः निष्पिधानाः पिधानरहिताश्च ते दशना दन्ता यस्य सः दन्तानामर्धचन्द्राकृतित्वं प्रसिद्धमेव क्रोधसमये ओष्ठपुटाभ्यामनाच्छादनं च तथेति भावः, पुनः किंविशिष्टः, संध्येव रक्तत्वसाधर्म्यादाचरत् सन्ध्यायितमन्तर्मुखं यस्य सः, पुनः किंविशिष्टः, बालार्कइवाचरन्ती लोचने यस्य सः, पुनः किंविशिष्टः, सुरधनुर्लेखेवेन्द्रचापलेखेवाचरति भ्रूलताऽस्येति, अत्राचारार्थकक्यङन्तात् क्तप्रत्ययो ज्ञेयः, पुनःकथंभूतः, अन्तर्मध्ये यो नादनिरोधः शब्दावरोधनं तेन यः पीवरो गलस्तस्मिन् ये त्वक्कूपा रोमकूपास्तेभ्यो निर्यन्ती निस्सरन्ती तडिद्विद्युत्तत्तारोज्ज्वला स्फारा विस्तीर्णा या सटा केसरच्छटा तयाऽवरुद्धं व्याप्तं गगनं येन स इति ॥ ३४ ॥

(३५) चटच्चुटिति चर्मणि च्छुमिति चोच्छलच्छोणिते
धगद्धगिति मेदसि स्फुटरवोऽस्थनि ष्ठागिति ।
पुनातु भवतो हरेरमरवैरिवीरोरसि
क्वणत्करजपञ्जरक्रकचघर्षजन्मानलः ॥

अमराणां देवानां वैरी शत्रुर्हिरण्यकशिपुनामा दैत्यः स एव वीरः सुभटस्तस्योरसि हृदये, अथ वा अमरवैरिषु वीरो दैत्यस्तस्योरसि हरेर्विष्णोः क्वणन् शब्दं कुर्वन् यः करजपञ्जरो नखपञ्जरः स एव क्रकचं करपत्रकं तेन यो घर्षो हृदयस्य घर्षणं तस्माज्जन्मोत्पत्तिर्यस्य स ईदृग्विधो योऽनलोऽग्निः स भवतो युष्मान्पुनातु पवित्रयतु, तथा चर्मणि त्वचि जायमान-

श्चटच्चटिति प्रकटरवो वः पुनातु, तथा उच्छलद्रुधिरे च्छुंच्छुमिति स्फुटरवः पुनातु, तथा मेदसि वपायां घगद्धिगिति स्फुटरवः, अस्थिनि च ष्टागिति यः स्फुटरवः स पुनातु, पुनात्विति क्रियापदसंबन्धः सर्वत्र, अत्र चटच्चटिति घगद्धिगिति द्वे अनुकरणे नातोत्र नाम्रेडितस्येति प्रवर्तत इति ॥ ३५ ॥

(३६) शत्रोः प्राणानिलाः पञ्च वयं दश जयोऽत्र कः ।
इति कोपादिवाताम्राः पान्तु वो नृहरेर्नखाः ॥

नृहरेर्नखा वः पान्तु, किंभूतास्ते, इति हेतोः कोपात्क्रोधाद्दिवाऽऽताम्रा ईषद्रक्ताः, यद्यपि स्वत एव नखा रक्ता भवन्ति परंतु कविभिरुत्प्रेक्ष्यन्ते, अथ कोपकारणमाह शत्रोरिति, शत्रोर्हिरण्यकशिपोः प्राणानिलाः प्राणवायवस्तावत्पञ्चैव वयं च दश नखा अतोऽत्रवैरिविदारणे को जयः यदि चाल्पैर्बहवो जीयन्ते तदा जयः परमोत्कृष्टः प्रतिभाति यदा चाल्पे जय्या बहवश्च जेतारस्तदा लोके हास्यमेवेतिकोपोत्पत्तिकारणमिति भावः ॥ ३६ ॥

(३७) ससत्वरमितस्ततस्ततविहस्तहस्ताटवी-
निकृत्तसुरशत्रुहृत्क्षतजसिक्तवक्षस्थलः ।
स्फुरद्वरगभस्तिभिः स्थगितसप्तसप्तिद्युतिः
समस्तनिगमस्तुतो नृहरिरस्तु नः स्वस्तये ॥

नृहरिर्नृसिंहाकृतिर्हरिर्नोऽस्मभ्यं स्वस्तये कल्याणायास्तु, अनव्ययस्यापि स्वस्तिशब्दस्य सत्वात्स्वस्तये इति, किंविशिष्टो नृहरिः, ससत्वरं सशीघ्रं यथा भवति तथा इतस्ततः सर्वत्र ततौ विस्तीर्णौ विहस्तौ वैरिहनने व्याकुलौ यौ हस्तौ तावेव अटव्यरण्यं तस्यां निकृत्तं छिन्नं यत्सुरशत्रोर्हिरण्यकशिपोर्हृद्धृदयं तस्मात्क्षतजं रुधिरं तेन सिक्तं परिक्लिन्नं वक्षस्थलं यस्य सः, पुनः किंविशिष्टः, स्फुरन्तो देदीप्यमाना वराः प्रधाना ये गभस्तयः किरणास्तैः स्थगिताच्छादिता सप्तसप्तेः सूर्यस्य द्युतिर्येन सः, पुनः किंविशिष्टः, समस्तैर्निगमैरधिष्ठानैस्तात्स्थ्यात्तद्व्यपदेश इतिन्यायात्तद्वासिभिर्जनैः स्तुतः यद्वा समस्तेषु सर्वेषु निगमेषु वेदेषु स्तुतो वर्णित इति ॥ ३७ ॥

(३८) विद्युच्चक्रकरालकेसरसटाभारस्य दैत्यद्रुहः
शोणन्नेत्रहुताशडम्बरभृतः सिंहाकृतेः शार्ङ्गिणः ।
विस्फूर्जद्गलगर्जितर्जितककुम्मातङ्गदर्पोदयाः
संरम्भाः सुखयन्तु वः खरनखक्षुण्णद्विषद्वक्षसः ॥

सिंहाकृतेर्भगवतः शार्ङ्गिणश्चक्रिणो विष्णोः संरम्भा रिपुविनाशनव्यापारा वो युष्मान्पान्तु सुखयन्तु सुखी कुर्वन्तु, किंविशिष्टस्य तस्य, विद्युच्चक्रं तडित्समूहस्तद्वत्करालाः भयजनका याः केसरसटास्तासां भारः समूहो यस्मिन्स तस्य, पुनः किंविशिष्टस्य, दैत्यद्रुहः दैत्याय द्रुह्यतीति दैत्यद्रुट् तस्य, पुनः किंविशिष्टस्य, शोणन् रक्तीभवन्त्यो नेत्रहुताशो नयनाग्निस्तस्य यो डम्बर आडम्बरस्तं बिभर्तीति यः स तस्य, किंविशिष्टाः संरम्भाः, विस्फूर्जन्देदीप्यमानो यो गलकण्ठस्तेन यो गर्जिः सिंहनादरूपः शब्दस्तेन तर्जितः ककुम्मातङ्गानां दर्पोदयो यैस्ते, गर्जधातोरिप्रत्यये गर्जिः पुल्लिङ्गः यद्यपि गर्जिशब्दो मेघध्वनिवाचकः उक्तं च हेमकोशे, यथा

जलदस्य तु स्तनितंगर्जितं गर्जिः ।

इति तथाप्यत्रगाम्भीर्याद्यनेकधर्मसाधर्म्यात्तच्छब्दप्रयोगः, कीदृशस्य नृहरेः, खरनखैः क्षुण्णानि विदारितानि द्विषतां वैरिणां वक्षांसि येन स तस्येति ॥ ३८ ॥

(३९) यत्राखण्डलदन्तिदन्तमुशलान्याखण्डितान्याहवे
धारा यत्र पिनाकपाणिपरशोराकुण्ठिता वक्षसि ।
तन्मे तावदुरो नृसिंहकरजैर्व्यादीर्यते सत्वरं
दैवेदुर्जनतां गते तृणमपि प्रायेण वज्रायते ॥

नृसिंहेन वक्षसि विदार्यमाणे हिरण्यकशिपुरित्थमवदत्, तथाहि, यत्रोरसि आखण्डलस्येन्द्रस्य दन्तिन ऐरावतस्य दन्तमुसलान्याखण्डितान्यासमन्तात्खण्डितानि भग्नानीति यावत्, यत्रोरसि पिनाकपाणेरीश्वरस्य परशोः कुठारस्य धारा आकुण्ठतां प्राप्ता तन्मे ममोरो हृदयमेतादृशकाठिन्ययुक्तं सत्वरं शीघ्रं नृसिंहकरजैर्नृसिंहनखैर्व्यादीर्यते, यतो दैवे भाग्ये दुर्जनतां गते प्रातिकूल्यं प्राप्ते सति प्रायेण स्वभावतस्तृणमपि वज्रायते, वज्रशब्दादाचारक्यङिति बोध्यम् एवंविधो नृसिंहोऽस्मान्युष्मांश्च रक्षत्विति भावः ॥ ३९ ॥

॥ इति श्रीगुणविनयविरचितायां खण्डप्रशस्तिवृत्तौ नृसिंहावतारवर्णनम् ॥

---

THE

## VAIŚESHIKA APHORISMS

OF

## KAṆÁDA.

### FOURTH BOOK, SECOND DAILY LESSON.

*(Continued from page 110.)*

Non-uterine bodies exist अनियतदिग्देशपूर्वकत्वात् ॥ ६ ॥

Aph. 6. Because [the non-uterine body] has antecedents of indeterminate time and space ;—

[1] It might be asked how the non-uterine body of Manu and others is produced, seeing that it is atoms originative of semen and blood that are originative of a particular body, and that these do not there exist. In anticipation of this difficulty the aphorism is stated. Atoms indeterminate in time and space are those of which the time and space are not determined. From having these for their antecedents or conditions 'there exist non-uterine bodies,' such being the connection of the four aphorisms succeeding the fifth with the tenth. There exist, therefore, in the sphere of Varuna &c non-uterine bodies, aqueous, igneous, aerial, and mental. To obviate the difficulty as to whence come the atoms originative of beings whose production is independent of semen, blood &c, it being seen that in the case of uterine bodies it is only seminal and sanguineous, atoms that are originative, the following statement has been made. Atoms terrene, aqueous, igneous, and aerial exist in all quarters and are in all places, and there being no local determination of these, there is no lack of atoms in the production of non-uterine bodies. For it is not true that no atoms other than seminal or sanguineous are originative of bodies, since, were it so, it would follow that there was no production of the bodies of gnats, musquitoes, trees, shrubs, &c. V.

धर्मविशेषाच्च ॥ ७ ॥

Aph 7. Also because of peculiar merit ;—

[2] The sense is that in creation &c, motion arises in the atoms in consequence only of conjunction of soul and the fruits of actions done in a former state of being, and that the atoms having by that action come together originate, in the order of binary atomic aggregates &c., the non-uterine bodies of divine sages, &c. The following implication is also to be considered, that it is in consequence of peculiar demerit that the tortured bodies of musquitoes and other insects generated by heat are produced. U.

समाख्याभावाच्च ॥ ८ ॥

Aph 8. Also because names exist ;—

[1] Because names or terms are or exist, 'without an ancestor or father [to bestow them]', for these words, are to be supplied. For not all names are imposed by a father &c, for such terms as water-pot, cloth, are not such. It is therefore the same God who imposed names on water-pots, cloth, and other inanimate things, that imposed the names Manu, Maríchi &c. on non-uterine bodies. V.

संज्ञाया आदित्वात् ॥ ९ ॥

Aph 9. Because of the primitiveness of the term;—

[2] By means of the primordial name Brahman &c which became manifest in creation &c it is known that non-uterine body exists. For there are not parents of Brahman, by whom the name Brahman should be invented. U.

सन्त्ययोनिजाः ॥ १० ॥

Aph. 10. There exist non-uterine [bodies.]

[3] Here is pointed out that which is established by the four preceding aphorisms. The words 'peculiar bodies of Manu, Maríchi, and others' are to be supplied. V.

वेदलिङ्गाच्च ॥ ११ ॥

Aph. 11. [This follows] also from the evidence of the Veda.

[4] It is known from evidence or information in the

---

[1] ननु मन्वादीनामयोनिजं शरीरं कथमुत्पद्यते शुक्रशोणितारम्भकपरमाणूनामेव विशिष्टशरीरारम्भकत्वेन तत्र तदभावादित्याशङ्कायामाह । अनियतौ दिग्देशौ येषां ते अनियतदिग्देशाः परमाणवस्तत्पूर्व्वकत्वात् तदधीनत्वात् सन्त्ययोनिजाः इति दशमसूत्रेण पञ्चमान्तानां चतुर्णां सूत्राणामन्वयः तथा च वरुणलोकादौ अयोनिजा आप्याः तैजसा वायवीया मानसाश्च देहाः सन्तितेषां शुक्रशोणिताद्यनपेक्षोत्पत्तिकानामारम्भकाः परमाणवः कुत आगच्छंति योनिजेषु शुक्रशोणितपरमाणव एवारम्भका दृष्टा इत्याशंकानिरासार्थमुक्तमिदम् पार्थिवा जलीयाः तैजसा वायवीयाश्च परमाणवः सर्व्वासु दिक्षु सर्व्वेषु देशेषु च सन्ति तेषां दिग्देशनियमाभावात् अयोनिजशरीरोत्पत्तौ न परमाणुदुर्भिक्षम् न हि शुक्रशोणितपरमाणुभिन्नाः परमाणवो न देहारम्भकाः दंशमशकतरुगुल्मादिदेहानुपपत्तिप्रसङ्गादित्यर्थः ॥

[2] अदृष्टवदात्मसंयोगादेव सर्गादौ परमाणूनां कर्म्म तेन च कर्म्मणा सम्भूय परमाणवो द्व्यणुकक्रमेण अयोनिजं देवर्षीणां शरीरमारभन्ते इत्यर्थः उपलक्षणञ्चैतत् अधर्म्मविशेषाच्च क्षुद्रजन्तूनामुष्मजानां मशकादीनां यातनामयानि शरीराण्युत्पद्यन्ते इत्यपि द्रष्टव्यं ॥

[1] समाख्या संज्ञा तस्या भावात् सत्त्वात् वीजी पित्रादिकं विनैवेति शेषः न हि सर्व्वाः सज्ञाः पित्रादिनैव निर्वेशिताः घटपटादिसंज्ञानान्तथात्वाभावात् तथा च येनेश्वरेण घटपटाद्यचेतनेषु संज्ञा निर्वेशितास्तेनैव मनुमरीच्यादिसंज्ञा अयोनिजेषु शरीरेषु निर्वेशिता इति भावः ॥

[2] सर्गादौ या ब्रह्मादिसंज्ञा आदिभूता प्राथमिकीतया ज्ञायते अस्त्ययोनिजं शरीरमिति न हि तदा ब्रह्मणो मातापितरौ स्तः याभ्यां ब्रह्मादिसंज्ञा कृता स्यादिति भावः ॥

[3] इदानीं चतुर्णामुक्तानां सूत्राणां साध्यं निर्दिशति मनुमरीच्यादीनां देहविशेषा इति शेषः ॥

[4] वेदरूपं यल्लिङ्गं ज्ञापकं तस्मात् तथा ब्राह्मणो ऽस्य मुखमासीत् स मुखतो ब्राह्मणमसृजत् इत्यादिकेभ्यो वेदेभ्य एव अजोनिजाः शरीरविशेषाः सन्तीति ज्ञायते परन्तु जलीयतैजसवायवीयशरीराणां पार्थिवभागो ऽप्टम्भादुपभोगसाधनत्वम् पार्थिवं इन्द्रियं घ्राणं तच्च गन्धस्य गन्धगतजातीनाञ्च ग्राहकम् घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जकघृतादिवत् वायूपनीतसुरभिभागवद्वा रसनेन्द्रियं जलीयं परकीयरूपाद्यव्यञ्जकत्वे सति परकीयरसव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकोदकवत् एतच्च रसस्य तद्गतजातीनाञ्च ग्राहकं द्रव्यग्रहणे घ्राणरसनयोर्न सामर्थ्यम् चक्षुरिन्द्रियं तैजसं गन्धाद्यव्यञ्जकत्वे सति रूपव्यञ्जकत्वात् दीपप्रभावत् इदञ्च इन्द्रियं संयोगरूपसन्निकर्षेण उद्भूतरूपवन्ति महत्त्वविशिष्टानि च द्रव्याणि गृह्णाति संयुक्तसमवेतसमवायरूपसन्निकर्षेण तादृशद्रव्यवृत्तीनि रूपसंख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्ववेगस्नेहद्रवत्वकर्म्मसामान्यानि च गृह्णाति संयुक्तसमवेतसमवायरूपसन्निकर्षेण योग्यवृत्तिवृत्तीनि सामान्यनि गृह्णाति संयुक्तविशेषणतासंयुक्तसमवेतविशेष-

क्ष्मा ममेयमखिलाप्यदो वदन्
प्रीयते न तदकिंचनोऽपि किम् ॥ १३ ॥
मन्मुखादपि तपःसुतो नृप
त्वां प्रणम्य परिरभ्य बान्धवान् ।
भोगमात्रफलमात्मपञ्चमो
ग्रामपञ्चकमयाचत स्वयम् ॥ १४ ॥
तद्धुनीवनबिलागसागरैः
रुद्धमस्ति न कियद्धरातलम् ।
भूलवोऽयमपि तद्वदुच्यतां
मुच्यतां सह कुलेन विग्रहः ॥ १५ ॥
विग्रहः सह कुलेन नोचितो
यात्यरातिकुलकल्पपादपः ।
कश्चिरं रणभरेण सिंहयोः
प्रीतिमेति न वने वनेचरः ॥ १६ ॥
गोत्रजः सहजशत्रुरित्यसौ
नीतिरस्तु धनलोभदुर्धियाम् ।
वृद्धतुल्यलघुपुंवृतं जग-
द्धीधनस्य पितृमित्रपुत्रवत् ॥ १७ ॥
धारयन्ति धनलुब्धचेतसां
बन्धवोऽपि निभृतं विरोधिताम् ।
लूनलोभमधुरस्य धीमतो
बन्धुतां स्पृशति विश्वमप्यदः ॥ १८ ॥
देहिनामहह लोभतः परः
कश्चिदस्ति न परो भुवस्तले ।
आगमय्य निजपक्षतां क्षणाद्
यो विपक्षयति बान्धवानपि ॥ १९ ॥
तद्वयं क्षितिभृतो भुजाभृता-
मालिभिः परिवृता इति स्मयात् ।
लोभतो[1]ऽवनिलवस्य विग्रहे
मा ग्रहोऽस्तु जयसंशये निजैः ॥ २० ॥
व्योममार्गभृदनेकमार्गणे-
ष्वेकमार्गणवशं विरोधिषु ।
एकमेव गणयन्ति कोविदा
भूरिभिर्वृतमपि स्वमाहवे ॥ २१ ॥

१ लाभत इति पा० ।

नैकमप्यरिमनन्तपक्षयोऽ-
प्याहवेऽवगणयन्ति धीधनाः ।
सत्सु तारकगणेषु राहुणा
ग्रस्यते किमु न तारकाधिपः ॥ २२ ॥
आधिपत्यमपि न स्थिरं भुवः
सुस्थिरं च यदि जीवितावधि ।
जीवितं तु रणकारिणां नृणां
चापमुक्तशरतुल्यचापलम् ॥ २३ ॥
तन्मृधाय बत मा विधा धियं
बन्धुभिः सममिला विलास्यताम् ।
धाम्नि भोज्यसमये समागतान्
भोजयन्ति कृतिनो रिपूनपि ॥ २४ ॥
बन्धुवर्गमवधूय निष्ठुरो
यो बलिं गिलति भूतलेऽन्धधीः ।
नित्यमुद्धुरशिरोधरैर्मदा-
देकदृग्भिरपि स प्रहस्यते ॥ २५ ॥
हस्यमानवचसः पदे पदे
बालिशैरपि पराङ्मुखश्रियः ।
क्ष्मामटन्ति निजपक्षविद्विषः
खण्डिता[1] इव न पण्डिता नृपाः ॥ २६ ॥
यः स्वबान्धवगणस्य पृष्ठगो
भोगकर्मणि रणोत्सवेऽग्रगः ।
तं वियोगलवकातरा धरा
सेवते सुचरितं पतिव्रता ॥ २७ ॥
यो धुनोति निजबन्धुतां निज-
स्तस्य कोऽस्तु पर एव यः परः ।
क्वापि यान्त्यमलपक्षिणो जलैः
शैवलं क्षिति सहैव शुष्यति ॥ २८ ॥
ये स्वबन्धुपरिरम्भसंभव-
प्रीतयो धनलवाप्तसंमदाः ।
ते हृतेन्दुरवयो वयोमणि-
द्योतिनोऽतिमलिना घना इव ॥ २९ ॥

१ पण्डिता इति पा० ।

बन्धुनातिकटुनापि संगमः
संमदं सृजति यं न तं सुधा ।
यत् सुधाकरकरेषु सत्सु न
प्रीयतेऽस्तभृति भास्करेऽम्बुजम् ॥ ३० ॥
तेन बन्धुषु निजेषु संधये
ढौक्यतां किमपि पञ्चकं पुराम् ।
सर्वथापि विषयेऽत्र वो हिते
सोऽहमप्युपरुणध्मि मध्यगः ॥ ३१ ॥
प्राक्चरित्रनिचयैर्निबोधितो
नारदादिभिरपि द्रुतागतैः ।
ऊचिवानिति हरिं प्रति क्रुधा-
रुद्धबोधनिधनः सुयोधनः ॥ ३२ ॥
सौहृदेन जयिनश्चटूनि किं
दैत्यबन्धन दधासि संधये ।
तान् महाप्रहरणान् रणावनी-
सीम्नि सज्जय लसज्जयश्रियः ॥ ३३ ॥
याच्यतेऽवनिलवोऽद्य धीधनै-
रेभिरूढदृढगूढमत्सरैः ।
तत्र रोपितपदा हि मद्भू-
दाहि सैन्यमतिमेलयन्ति ते ॥ ३४ ॥
अद्य बान्धवमिषान् द्विषः कथं
तान् महत्त्वमधिरोपये पुनः ।
मृत्युदानपरमङ्गसंगतं
कः प्रवर्धयति रोगमात्मनः ॥ ३५ ॥
एवमालपति कौरवे रवैः
साम्यमिन्दुमपि नायनं नयन् ।
भारतीमभजदुल्लसद्भुजः
क्रोधनः क्रमकटुं त्रिविक्रमः ॥ ३६ ॥
ऐन्द्रिरेव परमः सुहृन्मम
त्यज्यते स्वरपि यत्कृते मया ।
सान्द्रमैन्द्रमपि तस्य निष्फलं
यस्य न स्फुरति तादृशः सुहृत् ॥ ३७ ॥
संगतोऽङ्ग सुहृदां सुधा मुधे-
त्यादिशन्ति ह दयालवः सदा ।

१—नय इति पा० ।

यं रसाद्रसयतां मनीषिणां
न प्रियाधररसेऽपि हि स्पृहा ॥ ३८ ॥
नो सुहृत्परिचयात् परं क्वचित्
किंचिदस्त्यमृतमित्यहं ब्रुवे ।
यन्निपातघटमानहृष्टयो
दृष्टयो दधति निर्निमेषताम् ॥ ३९ ॥
इत्थमिन्द्रसुतसौहृदादहं
किं करोमि न विना त्वदुक्तिभिः ।
पूर्वकर्मवशगे शुभाशुभे
चाटु कर्म कुरुते न कोविदः ॥ ४० ॥
युष्मदर्थमयमर्थितो मया
संधिरस्तु यदि वो युधीप्सिता ।
भीमदोष्णि निहितैव तद्द्विषां
कालरात्रिरिव सर्वदा गदा ॥ ४१ ॥
अस्तु पाण्डुतनुजन्मनां पुनः
को विरोधिषु भवत्सु मत्सरः ।
मौलिदत्तचरणासु केसरी
मक्षिकासु न कदापि कुप्यति ॥ ४२ ॥
को भवत्परिभवाय पाण्डवैः
सैनिकव्यतिकरः करिष्यते ।
वल्गदेणगणगर्वखर्वणे
सैन्यमानयति केसरी कियत् ॥ ४३ ॥
उत्तरार्थहृतमौलिचीवरो
मौलिजालमहरद्द्वयाभरात् ।
कां चमूमरचयच्चमूभृतां
गोग्रहे स विजयी जयाय वः ॥ ४४ ॥
पश्यतां निजभुजाभृतां कृप-
द्रोणतत्तनयकर्णभूभुजाम् ।
त्वां बलादिविहृतं व्यमोचयत्
फाल्गुनस्तदपि विस्मृतं तव ॥ ४५ ॥
यस्तु दुष्टजनपुष्टसंनिधिः
साधुबन्धुवचनेषु रोषणः ।
स ध्रुवं त्वमिव दुश्चरित्रधीः
क्रोधनेन विधिना कटाक्षितः ॥ ४६ ॥

यद्विदुः प्रकृतितो विपर्ययं
मृत्युसीम्नि तदसत्यमेव ते ।
आजनुः प्रकृतिदुष्ट साधुतां
नाधुनापि मृतिदुष्ट यद्बुधाः ॥ ४७ ॥
ते त्वया समधिरोपिताः पदं
किं महत्तममवाप्तुमिच्छव: ।
ऊर्णनाभमुखलालया लता-
रोहधीः क इव काङ्क्षति ग्रहम् ॥ ४८ ॥
किंच नीचगति वारि तत्पते:
क्षीरपत्यमधिगत्य तां जडः ।
द्रागधो जिगमिषुर्महोन्नते:
क्वाधिरोपयतु बान्धवान् पदे ॥ ४९ ॥
निर्मलोऽपि मलिनीभवन् जले-
रुन्नतो भजति वैरितां निजे ।
धूमयोनिरिह धूमकेतन-
ग्लानिदर्शितरसो निदर्शनम् ॥ ५० ॥
अप्रणाशितकुलं न शाम्यति
स्वैः सह ध्रुवममर्षजं महः ।
वेणुयुग्मघनघट्टजः शिखी
सर्वतोऽपि विपिनं दहत्यहो ॥ ५१ ॥
तन्मुधा दधति संधये धियं
मादृशा इह भवादृशे मुहुः ।
अन्तु वः सकलमप्यदः कुलं
भीमदोर्विटपिभोगिनी गदा ॥ ५२ ॥
इत्युदारतरभारतीभरे
कैटभद्विषि तदा बभौ सभा ।
कोपतः कपिशदीधितिर्मूर्ति-
स्त्रीकटाक्षचयचुम्बितेव सा ॥ ५३ ॥
क्रूरकोपकपिशः परिज्वलन्
कौरवप्रभुमुखप्रभाभरः ।
भूपरिभ्रमणनिर्भरो बभौ
चीवगाग्निडव इवाशुशुक्षणिः ॥ ५४ ॥
ऊरुमाहत तथा सुयोधनः
क्रोधनः करतलेन नादिना ।
तद्यशङ्कत यथा विभुः स्वयं
भीमसेनगदयाप्यभङ्गुरम् ॥ ५५ ॥
स्वौ भुजावधित कोपकर्कटक-
त्रुट्यदङ्गदसमुच्छलन्मणी ।
दुःसहोष्मदहनस्फुलिङ्गक-
स्फूर्जिताविव सुयोधनानुजः ॥ ५६ ॥
कोपवानवतरः स्मरद्विष-
स्तं स्मरस्य पितरं पुरः स्मरन् ।
आदधेऽलिकदृशं[1] भृशं कृपी-
येनिदल्वणकृपीटयोनिकाम् ॥ ५७ ॥
विस्फुलिङ्गपटलीं मुखान्विषः
कोपपिष्टरदराजिजां क्षिपन् ।
इन्दुतो दहनवृष्टिमङ्गलं
संसदि व्यधित कर्णनन्दनः ॥ ५८ ॥
इत्यलोक्यत कुतूहलोल्लस-
ल्लोचनेन दनुनन्दनद्विषा ।
रोषरूक्षरवसंभ्रमभ्रम-
द्भूरिभूरमणरासभा सभा ॥ ५९ ॥
स्वग्रहार्थमथ कौरवाग्रजं
पाशपाणिमतिकोपिनं पुरः ।
प्रेक्ष्य सात्यकिनिवेदितं तदा
दिव्यरूपमधित क्रुधा विभुः ॥ ६० ॥
भालभागगतपद्मभूविभा-
भारभासुरनभाः सभाचरैः ।
मस्तकोपगतकोपपावको
ज्वालयन्नयमशङ्कि शङ्किभिः ॥ ६१ ॥
हृद्विहारिहरहारहारिणा
भीषणः फणभृतां गणेन सः ।
बाहुदण्डनिवहानहो बहू-
कुर्वता क्षणबहूकृतानपि ॥ ६२ ॥
अस्त्रमुल्लसदभीषुभीषणं
दोष्णि दोष्णि स दधौ नवं नवम् ।
मारिभिर्नवनवाभिरेकको
हन्तुकाम इव वैरिणः क्षणात् ॥ ६३ ॥

[1] किल दृशं इति पा० ।

क्रूरकौरवचमूविमूलन-
स्फीतदु:सहमह:प्रतानिव ।
वृष्णिपार्थनिवहान् मुहुर्मुखा-
दक्षिपत् सहचराशुशुक्षणीन् ॥ ६४ ॥
व्यात्तवक्त्रपटुकण्ठकन्दर-
स्पष्टदृष्टजठरत्रिविष्टपम् ।
तं निरीक्ष्य भयभीतचक्षुष:
कौरवा विधुरमारवं व्यधु: ॥ ६५ ॥
द्रोणभीष्मविदुरर्षिसंजयै-
रेव हर्षिभिरसौ निरीक्षित: ।
द्रागमर्षशमनाय नाकिभि-
र्नाकनायकमुखैरिति स्तुत: ॥ ६६ ॥
उद्गतस्त्वदुदराद्विरञ्चन-
स्तत्सुता च वचसामधीश्वरी ।
तत्प्रसादलवकोविदाकृति-
र्वेत्तु वास्तवमपि स्तवं क्व ते ॥ ६७ ॥
गर्भितत्रिभुवनोऽपि वा यथा
नाथ संवससि नो मनोऽणुषु ।
त्वं प्रसीदसि तथैव चेद्वचो-
गोचरीभवसि तन्मुदा नुम: ॥ ६८ ॥
रोचते परकृताप्यहो सतां
न स्तुति: स्वमिह नौति क: स्वयम् ।
शेमुखीं स्वमयविष्टपत्रय
स्वस्तवार्थमिति न प्रयच्छसि ॥ ६९ ॥
किं तव स्तवगिरा प्रसीदतु
प्रीतडिज्जलद भक्तवत्सल ।
मुञ्चतु क्रुधमिमां भवान् भवा-
भोगदु:खसुखतारतुन्दिल: ॥ ७० ॥
कौरवेष्वपि करोषि बाणदो:-
खण्डखण्डनकुठारं किं रुषा ।
वर्ज्यसे युधि य एव भालदृ-
ग्दृष्टभाललिपिना पिनाकिना ॥ ७१ ॥
ज्वालयन् हुतभुगेकमालयं
पत्तनस्य परितोऽपि भीतिद: ।

१–क्वतोऽत्र इति पा० ।

एषु कुप्यसि भृशं वयं भयं
मन्महे हृदि महेश मा कुप: ॥ ७२ ॥
एवमाशु गमित: शमं सुरै-
र्वज्रभृत्प्रभृतिभि: सुभक्तिभि: ।
द्रोणभीष्मविदुरान्वितो ययौ
स्वसद: स दनुसूनुसूदन: ॥ ७३ ॥
पृथामथामन्त्र्य हरि: पुरस्य
बहिर्गत: प्रागुपहूय कर्णम् ।
तदग्रतस्तज्जनिकिंवदन्ती-
मुवाच दन्ती दनुजद्रुमाणाम् ॥ ७४ ॥
अथ स्वजन्मप्रथया पृथाया:
कौमार्यसूनुर्निजगाद कर्णी ।
धिङ्मां मयैवेदमकारि दु:ख-
मजानता तेषु सहोदरेषु ॥ ७५ ॥
धिङ्मां मया सापि तदा वधूटी
दृष्टातिहृष्टेन कदर्थ्यमाना ।
धिङ्मां मया तान् परिहृत्य बन्धून्
बन्धूकृतास्तत्परिपन्थिनोऽपि ॥ ७६ ॥
इत्यनुस्मरणकश्मलवर्णं
कर्णमर्णवशयोऽनुशयार्तम् ।
आन्तरत्रिजगतीगतगङ्गा-
वीचिचारुभिरुवाच वचोभि: ॥ ७७ ॥
कर्ण मा स्वमपवर्णय वृत्तं
बन्धुवर्गमधुनापि भज स्वम् ।
राज्यभाजमिह धर्मजमुख्या-
स्त्वां नमन्तु तव कोऽपि न मन्तु: ॥ ७८ ॥
अग्रजं विभुमवाप्य भवन्तं
दुर्जयेषु खलु तेषु विपक्षै: ।
वीर जीवदखिलात्मतनूज-
प्रीतिमेतु जननी तव कुन्ती ॥ ७९ ॥
परस्परोन्मूलनयुद्धसंधा-
बन्धान्निवृत्ते त्वयि फाल्गुने च ।
अविग्रहं वीर सहस्रदृष्टे:
सहस्रभासा सह मैत्र्यमस्तु ॥ ८० ॥

इति वदति रिपौ दितेः सुतानां
गिरमधितोच्छ्‌सदङ्गमङ्गराजः ।
कथय कथमिवाश्रये सगर्भा-
नहमधुना प्रधनावतारकाले ॥ ८१ ॥

तैः सार्धमीश जयिभिर्विदधे विरोधं
मामेव यो मनसिकृत्य मृधैकधुर्यम् ।
आबालकालसहृदं व्यसनोदयेऽद्य
तं मुञ्चतः स्फुटति मे हृदयं ह्रियैव ॥ ८२ ॥

दुर्योधनादपि युधिष्ठिरमभ्युपेत-
मद्यादि मां स्खलितसख्यमुदाहरन्तः ।
मा प्रीतिपूर्णमपि नीतिविदो वदन्तु
मित्रं कलत्रमिव विश्वसनस्य बाह्यम् ॥ ८३ ॥

बन्धवोऽपि विरुद्धाः स्युर्लक्ष्मीलेशस्य लोभतः ।
जगतोऽपि जयत्येको जीवितालम्बनं सुहृत् ॥ ८४ ॥

मुञ्चे दुर्योधनं चेत् तद्विश्वे मित्रपराङ्मुखे ।
हा कः कस्य मनःशल्यदुःखोद्धारं करिष्यति ॥ ८५॥

इति कृतगिरमङ्गाधीशमीशप्रशंसा-
शुचिरुचिरचरित्रं वीरमापृच्छ्य विष्णुः ।
द्रुततरगति गत्वा कारयामास धर्मा-
ङ्गजमसहनवर्गश्रीप्रहाणं प्रयाणम् ॥ ८६ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते श्रीबालभारतनाम्नि महाकाव्ये वीराङ्के उद्योगपर्वणि दुर्बोधदुर्योधनो नाम द्वितीयः सर्गः ॥ २ ॥ :: ::

---

॥ श्रीः ॥

अथ खण्डप्रशस्तौ

वामनावतारवर्णनम् ॥

(४०) किं छत्रं किंनु रत्नं तिलकमुत तथा कुण्डलं कौस्तुभो वा
चक्रं वा वारिजं वेत्यमरयुवतिभिर्यद्बलिद्वेषिदेहे ।
ऊर्ध्वं मौलौ ललाटे श्रवसि हृदि करे नाभिदेशे च दृष्टं
पायात्तद्वोऽर्कबिम्बं स च दनुजरिपुर्वर्धमानः क्रमेण ॥

स दनुजरिपुर्विष्णुस्तदर्कबिम्बं च वः पायात्, किंभूतः सः, क्रमेण वर्धमानो वृद्धिं प्राप्नुवन्, यत्तदोर्नित्यसम्बन्धात्स इति कः, यस्य श्रीविष्णोर्बलिद्वेषिदेहे बलेर्बलिनाम्नो दैत्यस्य द्वेषी द्रोही वामनाकृत्या यो देहस्तस्मिन्, तदितिकिम् ,यदर्कबिम्बं सूर्यमण्डलममरयुवतिभिरप्सरोभिरित्यमुना वक्ष्यमाणप्रकारेण दृष्टम्, इतीतिकिम्, यदेतद्देहे ऊर्ध्वमर्कबिम्बं तत्किमिति वितर्के तादृग्वर्तुलत्वभासुरत्वादिगुणसाम्याच्छत्रं वर्तते, तथा पुनस्तच्छरीरे वृद्धिं प्राप्ते सति तदर्कबिम्बं मौलौ मुकुटे रत्नं चूडामणिर्वा वर्तते, किंत्विति विकल्पे, तथा पुनर्वृद्धौ तदर्कबिम्बं ललाटे भाले तिलकं वर्तते, उतेति वार्थे, ततोऽपि वृद्धिं प्राप्ते तच्छ्रवसि कर्णे कुण्डलं वा, श्रवसोर्द्वित्वेप्येकत्वोक्तिरर्कबिम्बस्यैकत्वाभिप्रायेणेति ध्येयम्, तथा तथैव देहवृद्धौ तदर्कबिम्ब हृदि हृदये किं कौस्तुभो मणिर्वा वर्तते, हरेर्हृदये कौस्तुभमणेः सद्भावात्, ततोऽपि देहे समुच्छ्रयं प्राप्ते सति तदर्कबिम्बं करे हस्ते चक्रं वा वर्तते, तथा ततोऽपि वृद्धौ तदर्कबिम्बं नाभिदेशे किं वारिजं कमलमस्ति, यतो हरेर्नाभौ कमलं वर्तते, अत्रेयं कथा श्रूयते, यदा हरिर्वामनाकृतिर्बटुरूपो बलिं दैत्यं हन्तुमाजगाम तदा तेनापि बलिना समायातं ब्राह्मणं भिक्षार्थिनमवगम्य प्रोक्तं रे वराक मां याचस्व यदीप्सितमित्युक्ते हरिणा स्वचरणत्रयावस्थितिहेतोः स बलिर्भुवमयाचि, ततस्तेन दत्तेत्युक्ते हरिर्वामनाकृतिरपि प्रवर्धमानदेहः क्रमेण बभूव, तदानीमियं कल्पना ताभिः सुरवनिताभिः कृता किं छत्रमित्यादीति ॥

(४१) खर्वग्रन्थिविमुक्तसन्धिविलसद्वक्षःस्फुरत्कौस्तुभं
निर्यन्नाभिसरोजकुड्मलपुटीगम्भीरसामध्वनि ।
पात्रावाप्तिसमुत्सुकेन बलिना सानन्दमालोकितं
पायाद्वः क्रमवर्धमानमहिमाश्चर्यं मुरारेर्वपुः ॥

मुरारेर्विष्णोर्वपुर्वो युष्मान्पायाद्रक्षतु, किंविशिष्टं वपुः, क्रमवर्धमानमहिमाश्चर्यं क्रमेण वर्धमानो यो महिमा महित्वं तेन कारणेनाश्चर्यं यस्मिन् तत्, पुनः किंविशिष्ट, खर्वग्रन्थिविमुक्तसन्धि खर्वग्रन्थीनां विमुक्ताः सन्धयो येन तत्, पुनः किंविशिष्टं, विलसद्वक्षःस्फुरत्कौस्तुभं विलसद्दीप्यमानं यद्वक्षो हृदयं तस्मिन्स्फुरत्कौस्तुभं यस्मिन् तत्, पुनः किंविशिष्टं, निर्यन्नाभिसरोजकुड्मलपुटीगम्भीरसामध्वनि निर्यन्निस्सरन्नाभिसरोजकुड्मलपुट्या नाभिकमलकुड्मलपुटाद्गम्भीरः सामध्वनिर्ब्रह्मणः सामवेदध्वनिर्यस्मिन् तत्, पुनः किंविशिष्टं, पात्रावाप्तिसमुत्सुकेन पात्रस्य कपटद्विजाकारस्य हरेर्याऽवाप्तिस्तस्यां समुत्सुकेन बलिना, यतः पात्रं दातृभिर्बहुभिः पुण्यैरवाप्यतेऽतः सानन्दं साल्हादं यथा स्यात्तथाऽऽलोकितं दृष्टमिति ॥ ४१ ॥

(४२) ब्रह्माण्डच्छत्त्रदण्डः
शतधृतिभवनाम्भोरुहो नालदण्डः
क्षोणीनौकूपदण्डः
क्षरदमरसरित्पट्टिकाकेतुदण्डः ।
ज्योतिश्चक्राक्षदण्ड-
स्त्रिभुवनविजयस्तम्भदण्डोऽङ्घ्रिदण्डः
श्रेयस्त्रैविक्रमस्ते
वितरतु विबुधद्वेषिणां कालदण्डः ॥

त्रिविक्रमस्त्रयो विक्रमा विशिष्टाः क्रमाः सृष्टिस्थितिप्रलयलक्षणाःशक्तयोऽस्य त्रिषु लोकेषु विक्रमः पादन्यासोऽस्येति वा त्रिविक्रमस्त्रिविक्रमस्यायं त्रैविक्रमः, यतो बलिसंहारे हरिस्त्रिविक्रमो बभूवेति सभ्याः, स त्रैविक्रमोऽङ्घ्रिदण्डश्चरणदण्डस्ते तुभ्यं श्रेयः कल्याणं वितरतु ददातु, कीदृशः सः, ब्रह्माण्डच्छत्त्रदण्डः ब्रह्माण्डमेव छत्त्रं ब्रह्माण्डच्छत्त्रं तस्य दण्ड इव तदाधारो यः सः, पुनःकीदृशः, शतधृतिभवनाम्भोरुहो नालदण्डः शतधृतेर्ब्रह्मणो यद्भवनाम्भोरुट् निवासपद्मं तस्य नालदण्ड इव यः सः पुनः किंविशिष्टः, क्षोणीनौकूपदण्डः क्षोणी भूः सैव नौर्नौका तस्यां कूपदण्डो गुणवृक्ष इव यः सः, पुनः कीदृशः, क्षरदमरसरित्पट्टिकाकेतुदण्डः क्षरन्ती पानीयं वहन्ती याऽमरसरिद्गङ्गा सैव पट्टिका तस्याः केतुदण्डो ध्वजदण्ड इव यः सः, पुनः किंविशिष्टः, ज्योतिश्चक्राक्षदण्डः ज्योतिश्चक्रस्याक्षदण्डो नाभिक्षेप्यदारुदण्ड इव यः सः, पुनः किंविशिष्टः, त्रिभुवनविजयस्तम्भदण्डः त्रिजगत्कीर्तिस्तम्भदण्ड इव यः सः, पुनः किंविशिष्टः, विबुधद्वेषिणां कालदण्डः विबुधद्वेषिणां देवविरोधिनां दैत्यानां कालदण्डो मृत्युदण्ड इव यः स इति ॥ ४२ ॥

(४३) हस्ते शस्त्रकिणाङ्कितोऽरुणविभाकिर्मीरितोरःस्थलो
नाभिप्रेङ्खदलिर्विलोचनयुगप्रोद्भूतशीतातपः ।
बाहूर्मिश्रितवह्निरेष तदिति व्याक्षिप्य वाक्यं कवे-
स्तारैरध्ययनैर्हरन्बलिमनः पायाज्जगद्वामनः ॥

वामनो वामनावतारो हरिर्जगत्पायाद्रक्षतु, किंविशिष्टः हस्ते पाणौ शस्त्रकिणाङ्कितः शस्त्रकिणैः शस्त्रव्रणैरङ्कितश्चिह्नितः, पुनः किंविशिष्टः, अरुणविभाकिर्मीरितोरःस्थलः अरुणविभाभिर्लोहितकान्तिभिः किर्मीरितं कर्बुरितमुरःस्थलं यस्य सः, यतो हरेर्भगवतो हृदये कौस्तुभमणिर्लोहितच्छविरस्त्यतस्तत्प्रभाभिः किर्मीरितत्वं वक्षस्थलस्यास्तीति भावः, पुनः किंविशिष्टः, नाभिप्रेङ्खदलिः नाभौ प्रेङ्खन्दीप्यमानोऽलिर्भ्रमरो यस्य सः, यतो हरेर्नाभौ कमलं वर्ततेऽतस्तत्र तत्सुरभिगन्धलोलुपतया भ्रमरागमनं घटत एवेति भावः, पुनः किंविशिष्टः, विलोचनयुगप्रोद्भूतशीतातपः विलोचनयुगाद्विशिष्टनेत्रद्वन्द्वात्प्रोद्भूतौ शीतातपौ यस्य सः, वामनः किंकुर्वन् कवेः शुक्रस्यासुरगुरोरिति तद्वाक्यं व्याक्षिप्य तिरस्कृत्य तारैरुच्चस्वरैरध्ययनैर्वेदपाठैर्बलिमनो बलिदैत्यचित्तं हरन्, तदिति किम्, रे मूढमते न जानास्येनं वामनावतारं हरिं यतस्त्वं चर्मचक्षुरतो नावजानासि अहं तु दिव्यचक्षुषा वेद्मि यदेष वामनो बाहूर्मिश्रितवह्निः समागतोस्तीति बाहूर्मौ बाहुरक्षके श्रितोऽवस्थितो वह्निरग्निर्यस्य सः । अत्रेयं कथा, असुरगुरुणा बलिहितैषिणा कविना तदानीमेव बलिसभायां समायातं हरिं वामनरूपधरं ज्ञानेनावबुध्य तं बलिं हरिस्वरूपमवबोधयितुमभाणि, रे बले एष बाहुरक्षकश्रिताग्निर्वर्तते इत्येवं प्रवदतः शुक्रस्य वाक्यं निराकृत्य यदा सामध्वनयो हरिणा समुद्गीर्णास्तदाव्याक्षेपस्तत्कथाया अभवदिति भावः ॥ ४४ ॥

(४४) यस्मादाक्रामतो द्यां गरुडमणिशिलाकेतुदण्डायमाना-
दाश्च्योतन्त्यावभासे सुरसरिदमला वैजयन्तीव कान्ता ।
भूमिष्ठो यस्तथान्यो भुवनगृहमहास्तम्भशोभां दधानः
पातामेतौ पयोजोदरललिततलौ पङ्कजाक्षस्य पादौ ॥

पङ्कजाक्षस्य पङ्कजवदक्षिणीनेत्रे यस्य स तस्य कमलनयनस्य श्रीत्रिविक्रममूर्तेः पादौ चरणौ वो युष्मान्पातां रक्षताम्, कथंभूतौ पादौ, पयोजोदरललिततलौ पयसि जले जायते यत्तत्पयोजं पद्मं तस्योदरं गर्भो मध्यमन्तर्भाग इति यावत् तद्वल्ललिते तले तलभागौ ययोस्तौ आरक्ततलाविति भावः । तयोर्मध्ये यस्मादेकस्माच्चरणाद्द्यां व्योमाक्रामतः सतः सुरसरिद्गङ्गा आश्च्योतन्ती गच्छन्ती वैजयन्ती पताकेवाबभासे समन्ताच्छुशुभे, अत्र द्युतेरात्मनेपदित्वेप्यनुदात्तेत्त्वनिबन्धनस्यात्मनेपदस्यानित्यतया तस्माच्छतरिरूपं, शुभ्यर्थकं धात्वन्तरमेव परस्मैपदीति वा स्वीकरणीयम् । किंविशिष्टाद्यस्मात्, गरुडमणिशिलाकेतुदण्डायमानात् मणिकेत्वादिर्ज्योतिश्शास्त्रप्रसिद्धो गगने प्रत्यक्षदृश्य उत्पातरूपो गरुडमणिशिलाकेतुस्तस्येव दण्डायमानो लम्बायमानस्तस्मात्, कथंभूता सुरसरित् कान्ता मनोज्ञा, तथा तयोर्मध्ये योऽन्यो द्वितीयो भूमिष्ठश्चरणः स भुवनगृहमहास्तम्भशोभां दधानः भुवनं जगत्तदेव गृहं तस्य यो महान्स्तम्भ आधारस्तस्य शोभां कान्तिं दधानो बिभ्राण इति, भूमिष्ठ इत्यत्राम्बाम्बगोभूमीति षत्वमिति बोध्यम् ॥ ४४ ॥

॥ इति श्रीगुणविनयविरचितायां खण्डप्रशस्तिवृत्तौ
श्रीवामनावतारवर्णनविवरणम् ॥

## ॥ अथ श्रीपरशुरामावतारवर्णनम् ॥

(४५) गोत्राचारविचारपारगतया वृद्धाभिरादिष्टया
मात्रा वस्तुषु तेषु तेषु पुरतः प्रस्तारितेषु क्रमात् ।
अन्नप्राशनवासरे सरभसं वक्षोभरोत्सर्पिणा
येनात्तं धनुरीक्षिताश्च सपदि क्षत्रावतंसा दिशः ॥

येन परशुरामेणान्नप्राशनवासरे प्रथमान्नग्रहणदिने मात्रा वृद्धाभिरादिष्टया वृद्धाभिः श्वश्रूप्रभृतिभिर्निरादिष्टयोक्तया यथा च हे रेणुके सर्वाण्यपि क्रीडनकानि त्वमेतत्पुरतः संरचय किमवलोक्यायं हस्तमादातुं व्यापारयिष्यतीत्येवं वृद्धाभिः स्त्रीभिरुक्तया तेषु तेष्वद्भुतेषु कन्दुकादिषु वस्तुषु पुरतः क्रमेण प्रस्तारितेषु विस्तारितेषु सरभसं सवेगं धनुरात्तं गृहीतं नत्वन्यद्वस्तुजग्रह इत्यर्थः । कीदृश्या मात्रा, गोत्राचारविचारपारगतया गोत्रस्यान्वयस्य य आचारविचारास्तत्तत्स्वक्रियाकलापविमर्शनानि तेषां पारं गतया परां कोटिं प्राप्तया, किंविशिष्टेन येन, वक्षोभरोत्सर्पिणा वक्षोभरेण हृदयबलेनोत्सर्पति गच्छति तच्छीलो वक्षोभरोत्सर्पी तेन, पुनः सपदि शीघ्रं क्षत्रावतंसाः क्षत्राणि क्षत्रियराजास्त एवावतंसाः शिखरीभूता यासु ता दिशो निरीक्षिता अवलोकिताः, यतस्तेन सर्वत्रापि क्षत्रिया एवावलोकितास्ततस्तान्हन्तुं रुषा धनुरेवात्तमिति भावः ॥ ४५ ॥

(४६) देवे दिग्विजयोद्यते धृतधनुष्प्रत्यर्थिसीमन्तिनी-
वैधव्यव्रतदायिनि प्रतिदिशं क्रुद्धे परिभ्राम्यति ।
आस्तामन्यनितम्बिना रतिरपि त्रासान्न पौष्पं करे
भर्तुर्धर्तुमदान्मदान्धमधुपीनीलीनिचोलं धनुः ॥

देवे रामे दिग्विजयोद्यते दिग्विजयाय सज्जीभूते प्रतिदिशं क्रुद्धे ईर्ष्यालौ परिभ्राम्यतीतस्ततः पर्यटनं कुर्वति सत्यन्यनितम्बिन्यन्येषां वैरिणां नितम्बिन्यास्तां दूरे तिष्ठतु, या रतिरपि त्रासाद्भयात्पौष्पं पुष्पाणामिदं पौष्पं पुष्पविरचितमित्यर्थः धनुः कार्मुकं भर्तुः कामस्य करे धर्तुं धारयितुं नादात् न ददौ, कथं तयेति तर्कितं चेन्मम भर्ता कामो यदि धनुर्धारयिष्यति तदाऽयं राम एनं मद्भर्तारं कामं धनुर्धरत्वाद्धनिष्यतीति तद्भयात्स्वभर्त्रे धनुर्नाग्राहयत्, किंविशिष्टे रामे, धृतधनुष्प्रत्यर्थसीमन्तिनीवैधव्यव्रतदायिनि, धृतं धनुश्चापो यैस्ते च ते प्रत्यर्थिनः शत्रवस्तेषां याः सीमन्तिन्यो वध्वस्ताभ्यो वैधव्यव्रतं ददाति यः स तस्मिन्, यतः सर्वेऽपि धृतचापा रामेण हता अतस्तत्स्त्रियो वैधव्यभाजो जाता इति भावः, किंविशिष्टं धनुः, मदान्धमधुपीनीलीनिचोलं मदान्धा या मधुप्यस्ता एव नीलीनिचोलो नीलप्रच्छदपटो विद्यते यस्मिन् तत्, पुष्पमकरन्दास्वादनशीला नीलभ्रमर्योऽभितः परिभ्रमन्तीति भावः, दायिनीति दाधातोर्ग्रहादित्वाण्णिनिरिति ज्ञेयम् ॥ ४६ ॥

(४७) किं दोर्भ्यां किमु कार्मुकोपनिषदा भर्गप्रसादेन किं
किं वेदाधिगमेन भास्वति भृगोर्वंशे च किं जन्मना ।
किं वाऽनेन ममाद्भुतेन तपसा पीडां कृतान्तोऽपि चे-
द्विप्राणां कुरुते किमप्यनुशयो रामस्य पुष्णातु वः ॥

रामस्य किमप्यनिर्वचनीयं यदनुशयः पश्चात्तापो वो युष्मान् पुष्णातु पुष्टिं विधत्ताम्, अथ तदेव पश्चात्तापकारणमाविर्भावयन्नाह, चेद्यदि मयि सति कृतान्तो यमोऽपि विप्राणां पीडां व्यथां कुरुते तदा दोर्भ्यां बाहुभ्यां किं, तत्पीडाया अनिवर्तितत्वान्न किंचिदित्यर्थः । तथा कार्मुकोपनिषदा धनुर्वेदविद्याज्ञानरहस्येन किम्, उत वा भर्गप्रसादेनेश्वरप्रसन्नतया किम्, यतो महतामनुग्रहस्तदा सफलः स्याद्यद्युपकारः कस्यचित्कर्तुं शक्येत परं मया तत्पीडाऽपि निवारिता न भवत्यतः शम्भुप्रसादेन किमित्यर्थः । तथा वेदाधिगमेन चतुर्णामपि वेदानां ज्ञानेन किं न किमपीत्यर्थः । तथा भास्वति भास्वरे भृगोर्जमदग्नेर्वंशे पुनर्जन्मना किम्, अथवाऽनेन ममाद्भुतेनाश्चर्यकारिणा तपसा चान्द्रायणादिना किं, यतस्तपसाऽसाध्यमपि साध्यते परं यदि मया तत्कृत्यं नासाधि तदाऽनेन तपसा किमिति भावः ॥ ४७ ॥

(४८) नाशिष्यः किमभूद्भवः किमभवन्नापुत्रिणी रेणुका
नाभूद्विश्वमकार्मुकं किमिति वः प्रीणातु रामत्रपा ।
विप्राणां प्रतिमन्दिरं मणिगणोन्मिश्राणि दण्डाहतो
नाब्धीनां स मया यमोऽपि महिषेणाम्भांसि नोद्ग्राहितः ॥

इत्येवं रामत्रपा परशुरामलज्जा वो युष्मान्प्रीणातु, इतीतिकिम्, भव ईश्वरोऽशिष्यः शिष्यरहितः किं नाभूत्, यस्य शिष्यत्वेऽपि परकृत्यसाधनासमर्थोऽहं जातः स चेदशिष्योऽभविष्यत्तदा चारुजातमभविष्यत् । उक्तं च चाणक्ये । तथाहि

वरं ह्यशिष्यो न वरं कुशिष्य इति ।

तथा रेणुकाऽपुत्रिणी पुत्ररहिता किं नाभवत्, किमिति प्राक्सा गर्भ एव मामधत्त धृतापि किं न स्राविता यतस्तस्यां समुत्पन्नोऽहं न कां चित्परोपकृतिमकार्षमिति, तथा विश्वमकार्मुकं धनुर्विरहितं नाभूत्, चेद्विश्वे कार्मुकं नाभविष्यत्तदाऽहं धनुः कथमाधास्यं तथात्वे तत्कथं संभाव्यते, अथलज्जायाः कारणमाह । मया विप्राणां प्रतिमन्दिरं प्रतिगृहमब्धीनां चतुर्णामपि समुद्राणामम्भांसि जलानि मणिगणोन्मि-

श्राणि मणिगणैरुन्मिश्राणि व्याप्तानि न कृतानि, अपि च अहिषेण कृत्वा दण्डाहतो यमोऽपि नोद्वाहितो न पलायित इति रामत्रपा वः प्रीणात्विति भावः ॥ ४८ ॥

(४९) कुलाचला यस्य महीं द्विजेभ्यः
प्रयच्छतः सीमदृषत्वमापुः ।
बभूवुरुत्सर्गजलं समुद्राः
स रैणुकेयः श्रियमातनोतु ॥

स रैणुकेयो रेणुकाया अपत्यं श्रियं लक्ष्मीमातनोतु, स इति कः, यस्य रामस्य द्विजेभ्यो महीं प्रयच्छतो ददतः कुलाचलाः सप्त कुलपर्वताः सीमदृषत्वं सीम्नो मर्यादाया दृषत्वं दृषद्भावं प्रस्तरभावमापुः प्राप्ताः, यदा ब्राह्मणेभ्यो भूर्दत्ता तदा तेषां स्वस्वभूमिसीमार्थं कुलाचला एवासन् ।

तेच यथा ।

महेन्द्रो मलयः सह्य ऋक्षवान्गन्धमादनः ।
निन्ध्यः पारियात्रश्च सप्तैते कुलपर्वताः ॥ १ ॥

तथा समुद्रा उत्सर्गजलं बभूवुर्यदा याचकेभ्यो दानं दीयते तदा दानात्प्राग्दातृभिरुत्सर्गजलं दीयते, अतस्तेनैतावद्दानं दत्त येन समुद्रा उत्सर्गजलतयाऽभूवन्निति भावः ॥ ४१ ॥

(५०) पायाद्वो जमदग्निवंशतिलको वीरव्रतालङ्कृतो
रामो नाम मुनीश्वरो नृपवधे भास्वत्कुठारायुधः ।
येनाशेषहताहिताङ्गरुधिरैः संतर्पिताः पूर्वजा
भक्त्या चाश्वमखे समुद्रवसना भूर्हन्तकारीकृता ॥

नामेति कोमलामन्त्रणे. रामो मुनीश्वरस्तापसव्रतधारित्वाद्वो युष्मान्पायाद्रक्षतु. किंविशिष्टः सः, जमदग्निवंशतिलकः जमदग्नेर्भृगोर्वंशे तिलकमिव यः सः, पुनः किंविशिष्टः, नृपवधे क्षत्रियराजवधे भास्वत्कुठारायुधः भास्वद्दीप्यमानं कुठारायुधं पर्शुरूपं शस्त्रं यस्य सः, तथा येन भगवताऽशेषहताहिताङ्गरुधिरैः अशेषाः समस्ता हता मारिता येऽहिताः शत्रवस्तेषां यान्यङ्गरुधिराणि तैः पूर्वजाः संतर्पिताः प्रीणिता इत्यनेनास्य रणे शूरत्वमाविष्कृतम् । अथ स्वधर्मपालनपुरस्सरमस्यदानशौण्डीरत्वं प्रकटयन्नाह, येन रामेण भक्त्याऽश्वमखेऽश्वमेधे यागे समुद्रवसना भूः पृथ्वी हन्तकारीकृता ब्राह्मणेभ्यो देयत्वेन विहितेत्यर्थः । हन्तकारलक्षणं मार्कण्डेयपुराणे ।

षोडश ग्रासा हन्तकारमिति ।

लिङ्गानुशासनवृत्तौ तु ।

ग्रासप्रमाणं भिक्षा स्यादग्रं ग्रासचतुष्टयम् ।
अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः ॥ १ ॥

इत्युक्तमिति ज्ञेयम् ।

॥ इति श्रीगुणविनयविरचितायां खण्डप्रशस्तिवृत्तौ श्रीपरशुरामवतारवर्णनं समाप्तम् ॥

---

॥ श्रीः ॥

## ॥ दाक्षिणात्यमतिः ॥

अथ काशीस्थपंडितनामनिवार्तापत्रे काशीस्थाभ्यां द्वाभ्यां पंडिताभ्यां लिखितं पुनर्विवाहनिर्णयकपुण्यग्रामस्थसभाविषयकं पत्रं दृष्टं मया । तस्योत्तरं दातुं यथामतिप्रयतेऽत्राहम् । तत्पत्रध्वनितविषया एते ॥ १ ॥ अस्मासु दाक्षिणात्येषु संस्कृतविद्याह्रासः ॥ २ ॥ करवीरसिंहासनेश्वरश्रीमच्छंकराचार्याणां विजयो माहात्म्यं च ॥ ३ ॥ श्रीमद्राजारामशास्त्रिणां पुनर्विवाहखंडकपुस्तकस्य प्रभावः ॥ ४ ॥ भट्टविष्णुशास्त्रिणां विद्याहीनत्वम् । कश्चित्पुरुषमनुलक्ष्य किंचिदपि लेखनं मे न रोचते । अत एव श्रीमद्राजारामशास्त्रिणां विद्याप्रभावं भट्टविष्णुशास्त्रिणां विद्याहीनत्व च वर्जयित्वाऽन्यान् विषयानुद्दिश्य किंचिद् वच्मि । सर्वे दाक्षिणात्याः श्रीमद्राजारामशास्त्रिणां सदाचरणमार्दवप्रियभाषितादिगुणपरिष्कृतमहाविद्वत्तामंगीकुर्वंति । तथापि नास्त्यस्मासु विद्याह्रासः । श्रीमच्छंकराचार्याणां नास्तिविजयो माहात्म्यं च ॥

प्रथमप्रकरणम् । अस्माकं भरतखंडनिवासिनां का विद्या किं सामर्थ्यं च ॥

सांख्ययोगादिषड्दर्शनानि क्वचिदध्याप्यन्ते क्वचिदधीयन्ते च । फलमाधुर्याद्वृक्षमाहात्म्यम् । शौर्यप्रदर्शनात्क्षत्रिययोग्यता । रसादिपरिपाकात्काव्यसाफल्यं । एतैः सामान्यन्यायैरुपमानप्रमाणबलादस्माकं भरतखंडनिवासिनां समीचीनैकदर्शनज्ञानमपि नास्तीति सिध्यति । गौतमकणादप्रणीतन्यायवैशेषिकशास्त्रसाहाय्येनास्माकमिदानीं तन्नामवस्थामुदाहरामि। प्रमाणचतुष्टयजन्यस्पष्टपदार्थविज्ञानसामर्थ्याच्छेषवत्पूर्ववदनुमानस्थापनाच्चानेकोपयोगि विषयोपपादकसिद्धांतसमर्थकव्याप्तयः संग्रहीतव्याः । ईदृग्व्याप्तीनां विवेचनं करणीयम् । अनेन सत्यासत्यमंडनखंडनशौंडपंडितालंबितपथेनोपयुक्तज्ञानवर्धनात्स्वदेशस्यैहिकपारमार्थिकसुखसंपादनात्स्वदेशविभववर्धनं भवेदिति प्रयत्नाः करणीयाः । सर्वमिदं त्यक्त्वाधुनिकनैय्यायिकैः किं क्रियते । अवच्छेदकावच्छिन्नव्यासज्यवृत्तिप्रकारकत्वप्रतियोगिताव्यधिकरणसमानाधिकरणादिपदजालसंज्ञातविफलनिःसारस्वपांडित्यदर्शनम् । किमनेन । आंग्लदेशस्थाः एतद् दृष्ट्वा यदुपहसंति तत्सत्यम् । पुनरपि पातंजलपस्पशान्हिकप्रतिपादितोपयोगव्याकरणशास्त्रविवेचनं सांप्रति

कम् । सर्वजगत्पूज्यपाणिनीयशास्त्राध्ययनाद्वैदिकपदप्रयोगज्ञानाच्च वेदार्थमीमांसनं करणीयम् । शास्त्रीयलक्षणघटकपदनिर्वचनान्नवीनपदप्रयोगशक्तत्वाच्चोपयुक्तविषयसमर्थननिबंधा रचनीयाः । तथा च नवरसादिज्ञानाच्छौर्यादिगुणवर्णनान्वितनवीनकाव्यानि नाटकानि च निर्मेयानि । सर्वमिदं त्यक्त्वा कंठगतकोटिरिक्तज्ञानप्रदर्शनेन विजिगीषवो वैय्याकरणा वादं वादं स्वस्य स्वयजमानानां च कपालशूलाय व्याघ्रायंते । एषैवास्माकं दाक्षिणात्यानां काशीस्थपंडितानां च स्थितिरिदानीं तना । किंविस्तरेण ॥

द्वितीयप्रकरणम् । कुतः शंकराचार्यत्वम् । चतुर्वेदषट्शास्त्रसज्ज्ञानात्सदाचरणाच्चिस्पृहित्वाद्ब्राम्हणादिजातिचतुष्टयकल्याणेच्छुत्वात्सद्वयासंगात् सदुपदेशित्वान्निष्पक्षपातित्वाद्ब्रह्मण्यत्वाच्चैव नान्यथा । करवीरसिंहासनेश्वरशंकराचार्यादेशस्थब्राह्मणाः । ते किंचिदपि शास्त्रं न जानन्ति । स्वामपि महाराष्ट्रभाषां व्यक्तं वक्तुं न शक्नुवन्ति । सुलभव्यवहारविषयेप्यभिचरितामानं कर्तुं न प्रसहन्ते । एतादृशां भगवतो नास्तिकमतखंडकस्य सद्विद्या सच्छास्त्रप्रकाशकस्यादिशंकराचार्यस्यैव पूजनं वर्णनं च सर्वथैवायोग्यमज्ञानमूलकं च । एतदपेक्षया मुग्धपाषाणपूजनं समीचीनम् । ईदृशाः शंकराचार्याः "स्वागमनमार्गप्रान्तवर्तिनगराणि पत्तनानि च भगीरथानीतगंगौघइव पुनंतः पुण्यग्रामं प्राप्य काशीप्रभृति विविधक्षेत्रराजधानीस्थपंडितान्नानादेशीयान् भूपालान् धनिकांश्चाहूय सुधर्मामिव धर्माभासनिरासपूर्वकसनातनसद्धर्मविवेचनाय सभां सभाजयामासुरिति" वर्णनमसत्यम् । मूर्खजनप्रतारणैकफलकं चैव । नात्रसंशयः । क्व भोजराजः क्व गांगतैलिकः । क्व सुधर्मा क्व पुण्यग्रामस्य सभा ।

तृतीयप्रकरणम् । वैदिकब्राह्मणानां का स्थितिः । एते दशग्रंथात्संहितादीन् कंठगतान्कुर्वन्ति । परंत्वेकस्यापि पदस्यार्थं न जानन्ति । व्यवहारज्ञानशून्यानां शास्त्रद्वेष्टॄणां वेदार्थाशक्यत्वप्रतिपादयितॄणामेतेषां ब्राह्मणानां किं वच्मि । तेषामग्रे नानावेदार्थप्रकाशकसाधनानि गर्दभस्याग्रेगुडइव व्यर्थानि । व्यर्थं च भगवद्यास्काचार्यकृतनिरुक्तम् । व्यर्थानि च पाणिनीयानि सूत्राणि । व्यर्थं च माधवीयं भाष्यम् ।

चतुर्थप्रकरणम् । अर्वाचीनास्तरुणा आंग्लभाषां पश्यन्ति । तया व्याकरणन्यायाद्यनेकशास्त्राणां शिल्पाद्यनेककलानां च ज्ञानं भवति । चतुरवाक्पटवः सदाचरणैकदृष्टयः स्वदेशहितपरायणा एकेश्वरपूजनरता उदारचेतसः स्वजनदुःखनिरासोद्यताः संस्कृतभाषानिपुणाः केचित्सुज्ञनवीना मुग्धजनांगीकृतांधपरंपराप्राप्तां वैदिकाचरणनिरासपूर्वकश्रुत्यादिप्रतिपादितसनातनधर्मप्रवृत्तिं चिकीर्षवः सन्ति । एतेषां मतखंडनेन किं फलं जायते । एते पुराणपथानुसारि शास्त्रिणामुपदेशं न गृह्णन्ति । अत एव तेषामुपदेशः केवलं ब्राह्मणजातिकलहाय भवति । मिथो बहिष्कारेण द्वेषोत्पादकशब्दप्रयोगेणास्माकं ध्वंसः स्वहस्तैः सुंदोपसुंदयोरिवमाभूदिति मे दीनस्य विज्ञप्तिः । यतः ख्रिस्तधर्मानुयायिनो महम्मूदधर्मानुयायिनो ब्रह्मधर्मानुयायिनः पूरातनधर्मध्वंसं कर्तुमनस इत्यलम् ।

म॰ भो॰ कु॰ नामा दाक्षिणात्यकरवीरस्थशास्त्री ।

---

# RAMAYAN
## BOOK I.
### CANTO XLV.
### THE BIRTH OF LAKSHMI'.

At length when many a year had fled,
Up floated, on her lotus bed,
A maiden fair and tender-eyed,
In the young flush of beauty's pride.
She shone with pearl and golden sheen,
And seals of glory stamped her queen.
On each round arm glowed many a gem,
On her smooth brows, a diadem.
Rolling in waves beneath her crown
The glory of her hair flowed down.
Pearls on her neck of price untold,
The lady shone like burnisht gold.
Queen of the Gods, she leapt to land,
A lotus in her perfect hand,
And fondly, of the lotus sprung,
To lotus-bearing Vishṇu clung.
Her, Gods above and men below
As Beauty's Queen and Fortune know.*

* 'That this story of the birth of Lakshmí is of considerable antiquity is evident from one of her names *Kshírábdhi-tanayá*, daughter of the Milky Sea, which is found in *Amarasinha* the most ancient of Indian lexicographers. The similarity to the Greek myth of Venus being born faom the foam of the sea is remarkable'

'In this description of Lakshmí one thing only offends me, that she is said to have four arms Each of Vishṇu's arms, single as far as the elbow, there branches into two, but Lakshmi in all the brass seals that I possess or remember to have seen has two arms only. Nor does this deformity of redundant limbs suit the pattern of perfect beauty.' SCHLEGEL. I have omitted the offensive epithet.

*(To be continued.)*

PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥

अङ्करश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 55. Benares, December 1st, 1870. Vol. V.


## ॥ प्रकरणपञ्चिकायाम् ॥

॥ अङ्गपारायणम् ॥

व्याख्याविकल्पसंभवमङ्गान्यधिकृत्य संशयं छेत्तुम् ।
परमं प्रभाकरगुरोर्गम्भीरं भावमभिधास्ये ॥

इह चतुर्विधमङ्गजातं जातिगुणद्रव्यभावार्थात्मकं, तत्र भावार्थात्मकमपि द्विविधं, संनिपत्त्योपकारकमाराद्उपकारकं च, तत्र संनिपत्त्योपकारकं चतुर्विधं, साध्यभूतोत्पत्तिप्राप्तिविकृतिसंस्कृतिभेदात् । यथाक्रमं संयवनदोहनविलापनप्रोक्षणादिरूपम्, संयवनेन प्रागभूतः पिण्ड उत्पद्यते । सदेव क्षीरं दोहनेन प्राप्यते । विलापनेन प्राचीं संहतावस्थामपबाध्येतरा द्रवावस्थाज्यस्योत्पद्यते । पार्थिवं ह्याज्यं गन्धवत्वात्स्वभावतः संहतरूपमग्नियोगेन द्रवीभवति । तदाह भगवान्काश्यपः । "सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्य"मिति । तथा च शाब्दैरप्युक्तम् । अग्निसंयोगेनाज्यं द्रवीभवतीति च्विप्रत्ययप्रयोगादिति । प्रोक्षणं तु द्रव्यस्य न प्रागवस्थाध्वंसेन दशान्तरमादधातीति । श्लोकश्चात्र भवति ।

पूर्वावस्थाप्रहाणेन दशान्तरपरिग्रहः ।
विकारमाहुः संस्कारं केवलातिशयोदये ॥

इति । किं पुनरेषां चतुर्णामपि सन्निपत्त्योपकारित्वलक्षणं, यत्कारकविध्यपेक्षं फलं जनयति तत्संनिपत्त्योपकारकम् । यथा कर्त्तरि स्थानं, कर्मण्यवघातादि, अधिकरणे दध्यानयनमित्यूहनीयं, तत्र सन्निपत्त्योपकारकाङ्गवाक्येषु केचित्पृथग्विधीनभ्युपगच्छन्ति । ते हि मन्यन्ते । यद्यत्र पृथग्विधयो नाभ्युपगम्येरंस्तदा ऽधिकृताधिकारादङ्गतैवावघातादीनां न स्यात् । न च द्रव्यसंबन्धमुखेन प्रकृताधिकारापूर्वसंबन्धादङ्गतासिद्धिः । व्रीह्यादिशब्दानामाकृतिवचनत्वात्, यद्यपि कार्यप्रत्यासत्ततया व्यक्तीनां तल्लक्षणार्थो जातिशब्दः । तथापि व्यक्तिमात्रं लक्ष्येत, नापूर्वविशेषसंबद्धा व्यक्तिः । न च प्रकृताग्नेयीवत्तदपूर्वसंबन्धव्यक्तिवशेनापूर्वसंबन्धस्तथापि यथाग्नेयीन्यायेन सन्निहितव्यक्तिपरिग्रहः, तथापि स्वरूपेणैव तासां प्रकृतव्यक्तिपरिग्रहेण प्रतीतिः, न पुनरपूर्वविशेषसाधनतया तस्य स्वरूपस्य लाक्षणिकत्वात् । न च लक्षितलक्षणायां प्रमाणमस्ति । तथाहि, जात्या व्यक्तिर्लक्ष्यते । व्यक्त्या च साधनविशेष इति लक्षितलक्षणा प्रकरणाभावादयुक्ता । अत एव चाग्नेय्याग्नीध्रमुपतिष्ठते इति सत्यपि प्रकृतपरिग्रहे न ऋगन्तरेणाग्नीध्र उपस्थातव्यः । अत एव च न तत्र विनियुक्तविनियोगविरोधः । कार्यान्तरसाधनतया चाग्नीध्रोपस्थाने ऽविनियोगात् । एवं च स्वरूपमात्रेणावघातादीनां संबन्धान्नापूर्वविशेषसंबन्धसिद्धिः । दीक्षणीयावाङ्नियमनवत् । यथा स्वावान्तरापूर्वसंबन्धाद्वाङ्नियमो नाधिकारापूर्वानुप्रवेशी तथा ऽवघातादयोऽपि स्युः । ततश्चाधिकारापूर्वं प्रत्यवघातादीनामङ्गता न स्यात्तदनङ्गत्वे च तत्प्रयुक्त्यभावादवघातादीनामनुष्ठानं न स्यात् । अतो ऽवघातादिषूत्पत्तिनियोगोऽङ्गीकरणीयः । तस्मिन् चाश्रिते ऽधिकाराभावेन तस्यानुष्ठानानुपपत्तेरधिकारविधिः कल्पयितव्यः प्रकृताधिकारापूर्वाधिकृत एव प्रयाजादिष्विवाधिक्रियतइति उपायोपेयभावात्तदङ्गत्वसिद्धिरिति । तदिदं तत्र भवानुपाध्यायो न मृष्यति । अनभिज्ञो भवान्विषयनियोज्यानामिति । अवघातादिषु शब्दतो वस्तुतो वस्तुस्वभावतश्च प्रो[illegible]क्षणादिषु शब्दत एव तुषकरणविमोचनादिदृष्टमदृष्टं च कार्यमङ्गीक्रियते । तत्र

यदि नियोगो ऽप्यपर आश्रीयेत कार्यभूतस्तदा कार्यद्वयमेकस्मिन्कार्ये नान्वीयते । न च यथा स्वर्गादिकं फलं तथाभूतमेव तद्भवितुमर्हति । तस्य च नियोज्यविशेषणत्वेनान्वयसंभवात् । न च तुषकरणविमोचनादि नियोज्यविशेषणं, क्रियाफलत्वात् । यदेव नियोगात्फलं तदेव नियोज्यविशेषणतामनुभवति । साध्यविशिष्टो हि नियोज्यस्तदेव कार्यतया प्रतिपत्तुमर्हति यदेव तस्य साध्यं साधयति इति नियोज्यविशेषणस्य सिद्धिरवसीयते । यच्च क्रियाफलं न तन्नियोगात्सिध्यतीति न तद्विशिष्टो नियोगे नियोज्यतामश्नुते । न च प्रतीततुषकरणविमोचनादिकार्यत्यागो युक्तः, प्रतीतहानादेव । ननु च नियोगाभिधायिलिङादिप्रयोगवशेन नियोगो ऽपि प्रतीत एवेति तुल्यो दोषः । उच्यते । सन्निहिते विधौ विधिरवगम्यमानः स एव तावदवगन्तुमुचितः । तत्र यदि तद्विषयानुप्रवेशिता विषयस्य न स्यात् । भवेद्विध्यन्तरम् । अनुप्रविशति चावघातादि प्रकृतविषये तदर्थव्रीह्यादिसंबन्धात् । तथाहि सन्निहिताधिकारिनियोगपरतयैवावहन्त्यादिभिः पदैरवघातादय उच्यन्ते । तथाभूतानां तेषां क्रियाकारकभावोपदेशात् । यदि स्वरूपमात्रावस्थितैर्व्रीह्यादिभिः सह संबन्धः स्यात्तदा तदधिकारसंबन्धो न स्यात्तदीयसाधनविशेषलक्षणया व्रीह्यादिभिः पदैरवस्थापितो ऽवघातादिभिरन्वीयते न स्वरूपमात्रम् । एवं चोपदेश एव यवेष्वप्यवघातादयः सिद्धा भवन्ति, साधनभावस्याविशेषात् । अत एव चावघातादयो नियोगसाधनतया ऽप्राप्ता एव विधीयन्ते । नियमस्तुप्रयोजनम् । यदि नियोगाङ्गतया ऽवघातादयो न विधीयेरन् तदा पुरोडाशमात्रसिद्ध्यर्थतया नखदलनाद्यप्याक्षिप्येत, नियोगाङ्गतया त्ववघातादिषु विहितेषु तैर्विना नियोगसिद्ध्यनुपपत्तेर्नियमेन तएवाक्षिप्यन्ते । नियोगाङ्गता तु पक्षे ऽप्यप्राप्ता । नियोगस्यालौकिकतया तदङ्गस्यापि शब्दादन्यतो ऽनवगमानियोगाङ्गत्वाच्चावघातादीना नियोगसंबन्धः प्राप्तः स लिङादिभिरनूद्यते । ननु यद्यवघातादीनां नियोगसंबन्धोऽस्ति कथं तर्हि तेषां नियोगाविषयत्वम्, उच्यते । किं तु यस्य नियोगस्य सिद्धिरेव कार्यः स विषयः, अवघातादीनां च तुषकणविमोचनाद्यवान्तरकार्ये कुर्वतां नियोगाविषयत्वं, तेन नियोगाविषयत्वमङ्गताचेति सिद्धम् । विधेयास्त्ववघातादयो नियोगसिद्ध्यर्थतयोपादीयमानत्वात्तदुक्तं, "यत्तु तत्सिद्ध्यर्थमुपादीयते तद्विधेयमिति तन्त्रव्यवहार" इति ॥ तदेवं नियोगप्रत्यभिज्ञोपबृंहितसन्निधानमात्रेणैवावघातादीनां नियोगाङ्गता न पदार्थान्वयमुखेनेतिसिद्धम् । येषां पुनः पदार्थान्वयमुखेनानुप्रवेशो ऽभिमतस्तेषां प्रकरणाधीनस्य पाञ्चदश्यस्यानारभ्याधीतस्य च साप्तदश्यस्य सामिधेनीसबन्धमुखेनानुप्रवेशिनोरविशेषादुभयोरपि प्रकृतावेव नियोगो विकल्पश्च स्यात् । सन्निधानमात्रेण तु प्रकरणाधीनस्य ग्रहणे शीघ्रं पाञ्चदश्यमधिकारानुप्रविष्टमिति तदवरुद्धे साप्तदश्यमधिकारविधौ नानुप्रविशति, तेन विकृतावेव तस्य निवेश इति ॥ यदि सन्निधानतो ऽधिकारविधावनुप्रवेशः तर्हि पर्णतादीनामनारभ्याधीतानां कथमनुप्रवेशः । उच्यते । जुह्वादयो ऽव्यभिचरितक्रतुसंबन्धा इति तत्संबन्धमुखेन क्रतुसंबन्धसिद्धिः । तत्संबन्धेनैव च जुह्वादिषु पर्णतादिसंबन्धात् । अत एव हिरण्यं भार्यमितिस्वतन्त्रमेवाधिकारनियोगविषयः । हिरण्यस्य क्रतुसंबन्धव्यभिचारात् । ये च पदार्थस्वरूपानर्थकत्वापत्तेस्तत्संबन्धावस्थान्वयपूर्वकं ग्राहकान्वयमाहुः । तेषामिदमेव तावत्कथम्, आनर्थक्येन न भवितव्यमिति, वेदवाक्यत्वादिति चेत्, वेदेनानर्थकेन न भवितव्यमिति न राज्ञा ज्ञापितं, यस्यार्थो गम्यते तस्य मा भूदानर्थक्यम् । अनवसीयमानार्थस्य त्वर्थवत्त्वं मनोरथमात्रविजृम्भितम् । पक्षान्तरालम्बनेनाप्यर्थवत्ता भवत्येवेति परं संनिधानवशेन नियोगाङ्गताभ्युपगमः । सन्निधानमपि संबन्ध कारणमिति वाक्यविदः । संबन्धश्च गुणप्रधानभावमन्तरेण न स्यात् । तत्र न च कार्यमन्यथा भवतीति नियोग एव प्रधानम । अङ्गमवघातादयः । यदि चा ऽनर्थको न नियोगसंबन्धः तदा च तृच उत्तमः पर्यास इति द्वादशाहविधिविरोधाच्च, क्रतुसंबन्धे ह्येष पर्यास उच्यते । तेन तत्र पदार्थमात्रसंबन्धे एवातिक्रान्तमिति आनर्थक्यं नास्ति । तथा हिरण्मय्यः स्रुचो भवन्ति इति स्रुचामव्यभिचरितक्रतुसंबन्धानां धर्मविधेरानर्थक्यं नास्तीति न प्रकृताधिकारसंबन्धः स्यात् । किं चानर्थक्यपरिहाराय पूर्वसंबन्धो ऽभ्युपेयेत किमिति सन्निहितापूर्वसंबन्धे स आश्रीयते । यदि सन्निधानमात्रेण ततश्च अग्नेस्तृणान्यपचिनोतीति नाग्निहोत्र एव व्यवतिष्ठेत । अथ संनिधानविशेषात्तदपूर्वसंबन्धिनामग्न्यादीनां परिग्रहः तदा वरं संनिधानविशेषात्तदपूर्वसंबन्ध एवास्तु किं परंपराश्रयणेन । यथा क्रियाकारकभावेनान्विताभिधानं यथा प्रयोजनप्रयोजनिभावेन लोके प्रतिपन्नम् नहि व्रीह्यादयः प्रयोजनतां प्रतिपत्तुमर्हन्ति इति तत्परित्यागेनापूर्वेण सह प्रयोजनप्रयोजनिभावेन संबन्धः । ये चावघातादिष्ववान्तरापूर्वाणि संगिरन्ते तेषां मते प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीति प्रोक्षणं दीक्षणीयावाङ्क्यमवदवान्तरापूर्वप्रयुक्तं स्यात्ततः स त्रैधातवीयायां वाङ्क्यमो न स्यात्तथा नखनिर्भिन्नैः प्रोक्षणं न स्यात्तत्प्रयोजकं रूपं तत्र नास्तीति । नचैतद्वाच्यं,तुषकणविवेचनाधिकार्यमुखेनाधिकारापूर्वमेव प्रयोजकमिति । वाङ्क्यमेपि तथा प्रसङ्गाद्दीक्षणीयायामपि क्रत्वपेक्षितत्वोत्पत्तिरिति तदधिकार्यता नास्तीति

ज्योतिष्टोम एव प्रयोजको वाङ्नियमस्य स्यात्। तद्दीक्षितत्वात्यादिकायां त्रैधातवीयायामपि स्यात्। ननु चावघातादिष्ववान्तरविधयो नेष्यन्ते, कथं तर्हि “न चाविहितमङ्गं भवती”ति अङ्गेष्ववान्तरविध्यवगमो भाष्यकारस्य। उच्यते। आरादुपकारके ऽनृतवदनप्रतिषेधे चावान्तरविधिरङ्गीकृतः। तद्व्यतिरेकेणाङ्गत्वानुपपत्तेः। स्वरूपेण क्षणिकत्वात्कर्मणामुपकारजननकाले तदनवस्थानादङ्गत्व न घटत इति इहैव वक्ष्यामः। अत एव “संहन्यमानमन्त्रवचनो ऽसन्निपत्त्योपकारिणि न पुरुषप्रयत्नश्रवणमनुवदति” इति वदति भाष्यकारो, यत्र ह्यवान्तरविधिरस्ति तत्र पुरुषयत्नश्रवणं नानुवादः। यदेव तदवान्तरापूर्वं तत्कार्यतया लिङादिवाच्यम्। न च कृतिरूपपुरुषप्रयत्नानभिधाने कृत्यवच्छिन्नस्वभावस्य कार्याभिधानोपपत्तिरिति तदर्थं पुरुषप्रयत्नाभिधानं युक्तमिति नाविवक्षितः पुरुषप्रयत्नः। एवं नियोगप्रत्यभिज्ञोपबृंहितसंनिधिसमाम्नानादवघातादयोऽवहन्त्यादिपदैरधिकारनियोगैदमर्थ्येनान्वयिनोऽवगताः सन्तस्तदन्वितावस्थव्रीह्यादिभिः सह क्रियाकारकभावेनान्विता न प्रतिशेषतां प्रतिपद्यन्ते। किं पुनरवघातस्य व्रीह्यादिशेषत्वे प्रमाणम्। कार्यमिति ब्रूमः। तदा हि न कार्यमन्यार्थं भवति। कार्यत्वादेव। तेन यत्कार्येण संबद्धं तत्तावत्तदर्थम्। यदपि च कार्यैदमर्थ्यापन्नेन संबद्धं तेनापि सह यस्य साध्यसाधनभावस्तदपि तदर्थमेव। कार्यैदमर्थ्यापन्नस्यान्यैदमर्थ्ये प्रमाणाभावात्। एवं च सर्वेष्वशेषशेषित्वं वेदितव्यम्। यदि कार्यत एवैदमर्थ्यावगमः। कथं तर्हि श्रुत्यादीनां विनियोगकारणत्वम्। द्वारविशेषसमर्पकतया कार्यविशेषकरतया हि शेषः शेषिणि शेषतामापद्यते। नान्यथा। अकिंचित्करस्य शेषत्वानुपपत्तेः। तत्र श्रुतिः व्रीहीनवहन्तीति द्वितीयात्मिका व्रीह्यादिगतं तुषकणविमोचनादि समभिव्याहृतक्रियासाध्यभूतं समर्पयन्ती नियोगकरणतामनुभवति। न पुनरन्विततयैव शेषितां व्रीह्यादीनामवघातस्य च शेषतामाह। गा ददातीत्यादिषु व्यभिचारात्। क्रियाजन्यफलभागिता हि सर्वत्राव्यभिचारिणी द्वितीयावाच्या। न शेषिता, व्यभिचारित्वात्। क्रियाजन्यस्य फलस्य भागि कारकमेव तत्कर्म तच्च किं चिदीप्सितं भूतभाव्युपयोगात्। किं चित्वानीप्सितमनुपयोगात्। तेनैव विशेषेण भगवतः पाणिनेः सूत्रद्वयम्। कर्तुरीप्सिततमं कर्म। तथायुक्तं चानीप्सितमिति। येषां मते शेषितैव द्वितीयादीनामर्थः। तेषां मते सुवर्णं भार्यमिति क्रतुधर्म एव स्यात्। श्रुतानुगुणाधिकारानुप्रवेशितैव न्याय्या यतः। न स्वतन्त्राधिकारकल्पना एव मतः सुवर्णशेषित्वत्यागप्रसङ्गात्। क्रियाजन्यफलभागित्वे तु शब्दार्थे न श्रुतहानिरिति स्वतन्त्रकर्तृतावगमात् तत्कारणभूताधिकारत्वेनैव न्याय्या प्रकृतनियोगप्रत्यभिज्ञानाद् नियोगान्तरे स्थिरे प्रजापतिव्रताधिकारवत् कल्पनेनाधिकारकल्पनैवोचितेति स्नानादिषु वस्तुस्वभावपर्यालोचनया लिङ्गात्कर्तृसंस्काररूपकार्याङ्गीकारः। तेन कर्तरि शेषितामानादीनां सामर्थ्यात्सामर्थ्यमात्रं च लिङ्गं नाभिधानसामर्थ्यमेवं सति आज्यं जुहोतीत्यादिषु वाक्यादतिक्रमस्य होमः कार्यतया प्रतीयतइति वाक्येनापि न विनियोगः सन्निपत्त्योपकारकारणम्। न च प्रकरणेन विनियोगः संभवति। येषां प्रकरणं कल्पयति तेषां प्रकरणाधीनो विनियोगः। इतिकर्त्तव्यताकाङ्क्षा प्रकरणम्। तया च करणोपकारः कार्यभूतः कल्प्यते, तथासौ सन्निपत्योपकारिणां द्वारमिति न तेषां प्रकरणेन विनियोगः। स्थानसमाख्ययोरपि सन्निपत्योपकारकारणं प्रति न कार्यकल्पकतेति न विनियोगकारणत्वम्। एवं सन्निपत्योपकारकाणां नियोगैदमर्थ्यमभिदधानतो विनियोगतश्च कारकैदमर्थ्यमुपादानतश्चाधिकारनियोगकरणीभूतयागाद्यैदमर्थ्यं विनियोगाक्षेपो ह्युपादानम्। तत्कृतं प्रोक्षणादेः क्रत्वर्थत्वम्। यदि यदीयप्रकरणोपकारता प्रोक्षणादेर्न स्यात् तदा केनापरेण प्रकारेण तदन्विता विनियोगप्रतीतिर्निर्वहतीति नियोग एव तदन्वितः प्रतिपन्नस्तस्य करणोपकारकताकल्प्यं करणैदमर्थ्यमाक्षिपतीति तत्कृतमेव प्रोक्षणादेः क्रत्वर्थत्व विनियोगात्पुनः करणैदमर्थ्यमेवेति। कथं पुनस्तेषां करणोपकारकता। तुषकणविमोचनादिकार्यपरंपरादानेनोपकार्यविशेषादायकतया। नन्वेवं सति कारकानुप्रवेशिनामवघातादीनां करणशरीरविशेषादायकतया करणोपकारकत्वं, प्रयाजादीनां तु व्यतिरिक्तकारकानुग्रहजनकतेति न सर्वैरेक उपकारः क्रियते। ततश्च सर्वैरेकेतिकर्तव्यतेति न स्यात्। उच्यते, उपकार्यविशेषायत्तत्वादुपकारसिद्धेरूपपन्नमुपकार्यस्य हि विशेषस्योपकारकं कलयितुं शक्यते नान्यस्येत्यवघातादिविनियोगादवगम्यते। एवं चेदुपपन्नमवघातादेरपि प्रयाजादिभिः सह करणोपकारजनकत्वम्। कस्मात्पुनः प्रयाजादिवदवघातादयोऽप्युपकारका नाभ्युपेयन्ते। प्रकृताधिकारनियोगप्रत्यभिज्ञानात्। संभवति चात्र नियोगैक्यं तदीयव्रीहिसंस्कारगुणेनेत्युक्तम्। प्रयाजादितुल्यत्वे हि अवघातादीनामङ्गीक्रियमाणे उत्पत्तिनियोगान्तरमाश्रयणीयमिति वक्ष्यामः। तत्र संग्रहश्लोकाः।

सन्निधानवशोत्पन्ना प्रकृता पूर्वभाविनी।  
भावाधिष्ठा त्वभिज्ञेति तदनुग्रहकाङ्क्षया॥  
अवहन्त्यादिभिः शब्दैः कार्यान्वितपदार्थकैः  
प्रकृतापूर्वसंबन्ध एव स्वार्थोऽभिधीयते॥  
तथा सति तदीयत्वं तेषां रक्षितुमिच्छता।  
व्रीह्यादिभिः पदैर्युक्ता कार्यसाधनलक्षणा॥

क्रियाकारकसंबन्धो ह्यतत्साधनगोचरः ।
शेषिबोधोपि तस्यैव श्रौतत्वाद्यनुसारतः ॥

इति प्रकरणपञ्चिकायामङ्गपारायणे सन्निपत्योपकारकपरिच्छेदः ॥ ॥

आरादुपकारकं च द्विविधम् । अदृष्टप्रयोजनं दृष्टादृष्टप्रयोजनं च । समिधो यजतीत्यादिष्वस्य कारकगतं किं चित्प्रयोजनं न दृश्यते । तत्र के चित्तावदधिकारापूर्वसिद्ध्यर्थमेषामधिकृताधिकारमिच्छन्ति । ते हि मन्यन्ते उत्पत्तिनियोगास्तावत्समिदादिषु निर्विवादं संमताः । न च नियोगो नियोज्यमन्तरेणाभिधीयते । तथा च सति विश्वजिदादिषु नियोज्यपरिकल्पना न स्यात्तत्र च नियोज्ये कल्पयितव्ये यद्यनुषङ्गः फलपदस्य कल्प्येत यदि वा विश्वजिन्न्यायेन चाधिकारी कल्प्यते तदाधिकारापूर्वस्येतिकर्तव्यताकाङ्क्षा न परिपूर्येतेति । न परमापूर्वाधिकारकत्वेनाधिकारिणि सत्युपायोपेयभावो गम्यते । नह्यन्यथाधिकृताधिकारभाव उपपद्यते । यस्य न परमापूर्वसाध्यश्च परमापूर्वाधिकारः । न च यथा स्वर्गकामो यजेतेत्यादौ साध्यस्वर्गविशिष्टाधिकारिणि स्वर्गयागयोरुपायोपेयभावः तथेहापि समिदादिपरमापूर्वयोः । तत्र च न कार्यमन्यार्थमिति न्यायेनाधिकारनियोगैदमर्थ्यमेव समिदादीनामवसीयते । तदिदं ग्राहकग्रहणमिति गीयते, तत्रोत्पत्तिविशिष्टाग्नेयादिकरणावरुद्धे परमापूर्वे प्रकारान्तरेणैदमर्थ्यानुपपत्तेरितिकर्तव्यतात्वेनैव संबन्ध इति । तदिदमनुपपन्नमिति प्राभाकराः । यदि सर्वस्य नियोगस्य नियोज्यान्विताभिधानमाश्रीयते तत्र राजसूयिकानामिज्याविशेषाणामुत्पत्तिविनियोगानामपि साधिकारत्वं स्यात् । ततोभिषेचनीयतन्त्रमध्ये पठितानां देवनादीनामभिषेचनीयावान्तरापूर्वप्रकरणेन तदङ्गतैव न स्यात् । अथोच्येत नादृष्टार्थे नियोगो नियोज्यान्विताभिधीयते किं त्वनुष्ठानलब्धये । अभिषेचनीयादयश्च परमापूर्वप्रयुक्त्यैव लब्धानुष्ठानाः परमापूर्वस्यापि तद्विषयत्वात्तेनैव स्वसिद्ध्यर्थं विषयीभूतास्विज्यासु प्रयुज्यमानासु तद्विषयोत्पत्तिनियोगा अपि लब्धसिद्धयो न स्वसिद्धये नियोज्यान्तरमाकाङ्क्षन्तीति । तर्हि प्रयाजादिनियोगा अपि विनियुक्तविषयत्वाचाधिकारान्तरमपेक्षेरन् । स्यान्मतं विनियोग एव तेषामधिकृताधिकारमन्तरेणानुपपन्न इति । तदसत् । नियोगैदमर्थ्यमात्रेण प्रथमशब्देनावगताधिकारसंबन्धानां प्रकरणेनेतिकर्तव्यतात्वेन विनियोगात् । तथाहि, अधिकारविधिसंनिधौ यजतीत्यादयो निरधिकारा एव तावदाम्नायन्ते । तत्र योसावधिकारविधिः स एव प्रयोजनभूतो निरधिकारैः समिदादिभिः स्वयमप्रयोजनभूतैरन्वितः शब्देनाभिधीयते । समिदादि वाक्यानि च द्रव्यदेवताविशिष्टानि यागस्वरूपाण्येव संनिधापयन्ति सन्निधापनमात्रेण तैः सहाधिकारनियोगस्यान्वयः । यदि च सन्निधानं नाद्रियेत तदा समिदादिष्वपि किमिति परमापूर्वाधिकारी कल्प्यते । तदेवं संनिधानमात्रतः सिद्धमुपकारैदमर्थ्यं कथं भवतीत्यपेक्षा । तथा साध्यभूतस्याधिकारापूर्वस्य कथमित्याकाङ्क्षा । तेन करणोपकार एव तेषां द्वारमाश्रीयते । तत्र यदैदमर्थ्येनान्विताभिधानं तद्ग्राहकग्रहणम् । यच्च तेषां करणोपकारद्वारपरिकल्पनं स एव प्रकरणविनियोगः । नन्वेवमवान्तरापूर्वाण्यपह्नुतानि । नापह्नोष्यामहे । यद्यपि प्रथमं लिङादयो न व्यतिरिक्तं नियोगं प्रतिपादयितुमीशते । अवहन्त्यादिष्विव शङ्क्यमानाधिकारनियोगानुवादकत्वात् । तथाप्यधिकारनियोगं प्रति एषां क्षणभङ्गिनामवान्तरापूर्वाण्यजनयतामङ्गतोपपद्यत इति पश्चादधिकारापूर्वाङ्गभावोपपादनायाश्रयणीया अवान्तरापूर्वाणि लिङाभिधेयान्यपेयन्ते । तदेतद्दीक्षणीयावाङ्गियमाधिकरणे व्युत्पादितम् । नत्वेवमाश्रयिष्ववान्तरापूर्वाभ्युपगमो यथा तथा तत्रैव वक्ष्यामः । यानि च तान्यवान्तरापूर्वान्वितानि शब्देनाङ्गभूतानि अधिकारापूर्वं प्रत्युपनीयन्ते । नन्वेवं तर्हि दीक्षणीयादिषु प्राङ्गियमस्यावान्तरापूर्वप्रयुक्तता न स्यात् । किं तु प्रोक्षिताभ्यामवहन्तीति तदपूर्वप्रयुक्ततैवापद्येत । न । तत्स्वरूपनिष्पत्त्यर्थत्वा,द्यद्यप्यवान्तरापूर्वाणां परमापूर्वाङ्गतया भावः तथापि स्वरूपनिष्पत्त्यर्थ एव वाङ्गियमादिको धर्मः । न दीक्षणीयायामनुब्रूयादिति दीक्षणीयासंबद्धावान्तरापूर्वस्वरूपसबन्धावगमात् । न च तेषां स्वरूपपरित्यागेनाङ्गाङ्गिभावलक्षणा युक्ता । लक्षणैव यतः, न च स्वरूपार्थत्वेनानुमानम् । स्वरूपस्यैवानन्यगम्यसिद्धित्वात् । शब्दैकगम्यसिद्धिकं सर्वमपूर्वमवघातादीनां तु प्रमाणान्तरावसेयसिद्धीनां विनापि प्रोक्षणं स्वरूपसिद्धेः स्वरूपार्थत्वे ऽयुक्तं नियमनियोगस्यानुष्ठानम् । तदेवं स्वयमङ्गत्वाल्लब्धानुष्ठानेषु प्रयाजादिषु नाधिकारकल्पनावकाशः । तेनैव प्रकारेण प्रधानविषयेष्वप्युत्पत्तिनियोगेषु करणावान्तराभावो वेदितव्यः । यो हि तमवान्तरव्यापारं नाभ्युपगच्छति तस्य कारणभेदो न स्यात् । दर्शपूर्णमासादिषु तथाग्नेयादिधर्मा उपांशुयाजादिषु भवेयुः । परमापूर्वप्रयुक्तत्वात्तत्प्रतिसन्धानभावाविशेषात् । अवान्तरव्यापारभेदे तु युक्ता व्यवस्था । अन्यथा आग्नेयस्य करणता, अन्यथा उपांशुयाजादीनामिति । बृहद्रथन्तरयोः स्तुतिसाधनयोरपि अन्यथासाधनतेति धर्मव्यवस्था । तथापार्वणहोमयोरपि । अत एव विकृतिषु बाधः । नहि यथाग्नेयस्यापूर्वसाधनता तथा सौर्यस्येति प्रकृतद्वाराभावेन पार्वणहोमयोर्बाधः । ये च सन्त्यवान्तरापूर्वाणि न साधनरूपाणीत्याचक्षते । न तेषामवान्तरव्यापारतेति प्राचीनसकल[illegible]भङ्गः । कार्योत्पत्तिनिमित्ताभावेन हि अवान्तर-

व्यापारता । अन्यथा आश्रमादेरपि कृषिसमुत्पाद्यविलेखनवखवसस्याधिगमेवान्तरव्यापारतापत्तेः । नन्वेवमधिकारशून्यत्वे दीक्षणीयादिष्वतिदेशो न स्यात् । उच्यते । निरधिकाराणामपि कार्यत्वाविशेषादनिर्ज्ञातोपायत्वाच्च युक्तैव कथमित्याकाङ्क्षा । नन्वेवमङ्गीकृतमवान्तरप्रकरणम् । कर्तव्यस्य कथमित्याकाङ्क्षाप्रकरणमिति मीमांसकप्रसिद्धिः । नावान्तरप्रकरणं नाम प्रमाणमस्ति प्रमेयाभावे प्रमाणत्वानुपपत्तेः । यावदेव नान्यवान्तरापूर्वाणि नावगम्यन्ते तावदेव सर्वस्यारादुपकारकस्य पदार्थजातस्याविशेषेण प्रधानविधिपरिगृहीतत्वात् । पश्चात्तु सर्वेषामधिकारानुप्रवेशाविशेषान्नान्योन्यं तादर्थ्यमस्तीति नावान्तरप्रकरणविनियोज्यसंभवः । यानि तु वाक्यादिभिस्तेष्ववान्तरापूर्वाणि निवेशितानि तत्र प्रतिष्ठितानि न परमापूर्वं सङ्क्रमिष्यन्ति । नन्वेवं प्रयाजादिषु सौमिकविध्यन्तप्रसङ्गः । नायं दोषः । यदि निरधिकाराणामपि साधिकाराणामिव स्वारसिकाकाङ्क्षा भवेत् । भवेदेवम् । अननुष्ठेयत्वान्न स्वाभाविकीतिकर्तव्यताकाङ्क्षा । कथं पुनरकार्यता ऽननुष्ठेयता च । नूनं भवान् अश्रुतपूर्वः सप्रमादः विविक्तं हि तत्रेदं गुरुणा । यदेव हि पुरुषेण ममेदं कार्यमिति निरपेक्षमेवावगम्यते तदनुष्ठेयम् । यत्तु तत्सिद्ध्यर्थं प्रागसिद्धं सद्विनियुज्यते तत्कार्यम् । परमापूर्वं च निरपेक्षं कार्यमवगम्यते । कार्यावगमाद्धि फलावगतिः । न फलावगतेः कार्यतेति षष्ठाद्ये तुरणम् । अतः सिद्धो ऽनुष्ठेयकार्यविवेकः । यदेव चानुष्ठेयं तत्रैव कथमित्याकाङ्क्षा न कार्यमात्रे । अवहीनस्तर्हि प्रयाजादीनामेव दीक्षणीयादिषु आकाङ्क्षापह्नवेनातिदेशः । न सम्यगवगतं मतमस्माकं भवता । अयं हि नो राद्धान्तः । स्वारसिकीतिकर्तव्यताकाङ्क्षा निरधिकाराणां नास्ति । कारणान्तरसमुत्था तु नापह्नूयते । तत्र दीक्षणीयादिषु प्रयाजादिदर्शनेनेतिकर्तव्यताकाङ्क्षा कल्प्यते स्वरसतोऽप्याकाङ्क्षाशून्यस्य कारणान्तरोपनिपातनिबन्धनाकाङ्क्षा । यथा पटो भवतीति निराकाङ्क्षस्यापि पदद्वयस्य रक्तपटोच्चारणाद्रक्तं प्रत्याकाङ्क्षा, अन्यथा रक्तः पटो भवतीत्यनन्वयप्रसङ्गः । एवं प्रयाजादिषु न किंचिदाकाङ्क्षोत्थापने कारणान्तरमस्तीति न सौमिकधर्मातिदेशः । सिद्धश्च दीक्षणीयादिष्वैष्टिकविध्यन्तलाभः । ये त्वधिकृताधिकाराभ्युपगमेन साधिकारतामङ्गनियोगानामाहुः । तेषां प्रयाजादिषु रात्रिसत्रन्यायेनार्थवादिकफलकाम एवाधिकारी प्राप्नोति इति नाधिकृताधिकारसंभवः । स्यान्मतमितिकर्तव्यताकाङ्क्षा प्रधानविधेर्न परिपूर्येतेति । मा परिपूरि प्रयोजनं तु परिपूर्णम् । न प्रमाणम् अर्थवादपदानि प्रमाणांशोपनिपातीनि तेषां परोक्षा वृत्तिर्माभूदिति तत्प्रतिपाद्यफलकाम एवाधिकारी युक्तः । साधिकारविधिसंनिधिमात्रेण तु निरधिकाराणां प्रतीते तादर्थ्ये ऽधिकाराकाङ्क्षा नास्तीत्यर्थवादपदानि अर्थवादमात्रपर्यवसायीन्येव । तथा पयोव्रतं ब्राह्मणस्येत्यादिषु भोजनाय प्रवृत्तस्य द्रव्यार्जननियमवत्स्ववाक्यप्रवाधिकारिणो लब्धत्वान्न प्रधानप्रवृत्तस्याधिकारकल्पना शक्यते कल्पयितुम् । अथ स्वातन्त्र्यं पयोव्रतादीनामापद्यते । तथा नानृतं वदेदिति प्रकरणाधीतेऽपि निषिध्यमानक्रियाकर्तुरधिकारावगमान्न प्रकरणानुप्रवेशसंभवः । तथा भिन्ने जुहोतीति निमित्तस्याधिकारिविशेषणत्वाद्विना निमित्तकल्पनादधिकारिविशेषणालाभाच्च होमस्य दर्शपूर्णमासाङ्गत्वलाभः । न वेदमिह साधनम् । भिन्नशब्दस्य यौगिकत्वात्प्रकृतिगामित्वे सति निमित्तवतोऽप्यधिकारेऽधिकृतस्याधिकार इति । प्रकरणे भिन्नस्य विनियोगात्तद्धि प्रकरणं सन्निहितं यत्तत्र विनियुक्तम् । न च भिन्नस्य विनियोगोऽस्ति । अपि वाधिकाराकाङ्क्षायामधिकारे कल्पयितुमुपक्रान्ते किमित्यार्थेन संनिधानेनाधिकारः कल्प्यते वरं भवत्वनुषङ्गः साक्षाच्छ्रुतस्याधिकारपदस्य । प्रधानवाक्ये तु श्रुतेऽधिकारपदे प्रधानेन सहसंबन्धे सति सन्निहितानामश्रुताधिकाराणां साधिकारैदमर्थ्येनान्वितानामधिकाराकाङ्क्षैव नास्तीति अनुषङ्गनिराकरणे मूलयुक्तिः । अभ्युच्चयमात्रं तु वरमनुषङ्गः । इतिकर्तव्यताकाङ्क्षापरिपूरणमेवेति । अपि च प्रत्येकं समिधो यजतीत्यादिषु प्रधानाधिकृतस्याधिकारावगमात्प्रत्येकमेव समिदादीनां प्रधानोपायभावात् प्रत्येकमितिकर्तव्यताभावः स्यात् । अवान्तरविधयो हि तदा स्वविषयाणामुपायभावं प्रकल्पयन्ति । करणावरुद्धे परमापूर्वे करणतासंभवात्करणोपकारजनकतयैवोपायभावकल्पनम् । ततश्चानपेक्ष्योपायभावमाश्रित्यैकस्यैव करणोपकारसंपादकत्वाद् विकल्पः समिदादीनां स्यादधिकारविधिना तु तावत्तादर्थ्यमात्रग्रहणे तस्य तदन्वितस्यान्यथानुपपत्तेस्तादर्थ्यसिद्ध्यर्थं करणोपकारजनकता स्यात्तदा विकल्पे सति नित्यवदन्वयो नोपसंह्रियेत । मिलितानां तज्जनकताश्रयणे सर्वेषां तदन्वयोपसंहार इति न प्रत्येकमितिकर्तव्यताभावः । उपायोपेयभावे तु तादर्थ्येनान्वये सति वैकल्पिकत्वादुपायभावस्य तथैवान्वयोऽपीति युक्तम् । किं चाधिकृताधिकारेण सर्वेषु साधिकारेषु सत्सु प्रयाजादेरितिकर्तव्यताकाङ्क्षा स्वारसिकीति सौमिकधर्मातिदेशस्तेषु स्यात् । न च वाच्यं सत्यामप्याकाङ्क्षायामितरेतराश्रयतया न तेषु सौमिकधर्मातिदेशः, सोमो हि दीक्षणीयाभिरङ्गवान् दीक्षणीयादीन्यैष्टिकधर्मग्राहीणि, यदि चेष्टावपि प्रयाजादिषु सौमिकधर्माः प्रवर्तेरन् तदा स्फुटतरमितरेतराश्रयत्वमिति । तदिदं बालजनजल्पितम् । सोमे हि विनाप्यैष्टिकधर्मप्राप्त्या दीक्षणीयादिमात्रनिबन्धन एवोपकारः तथेष्टावपि सौमिक-

धर्मनिरपेक्ष एवोपकारः । यदि परमेतयोरङ्गानिबद्धयोरुपकारं गृह्णाति अत्र चोपकारकृप्तेरविशेषान्न कश्चिद्दोषः । निरधिकारेष्वङ्गेषु न स्वारसिकीतिकर्तव्यताकाङ्क्षा । किं तु लिङ्गबलोत्थापनीयेति दर्शितमादौ । तेन लिङ्गरहितेषु नाकाङ्क्षोदय इति न प्रयाजादिषु सौमिकधर्मातिदेशः । के चिदाहुः यदि संनिधिसमाम्नातमात्रेण प्रकृताधिकारानुप्रवेशो न भवति तदा ज्योतिष्टोमप्रकरणे समाम्नातस्य षोडशिन उत्तरेऽहनि त्रिरात्रस्य गृह्यतइति वैकृतत्वमेव स्यात् । तदसत्, ग्रहणस्याबाध्यतया ग्राह्यमपेक्षणीयम्, तत्र प्रकृततया लोकतश्च स एव ग्राह्यत्वेनान्वयं याति स च ज्योतिष्टोमाधिकारसंबद्ध इति तदनुप्रवेशः, पश्चात्तु तस्य वाक्येन पुनर्द्विरात्रसंबन्ध इति नानुपपन्नं किंचित् । तदेवमारादुपकारकेषु प्रथमं तादर्थ्येनाधिकारनियोगं प्रत्यन्वितेषु साधिकारेण विधिनानुष्ठेयभूतेन करणोपकारे कृप्ते तं प्रति नाधिकारनियोगेन जनकत्वकल्पनम् । न च क्षणिकभावे तेषां परस्परं स्वरूपेणासंभवतां संभूयोपकारजनकता समापद्यते इति अवान्तरापूर्वाणि स्वीक्रियन्ते । एवमाश्रयिषु विनाप्यपूर्वेण द्रव्यदेवतासंस्कारमुखेन करणोपकारजननसिद्धिरिति नापूर्वसमाश्रयणे किंचन प्रमाणम् । किं च दृङ्मालायां न तव दृष्टम् । दर्शितं हि तत्रेदं चतुर्धा । तुर्ये न साक्षाद् द्रव्यदेवतोपकारो यागः किं तु स्वाङ्गभूतमन्त्राद्यंशमुखेन । न च योगेऽधिकारानुप्रविष्टे तयोस्तत्र विनियोगोपपत्तिः । न चापूर्वमन्तरेण यागस्याधिकारानुप्रवेश इति अवश्याश्रयणीयमवान्तरापूर्वम् । तेषां चादृष्टतया न प्रयोजनत्वम् । दृष्टतया च द्रव्यदेवतासंस्कार एव प्रयोजकः । तत्रापि द्रव्यदेवतासंस्कारयोर्द्रव्यप्रतिपत्तिरेव प्रयोजिका योगे द्रव्यस्य साक्षाद्व्यापारादिति मन्तव्यम् । द्रव्यस्य तु न श्रुतिविनियोगः । न क्वचिद्द्रव्यस्यद्वारं श्रुतिः समर्पयति । नन्वप्राकरणिकोपि द्रव्यस्य विनियोगः साक्षात्करणोपकारजनकत्वाभावात्तस्य लिङ्गेन समाख्यया स्थानेन भावार्थ एव जनकतया संबन्धः । गुणदेवतयोस्तु वाक्येन विनियोगः । नानाव्यापारत्वात्कारणानाम् । अङ्गसाधनतद्द्रव्योपादाने तदवच्छेदकतयाऽस्त्येव तयोरुपयोग इति न कारकतया विनियोगो विरुध्यते । या तु संख्या उत्पन्नकर्मसमवायीया एकादश प्रयाजान्यजतीति । उत्पन्नानां कर्मणां विधानासंभवात्कर्माश्रिता विधीयते । यद्यपि चोद्देश्यगतं विशेषणं वाक्यभेदभयेन विवक्षां नार्हतीति प्रयाजादीनां साहित्यमविवक्षितम्, तथापि तस्य पृथक्त्वानिवेशित्वान्न प्रत्येकमभिसंबन्धः, किं तु समुदायेनैव । न चाभ्यासं विना तस्य प्रतिपत्तिरित्यर्थादभ्यासाश्रयणम् । प्राकृतक्रमानुग्रहाल्लब्धाधिकारविधौ च परिपूरणम् । यः पुनरुत्पद्यमानकर्मसमवेतः नासौ विधेयः, स हि विधीयमानानि कर्माण्यवच्छिनत्ति । न च तथा विधेयत्वसंभवः । बहुषु विहितेषु स प्रयोगेण परिलभ्यते एवेति न पृथग्विधेयत्वमवलम्बते । अविधेयभूतावपि तौ भावार्थावभिन्दन्न विधावुपकरोतीति स नान्वयी । यस्तु भिन्नप्रातिपदिकाभिधेयः सोरुणिमादिवन्न कर्मणि कारकतया विधीयते । यः पुनरयं विभक्त्यभिधेयः तस्य यद्यपि शक्त्या प्रातिपदिकार्थसंबन्धः तथापि तस्य तन्मात्रसंबन्धे प्रकरणसमाम्नानापादितो ग्रहसंबन्धो नोपपद्यतइति ग्राहकीयावस्थासंबन्धितैवोपादानिकीति निर्णीयते । विनियुक्तस्य पश्वादेरुपादानमनवच्छिन्नस्य न संभवतीत्यस्ति तदवच्छेदकभूतसंख्यापेक्षा संख्यायाश्च प्रतीतग्राहकान्वयनिर्वाहायाश्रयापेक्षेति तदवस्थासंनिधिता विधिः कल्पयति । उपादानलक्षणो विधिव्यापार आक्षेपापरपर्यायो मीमांसकैः प्रतिपन्नः । उत्पत्त्यधिकारनियोगप्रयोगविषयः प्रतिज्ञायते । तस्य च यथाप्रतीतविध्यनुपपत्तिरेव बीजम् । सोऽयं चरुं निर्वपेदित्यादौ साधिकारो विधिः प्रसङ्गत उत्पत्तिं विनानुपपद्यमान उत्पत्तिमाक्षिपति । नहि क्षणिकं यागमात्रमुत्पत्तिनियोगानपेक्षमधिकारसिद्धिसमर्थमिति बहुधोक्तं विश्वजिदादिष्वधिकारमन्तरेणानुष्ठानासंभवात्कार्यरूपस्य विधेरवगतस्यानुपपत्तिरधिकारकल्पनाबीजम् । सख्यान्वितश्चविध्यर्थः प्रतीतः तदन्वयोपपत्तये ग्राहकीयदशासंबन्धितामापादयति । निमित्त एवेति योधिकारे साध्यभूतो विधिरनुष्ठानापरनामाऽलंकरणस्य प्रयोजनमाक्षिपति । कामाधिकारे तु कामसिद्धिस्तदायत्तत्वान्मानसी प्रवृत्तिः प्रागेव प्राप्तानुष्ठानप्रवृत्तावप्रतिहता निमित्ततास्तीति विधिरप्रयोजकः । उभयत्राङ्गेषु क्रतुरेव प्रयोजकः । क्रतूपकारद्वारत्वात्तेषाम् । यदेव हि यस्य कार्यं तदेव तस्य प्रयोजकम् । क्रतूपकारश्चाङ्गानां कार्यमतस्तदेवानुष्ठाननिमित्तं यच्च विधिना स्वसिद्ध्यर्थमाक्षिप्यते तद्विधेयमिति तत्त्वज्ञाः ॥

॥ शेषउत्तराङ्के ॥

---

## ॥ अथ बालभारतस्य ॥

॥ तृतीयः सर्गः ॥

धराधृतिद्वेषिहतिप्रतिष्ठिता-
वतारसंसारसमुद्रवभ्रमः ।
शमामृते विश्रमधीर्विवेश यः
स पातु पाराशरविग्रहो हरिः ॥ १ ॥
कृती कुरुक्षेत्रगमाय विष्णुना
स्वयं प्रयाणाय कृताभिषेचनः ।

परोपरोधादधिरूढवानथो
रथं पृथाभूपृथिवीपुरंदरः ॥ २ ॥
वृकोदराद्याः सहसा महस्विनः
सहोदरास्तं परिवव्रिरे नृपम् ।
द्युहस्तिनो हस्तमिवासुहृद्गण-
च्छिदानिदानं रणपारदा रदाः ॥ ३ ॥
विराटपाण्ड्यद्रुपदादयो नृपा-
स्तमन्वगुर्धन्वविराजिभिर्भुजैः ।
विरोधिवीरध्वजिनीवधक्रुधा-
धिरोपितभ्रूविकटैरिवोत्कटाः ॥ ४ ॥
निजां निजां कीर्तिमिव द्युवाहिनी-
जलैर्मिलन्तीं शिशुसोमकोमलाम् ।
वितत्य केतुप्रचलाञ्चलच्छला-
च्चतुर्बलाङ्गीं भुजशालिनोऽमिलन् ॥ ५ ॥
शितिद्युतिः संमदभासुरैः सुरैः
पुरश्चरोऽदर्शि सुदर्शनायुधः ।
द्विषद्वधध्यानमयो महश्चय-
श्चमूसमूहस्य गतो नु पिण्डताम् ॥ ६ ॥
तनोतु केनैष तुलां बलोच्चयः
परौघदाहेन च गौरवेण च ।
ययौ यदग्रेसरतां स वाडवो-
ऽर्णवोल्लसच्चक्रमुकुन्दकैतवात् ॥ ७ ॥
जिते प्रतापैरिव पृष्ठगे रवौ
स्वकुल्यहर्षादिव संमुखे विधौ ।
भयादिवाग्रत्यजि राहुयोगिनी-
युगे गते दक्षिणवामपक्षयोः ॥ ८ ॥
अदक्षिणस्यां रथतोऽथ तत्त्वत-
स्तदोर्ध्वगं श्वासमवेत्य विष्णुना ।
अवादि शङ्खश्च सुमङ्गलोत्सवा-
दचालि सूतेन रथश्च भूपतेः ॥ ९ ॥
तदात्वसंपूजितहर्षितद्विज-
व्रजोक्तवेदचयनादवीचिभिः ।
प्रतिध्वनत्स्यन्दनकन्दरोदरो
दधौ यथार्थामभिधां चयीतनुः ॥ १० ॥

पटुः प्रयाणे पटहस्य निस्वनः
प्रविश्य कर्णद्वितयेषु दोष्मताम् ।
स निर्जगाम द्विगुणोदयः क्षणा-
न्मुखैकमार्गैर्मदशब्दकैतवः ॥ ११ ॥
घृतेभकुम्भस्तनयुग्मविभ्रमा
चमूर्भ्रमत्स्यन्दनचक्रकुण्डला ।
चचाल भूपं परितोऽनुरागिणी
प्रियेव पारिप्लवराजिलोचना ॥ १२ ॥
विलुप्रविश्वावयवा सुनागरैः
स्थितैरुपप्लव्यपुराट्टपङ्क्तिषु ।
नृपावलोकादनिमेषतां भृशं
भजद्भिरभ्राजि नभश्चरैरिव ॥ १३ ॥
समुत्पतद्भिः स्खलितैर्महांसयो-
र्मुहुर्महासौधवधूकरोज्झितैः ।
अराजि लाजैः सुकृतोज्ज्वले नृपे
वियच्चरैरामरचामरैरिव ॥ १४ ॥
ययौ प्रतोलीपथसंकटाकुलः
क्रमेण वप्रस्य बहिर्बलोच्चयः ।
महासरःपूर इवातिपूरण-
क्षतस्य सेतोर्बहुबाह्यविस्तरः ॥ १५ ॥
पुरोऽपि पश्चादपि विस्तृताकृति-
र्गताल्पतां गोपुरमध्यवर्त्मनि ।
विनिःसरन्ती रिपुजीवितापहा
चमूरियं शक्तिरिव व्यराजत ॥ १६ ॥
शमीव तत्त्वं परमन्तरुद्वहन्
युधिष्ठिरं धर्ममयं चमूचयः ।
अखण्डयन् पूस्तरुखण्डशाखिनां
शिखाग्रमप्येष शनैः शनैर्ययौ ॥ १७ ॥
उदित्वरैर्वप्रगिरिप्रतोलिका-
गुहागतेभ्यो गुरुवाहिनीगणैः ।
अपूरि दूरादपि पूरविस्तृतैः
स भूरिभिर्भूविभुसैन्यसागरः ॥ १८ ॥
गतेऽक्षिमार्गान्नृपतावियं वियो-
गिनीव शून्यत्वमवाप किंचन ।

तदात्ववप्रावतरद्विलोकक-
प्रजामिषस्रंसिशिरोंऽशुका पुरी ॥ १९ ॥
समुल्ललङ्घे निगमः क्रियानिति
प्रतिक्षणं ध्यानपरश्चमूभरः ।
विलोचने वक्रितकन्धरं पुरीं
प्रति प्रतेने च शनैश्चचाल च ॥ २० ॥
मिथोऽपि बिम्बद्विगुणां रदद्वयीं
मणिप्रणद्धां दधतो मदोन्नताः ।
सुरासुरैरक्षुभिते बलाम्बुधौ
विलेसुरैरावतवन्मतङ्गजाः ॥ २१ ॥
विषाणिनां गर्जिभिरद्रिभेदिनां
बले चले तत्रसुराशु दिग्गजाः ।
भुजंगराजैककक्कीलमौलिग-
स्ततो विलोलः क्षितिगोलकोऽभवत् ॥ २२ ॥
अवाप्य सेकं करिणां मदोदकै-
र्मरुत्तरङ्गानपि कर्णवीजनैः ।
सुयोधनक्रूरचरित्रमूर्च्छिता
चिराद्धरा किंचिदचालयद्वपुः ॥ २३ ॥
मृतो मृतोऽसाविति भाषुके जने
गृहीतमात्मानमपायुधः सुधीः ।
गजेन शुण्डाङ्गुलिपर्वचर्वणा-
दमूमुचत् कोऽपि चमूचमत्कृतः ॥ २४ ॥
समेत्य पश्चान्निभृतं धृतः क्रुधा
गजेन विस्तीर्णकरेण संधृतान् ।
तदात्वकृष्टचुरिकाग्रधारया
विवर्ध्य बालान् द्रुतमच्छुटत् परः ॥ २५ ॥
महाबलः कोऽपि करं करेणुना
धृतं करेणान्यकरादमोचयत् ।
स तेन गाढग्रहतो धृते करे
वराक एवैककरः करोतु किम् ॥ २६ ॥
समेतमासन्नमिभं विभीः परः
पुरो बलन् दक्षिणगाचलीलया ।
पटेन शुण्डां परिमृज्य संभ्रम-
न्नबिभ्रमन्नेककसीम्नि जाङ्घिकः ॥ २७ ॥

न यावदुर्वी करिभारभङ्गुरा
प्रयाति दर्वीकरमन्दिरोदरम् ।
खुरक्षतोद्भूतरजस्तया लघुं
वितेनिरे तावदमूं चमूहयाः ॥ २८ ॥
स्थली पयोधिर्जलधिर्वसुंधरा
भविष्यतीति त्रिदशेष्वभूत् कथा ।
स्फुरत्तुरंगप्रकरक्रमाहति-
क्षणोच्छलद्धूलिभरावलोकतः ॥ २९ ॥
हरिः परस्पर्धिनि वर्धितोद्यम-
स्तुरंगमे धावति वेगदुर्धरः ।
अनष्टमूर्ध्वं पुरुषं पुरः परो
व्यलङ्घतापीडितमेव फालया ॥ ३० ॥
परो हरिः कूपमपह्नुतं तृणै-
रलङ्घ्यमुल्लङ्घ्य विशालफालया ।
व्यथां न लेभे कशयापि ताडितो
हृदि स्तुवन् धैर्यगुणं तुरंगिणः ॥ ३१ ॥
उदञ्चितैकक्रमलीलया त्रिभिः
पदैस्तथा कोऽपि हयो गतिं व्यधात् ।
यथाभवच्चेतसि चित्रकारिणा-
मपि क्षणं चित्रकृतो चमत्कृतिः ॥ ३२ ॥
समं मया धावथ यूयमित्यहो
भृशं दृशः कौतुकिनां विलोकिनाम् ।
विलुप्य पश्चात्पदधूतधूलिभि-
र्हरिः परोऽधावत वातजिन्वरः ॥ ३३ ॥
हरिर्निषिद्धोऽप्यपराश्वतर्जित-
स्त्वरामसुञ्चन्नहि यः स तस्थिवान् ।
प्रतापिनः पादकरान्तरस्फुर-
त्पदस्य पीडां निदधत् तुरंगिणः ॥ ३४ ॥
विवर्धितस्पर्धमहो महोनिधी
समं चलन्तौ त्वरया परौ हरी ।
पताकिनीलोलदृशो दृशोर्भृशं
समानतामापतुरग्रतो गतौ ॥ ३५ ॥
जितेऽपि वेगादितरे तुरंगमे
न कोऽपि तत्याज रयं स्वयं हयः ।

निजं तनुच्छायमवेत्य च क्षितौ
निशम्य पादध्वनितं च दुर्धरः ॥ ३६ ॥
हयाङ्घ्रिकुद्दालशतक्षतस्थलो-
च्छलद्रजःपूर्णततेषु वर्त्मसु ।
अलब्धनेमिस्खलना मनागपि
प्रसस्रुरश्रान्ततुरंगमं रथाः ॥ ३७ ॥
रथाङ्गरेखानिवहैर्महीं रथा
विभूषयन्तो नवहारहारिभिः ।
दिशां दिशन्तस्तिलकानिव ध्वजा-
ञ्चलैः किलातन्वत कामचारिताम् ॥ ३८ ॥
क्षुरप्रबाणेन विभिद्य दूरतः
पतन्ति पक्कानि फलानि भूरुहाम् ।
अधो गतः कोऽपि रथाश्ववेगतो
रथी करेणैव सहेलमग्रहीत् ॥ ३९ ॥
परो रथं सारथिरन्यसारथे-
र्जयाय संतर्ज्य धुरीणवाजिनः ।
जवेन योक्त्रे त्रुटितेऽपि धीधनोऽ-
धिरुह्य वंशान्नितरामदुद्रुवत् ॥ ४० ॥
च्युतेऽपि चक्रे चिरमेकपक्षत-
स्तदक्षमुत्तीर्य करेण धारयन् ।
मरुत्त्वराङ्घ्रिस्त्वरयन् रथे हयान्
जिगाय यन्तापरसारथिं परः ॥ ४१ ॥
महाबलः कश्चन सारथिः पथि
स्थितेषु खिन्नेषु निजेषु वाजिषु ।
जवेन यान्तं प्रतिवादिनो रथं
करेण धृत्वेव हठादतिष्ठिपत् ॥ ४२ ॥
परः समीरत्वरया समीरयन्
हयान् नियन्ता जितवांश्च वादिनः ।
ररक्ष चासन्नलताशिखाततेः
पतिं चलत्प्राजनवेगलीलया ॥ ४३ ॥
चरिष्णुचक्रारगृहीतचीवर-
प्रपातिनः कृष्टतनोर्ध्वनिं प्रभोः ।
उदारचीत्कारभरैरकर्णय-
न्नबोधि कोऽप्यन्यजनेन सारथिः ॥ ४४ ॥

महारथौ कौचन कोपहुंकृति-
प्रणादरौद्रौ रथसंकटे पथि ।
युधे धृतासी चटुलौ चटूक्तिभिः
प्रविश्य मध्यं प्रभुरप्यवारयत् ॥ ४५ ॥
पुरः प्रचेलुश्चतुरं तुरंगम-
त्वरापरिभ्रान्तपदाः पदातयः ।
रथा इवोच्चैर्भुजदण्डमण्डली-
भवत्पताकायितखड्गवल्लयः ॥ ४६ ॥
समुत्पतन्तोऽधिकमुच्चकैः समु-
ल्लसत्कृपाणद्युतिहृद्यपाणयः ।
बभुर्भटाः स्वप्रभुकीर्तिविस्तृति-
प्रवृत्तये कृतविपल्लवा इव ॥ ४७ ॥
विचित्रचारीषु सबर्बरं स्फुर-
त्स्फुटस्वनाः शून्यभिदोऽसिखेलया ।
मुहुर्नदन्तो मदविभ्रमादजी-
गणंस्तृणाभं त्रिजगत् पदातयः ॥ ४८ ॥
भयं दधानो हृदि विष्टपक्षय-
व्ययप्रगल्भोऽपि लुलायलाञ्छनः ।
रणे सहायीभवितुं भुजाभृता-
मसिच्छलो दक्षिणपाणिमग्रहीत् ॥ ४९ ॥
स्फरापदेशात् कलितैककुण्डलो
विनीलवासाः कटिशस्त्रिकांशुभिः ।
अनन्ततां पत्तिचयो ययावसि-
च्छलेन कर्षन् यमुनां समन्ततः ॥ ५० ॥
उदस्य कोऽप्याशु समं मुहुर्मुहुः
करेण वामेन च दक्षिणेन च ।
स्फरं च खड्गं च दधद्विपर्यया-
न्महत्त्वमभ्यासकृतां कृती ललौ ॥ ५१ ॥
उपेत्य पश्चान्मृततातवृत्तिकः
कृताद्भुतध्यानपरेण कौतुकात् ।
परेण बालः सहसापि तापित-
श्चलन् धृतासिर्न भटानतत्रपत् ॥ ५२ ॥
उदस्य कुन्तं दिवि कोऽपि लीलया
सकौतुकैः सैन्यजनैर्विलोकितः ।

चमः समुत्पत्य रयेण पाणिना
तमूर्ध्वमेव प्रसरन्तमग्रहीत् ॥ ५३ ॥
जनौघमाविश्य पुरश्चरं भटः
स्फुटं परिक्षिप्य रयेण कुन्तकम् ।
परेण निर्मुक्तमिवाग्रतोऽयतः
करेऽग्रहीत् कश्चन वञ्चयन् मुखम् ॥ ५४ ॥
इति स्फुरत्कृत्स्नचमूसमुत्थिते
रजोभिराच्छादितभानुभानुभिः ।
कृतप्रयाणे जयभाजि राजनि
व्यराजदेकातपवारणं जगत् ॥ ५५ ॥
अवाप्य दैन्यं खलु सैन्यभारत-
श्चिरान्निरस्ता फणिकूर्मशूकरैः ।
महीयसां मूर्ध्नि मही महीभृतां
समारुरोह च्छलतो रजस्ततेः ॥ ५६ ॥
तटेषु खातेषु तुरंगरङ्गणै-
रुपर्युपेतेषु रजश्चयेषु च ।
स्फुटीभवन्मूलविवृद्धमौलयो
गणा गिरीणां त्रिगुणोन्नता भुवः ॥ ५७ ॥
बलाभिषङ्गादधिकाधिकोत्थिते
रजोभिरुच्चैर्दिवि सान्द्रतां गतैः ।
रवेरवष्टब्धखुरास्तुरंगमा-
श्चिरं महीचारसुखं सिषेविरे ॥ ५८ ॥
प्रपूरितानां परितो बलोद्धुतै
रजोभिरास्कन्धतलं महीरुहाम् ।
समुन्नतानामपि पाणिलीलया
फलान्यगृह्णादपि वामनो जनः ॥ ५९ ॥
विधेः कृतं क्वापि न जायतेऽन्यथा
तथाहि शून्यं गतयापि रेणुभिः ।
विभावरीवासररत्नगर्भया
न किं भुवाभूयत रत्नगर्भया ॥ ६० ॥
इलातले पङ्किलतां प्रपेदुषि
प्रभिन्नकुम्भीन्द्रमदाम्भसां भरैः ।
अधारयद्वृष्टिनिवृत्तनीरद-
प्रभां नभोऽन्तः प्रथमोत्थितं रजः ॥ ६१ ॥
नभःसरित्केतनभासुरे शिरः-
सुवर्णकुम्भायितभानुमण्डले ।
सुखं लसन्ती पृतनेह जङ्गमे
नृपस्य धाम्नीव रजस्यराजत ॥ ६२ ॥
रथं नयन् वर्त्म विनीतवाजिनं
भुजिष्यभग्नस्थपुटं शनैः शनैः ।
जगाद यन्ता कुतुकस्पृशा दृशा
निरूपयन्तं नृपतिं पताकिनीम् ॥ ६३ ॥
अधीश पश्चाच्च हयेऽनुपातिनि
द्रुतं भिया वक्रितकन्धरा वधूः ।
व्यधाद्विलोलं नयनं तथा यथा
स्थिरो ह्रियेवायमभूत् समीपगः ॥ ६४ ॥
अयं मयस्यानुयतः स्वनं घनं
निशम्य कोपाद्वलते मृगद्विपः ।
निरीक्ष्य तद्वर्तिवधूकुचद्वयं
प्रतीभकुम्भभ्रमतो भियाचलत् ॥ ६५ ॥
तरोस्तलेऽसौ खिदया निषेदिवान्
नृपस्य वाचा प्रथमं समुत्थितः ।
तमप्यनालोच्य सखायमग्रतोऽ-
वसन्निरीक्ष्यागतमुन्मदं गजम् ॥ ६६ ॥
न हत्यया हन्त कदापि गृह्यते
करी परं पापशिखा निषादिनाम् ।
इति प्रलापेषु जनस्य दन्तिना
व्यमोचि नारीयमनेन सादिता ॥ ६७ ॥
पुरो मुखस्य भ्रमयन् शिखां तरोः
प्रकोपयन् कोऽपि गजं कुतूहली ।
उदस्तहस्तं परिवञ्च्य यात्यसौ
चतुष्पदाभ्यन्तरवर्त्मना मुहुः ॥ ६८ ॥
विलङ्घ्य लङ्घी त्वरया रथोन्मुखं
गतोऽग्रतोऽस्मीत्ययमुद्धुरो मदात् ।
पुरःकरिचासवलन्मयद्रुयः
सहासमारावणिमीचितो बलैः ॥ ६९ ॥

१ बभुः इति पा० ।

अवेक्ष्य मार्गं शकटातिसंकटं
रथी पथीह स्थपुटे प्रयात्ययम् ।
परिस्खलच्चक्रविलोलवल्लभा-
मुहुःपरिष्वङ्गसुखाभिलाषुकः ॥ ७० ॥
अयं दवीयःपदवीगतामिभी-
मिभभ्रमात् तूर्णमुपेत्य कोपनः ।
अमूं विनिश्चित्य ततः स्पृशत्यहो
मुहुर्महेभस्ततहस्तलीलया ॥ ७१ ॥
अवाप्तजन्मा जननीवधादसौ
ततः कृतोच्चैर्बहुभारवाहकः ।
शुचा खराश्वो निजपूर्वपक्षको
निरीक्ष्य तुल्यध्वनि रौति वेसरः ॥ ७२ ॥
इति प्रसक्तिप्रसराध्यया चमूं
दृशाभिषिञ्चन्निव धर्मनन्दनः ।
पदे पदे संमिलितैः कुतूहला-
दलोकि लोकैः शतधापि वीक्षितः ॥ ७३ ॥
द्विपेन्द्रदानोदकनिर्भरच्छटा-
भिषेकसान्द्रोभयपक्षधान्यया ।
अचल्यत ग्रामतटेषु सेनया
निरन्तरक्षेत्रविशङ्कटे पथि ॥ ७४ ॥
अमी महान्तः किरयो वृहत्त्वरा
मृगास्तथैते प्रसभेन रक्षितुम् ।
अहो क्व शक्या इति भीतविस्मितै-
र्गजाश्वमालोक्यत वप्रगोपकैः ॥ ७५ ॥
अपि श्रियां भूमिरभूषितोज्ज्वला
विलोकयन् शालिषु गोपबालिकाः ।
स्वकामकेलीविशदाय केशवो
न शैशवाय स्पृहयांबभूव किम् ॥ ७६ ॥
इदं किमेतत् किमिति स्त्रियां तथा
शिशौ मुहुः पृच्छति दन्तिवाजिकम् ।
कृतोक्षमूल्याकुलितः किलाविदन्
ददौ जरद्ग्रामटिकोऽपि नोक्षरम् ॥ ७७ ॥
इतीक्ष्यमाणः क्षणकौतुकोल्लस-
द्विलोचनैर्ग्रामनिवासिभिर्जनैः ।
चमूचयः काननभूषु भूषणी-
बभूव विस्तारमहीदिदृक्षया ॥ ७८ ॥
पुरः शिशूनां गललम्बिनां कपि-
स्त्रियः परिभ्रम्य तृणं यदत्यजन् ।
तदङ्गनानां कटकोचितीभृता-
मपुत्रिणीनां हृदि शल्यतामधात् ॥ ७९ ॥
सुखं गतायाः शयनं सुलम्पटा
विघट्य सिंह्यास्तनतः स्तनंधयाः ।
गजेष्वधावंश्च मुहुर्भटार्भके-
र्मुदा व्यमुच्यन्त च मातुरन्तिके ॥ ८० ॥
फलं करेणाप्तमना मुहुर्मयं
निनाय चूतं रवणाधिरोहणः ।
मयस्तु निम्बाय मुहुर्गतः कुतः
क्रियैक्यमन्योन्यमनोऽभिलाषयोः ॥ ८१ ॥
हयोच्चयोद्धूतरजःपरंपरा-
विलुप्तवैषम्यसुखाधिरोहणाः ।
पथि प्रथीयःस्थललीलया रयाद्-
बलावलीभिर्गिरयो ललङ्घिरे ॥ ८२ ॥
विलङ्घ्य कुल्याममुकां पुरोऽमुके
क्रमेण गन्तव्यमिति श्रुते पथि ।
पुरः पुरागेव बलैर्निदध्रिरे
न सिन्धवो धूलिततिस्थलीकृताः ॥ ८३ ॥
पुरामुपान्तेषु तुरंगमक्रम-
प्रपातखातेषु निखातसंपदः ।
चमूचरैश्चञ्चलया ललोकिरे
दृशा रजोदर्शननिर्विशेषया ॥ ८४ ॥
पुरः स्त्रिया सैन्यलसद्दृशा रसा-
द्युवा निषादी सकटाक्षमीक्षितः ।
व्यधात् परीरम्भमिभेन्द्रकुम्भयोः
स तद्गताक्षः पुलकान्यधत्त सा ॥ ८५ ॥
युवा तुरंगी लसदङ्गचङ्गिमा
तुरंगमं चारुगतानि कारयन् ।
पुरः पुरस्त्रीभिरदर्शि सस्पृहं
परस्परेर्ष्याकलुषेण चेतसा ॥ ८६ ॥

१ पुंयोगविवक्षयाममुकीमित्यपि पा० ।

उदारशृङ्गारभृतां पदे पदे
विलोकिनीनां पुरयोषितां पुरः ।
समुन्नतायां गवि नम्रलोचनो
मिथः स्खलन्मन्दपदं ययौ जनः ॥ ८७ ॥

इति ग्रामारण्यक्षितिधरसरित्पत्तनततो-
र्विलङ्घ्य प्रस्थानैः कतिभिरपि धर्मस्य तनयः ।
स्वयं स्थाने स्थाने मिलदतुलवीरोग्रकटकः
कुरुक्षेत्रोपान्ते द्रुहिणदुहितुस्तीरमगमत् ॥ ८८ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के उद्योगपर्वणि प्रयाणवर्णनो नाम तृतीयः सर्गः ॥ ३ ॥ :: :: ॥

---

## ॥ अथ बालभारतस्य ॥

### ॥ चतुर्थः सर्गः ॥

अमृतवृष्टिरिवाजनि हृष्टिदा
जगति यस्य पुराणपरंपरा ।
भवदवार्तिभिदे जलदद्युति-
र्न किमिवास्तु स सत्यवतीसुतः ॥ १ ॥

लसदनेकपयोधवलप्रभा
बहुलपचरथा पृथुवाहभृत् ।
अथ चमूः क्षितिपस्य सरस्वती-
मनुससार निवासविधित्सया ॥ २ ॥

गतिजितः पवनो निजकिङ्करी-
कृत इवाम्बुलबाम्बुजगन्धभृत् ।
अभि चमूं प्रहितः सरिता तया
सुकृतनन्दनसत्कृतिकर्मणि ॥ ३ ॥

अथ विजित्य तनूषु चमूभृतां
सपदि घर्मजवारिलवव्रजम् ।
प्रसृमरः पवनः स्म सरस्वती-
जलकणप्रकरं प्रति तिष्ठति ॥ ४ ॥

नलिनरेणुलवैः कनकद्युतिः
भ्रमरसौरभषट्पदगीतिभाक् ।
मधुरशीतगुणाम्बुकणैः सरि-
न्मरुदभूद्वयितो बलयोषिताम् ॥ ५ ॥

अपि सरित्परिरम्भभवन्नवो-
दकलवं परिरभ्य समीरणम् ।
अजनि मीलितदृग्यदियं चमू-
स्तदबला खलु कामितकामिनी ॥ ६ ॥

मृदुसमीरविलासविकम्पिनीं
कुसुमसात्त्विकवारिकणैर्वृताम् ।
अभजदाशु रसेन सरस्वती-
तटवनीमवनीशचमूचयः ॥ ७ ॥

जलनिधौ निहितो वडवानलः
पविमचिक्षिपदेव मदाय नः ।
इति विरञ्चिसुतां परितो बल-
च्छलकुलाद्रिकुलानि सिषेविरे ॥ ८ ॥

अविदितोत्सृतिरोपणकं नृपैः
कथमपि द्युपथेन किलागतम् ।
समवलोकि यथाक्रमरोपितं
कुतुकिभिः स्थलमण्डलमग्रतः ॥ ९ ॥

सुकृतमूनुनिकेतचलध्वजा-
ञ्चलभुजा कथितेष्विव वेश्मसु ।
विनिहितेषु यथाक्रममक्रमा-
न्निजनिजेषु ययुर्जगतीभुजः ॥ १० ॥

कमपि सारथिरात्मनृपालयं
पथिषु पृच्छति यावदधिभ्रमः ।
निजगृहाङ्गणमेव रथो हयैः
सपदि तावदनायि गतभ्रमैः ॥ ११ ॥

गजतुरंगवरचयपीठिका-
वलयिमूलभुवः स्थलसंचयाः ।
रुरुचिरे परितो नृपसेविताः
सुरगृहा इव दिग्विजयश्रियाम् ॥ १२ ॥

शिरसि ताडकृतोऽपि निषादिनः
समधिरोपयति स्म यथा नमन् ।
इह तथैव रयादुदतीतरत्
करिपतिर्महतां चरितं नुमः ॥ १३ ॥

स्फुरितमपि सपल्ययनो हयः
पथि यथा न निरस्तभरस्तथा ।

सहजसैाम्यभृता हि पराक्रमे
सति महांसि वहन्ति मनस्विन: ॥ १४ ॥

स्थिरपदा निजसारथिसंज्ञया
रथिनि पार्श्वगते रथवाजिन: ।
बहुमहीगमनेऽप्यखिदस्तदा
प्रथमयुक्तमिव स्वमबोधिषु: ॥ १५ ॥

समधिरोहति यन्त्रभरे यथा
खभरं खणा विधुरं व्यधु: ।
अवतरत्यपि हन्त तथैव ते
क्व मतिरूर्ध्वमुस्य खलूचिता ॥ १६

पुलकिभिर्मुकुलायितलोचना:
सरभसं कुचमूलमिलद्भुजै: ।
गलविलम्बिकुचद्वितया हयात्
प्रियतमैरुदतारिषत प्रिया: ॥ १७ ॥

क्षितिरगृह्यत सत्यमसैा युधे
तदिह तच सतामुचिता हति: ।
इति विचार्य भटैर्न मृगादयो
ववधिरे विधुराश्चपलायिन: ॥ १८ ॥

पटमयानि वितत्य निकेतना-
न्यभिपतज्जनसत्कृतितत्परा: ।
रुरुचिरे वणिजो गणिका इवो-
त्तरलकङ्कणकुण्डलसद्भुच: ॥ १९ ॥

कणजलेन्धनवह्निजिघृक्षया
परिजने निखिलेऽपि गतेऽभित: ।
वसनवेश्मसु संमदमद्भुतं
क्षणमधु: पतयो दयितासखा: ॥ २० ॥

पतितसैन्यरज:पटलं पटू-
भवति यावदुदात्तदिवाकरम् ।
सपदि तावदिदं पिहितं बहू-
दितमहानसधूमचयैर्वियत् ॥ २१ ॥

विधिसुताम्भसि सत्तुरलं मलं
दलयितुं बहिरेव चमूचरा: ।
मुमुचुरान्तरमप्यहह स्पृहा-
थिकदमेव हि सुप्रभुसेवनम् ॥ २२ ॥

१—ऽपि इति पा० ।

सुमधुरं शिशिरं रसयन् पयो
जनचयो मनसा समचिन्तयत् ।
सरिति वारिधिवज्जलभूरितां
कलशयोनिवदात्मनि शक्तिताम् ॥ २३ ॥

तरलहस्तमहालहरीभरो-
च्छलितशीकररुद्धनभा ध्वनन् ।
तनुरुचैव तमांसि सृजन् धुनी-
मभिससार गजव्रजवारिधि: ॥ २४ ॥

प्रतिशरीरभृत: कति नो वन-
द्विपकपोलकषैर्मदगन्धिता: ।
स्रुतझरिल्लहरिध्वनित: क्रुधा
मदकल: करटी बिभिदे तटी: ॥ २५ ॥

पथिजखेदवशोऽपि करी तरुं
प्रहतवान् वनदन्तिमदक्रुधा ।
अहह साहसिकस्य शिरस्यत:
कुसुमवृष्टिरमुष्य दिवोऽपतत् ॥ २६ ॥

दलितमैाक्तिककान्तिनि सैकते
करिकुलस्य बभैा पदपद्धति: ।
सुकृतसूनुयश:समतार्थिनी
शशिघटानुमृतेव सरस्वतीम् ॥ २७ ॥

करिघटामवलोक्य घनभ्रमा-
द्भयभृतैरथवा गतिनिर्जितै: ।
सुकृतसूनुयशोजलपल्वलं
वियदभाजि सरिद्वरटावरै: ॥ २८ ॥

विविशुरम्भसि भूधरडिम्भका:
स्फुरितपक्षतया हरिभीरव: ।
प्रचलकर्णदलद्विपमण्डल-
च्छलभृतो विगलन्मदनिर्झरा: ॥ २९ ।

स्फुटतराग्रकर: परितोऽम्भसि
ब्रुडितवानुदमज्जदथ द्विप: ।
धुतमुख: कृतचीत्कृतिरम्बुज-
भ्रमपतन्मधुपाकुलपुष्कर: ॥ ३० ॥

उदयदान्तरशैत्यगुणो पर-
स्परभवत्परिरम्भविजृम्भणे: ।

वरसरित्करिणो परितः परां
मुमुचतुः परितापपरंपराम् ॥ ३१ ॥
मधुपगीतगुणानि जलस्य य-
ज्जलरुहाणि जहार महागजः ।
तदिदमप्यहरन्मुहुरूर्मिभि-
र्मदममुष्य विसृत्वरसौरभम् ॥ ३२ ॥
तिमिविलोलदृशः सरितो मदै-
र्मृगमदैरिव पत्रलतातातिम् ।
विकटकुम्भयुगप्रतिबिम्बन-
स्तनतटीषु ततान मतङ्गजः ॥ ३३ ॥
उदितबुद्बुदवृन्दभृशस्विदं
बहु विलस्य नदीं नलिनाननाम् ।
पुनरुदित्वरदानवशीकृताः
सहचरैरलिभिर्निरगादिभः ॥ ३४ ॥
गजगणे गतवत्यथ तत्क्षणा-
दभिगतासु कुतोऽपि सखीष्विव ।
अकथयद्बटासु नदी मदा-
विलजलालिरवैरिभविभ्रमान् ॥ ३५ ॥
तरुतलेषु निषण्णमयो पयो
गमनखिन्नमशक्तमितो गतौ ।
जनमपास्य विनिश्वसदाननं
द्विरदराजिरबध्यत सादिभिः ॥ ३६ ॥
कुसुमसंचयवृष्टमधुच्छटा-
सुरभिपृष्ठनिविष्टषडङ्घ्रिभिः ।
कुथवृतैरिव मुक्तकुथैरपि
द्रुमतलेषु तदा करिभिर्बभे ॥ ३७ ॥
तदलसंहतितो जलवर्षणं
तलममुष्य भवेदिति मूलगैः ।
जलधरैरिव मुक्तमदाम्बुभि-
र्भृशमिभैः समसिञ्चि तरूच्चयः ॥ ३८ ॥
सुखनिमीलितदृग्रसनाशिखा-
मिलितताल्वविघूर्णितविग्रहम् ।
पदमतन्यत शाखिषु योगिवत्
करिभिराहृतपिण्डनिरादरैः ॥ ३९ ॥
क्षुधितमप्यलसं परिचारकाः
करधृतैः कवलैर्धृतपङ्क्तिभिः ।
विदधतः परितः परिताडनं
चटु च डिम्भमिवेभमभोजयन् ॥ ४० ॥
गजघटागतिकुट्टिमितं खुरैः
स्थपुटतामनयन् पुलिनं हयाः ।
अपि महद्भिरतीव समीकृतं
विषमयन्तितरां तरला न किम् ॥ ४१ ॥
नखविलासजुषः कृतशिङ्खन-
श्वसितलोलरजःकणकम्पिनीम् ।
सरभसं परिवेल्लनकैतवा-
द्वसुमतीं हरयः परिरेभिरे ॥ ४२ ॥
विपरिवर्तनयोर्ध्वमुखाङ्घ्रयः
क्षणमतिप्रचलत्वभृतो हयाः ।
स्फटिककुट्टिमकान्तिनि सैकते
रवितुरंगमबिम्बनिभा बभुः ॥ ४३ ॥
चिररजोलुठनैर्मलिनं श्रियः
सुतमपि द्रुतमङ्कमुपागतम् ।
स्वयमसिस्नपदेव सरस्वती
स्व इव भाति परोऽपि सतां श्रितः ॥ ४४ ॥
अपि तनूषु न भेदमदीदृशन्
मधुरधीरगभीरमधुध्वनिम् ।
चपलतैकपराः परिरेभिरे
लहरयो हरयोऽपि परस्परम् ॥ ४५ ॥
अवतरन्तममुं सरितो हरि-
प्रकरमाशुविलङ्घितरोधसम् ।
लहरिपूरमिवैक्षत दूरत-
श्चलितमुच्चमियं चकिता चमूः ॥ ४६ ॥
पुरुषमानपटूकृतकीलक-
व्यतिकरग्रथिताजिनवल्लिषु ।
करयुगान्तरिता परितो हया-
वलिरबध्यत वल्लवपालकैः ॥ ४७ ॥
प्रमदनादभृतां परिवल्गता-
मित इतोऽपि खुरैः खनतां क्षितिम् ।

तृणमुचां वदनेष्वथ वाजिनां
सपदि खाद्यमबाध्यत किङ्करैः ॥ ४८
अविरलोच्चदलोच्चयखादने-
र्मेषगणः चणतो धरणीरुहाम् ।
असृजदादिशिरोऽवयवोत्सवा-
निव स गीतिषु दिक्षु खगारवैः ॥ ४६ ॥
जीवः क एष किमु नाम विलोकतेऽसा-
वुत्कन्धरः प्रकुपितः पटुदीर्घदन्तः ।
एवं विलोक्य रवणं वनमेदिनीषु
दूरं पलायत भयादिभसूदनोऽपि ॥ ५० ॥
शीकरार्द्रतृणच्छद्मस्वेदरोमाञ्चकञ्चुकम् ।
प्रहर्षी वृषभं चुम्बन् नदीतीरभुवं युवा ॥ ५१ ॥
स्वस्मै यद्यज्जनितमशनं तेन तेनातिखिन्नान्
पश्चात् पश्चादभिगतवतो भोजयामासुराशु ।
आसंख्यं ये स्वयमविदितचुद्गराः सत्त्ववीरा-
स्तेषां चीराकृति यश इव प्रोदगादिन्दुरोचिः ॥ ५२ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के उद्योगपर्वणि निवासनिवेशो नाम चतुर्थः सर्गः ॥ ४ ॥ :: :: ॥

---

॥ श्रीः ॥

अथ खण्डप्रशस्तौ ।
रामावतारवर्णनम् ॥

(५१) कल्याणानां निधानं कलिमलमथनं पावनं पावनानां
पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य ।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां
बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥

रामनाम भवतां भूतये लक्ष्म्यै प्रभवतु समर्थीभवतु, किंविशिष्टं रामनाम, कल्याणानां शुभानां निधानं निधिः, पुनः किंविशिष्टम्, कलिमलमथनं कलेः कलियुगस्य मलं पापं मथ्नातीति तत्, पुनः किंभूतम्, पावनानां पवित्राणां मध्ये पावनं पवित्रम्, पुनर्यन्नाम मुमुक्षोर्मोक्षमिच्छोर्मुनेः पाथेयं शम्बलम्, किंविशिष्टस्य मुमुक्षोः, सपदि शीघ्रं परपदप्राप्तये मोक्षप्राप्त्यै प्रस्थितस्य प्रवृत्तस्य, पुनः किंभूतम्, सज्जनानां जीवनं प्राणनम्, पुनः किंभूतम्, धर्मद्रुमस्य पुण्यवृक्षस्य बीजं हेतुरिति ॥ ५१ ॥

(५२) उत्फुल्लामलकोमलोत्पलदलश्यामाय रामामनः-
कामाय प्रथमाननिर्मलगुणग्रामाय रामात्मने ।
योगारूढमुनीन्द्रमानससरोहंसाय संसारवि-
ध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः ॥

तस्मै रामात्मने रामस्वरूपाय पुंसे परमपुरुषाय नमः, किंविशिष्टाय तस्मै, उत्फुल्लामलकोमलोत्पलदलश्यामाय उत्फुल्लानि विकस्वराण्यमलानि निर्मलानि कोमलानि यान्युत्पलानां दलानि पत्राणि तद्वच्छ्यामः कृष्णस्तस्मै, पुनः किंविशिष्टाय, रामामनःकामाय रामाणां रमणीनां यानि मनांसि तेषां कामोऽभिलाषो यस्मिन्स तस्मै, यद्वा रामाणां मनसि कामइव कन्दर्पइव यस्तस्मै, पुनः किंविशिष्टाय, प्रथमाननिर्मलगुणग्रामाय प्रथमानो विस्तरन्निर्मलो गुणग्रामो धैर्यौदार्यादिगुणसमूहो यस्य स तस्मै, ग्रामशब्दः समूहार्थकः कोशादौ प्रसिद्धः, पुनः किंविशिष्टाय, योगारूढमुनीन्द्रमानससरोहंसाय योगारूढा अष्टाङ्गयोगसाधनावस्थां प्राप्ता ये मुनीन्द्रास्तेषां मानससरसि हंसइव हंसो यस्तस्मै, पुनः किंविशिष्टाय, संसारविध्वंसाय संसारस्य जगतो विध्वंसो नाशो यस्मात्स तस्मै, पुनः किंविशिष्टाय, स्फुरदोजसे स्फुरदोजः पराक्रमो यस्य स तस्मै, पुनः किंविशिष्टाय, रघुकुलोत्तंसाय रघोः कुलेऽन्वये उत्तंसइव शेखरइव यस्तस्मै ॥ ५२ ॥

(५३) ये मज्जन्ति निमज्जयन्ति च परांस्ते प्रस्तरा दुस्तरे
वार्धौ वीर तरन्ति वानरभटान् संतारयन्तेऽपि च ।
नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः
श्रीमद्दाशरथेः प्रतापमहिमा सोऽयं समुज्जृम्भते ॥

ये प्रस्तरा ग्रावाणः स्वयं गुरुत्वान्मज्जन्ति जलान्तर्गच्छन्ति किं चान्यानपि स्वपृष्ठस्थान् जले निमज्जयन्ति ते च पुनः प्रस्तरा दुस्तरे दुःखेन तीर्यतेऽसौ दुस्तरस्तस्मिन्वार्धौ समुद्रे हे वीर शूर यत्तरन्ति मज्जन्ति अपि च वानरभटान्वानरजनांस्तारयन्ते स कस्य महिमेति विचारयेति शेषः, यतो नैते तरणतारणलक्षणा ग्रावगुणाः प्रस्तरगुणास्तथा न वारिधिगुणा वारिधेः समुद्रस्य गुणास्तथा नो वानराणां गुणाः किं तु श्रीमद्दाशरथेर्दशरथापत्यस्य यः प्रतापमहिमा प्रतापस्य माहात्म्यं सोऽयं समुज्जृम्भते यत्प्रभावतो ग्रावाणस्तरन्ति तारयन्ति च तद्रामचन्द्रमाहात्म्यं समुल्लसतीति भावः ॥ ५३ ॥

(५३) श्रीराम त्वदनेकचित्रचरितप्रोद्दामकीर्तिश्रुति-
प्रल्हादादवधूतमूर्ध्नि सकलत्रैलोक्यलोकेऽपि यत् ।
अश्रोत्राः फणिनस्तदेतदुचितं नो चेदहिस्वामिना
व्याधूते शिरसि क्व भूः क्व गिरयः क्वामीदिशामीश्वराः ॥

हे श्रीराम सकलत्रैलोक्यलोके समस्तत्रिजगज्जने ऽपि त्वदनेकचित्रचरितप्रोद्दामकीर्त्तिश्रुतिप्रल्हादात् तवानेकान्यनल्पानि यानि विचित्रचरितान्याश्चर्यकृत्यानि तैः प्रोद्दामोत्कटा या कीर्त्तिस्तस्या या श्रुतिः श्रवणं तस्याः समुत्पन्नो यः प्रल्हादस्तस्मादवधूतमूर्ध्नि अवधूतः कम्पितो रामकीर्तिश्रवणान्मूर्धा शिरो येन स तस्मिन् जाते सति यत्फणिनः सर्पाः अश्रोत्राः कर्णरहिता जातास्तदेतदुचितं युक्तमित्यर्थः, किमत्रौचित्यमत आह, नोचेदिति, चेद्यदि ते फणिनोऽकर्णा नाभविष्यंस्तदाहिस्वामिना शेषेण तद्गुणकीर्तिश्रवणादन्यलोकवच्छिरसि व्याधूते कम्पिते सतीयं भूर्भूमिः क्वाभविष्यत् कुत्रास्थास्यत्, तथाऽमी गिरयः कनकाचलाद्याः क्वाभविष्यन्, तथाऽमी दिशामीश्वरा दिक्पालाः क्वाभविष्यन्, शेषशिरोवधूनेन च भूमेः पात एव स्यात्ततस्तेषां गिर्यादिवस्तूनां क्वावस्थानं भवेद्यतस्तेषां भूम्याश्रितत्वात्तस्याश्च शेषाश्रितत्वादिति भावः ॥ ५४ ॥

(५५) राम त्वत्तरुणप्रतापतपनत्रासादिव त्र्यम्बको
नो गङ्गां विजहाति निःसरति न क्षीराम्बुधेर्माधवः ।
ताम्यंस्तामरसान्तरालवसतिर्देवः स्वयंभूरभू-
त्पातालावधिपङ्कलग्नवपुषस्तिष्ठन्ति कूर्मादयः ॥

हे राम त्र्यम्बको महेशो गङ्गां न विजहाति न त्यजति, कस्मादिव, त्वत्तरुणप्रतापतपनत्रासादिव त्वदीयो यस्तरुणः प्रत्यग्रः प्रताप एव तपनः सूर्यस्तस्माद्यस्त्रासो भयमाकस्मिकं तस्मादिव, यद्यपि निसर्गत एव भर्गः शिरसि सुरसरितमुद्वहति तथापि कविभिरुत्प्रेक्ष्यते, एवमग्रेऽपि, नहि रामप्रतापभयाच्छीतलत्वार्थिभिरेभिर्गङ्गोद्वहनादिकं क्रियत इति युक्तम्, तथैव माधवो विष्णुः क्षीराम्बुधेः क्षीरसमुद्रान्न निस्सरति, तथैव च स्वयंभूर्देवो ब्रह्मा ताम्यन् त्वत्प्रतापतापान्ग्लानिं प्राप्नुवन्, अतएव तामरसान्तरालवसतिः तामरसान्तरालं कमलमध्यं तत्र वसतिर्निवासोस्येतीदृग्विधोऽभूत् हरिनाभिकमलस्यातिशीतलत्वात्तत्र निवसतीति भावः, तथा कूर्मादयः कमठप्रमुखा जलजन्तवः पातालावधिपङ्कलग्नवपुषः यावत्पातालं यः पङ्कः कर्दमस्तस्मिन्मग्नानि निविष्टानि वपूंषि शरीराणि येषां ते अभूवन् जाता इति ज्ञेयम् ॥ ५५ ॥

(५६) कीर्तिः श्रीरघुवंशरत्न भवतः स्वर्वाहिनीगाहिनी
दिक्पालान्परितः परीत्य दधती पाण्योः प्रतापानलम् ।
सप्ताम्भोनिधिमण्डलान्यधिगता त्वय्येकपत्नीव्रत-
ख्यात्यै विष्णुपदं स्पृशत्यनुदिनं शेषस्य शीर्षाण्यपि ॥

हे श्रीरघुवंशरत्न श्रीरघुराजान्वये रत्नमिव यः स तत्संबुद्धौ तथा, भवतस्तव कीर्तिर्विष्णुपदं स्पृशति, तथा शेषस्य नागाधिपतेरनुदिनं प्रतिदिनं शीर्षाण्यपि शिरांस्यपि स्पृशति, किंभूता सा, स्वर्वाहिनीगाहिनी स्वर्वाहिनी गङ्गा तां गाहते तच्छीला सा, किं कुर्वती सा, दिक्पालान्परितः परीत्य प्रदक्षिणीकृत्य प्रतापानलं प्रताप एवानलोऽग्निस्तं पाण्योर्हस्तयोर्दधती बिभ्रती, पुनः कथंभूता, सप्ताम्भोनिधिमण्डलानि सप्तसमुद्रमण्डलान्यधिगता प्राप्ता, किमर्थम्, त्वयि रामे एकपत्नीव्रतख्यात्यै एकस्यैव पत्नी सैव व्रतं एकपत्नीव्रतं तस्य ख्यात्यै प्रसिद्ध्यै स्वसतीत्वव्रतज्ञापनाय दिव्यकरणं युक्तमेव, अयं भावः, याहि स्त्री दिव्यं कर्तुमिच्छति सा पूर्वं गङ्गां गाहते अपरं देवताः प्रदक्षिणीकृत्य पाण्ये ऽनलं दधती सप्त मण्डलान्यतिक्रामति ततो विष्णुपदं स्पृशति तथा सर्पं कर्षति तद्वदियं त्वत्कीर्तिरपि जलाग्निराजपदविष्णुपदसर्पस्पर्शनाख्यानि पञ्चदिव्यानि स्वसतीत्वनिर्वाहाय विधत्त इति ॥ अत्रायं गर्भार्थः । यत्त्वत्कीर्त्तिर्भुवनत्रयमभिव्याप्य वर्ततइति ॥ ५६ ॥

(५७) कीर्तिः श्रीरघुवंशदीप भवतो दूती मुरारेः प्रियां
यस्मात्तुभ्यमदात्तदादि गिरिशोऽभूदर्धनारीश्वरः ।
ब्रह्माभूच्चतुराननः सुरपतिश्चक्षुःसहस्रं दधौ
स्कन्दोमन्दमतिश्चकार न करं स्पर्शे स्त्रियाः शङ्कितः ॥

हे श्रीरघुवंशदीप रघुवंशप्रकाशक भवतस्तव कीर्तिः कीर्तिरूपा दूती मुरारेर्विष्णोः प्रियां लक्ष्मीं यस्माद्धेतोस्तुभ्यमदाद्ददौ, तदादि तत्प्रभृति गिरिशो महेशोर्द्धनारीश्वरोऽभूद्बभूव, महेश्वरेणेत्थं तर्कितम्, यद्यहमुमां स्वपार्श्वे न स्थापयिष्यामि तदेयं कीर्तिदूती लक्ष्मीमिवापहृत्य मम कामिनीं गौरीमपि रामाय प्रदास्यतीति भिया स्वाङ्गएव गौरी स्थापिता तत्प्रभृत्यर्द्धनारीश्वरो हर इति ख्यातिः, तथा ब्रह्मा तत्प्रभृत्येव चतुराननश्चतुर्मुखोऽभूत् यतस्तेन स्वपत्नीरक्षणार्थं चतसृष्वपि दिक्षु मुखानि निर्मितानि, तथा सुरपतिरिन्द्रोपि चक्षुषां नेत्राणां सहस्रं तत्प्रभृत्येव दधौ बभार, यतो बहूनि चक्षूंषि मम चेद्भविष्यन्ति तदा स्वाप्सरसः प्रलोभ्यापहर्तुमागच्छन्तीं कीर्तिदूतीमवलोकयामीति, तथा स्कन्दः कुमारः शङ्कितः शङ्का जातास्येति शङ्कितस्त्वत्कीर्तिदूतीभयविह्वलः सन् स्त्रियाः करस्पर्शं पाणिग्रहणं न चकार यतश्चेदहं कृच्छ्रेण प्राक् स्त्रियं परिणेष्यामि तथापि तदपहरणे मम तस्या वियोग एव भावी ततः किमनेन परिणयनारम्भेणेति विचारादिति भावः, अतएव सोऽद्यापि कुमार एवावस्थितः कीर्त्यते च कुमार इति, किंविशिष्टः सः, मन्दमतिः मन्दाविवाहे ऽलसा मतिर्यस्य स इति ॥ ५७ ॥

(५८) अब्दैर्वारिजिघृक्षयाऽर्णवगतैः साकं व्रजन्ती मुहुः
संसर्गाद्बडवानलस्य समभूदापन्नसत्वा तडित् ।
मन्ये राम तया क्रमेण जनितो युष्मत्प्रतापानलो
येनारातिवधूविलोचनजलैः सिक्तोऽपि संवर्द्धते ॥

अब्दैर्मेघैः साकं सार्द्धं व्रजन्ती गच्छन्ती तडिद्विद्युद्बडवानलस्य बाडवाग्नेर्मुहुर्वारंवारं संसर्गात्संयोगादापन्नसत्वा गुर्विण्यभूत् जाता, किंविशिष्टैरब्दैः, वारिजिघृक्षया पानीयग्रहणेच्छयाऽर्णवगतैः समुद्रं प्राप्तैः, रिक्ता मेघाः पानीयानयनार्थं समुद्रं गच्छन्तीति, यदुक्तं वृद्धैः,

दोषजालमवधूय मानसे
धारयन्ति गुणमेव सज्जनाः ।
क्षारभावमपनीय वारिधे-
र्गृह्णते सलिलमेव वारिदाः ॥ १ ॥

हे राम अहमेवं मन्ये यत्तया तडिता क्रमेण युष्मत्प्रतापानलो भवत्प्रतापाग्निर्जनितः समुत्पादितः यतः स्वानुरूपमपत्यं जन्यते मातेत्यतोऽग्निनाग्निरेवोत्पादित इति भावः । अथ तडिता त्वत्प्रतापाग्निरेव जनित इति कथं ज्ञायत इत्याह, येन कारणेन युष्मत्प्रतापानलोऽरातिवधूविलोचनजलैः अरातिवधूनां वैरिस्त्रीणां विलोचनजलैर्नेत्राम्बुभिः सिक्तोपि संवर्धते, अयं भावः । वैरिस्त्रियः स्वभर्तृमरणाद्यथायथाऽधिकं रुदन्ति तथातथाधिकं तन्नेत्राम्बुभिस्त्वत्प्रतापाग्निः संवर्धते त्वत्प्रतापोऽधिको भवतीति यावत्, यतः स प्रतापाग्निर्बडवानलात्पितुस्तडितश्च मातुः समुत्पन्नस्तौ च पितरौ पानीययोगादेवोज्जृम्भेतेऽतस्तत्पुत्रोपि त्वत्प्रतापो भवद्वैरिरमणीनेत्राम्बुभिः सिच्यमानो वृद्धिमाप्नोतीत्येतदुचितमेवेति, जिघृक्षयेति ग्रहधातोः सन्नन्ताद्भावे स्त्रियामः प्रत्यय इति ॥ ५८ ॥

(५९) शत्रुत्रस्तकलत्रनेत्रसलिलैर्जम्बालजालस्पृशि
भ्रान्त्वा भूपतिभालभूषणभवत्कीर्तिर्भुवो मण्डले ।
यद्यान्ती विबुधालयं प्रति सुधाकुण्डे सुधांशोर्व्यधा-
दङ्घ्रिक्षालनमित्ययं किल मलस्तस्मिन् गतः स्मेरताम् ॥

भूपतीनां राज्ञां भालानि ललाटानि भूष्यन्तेऽनेनेति करणे ल्युट् तत्संबोधने हे भूपतिभालभूषण भवत्कीर्तिस्त्वद्यशो भुवो मण्डले भ्रान्त्वा पर्यटनं विधाय विबुधालयं स्वर्गलोकं प्रति यान्ती गच्छन्ती यद्यस्माद्धेतोः सुधांशोश्चन्द्रस्य सुधाकुण्डेऽमृतकुण्डेऽङ्घ्रिक्षालनं चरणयोर्धावनं व्यधाच्चक्रे, इति हेतोरयं मलो भूभ्रमणसञ्जातचरणपङ्कस्तस्मिंश्चन्द्रे स्मेरतां प्रकटस्वरूपतां चिह्नतामिति वा किलेति संभावने गतः प्राप्तः, किंविशिष्टे मण्डले, शत्रुत्रस्तकलत्रनेत्रसलिलैः वैरिराजरमणीनेत्राश्रुभिर्जम्बालजालस्पृशि जम्बालजालं कर्दमजालं स्पृशतीति तस्मिन् । अयं भावः । यच्चन्द्रान्तः कालुष्यमवलोक्यते तत्पङ्किलभूभ्रमणेन कर्दमाङ्कितचरणया त्वत्कीर्त्या चन्द्रामृतकुण्डे स्वमलिनपादक्षालनतो जनितमिति, अन्योपि हि यो देवालयं याति स जलपूर्णकुण्डे चरणौ प्रक्षाल्य याति तद्वदयमपीति, तस्मिन्नित्यनेन सकलवैरिविनाशनद्वारा त्वत्कीर्तिः सुरालये जागर्तीति सूचितम् ॥ ५९ ॥

॥ शेषउत्तराङ्के ॥

---

॥ श्रीः ॥

वर्त्तते सम्प्रति प्रशियाफ्रांस्देशयोर्मध्ये प्रवर्त्तमानः सङ्गरः । तत्र सितंबरमासस्य प्रथमदिवसे घोरतरमेकं युद्धमभूत् । तस्य द्वितीयदिवस एव प्रशियादेशवासिना सङ्ग्रामभूमिस्थितेन केनचिदश्वसादिना स्वमित्रं प्रति संस्कृतभाषया पत्रमेकं व्यलेखि । तत्र ऋग्वेदीयसंहितास्थैका ऋग् दृष्टान्तपरतयोपन्यस्ता । सच विद्वत्तमो जुरिस वोन श्रीलमान समभिधः प्रशियादेशान्तर्गतबर्लिननगरे न्यायाधीशपदनियुक्तोपि वाहिन्यधिकारविनियुक्तत्वात्सेनया सह युद्धार्थं च गच्छति यथावसरं संस्कृतभाषाध्ययनमपि करोति ॥

धन्यः सभूपतिर्यस्य देशे ईदृग्विलक्षणाध्यवसायिनः पुरुषाः सन्ति । अतस्तस्य जयः सम्भाव्यत एव । अत्रत्यजना ईदृग्विषय आश्चर्ययुक्ता भविष्यन्ति । अस्माकन्तु महाविस्मयकरमिदं यदेतद्देशवासिन ईदृग्गुणगणसमलङ्कृतैर्यूरोपखण्डीयमहानुभावैः साम्यमिच्छन्तीति ॥

तल्लिखितपत्रन्तु

ह्यो महायुद्धम् अभवत् । शत्रवः सर्वे निर्जिताः, सर्वा तेषां सेना, महाराजश्च स्वयं, बद्धः । त्वष्टानो वज्रं स्वयं ततक्ष, अहन्न्याऽहिं स्वबिले शिश्रियाणम् । (ऋग्वेद १, ३२) अहं सुकुशलोस्मि, युद्धे न महद् भयं गतोहम्, यद् एतस्मिन् क्षेत्रे सुपार्श्वे पदातय नव योद्धुं शक्नुवन्ति, तुरङ्गिणस्तु नार्हन्ति । महत्यां सेवायां भवतः शिष्य इति ॥

शिवप्रसादः

---

॥ श्रीः ॥

॥ श्रीमद्गोस्वामिश्रीजीवनजीमहाराजस्यौदार्यम् ॥

अस्ति किल श्रीमद्देवकीनन्दनपादारविन्दामिलिन्दायमानमानसानेकभूमिपालमौलिमालालालितचरणकमलविमलतरय-

शेषाशिषधवलितनाखिलदिङ्मण्डलविद्वत्कलापखण्डलभक्तजनाज्ञानतमोनिवारणैकभास्करश्रीमद्वल्लभाचार्यान्वयरत्नाकरसुधाकरो मुंबापुरीनिवासी श्रीजीवनजीमहाराजेतिनाम्ना ख्यातिमुपगतो गोस्वामितिलकः ।

तेन च परमोदारचरितेन महानुभावेन स्वनिर्मिता भगवन्नन्दनन्दनाद्भुतचरित्रवर्णनप्रधाना खण्डिल्करोपनामात्मारामशास्त्रिविरचितात्युत्कृष्टव्याख्यानसंवलिता बालकृष्णाभिधाना चम्पूः, श्रीमद्विट्ठलेश्वरा गट्टूजीतिनाम्ना प्रसिद्धेन गोवर्द्धनशर्म्मणा रचितः प्रश्नोत्तरव्याजेन प्रायः सर्वेषां वैष्णवसिद्धान्तानां स्वसम्प्रदायस्य चोपयुक्तानां विषयाणां प्रकाशकः सत्सिद्धान्तमार्त्तण्डाभिधः प्रबन्धः, तथा विद्वच्चूडामणिना श्रीगोवर्द्धनाशुकविना प्रणीतो वेदान्तचिन्तामणिसमाख्यो ग्रन्थ, इत्येतत्पुस्तकत्रयं वाराणसीनिवासिभ्यः कतिपयेभ्यः संख्यावद्भ्यः प्रत्येकं श्रीमद्वाराणसीनिवासिसकलविद्यासम्पन्नवैश्यवंशावतंसश्रीबाबूहरिश्चन्द्रद्वारा समर्पितम् । एतेन चातिसन्तुष्टैस्तैस्तैर्विद्वद्वर्य्यैस्तस्य महात्मनो धन्यवादपुरस्सरमुत्तरोत्तरं तदीययशस्सम्पदाद्य भवृद्धये प्रार्थ्यते भगवान् वृन्दावनचन्द्रः श्रीकृष्णचन्द्र इति ॥

रामेश्वरदत्त त्रिपाठी ।

---

# THE APHORISMS
## OF THE
# YOGA PHILOSOPHY,
## OF
## PATAÑJALI.

*(Continued from page 105.)*

He [now] states another Siddhi.

**बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥ ४४ ॥**

Aph. 44 The external modification [of the internal organ] akalpitá, thoughtless, is [called] the great incorporeal [modification, mahávidehá]. therefrom [results] the destruction of the obscuration of the illumination [of intellect.]

The modification which arises outside the body without having dependence thereon, is, by means of the removal of the steadfastness of the selfishness with regard to the body, called, "the great incorporeal" [modification, "mahávidehá"]

"Therefrom"—from the asceticism performed with regard to it; "the destruction of the obscuration of the illumination" that is—the annihilation of the obscuration—the afflictions, works &c [i e. fructification]—of the light of intellect [or thinking principle] characterised by purity [the quality, sattwa], takes place; the meaning is this—the external modification of the mind, which takes place while selfishness in regard to the body [śaríráhankára] exists, is called, kalpitá, or thoughtful, and when the modification of the mind arises independently, having laid aside the selfishness with regard to the body, then it is called "akalpitá" or thoughtless [modification]: from the restraint performed with regard to this, [akalpitá vrittih] all the impurities of the mind of the ascetic are removed.

In order to exhibit various methods for the perfection of the meditations [both] with a germ [sabíja] and without a germ [nirbíja], which are conducive to the discernment of the truth, he states as follows:

**स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥ ४५ ॥**

Aph 45 The conquering of the elements [takes place] from the asceticism [performed with regard to the five forms of the elements] gross [sthúla]—nature, [swarúpa], subtile [súkshma], concomitant [anwaya] and possession of objects [arthavattwa]

The ascetic attains victory [over] the elements, that is the elements become subject to him, from the restraint performed in regard to the five properties, grossness &c, [i. e grossness, nature, subtility, concomitance and possession of objects] of the elements,—earth &c [It should be borne in mind that each and all of the five elements possess these five properties—forms]: "gross" [or the 1st form] is the phenomenal having appreciable form, of the elements [including in it gross qualities, gross sound &c]; the "nature" [or second form] of these, [that is of the elements] is characterised respectively by tenuity, viscidity, heat, impulsion and giving space; the "subtile" [or third form] is, the subtile elements, odour &c [gandháditanmátrá, that is, odour flavour, colour, tangibility and sound], which are determined to be the respective causes of the elements;

---

सिद्ध्यन्तरमाह ।

शरीराद्बहिर्या मनसः शरीरनैरपेक्ष्येण वृत्तिः सा महाविदेहा नाम विगतशरीराहङ्कारदार्ढ्यद्वारेणोच्यते ततस्तस्याङ्कृतात् संयमात्प्रकाशावरणक्षयः सात्त्विकस्य चित्तस्य यः प्रकाशस्तस्य यदावरणं क्लेशकर्म्मादि तस्य क्षयः प्रविलयो भवति अयमर्थः शरीराहङ्कारे सति या मनसो बहिर्वृत्तिः सा कल्पितेत्युच्यते या पुनः शरीराहङ्कारभावं परित्यज्य स्वातन्त्र्येण मनसो वृत्तिः साऽकल्पिता तस्यां संयमाद्योगिनः सर्वे चित्तमलाः क्षीयन्ते ॥

इदानीं तत्त्वदर्शनोपयोगिसबीजनिर्बीजसमाधिसिद्धये विविधोपायप्रदर्शनायाह । पञ्चानाम्पृथिव्यादीनां भूतानां ये पञ्चावस्था विशेषरूपा धर्म्माः स्थूलत्वादयस्तत्र कृतसंयमस्य भूतजयो भवति भूतानि वश्यान्यस्य भवन्तीत्यर्थः । तथाहि भूतानाम्परिदृश्यमानं विशिष्टाकारवत् स्थूलम् । स्वरूपञ्चैषां यथाक्रमङ्काठिन्यस्नेहोष्णताप्रेरणावकाशदानलक्षणम् । सूक्ष्मन्तु यथाक्रमम्भूतानाङ्कारणभेदेन व्यवस्थितानि गन्धादितन्मात्राणि ।

"concomitants" [or the fourth form] are qualities, which are observed as everywhere co-existing, in the form or shape of light, action and rest, [or revealing, exertion and fixation], "possession of objects" [or the fifth form] means the power, existing in these qualities, [or in the five elements earth &c] called the power of procuring fruition, and emancipation, [bhogápavarga sampádanakhyá śaktih], [and as this power exists in the qualities, and as the qualities, exist in the subtile and other elements &c, every thing is endowed with fruition and emancipation]

Thus [this being the case] the ascetic performing the asceticism in regard to each of the five forms of the five elements differing by the [five] shapes characterised by the [particular] states above described, conquers the elements For example, the natures of the elements become obedient like cows following their calves, to his [the ascetic's] resolves, who has finished the performing of the restraint [with regard to each of the five forms] —i e (who has) first performed [restraint] with regard to gross form [sthúla], afterwards with regard to subtile form [súkshma] and so forth in due order, [that is in regard to the remaining successive forms]

*(To be continued)*

NOTICE.

In preparation, to be ready in 1872, by Pandits Rájárám Sástri and Bál Sástri, Professor in the Sanskrit College, Benares The *Mahábháshya.* With commentary and notes Lithographed. Price to subscribers paying in advance Rs. 20—To non-subscribers—Rs 24.

Applications may be addressed to the Editor of the Pandit, Sanskrit College, Benares.

# THE VAIŚESHIKA APHORISMS OF KAṆÁDA.

## FIFTH BOOK, FIRST DAILY LESSON.

*(Continued from page 138)*

तथा दग्धस्य विस्फोटने ॥ १२ ॥

Aph 12. In like manner in the case of the bursting open of one burnt.

अन्वयिनो गुणाः प्रकाशप्रवृत्तिस्थितिरूपतया सर्वत्रैवान्वयित्वेन समुपलभ्यन्ते । अर्थवत्त्व तेष्वेव गुणेषु भोगापवर्गसम्पादनाख्या शक्तिः ॥

तदेवम्भूतेषु पञ्चसूक्तलक्षणावस्थाभिन्नेषु ग्रन्थवस्थं संयमङ्कुर्वन् योगी भूतजयी भवति तद्यथा प्रथमं स्थूले रूपे संयमं विधाय तदनुसूक्ष्मरूपे इत्येवङ्क्रमेण तत्र कृतसंयमस्य सङ्कल्पानुविधायिन्यो वत्सानुसारिण्य इव गावो भूतप्रकृतयो भवन्ति ॥

In a house which has been set on fire by a felon, when a man has there been burnt, and his body torn open by the fire, the action which is produced in the hand &c, by the will to kill the felon, is neither a cause of merit, nor a cause of demerit; as it has been said, 'In the slaying of a felon there is no sin in him that slays openly or covertly wrath encounters wrath An incendiary, a poisoner, an assasin, a thief, a ravisher of wife or field,—these six are felons.' U.

Involuntary motion

प्रयत्नाभावे प्रसुप्तस्य चलनम् ॥ १३ ॥

Aph 13 Movement of the sleeping (takes place) in the absence of volition

² Movement, action such as the sideward or upward moving of the limbs takes place in the sleeping, in the body possessing a state of profound slumber, even in the absence of volition generated by such desire as 'I will throw upwards.' A particular volition is not, therefore, always the cause [of such motion] V

तृणे कर्म वायुसंयोगात् ॥ १४ ॥

Aph 14 Action [takes place] in grass from conjunction with wind.

³ The actions of the body being explained, those of other objects are treated of All such objects as trees, shrubs, climbing plants, are implied in the term grass. U.

मणिगमनं सूच्यभिसर्पणमदृष्टकारणम् ॥ १५ ॥

Aph 15. The movement of the gem, and the approach of the needle, are caused by destiny

⁴ By the term gem are intended vessels made of

¹ आततायिना केनाप्यगारे दाह्यमाने तत्र दग्धस्य पुरुषस्य विस्फोटे वह्निकृते जाते सति तस्याततायिनो वधानुकूलेन प्रयत्नेन हस्तादौ यत्कर्म्म जनितं तच्च पुण्यहेतुर्न वा पापहेतुः यथाहुः नाततायिवधे दोषो हन्तुर्भवति कश्चन प्रकाशं वा ऽप्रकाशं वा मन्युस्तन्मन्युमृच्छति । अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहा । क्षेत्रदारापहारी च षडेते आततायिनः ॥

² ऊर्ध्वं क्षिपामीत्यादीच्छाजनितप्रयत्नाभावे ऽपि प्रसुप्तस्य सुषुप्त्यवस्थान्वितस्य शरीरस्य चलनं तिर्य्यगूर्ध्वाङ्गचालनादिकर्म्म उत्पद्यते इत्यर्थः तथा च प्रयत्नविशेषो न सर्वत्र हेतुरिति भावः ॥

³ शरीरकर्म्माणि व्याख्याय तदितराण्याह । तृणपदेन वृक्षगुल्मलतावितानादिकं सर्व्वमुपलक्षयति ॥

⁴ मणिपदेन जलपूर्णकाञ्चनादिमयपात्राण्यभिप्रेतानि चौर्य्यधनलब्धये तादृशपात्रे मान्त्रिकैर्मन्त्रप्रयोगः क्रियते तादृशपात्रन्तु भूमौ तिष्ठति तदुपरि अपरेण केनचिद्दक्षिणहस्तः स्थाप्यते मन्त्रसामर्थ्यात्तत्पात्रं तादृशहस्तसहितमेव चौर्य्यधनावस्थानाभिमुखं गच्छति तत्र स्थाने गत्वा स्थिरं भवतीति प्राचां किंवदन्ती तादृशपात्रगमनेन प्रयत्नविशेषो हेतुः किन्तु पूर्व्वस्वामिनः सुकृतं चोरस्य दुष्कृतं वा निमित्तकारणम् तादृशपात्रन्तु समवायिकारणम् एवं अयस्कान्तसंनिधाने सति सूचीनां लोहशलाकानां यदयस्कान्ताभिमुखगमनं भवति तत्रापि अदृष्टमेव हेतुः ननु कस्यादृष्टेन सूच्यादीनां गमनमितिचेत् तद्गमनेन यस्य हितमहितं वा भवति तददृष्टस्यैव तत्र हेतुत्वम् सूच्यात्युपलक्षणम् अयस्कान्ताकृष्टलोहमात्रमभिप्रेतम् तृणकान्तमणयाकृष्टानां तृणानां गमने वह्नेरूर्ध्वज्वलने वायोस्तिर्य्यग्गमने सर्गाद्यकालीनपरमाणुकर्म्मणि चादृष्टकारणकत्वमूहनीयमिति संक्षेपः ॥

gold &c. and filled with water To such a vessel magicians apply incantations for the recovery of stolen property The tradition of the ancients is that the vessel is set on the ground, and some other person lays his hand upon it. The vessel accompanied with the hand, in consequence of the efficacy of the incantation, turns towards the spot where the stolen property has been deposited. The reason of the movement of such a vessel is not a particular volition, but the efficient cause is the merit of the former possessor or the demerit of the thief The non-coinhesive cause is conjunction of such a vessel with soul possessing such destiny [or results of actions done in previous states of existence] ; and the co-inhesive cause is such a vessel In like manner destiny is also the cause of the attraction towards a loadstone which takes place in needles or metallic rods when in proximity with the magnet If it be asked in consequence of whose destiny [or previous merits and demerits] motion takes place in needles &c , the reply is that it is the destiny of him to whom benefit or injury accrues by the motion that is the cause The term needle implies other objects, iron in general attracted by the loadstone being intended It is to be inferred that destiny is the cause of the motion of pieces of grass attracted by amber, of the upward flaming of fire, of the horizontal motion of wind and of the action of the primordial atoms at creation. V.

इषावयुगपत्संयोगविशेषाः कर्मान्यत्वे हेतुः ॥ १६ ॥

Aph. 16 Particular non-simultaneous conjunctions in an arrow are the cause of the diversity of its action.

[1] The sense of this aphorism is as follows. After conjunction of arrows &c. moving with velocity with a wall and the like, a cessation of motion is observed though the arrows &c continue to exist In this case it is not destruction of the substratum that is destructive of motion, for the substratum continues to exist Also no other contrary property is observed It therefore follows that it is a self-produced conjunction that destroys the action [of the arrow ] This conjunction produced in the fourth moment destroys the action in the fifth moment. The meaning, therefore, is that the production of the action, then disjunction, next the destruction of the prior conjunction, the subsequent conjunction, and the destruction of the action, make known the diversity of the action. 'Particular conjunctions,'—peculiarity in conjunction, self-production. Otherwise, were conjunction in general destructive of action, action could not abide anywhere U.

नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरञ्च ॥ १७ ॥

Aph. 17. The first action of the arrow is from impulse, the next is from self-reproduction caused by that action, and in like manner the next and the next.

[1] The first action in an arrow when discharged is produced by a bowstring drawn by human volition. In this case the impulse is the non-coinhesive cause ; the arrow is the co-inhesive cause ; volition and gravity are the efficient causes. By this first action self-reproduction termed velocity and having a common substratum is produced This is established by the perception that it [the arrow] moves with velocity. By this self-reproduction action is produced in the arrow. Of this the non-coinhesive cause is the self reproduction ; the co-inhesive cause is the arrow ; and the efficient cause is a particular keen impetus. In like manner a succession of actions one after the other is produced by the self-reproduction which continues until the arrow falls A single self-reproduction produces a succession of actions, for when an action is destroyed by subsequent conjunction produced by itself, the self-reproduction produces another action It is not proper to suppose a succession of self-reproductions like the succession of actions, for the hypothesis is unnecessary. To show this the words 'In like manner the next and the next,' are added, and term, 'Self-production caused by that action' is in the singular number In the Nyáya doctrine which affirms a succession of self-reproductions like the succession of actions, there is complexity. The reason that of two arrows simultaneously discharged the velocity of the one is swift and that of the other slow, is the swiftness or slowness of the impetus U.

[1] इदमत्राकूतं वेगेन गच्छतां शरादीनां कुड्यादिसंयोगानन्तरं शरादौ सत्येव गत्युपरमो दृश्यते अत्राश्रयनाशस्तावन्नकर्म्मनाशकः आश्रयस्य विद्यमानत्वात् विरोधिगुणान्तरञ्च नोपलभ्यते तेन स्वजन्यः संयोगएव कर्म्मनाशक इत्युन्नीयते स च संयोगश्चतुर्थक्षणे जात पञ्चमक्षणे कर्म्म नाशयति तथाहि कर्म्मोत्पत्तिरथविभागः अथ पूर्व्वसंयोगनाशः उत्तरसंयोगः कर्म्मनाशः तेनायुगपत् संयोगविशेषाः कर्म्मनानात्वज्ञापका इत्यर्थः संयोगविशेषा इति संयोगविशेषः स्वजन्यत्वमेव अन्यथा संयोगमात्रस्य कर्म्मनाशकत्वे कर्म्म क्वचिदपि न तिष्ठेत् ॥

[1] पुरुषप्रयत्नेनाकृष्टया पतञ्जिकया नुन्नस्येषोराद्यं कर्म्म जायते तत्र नोदनमसमवायिकारणम् इषुः समवायिकारणम् प्रयत्नगुरुत्वे निमित्तकारणे तेन चाद्येन कर्म्मणा समानाधिकरणो वेगाख्यः संस्कारो जन्यते स च वेगेन गच्छतीति प्रत्यक्षसिद्धएव तेन संस्कारेण तत्रैषौ कर्म्म जायते तत्रासमवायिकारणं संस्कारः समवायिकारणमिषुः निमित्तकारणन्तु तीव्रो नोदनविशेषः एवञ्च यावदिषुपतनमनुवर्त्तमानेन संस्कारेणोत्तरोत्तरः कर्म्मसन्तानो जायते स्वजन्योत्तरसंयोगेन कर्म्मणि नष्टे संस्कारेण कर्म्मान्तरजननात् एकएव संस्कारः कर्म्मसन्तानजनकः न तु कर्म्मसंतानवत् संस्कारसन्तानोऽप्यभ्युपगन्तुमुचितो गौरवादिति दर्शयितुमाह। तथोत्तरमुत्तरञ्चेति तत्कर्म्मकारिताच्च संस्कारादित्येकवचनञ्च न्यायनये तु कर्म्मसन्तानवत् संस्कारसन्तानस्वीकारे गौरवम् यत्तु युगपत् प्रक्षिप्तशरयोरेकस्य तीव्रो वेगोऽपरस्य तु मन्दस्तत्र नोदनतीव्रत्वमन्दत्वे निमित्तम् ॥

क्षयवृद्धिवध्यघातकबन्धविमोक्षैर्विवर्जितं नित्यम् ।
परमार्थतत्त्वमेकमतोन्यदनृतं सर्वम् ॥ ६९ ॥
नलकदलीवेणुबाणा नश्यन्ति यथा पुष्पमासाद्य ।
तद्वत्स्वभावभूताः स्वभावतां प्राप्य नश्यन्ति ॥ ७० ॥
भिन्ने ऽज्ञानग्रन्थौ छिन्ने संशयगणे शुभाशुभे क्षीणे ।
दग्धे तु जन्मबीजे परमात्मानं हरिं याति ॥ ७१ ॥
बुद्ध्वा विभक्तां प्रकृतिं पुरुषः संसारमध्यगो भवति ।
मुच्यते सर्वकर्मभिरम्बुजपत्रं यथा सलिलैः ॥ ७२ ॥
मोक्षस्य नैव कश्चिद्वासो न वा गमनमन्यत्र ।
अज्ञानहृदयग्रन्थेर्भेदो यस्तं विदुर्मोक्षम् ॥ ७३ ॥
बुद्ध्वैवमसत्यमिदं विष्णोर्मायात्मकं जगद्रूपम् ।
सर्वद्वन्द्वसहिष्णुर्योगासक्तो भवेच्छान्तः ॥ ७४ ॥
त्यक्त्वा सर्वविकल्पानात्मस्थं निश्चलं मनः कृत्वा ।
दग्धेन्धन इव वह्निः सर्वस्यात्मा भवेच्छान्तः ॥ ७५ ॥
अश्नन्यद्वा तद्वा संवीतो येन केन चिच्छान्तः ।
यत्र क्व चन शायी मुच्यते सर्वभूतात्मा ॥ ७६ ॥
इति शिष्य ब्रह्म यथाऽभिहितं परमं विधूय नानात्वम् ।
निरुपमपरमानन्दं यो वेद स तन्मयो भवति ॥ ७७ ॥
हयमेधसहस्राण्यथ कुरुते ब्रह्मघातलक्षाणि ।
परमार्थविन्न पुण्यैर्न च पापैः स्पृश्यते विमलः ॥ ७८ ॥
मदकोपहर्षमत्सरविषादभयपक्षवर्जितवाग्बुद्धिः ।
निःस्तोत्रवषट्कारो जडवद्विचरेदगाधमतिः ॥ ७९ ॥
उत्पत्तिनाशवर्जितमेकं परमार्थमुपलभ्य ।
कृतकृत्यः सफलजन्मा सर्वगतस्तिष्ठति यथेष्टम् ॥ ८० ॥
श्वपचगृहे तीर्थे वा नष्टस्मृतिः परित्यजन्देहम् ।
ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥ ८१ ॥
पुण्याय तीर्थसेवा निरयाय श्वपचादनं निधनगतिः ।
पुण्यापुण्यकलङ्कस्पर्शाभावे तु किं तेन ॥ ८२ ॥
परमार्थमार्गसाधनमभ्यस्याप्राप्य योगमपि नाम ।
सुरलोकभोगभोगी मुदितमना मोदते सुचिरम् ॥ ८३ ॥
विषयेषु सार्वभौमः सर्वजनैः पूज्यते यथा राजा ।
भुवनेषु सर्वदैवैर्योगभ्रष्टस्तथा पूज्यः ॥ ८४ ॥
महता कालेन पुमान्मानुष्यं प्राप्य योगमभ्यस्य ।
प्राप्नोति दिव्यममृतं यत्तत्परं पदं विष्णोः ॥ ८५ ॥
वेदान्तशास्त्रमखिलं विलोड्य शेषस्तु जगदाधारः ।
आर्यापञ्चाशीत्या बबन्ध परमार्थसारमिदम् ॥ ८६ ॥

॥ इति श्रीमद्भगवच्छेषकृतार्यापञ्चाशीतिः समाप्ता ॥

महता परिश्रमेण संपाद्य संशोध्य प्रकाशितवानिदं सांख्य० बालशास्त्री ।

## ॥ अथ बालभारतस्य ॥

॥ पञ्चमः सर्गः ॥

सदा हृदन्तः स्फुरितस्य विष्णो-
र्विस्तारिणीभिर्द्युतिधोरणीभिः ।
रोमावलिद्वारविनिःसृताभि-
रिवाश्रितः सत्यवतीसुतोऽव्यात् ॥ १ ॥
इतो निषिद्धोऽपि नदीजमुख्यै[१]-
र्दुर्योधनोऽधत्त धियं प्रयाणे ।
मतङ्गजस्तुङ्गनगेन्द्रशृङ्गात्
पतन् लताद्यैरपि रुध्यते किम् ॥ २ ॥
पथ्यं वचो बाल इवातुरोऽयं
क्रूरो न गृह्णाति सुयोधनो नः ।
रणे प्रवृत्ते कुरुपाण्डवानां
भूमिर्भविष्यत्यखिलापि नैषा ॥ ३ ॥
इति प्रणीतां विदुरेण वाणी-
माकर्ण्य कुन्ती कलितोरुचिन्ता ।
ततस्त्रिमार्गापुलिने दिनेश-
सूनुं दिनेशस्तुतिलीनमागात् ॥ ४ ॥
युग्मम् ।
आ पृष्ठतापादुदयन्तमर्कं
राधेयमारोपयितुं प्रवृत्तम् ।
प्रतीक्षमाणा सुतवत्सलासौ
तापार्तिताम्यत्तनुरत्र तस्थौ ॥ ५ ॥
कर्णं ह्रियान्तेऽथ पृथेत्यवोचत्
कन्यात्वजातस्तनयोऽसि मे त्वम् ।
देवः सहस्रांशुरसौ पिता ते
प्रभूतधाम्नो न पुनः प्रसूतः ॥ ६ ॥
देवेन साक्षाद्रविणाप्यमुष्मि-
न्ननूदिते तद्वचने दिवोऽन्तः ।
रोमाञ्चितस्तीर्थशतानि जानन्
पदानि कर्णोऽथ ननाम मातुः ॥ ७ ॥
निजाङ्घ्रियुग्मानतमूर्ध्नि कर्णे
द्राक् प्रस्नुवाना स्तनयोः पयांसि ।

१ इतश्च कैश्चिद्विनिवारितोऽपि इति पा० ।

वत्स स्वमूर्धानमितो विधेही-
त्युवाच कुन्ती स्नुतसंमदाश्रुः[1] ॥ ८ ॥

जगाद कर्णः किमितः करोमि
मातः शिरः स्वं यदि ह्रापयन्ति ।
जितद्युकुल्यास्त्रिजगत्यतुल्या-
स्त्वत्क्षीरधाराधुतपापभाराः ॥ ९ ॥

स्तन्यानि धन्यास्तव ते निपीय
मत्सोदरा विश्वजितो बभूवुः ।
धन्योऽहमप्यद्य जयी प्रयाण-
द्रणे यदेतैरधुनाभिषिच्ये ॥ १० ॥

अप्येकवारं यदि पायितः स्यां
मातः पयस्तद्भुवि केन जीये ।
न पायितः साधु मृधे जयन्तु
पञ्चापि मत्पञ्चतया कनिष्ठाः ॥ ११ ॥

इत्युक्तिभाजं नतमङ्गराजं
कुन्ती कराभ्यां तमुदस्य सद्यः ।
दृगम्बुजौ ते परिचुम्ब्य मूर्ध्नि
दीनाननं नन्दनमित्युवाच ॥ १२ ॥

थूथूकृतं तद्वच एव यो वः
षण्णां विपक्षोऽस्तु पञ्चतां सः ।
ज्येष्ठस्य ते धर्मसुतादयोऽपि
भवन्तु भूपस्य भुजिष्यरूपाः ॥ १३ ॥

त्वय्यागतेऽस्मासु बलेन कस्य
मृधं विधातास्ति सुयोधनोऽपि ।
इत्याप्य सौख्यं परिपात वत्सा-
स्त्वं च क्षितिं पञ्च च ते शतं च ॥ १४ ॥

अथाङ्गजः स्माह रथाङ्गबन्धो-
र्मा मेति वोचः कुविचारमम्ब ।
अद्यास्तमित्रे मयि निष्कुलोऽय-
मीदृग्जनोक्तिस्तव लाञ्छनाय ॥ १५ ॥

मदेकविश्रम्भधनं विहाय
दुर्योधनं युद्धधुरीणमद्य ।
सुते मयि द्वेषिपरे न धत्तां
शशीव शूरोऽपि कलङ्कपङ्कम् ॥ १६ ॥

भयान्न चाविष्कृतसोदरत्वात्
कर्णः श्रितो युद्धभयेन पार्थान् ।
इत्युक्तिभिः कौतुकिनां जनाना-
मवीरसूर्मा भव वीरमातः ॥ १७ ॥

युधिष्ठिरं सत्यगिरं प्रतिज्ञा-
निर्वाहबन्धूनपरांश्च बन्धून् ।
लज्जे श्रयन् संयति कौरवेभ्यः
श्रियं ददामीतिमृषाप्रतिज्ञः ॥ १८ ॥

तुङ्गाभिमानः कृपकुम्भयोनि-
पितामहद्रौणिमहासहायः ।
विनापि मां कोपनिधिः स धीरः
पक्षद्वयेऽपि जयकृन्नरेन्द्रः ॥ १९ ॥

मातर्वयं किं तनयाः षडेव
न ते शतं किं तव देवि पुत्राः ।
मुक्त्वा स्वकुल्यव्यसने शतं तान्
पञ्चाश्रयेऽहं किल को विवेकः ॥ २० ॥

इति प्रवीरव्रतधीरवाच-
मुवाच हृष्टा तनयं सतीयम् ।
साधूदितं त्वज्जनकः स कर्म-
साक्षी जगच्चक्षुरितोऽस्तु तुष्टः ॥ २१ ॥

स्थिरप्रतिज्ञं श्रितवीरधर्मं
याचे पुनः किंचिदहं मुहुस्त्वाम् ।
स्थिरश्चिरं तिष्ठ सुहृत्सु वत्स
यच्छाभयं किंतु निजानुजेषु ॥ २२ ॥

पृथामथावोचत भानुसूनुः
कथं वृथा मामिति याचसे त्वम् ।
त्वदङ्गजानामभयं भयं नः
प्रागेव दैवेन रणे प्रदत्तम् ॥ २३ ॥

मातर्महोत्पाततति: पुरे नः
प्रतिक्षणं कौरवभैरवास्ति ।
तम्रो निशीन्दुः कुरुपूर्वजः स्यात्
क्रुधेव दुर्योधनदुर्नयस्य ॥ २४ ॥

चण्डालभूतेष्विव दुश्चरित्रै-
र्धावन्ति दूराद्गषणा भषन्तः ।

1 च्युतसंमदाश्रुम् इति पा० ।

काकाश्च मौलीनभि कौरवेषु
मृतेष्विव क्रूररवाः पतन्ति ॥ २५ ॥
ह्रीणा इव स्वैश्चरितैः स्वमास्यं
स्वस्याप्यहो दर्शयितुं न शक्ताः ।
इतीव दिव्येषु विलोकयामः
कबन्धमात्रं मुकुरेषु गात्रम् ॥ २६ ॥
प्रासादवृन्देऽस्मदभाग्यदुष्ट-
भूतग्रहार्ता इव तावदर्चाः ।
स्विद्यन्ति कम्पं दधते हसन्ति
वमन्ति रक्तं निपतन्ति भूमौ ॥ २७ ॥
कुहूकलामस्मदकीर्तिलेपै-
रिवाश्रयत् कार्तिकपूर्णिमापि ।
पतन्ति चास्मत्क्षयकालरक्षः-
करालवक्त्राग्निशिखावदुल्काः ॥ २८ ॥
धातापि संमूढ इव क्षयेऽस्मिन्
वृक्षेषु पुष्पाणि विपर्ययेण ।
करोत्यकालेऽधिकहीनगात्रान्
डिम्भानजात्यानपि गर्भिणीनाम् ॥ २९ ॥
एकाङ्गनायां बहुशोऽपि जाताः
सद्योऽपि नृत्यन्ति हसन्ति कन्याः ।
प्रविष्टमात्रा इव विश्वरङ्गे
सद्योऽस्मदायुःक्षयनाटिका याः ॥ ३० ॥
आसन्नमृत्यून् मृतभक्षणेच्छु-
र्व्यालोलजिह्वावलयः कृशानुः ।
संध्याद्वये पश्यति नित्यमस्मान्
दिग्दाहदम्भेन दिशोऽधिरुह्य ॥ ३१ ॥
स्वप्ने तु दृष्टा दिशि दक्षिणस्यां
यान्ता मया प्रौढमयाधिरूढाः ।
स्वशोणचीराभरणाः पितॄणां
पत्युर्गृहं गन्तुमिवात्तवेगाः ॥ ३२ ॥
प्रासादमारुह्य सहस्रपादं
स्वं मूर्तिमत् पुण्यमिवोल्लसन्तः ।
स्वप्ने व्यलोक्यन्त मया जयश्री-
विश्रामभूमिस्तु निजानुजास्ते ॥ ३३ ॥

भक्षन् भुवं धर्मभवोऽद्रिवर्ती
भीमः किरीटी घृतपायसाशः ।
स्वप्ने मयैक्ष्यन्त यमौ गजस्थौ
नृवाहनस्थौ हरिसात्यकी च ॥ ३४ ॥
युष्मत्कुलेऽमी खलु सप्त दृष्टाः
स्वप्ने विशुद्धाम्बरलेपमाल्याः ।
दौर्योधने तु त्रय एव सैन्ये
कृपः कृपीभूः कृतवर्मवीरः ॥ ३५ ॥
एवं दशैवाखिलसैन्ययुग्म-
तृप्तस्य मृत्योर्विवशीभवन्तः ।
क्षीणां क्षितौ क्षत्रियजातिमत्र
समुद्धरिष्यन्ति पुनः प्रवीराः ॥ ३६ ॥
बिभीहि मा पञ्चसु पाण्डवेषु
मृत्युर्भयेनैव न याति मातः ।
गन्ता स कौरव्यशतं बहूनां
न पक्षपातं युधि कः करोति ॥ ३७ ॥
अथो पृथोवाच यदीदमस्ति
तथाप्यभीतिं वितरानुजेषु ।
कल्याणलीनेऽपि सुते पितॄणा-
मनर्थशङ्कीनि न किं मनांसि ॥ ३८ ॥
अथाङ्गभर्ता गदति स्म मात-
र्बद्धप्रतिज्ञोऽस्मि वधेऽर्जुनस्य ।
तदेनमुन्मुच्य मया चतुर्णां
वितीर्यते भीतभियामभीतिः ॥ ३९ ॥
राज्ञां समूहस्य समक्षमात्तां
मुञ्चन् प्रतिज्ञां रणसीम्नि लज्जे ।
मा भूत् पुनर्भीतिलवोऽपि मात-
रयं मया न म्रियते किरीटी ॥ ४० ॥
पुरा युधाभ्यासविधावहं-
युरहं धृतस्पर्धमनेन सार्धम् ।
द्रोणं गुरुं भक्तिभरैरयाचे
ब्रह्मास्त्रमस्मिन् विहितावतारम् ॥ ४१ ॥
नैवेदमज्ञातकुलस्य कल्प्यं
कदाचिदित्यर्जुनपक्षपातात् ।

निराकृतोऽहं गुरुणा जगाम
रामस्य धामाद्रिपतिं महेन्द्रम् ॥ ४२ ॥
क्षत्रैकशत्रुर्न महास्त्रदायी
ममायमित्यादृतविप्रमायः ।
अहं महाभक्तिभरैर्गुरुं तं
संतोष्य कां प्राप न चापविद्याम् ॥ ४३ ॥
गुरुप्रसादोरुमदात् कदाचित्
काचिन्मया मोहमयाशयेन ।
तपोवनान्तर्भ्रमता हता गौ-
स्त्रस्तो भियेवाशु वृषस्तदैव ॥ ४४ ॥
अथाकुलः कश्चन तद्वने मां
शशाप विप्रः कटुकोपकम्प्रः ।
यं जेतुमिच्छन्नसि तन्मृधे ते
रथाङ्घ्रियुग्मं गिलतु क्षमेति ॥ ४५ ॥
मया स विप्रश्चटुचातुरीभि-
राराध्यमानोऽपि न कोपमौज्झत् ।
प्रज्वालितः शैलवनेष्वदग्ध्वा
जलादिसेकैर्न निवर्ततेऽग्निः ॥ ४६ ॥
तच्छापशल्यस्खलनातुरोरः-
प्रक्षीणबुद्धेरपि मे क्रमेण ।
गुरुप्रसादात् तृणितार्जुनोऽभू-
द्ब्रह्मास्त्रमुख्यास्त्रसहस्रलाभः ॥ ४७ ॥
मूर्धानमाधाय ममाङ्कदेशे
सुखेन सुष्वाप गुरुः कदाचित् ।
दुःखं हृदः शापमयं जयन्ती
क्षणादभूदूरुतलेऽतिपीडा ॥ ४८ ॥
गुरुर्न जागर्तु ममेत्यकम्प्रः
केयं व्यथेत्याकलयामि यावत् ।
विनिर्ययौ वज्रमुखोऽष्टपाद-
स्तावत् क्षतोरुर्मणुकाख्यकीटः ॥ ४९ ॥
गुरौ मदूरुक्षतजोर्मिसङ्ग-
तन्द्रालुनिद्रेऽथ वितन्द्रकोपे ।
किमेतदित्यालपति स्वमङ्गं
खादन् मयादर्शि स वज्रतुण्डः ॥ ५० ॥
दृष्ट्वाथ दृष्ट्या सरुषा स कीटो
भस्मीकृतस्तेन तपोधनेन ।
दिव्यां दधानस्तनुमस्तदोषः
पुरो गुरोः कोऽपि नमन्नुवाच ॥ ५१ ॥
दैत्योऽस्मि भर्तुर्भृगुतो महर्षे-
र्भृशापराधः खलु शापमाप ।
त्वद्दर्शनानुग्रहमुक्तकीट-
योनिः स्फुरामीति तिरोदधेऽसौ ॥ ५२ ॥
क्रुधाभ्यधान्मामथ कोपधाम-
व्याधामधामाग्नि दधन्मुनीन्द्रः ।
रे क्षत्रगोत्र क्षततोऽप्यकम्प्रो
विप्रोऽसि न त्वं क्व नु तस्य सत्त्वम् ॥ ५३ ॥
निर्माय मायामिति कामितास्त्र-
विद्यानवद्या शठ ही गृहीता ।
महाम्बुदे व्योम्नि सोममूर्ति-
रिवोज्ज्वलापि त्वयि निष्फलास्तु ॥ ५४ ॥
प्राप्तं त्वया ब्राह्मणमायया यद्
ब्रह्मास्त्रमेतत् तदहो महाजौ ।
मृत्योर्दिने द्वेषिहतिप्रयुक्तं
विनाशमेष्यत्यकृतार्थमेव ॥ ५५ ॥
इत्यत्र तादृग्गुरुसेवयापि
तापाय शापोऽजनि नास्त्रशक्तिः ।
अभाग्यभाजां व्यवसायकर्म
महन्महत्यै विपदेऽपदिष्टम् ॥ ५६ ॥
किंचाटवीयायिषु पाण्डवेषु
स्वप्ने सवित्रा निशि वारितोऽपि ।
इन्द्राय विप्रेन्द्रतयार्थितेऽह्नि
ते कुण्डले तत् कवचं च दत्तम् ॥ ५७ ॥
गिलिष्यति क्ष्मा समरे रथाङ्घ्री
शापात् तथास्त्रं प्रभविष्यति क्व ।
विद्वेषिणां संमुखभानुकल्पं
तदम्ब ताटङ्कयुगं ययौ मे ॥ ५८ ॥
गतं च तद्वर्म सकोपशक्र-
क्षिप्तेन नूनं पविनाप्यभेद्यम् ।

तत् कर्मणा केन मया स जिष्णु-
र्जेयो जितः संयति येन रुद्रः ॥ ५६ ॥
छित्वा श्रुती स्वेन तनुं च भित्वा
तदा तु मे कुण्डलवर्मदातुः ।
सत्त्वेन तुष्टो हरिरेकवीर-
च्छिदं ददौ शक्तिमियं ममाशा ॥ ६० ॥
न सापि शक्तिः प्रभवत्यवश्यं
पार्थे कृतार्थे हरिमन्त्रितेन ।
तत् सर्वथा सर्वजितोऽनुजा मे
दशापि जेष्यन्ति भुजैर्दिशोऽमी ॥ ६१ ॥
किंचात्मनः स्वप्ननिमित्तदिष्टं
जानामि मृत्युं पुनरस्मि धन्यः ।
मातः प्रयाणावसरेऽद्य यत् त्वं
तीर्थानि सर्वाण्यपि वीक्षितासि ॥ ६२ ॥
इदं वदन् मातृपदं प्रणम्य
कर्णः प्रयाणाय दिदेश सैन्यान् ।
कुन्ती च सूनोर्वचनेन हर्षं
दुःखं च दीर्घं दधती जगाम ॥ ६३ ॥
अथोरुवात्योद्धुतधूलिरुग्ण-
दृग्वारिदुष्यज्जलपूर्णकुम्भः ।
कुरुप्रभोर्विस्मृतमन्त्रशून्यं
याचाभिषेकं विदधे पुरोधाः ॥ ६४ ॥
अस्मिन्नसत्यत्वभयेन नून-
मनिर्यतः स्वस्त्ययनस्य मन्त्रान् ।
प्रसह्य कर्षन् खिदयेव भिन्न-
स्तदा द्विजानां ध्वनिराप मान्द्यम् ॥ ६५ ॥
जेता भवान् वैरिपरंपराभिः
सुदुस्तरेऽस्मिन् समरे ससैन्यः ।
ततश्चिरं तापकशूरभेद-
परायणः प्राप्नुहि गां सबन्धुः ॥ ६६ ॥
आशीर्वचोभिर्विपरीतबोध-
क्लिश्यद्विदग्धैरिति मागधानाम् ।
मुग्धः प्रमोदं दधदन्धजन्मा
रथं मृतेर्गेहमिवारुरोह ॥ ६७ ॥
युग्मम् ।

तनोति दुष्टत्वनतीरतीव
यः सस्फुटं पूर्वजपातहेतुः ।
अतः पपातादिपुमानमुष्य
छद्मापदेशेन दिवो भुवीन्दुः ॥ ६८ ॥
कुमारिका मौलिगपूर्णकुम्भा
शुभार्थमानीयत संमुखं या ।
इयं स्खलित्वा पतिता जयश्री-
रिवाग्रतस्तारतरं रुरोद ॥ ६९ ॥
अस्मिन्नकल्याणमरातिवीर-
महाप्रहारैर्भवितेति भीतः ।
विमुच्य मूर्धानममुष्य राज्ञः
पपात कल्याणमयः किरीटः ॥ ७० ॥
आसन्नमार्जाररणोग्रनाद-
भियस्तदा दीपधरस्य हस्तात् ।
कम्प्रादपाति क्षितिपप्रताप-
बीजत्विषा मङ्गलदीपकेन ॥ ७१ ॥
उन्मत्तकाहूत्कटदण्डपात-
स्फुटत्पुटोत्थः कटु जर्जरश्रीः ।
जयश्रियः क्रन्दितवत् तदाभूत्
प्रयाणशंसी पटहप्रणादः ॥ ७२ ॥
देवव्रतद्रोणकृपैर्महद्भिः
समं चलद्भिर्बहुशास्त्रलीनैः ।
पदे पदे दुःशकुनैरिवायं
निवार्यमाणोऽपि चचाल मूढः ॥ ७३ ॥
तदा चलद्भिः समराय नागै-
र्न्यस्तं स्वसर्वस्वमिव प्रियासु ।
मदाम्बरोलम्बकदम्बचुम्ब्य-
माविर्बभूव द्विरदीषु भूरि ॥ ७४ ॥
प्रदीपनैस्तत्र तदात्वदीप्र-
स्तापः पृथिव्या निबिडोऽभविष्यत् ।
न चेत् तदा संचलतां हयाना-
मिहापतिष्यन्नयनोदकानि ॥ ७५ ॥
विभग्नचक्राः परिभूतसूता
विलीनयोक्त्राश्च्युतरश्मयोऽपि ।

युद्धोद्धुरेभद्वयरौद्रनाद-
वस्तैरकृष्यन्त रथास्तुरंगैः ॥ ७६ ॥
चेलुस्तदा निश्चितमृत्यवोऽग्रे
मा यात पश्चाद्व्रजतेति मन्ये ।
संकेत्यमाना अपि संमुखीन-
मरुच्चलैः केतुपटैर्भटौघाः ॥ ७७ ॥
एवं बलैर्मानमिव ग्रहीतुं
भोगोचितायां भुवि विस्तरद्भिः ।
आनन्द्यमानः स महाभिमानः
प्रापत् कुरुक्षेत्रमहीं महीशः ॥ ७८ ॥
रङ्गत्तुरंगोर्मिरिभाब्दशोभी
स्थूलाद्रिशाली ज्वलितायुधौर्वैः ।
भूभृद्बलौघोऽयमदृष्टपार-
स्तस्थावकूपार इवेह गर्जन् ॥ ७९ ॥
नोच्छेदनीया मम पाण्डुपुत्रा
भेत्स्यामि योधानयुतं दिनेन ।
इदं वदन् सिन्धुसुतोऽभिषिक्तः
सेनापतित्वेऽथ सुयोधनेन ॥ ८० ॥
शिनिप्रवीरो मगधेशधृष्ट-
द्युम्नौ विराटद्रुपदौ शिखण्डी ।
चेदीश्वरश्चेति तपःसुतेन
स्वे सप्त सेनापतयोऽभिषिक्ताः ॥ ८१ ॥
लेभे हरिस्वीकृतसारथित्व-
प्रीतोऽर्जुनः सर्वचमूपतित्वम् ।
इत्यष्टभिस्तैः स वृतो रराज
ग्रहैर्ग्रहाधीश इव क्षितीशः ॥ ८२ ॥
एवं रणोत्के बलयोर्द्वयेऽस्मिन्
खेदं स्वकुल्यव्यसनेन बिभ्रत् ।
धार्मिं तदापृच्छ्य जगाम रामः
सरस्वतीतीरगतीर्थवीथीः ॥ ८३ ॥
त्वं मां शरण्यं वद तद्व्रजे त्वा-
मेवं वदन् पार्थसुयोधनाभ्याम् ।
निराकृतो रुक्मिनृपस्तदानी-
मक्षौहिणीशः स्वपुरं जगाम ॥ ८४ ॥

सुयोधनो योधवरानथोचे
कालेन को वः क्रियता सकोपः ।
अक्षौहिणीः सप्त तपःसुतस्य
जेतुं समर्थः समरातिरेकात् ॥ ८५ ॥
स्वं विंशता शान्तनकुम्भयोनी
कृपस्तु षष्ट्या दशभिः कृपीभूः ।
कर्णो दिनैः पञ्चभिरस्य वैरि-
क्षये समर्थं कथयांबभूवुः ॥ ८६ ॥
संपृच्छमाने नृपतौ निवेद्य-
मानेषु भीष्मेण महारथेषु ।
उक्तोऽङ्गभर्तार्धरथीति कोपात्
प्राचीं प्रतिज्ञां पुनराबबन्ध ॥ ८७ ॥
उलूकनामाथ सुयोधनेन
दूतो नियुक्तः समरोत्सुकेन ।
कोपाग्निकीलाकटुभिर्वचोभिः
सभागतं धर्मसुतं बभाषे ॥ ८८ ॥
राजन् रणं कस्य बलेन कर्तु-
मुत्कोऽसि सार्कं कुरुकुञ्जरेण ।
न द्यूतमेतद्विजितः क्षणेऽस्मिन्
न यासि जीवन् सह बन्धुभिः स्वैः ॥ ८९ ॥
जीवन् व्रजाशु त्यज युद्धबुद्धिं
मिष्टान्नभोजी भव सर्वदापि ।
विराटभूपौकसि सूपकार-
भूतस्य भीमस्य करप्रसादात् ॥ ९० ॥
किरीटिकोदण्डगुणाग्रधूत-
तूलालिसंपादितसूत्रजानि ।
विप्राकृतेस्तत्र तवांशुकानि
ददातु साध्वी विशदानि कृष्णा ॥ ९१ ॥
निश्चिन्तमेवं कपिपुस्तवास्मि
मा मृत्युदूतीं भज राज्यचिन्ताम् ।
इमानपि श्रीपतिसात्वतादीन्
किं कालभोज्यं कुरुषे विमूढान् ॥ ९२ ॥
अथो रथाश्वेभनृवाहनाधि-
रोहस्पृहा कापि न ते चकास्ति ।

तद्दासतामाशु सुयोधनस्य
भज स्वयं सेवककामधेनोः ॥ ९३ ॥
इत्यस्य वाग्भिः स्फुटनिष्ठुराभि-
र्भुजाभृतां कोपकुटुम्बितानाम् ।
रूक्ष्णां द्युतिः कौरवकालरात्रि-
संध्येव मध्येजगदुद्दिदीपे ॥ ९४ ॥
क्रोधज्वलच्चत्तुरभीषुभिन्नाः
कनीनिकांशुप्रकरा न केषाम् ।
दूतेऽच पेतुः प्रलयानलार्चि-
र्जटालकालायसदण्डचण्डाः ॥ ९५ ॥
हस्तेन चेदिक्षितिपः शतघ्नी-
मुदास घात्याः शतमित्यमर्षी ।
स्थाप्याश्च पञ्चेति महीं महाङ्घ्रि-
घातेन चक्रेऽङ्गुलिघातचिह्नाम् ॥ ९६ ॥
यं धृष्टकेतुः स्फुटितस्फुलिङ्गं
क्रुधा कृपाणं दशनैर्ददंश ।
उत्प्रैक्षि केनास्य स नास्यवर्ती
हृद्दीप्तशौर्यानलधूमदण्डः ॥ ९७ ॥
क्रोधात् तथा क्रौर्यमधत्त धृष्ट-
द्युम्नो यथास्य प्रतिबिम्बदम्भात्
कृष्टासिवर्ती पुरतो बभूव
किं किं करोमीति यमोऽपि कम्प्रः ॥ ९८ ॥
विवर्तयंश्चक्रमिवाक्षितारा-
मारोपयंश्चापमिव भ्रुवं च ।
तुलां तदागाहत मातुलस्य
पितुश्च मन्युप्रवणोऽभिमन्युः ॥ ९९ ॥
पदाङ्गुलीभिर्युधि केऽपि केऽपि
कराङ्गुलीभिर्युधि चूरणीयाः ।
घात्या द्विषोऽमी शतमित्यमर्षात्
कृष्णासुतैः पञ्चभिरभ्यभाषि ॥ १०० ॥
स्रष्टुं स्वयं शत्रुषु दीर्घमायुः
व्रणादिवापूरयितुं प्रवृत्तः ।
विभुः क्रुधाविभ्रमदुग्रवेगा-
द्दृशौ निशाघस्रविवर्तहेतू ॥१०१ ॥

यथा प्रकोपेन जटासुरारि-
श्चपेटया प्राहत दूरमूरुम् ।
भियैव तद्ध्वानभुवा म्रियेरन्
समीपतः स्युर्यदि धार्तराष्ट्राः ॥ १०२ ॥
जिह्वाञ्चलोऽराजत सृञ्जयस्य
किंचिद्विवृत्तोः प्रसृतास्यलोलः ।
अत्युत्सुकः शत्रुकुलानि दग्धुं
निर्यन् हृदो मूर्त इव प्रकोपः ॥ १०३
यमौ जगत्प्राणसमीरपान-
स्फीताविवोष्ठौ यमपन्नगस्य ।
प्रदर्शयामासतुराशु खड्ग-
जिह्वाद्वयं द्यामिव लेलिहानम् ॥ १०४ ॥
भूमिं परां प्राप्यत फाल्गुनेन
भ्रूर्भालरङ्गे प्रकटं नटन्ती ।
नटीव वैरिव्ययनाटकैक-
नटस्य गाण्डीवशरासनस्य ॥ १०५ ॥
तेषां प्रकोपस्य विकस्वरस्य
द्विषन्नृमेधक्रतुपावकस्य ।
जानन्नुलूकः प्रथमाहुतिं स्वं
त्रस्तो नृपभ्रूलवसंज्ञयैव ॥ १०६ ॥

द्वेषादेष निमेषतोऽहमखिलां द्विट्संहतिं संहरे
प्राप्यैकस्य हरे रणोत्सवनवोत्साहाय साहायकम् ।
इत्युग्रे नृपमुग्रवाचि विजयिन्यभ्युत्थिते निर्भरं
वीरेन्द्राः समनीनहन् सममभी सेनां रसेनाञ्चिताम्[1] ॥१०७॥

भेजे श्रीजिनदत्तसूरिसुगुरोरर्हन्मतार्हस्थितेः
पादाब्जभ्रमरोपमानममरो नाम व्रतीन्द्रः कृती ।
मोहद्रोहिणि बालभारतमहाकाव्ये शमं पञ्चमं
तद्बोधाम्बुधिमौक्तिकस्रजि ययौ पर्वेदमौद्योगिकम् ॥१०८॥

सर्गैः पञ्चभिरुद्योगपर्वण्यस्मिन्ननुष्टुभाम् ।
श्लोकाः सप्ताधिका विंशत् तथाचैव शतानि षट् ॥ १०९ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्र-
विरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के
उद्योगपर्वणि पञ्चमे समरसमारम्भो नाम पञ्चमः
सर्गः ॥ ५ ॥ :: :: ॥

१—नाञ्चिताः इति पा०

## ॥ अथ बालभारतस्य भीष्मपर्वारम्भः ॥

॥ तत्र प्रथमः सर्गः ॥

यत्र भात्यनपवृत्तनिवेशः
कालदेशपिहितोऽपि पदार्थः ।
वैभवानि भुवि भारतकार-
ज्ञानतत्त्वमुकुरः स करोतु ॥ १ ॥

पुण्यधाम्नि कुरुवर्षपृथिव्यां
बालवृद्धपरिसेवितदिक्षु ।
प्रोद्यतेष्वथ नृपेषु बभाषे
श्रीपराशरसुतो धृतराष्ट्रम् ॥ २ ॥

दिव्यमक्षि वितरामि तवेदं
पश्य युद्धमितिवाचि मुनीन्द्रे ।
सौबलीपतिरुवाच कुलस्य
प्रक्षयं न खलु वीक्षितुमीशे ॥ ३ ॥

संजयाय समरावधि दत्त्वा
दिव्यमक्षि सहसाथ महर्षिः ।
सर्वमेष कथयिष्यति तुभ्यं
भूपतेरिति निवेद्य तिरोऽभूत् ॥ ४ ॥

संजयोऽथ रणसीमनि गत्वा-
गत्य खिन्नमनसः क्षितिभर्तुः ।
मन्दिरोदरगतस्य पुरस्ता-
द्वक्तुमारभत वीरविनाशम् ॥ ५ ॥

राजराज शृणु यो विषमस्थः
संगरादथ गतः स न वध्यः ।
संविदं मिथ इति प्रतिपद्य
क्ष्माभृतो रणभराय विनेदुः ॥ ६ ॥

सेनयोस्तदुभयोरभयैक-
भ्राजमानमनसः शिविरेभ्यः ।
प्राचलन् भुजभृतो युधि योधा
मूर्तिमन्त इव विक्रमभेदाः ॥ ७ ॥

अद्भुतं रणरसे मधुरत्वं
पश्य यस्य रसनाय समुत्काः ।
नैकवेलमसृजन्नुपरुद्धाः
सुभ्रुवामधरपानमभीष्टम् ॥ ८ ॥

युद्धतूर्यनिनदैर्बलवद्भि-
र्द्रागविजित्य रुदितान्यबलायाः ।
विस्मृतस्मररसो रणरौद्रः
कश्चिदाशु चकृषे वरवीरः ॥ ९ ॥

कोऽपि वीरमुकुटः परिरभ्य
प्रेयसीमुरसिजद्वयसङ्गात् ।
संस्मृतप्रधनकुञ्जरकुन्तो
मङ्क्षु वीररसमूर्तिरचालीत् ॥ १० ॥

अस्मि वीररमणीति रमण्या-
मस्मि वीरजननीति जनन्याम् ।
संमदं विदधदुत्सुकचेता-
स्तारतूर्यतरलश्चलितोऽन्यः ॥ ११ ॥

वल्लभास्मि तव चेत् करिकुम्भा-
न्मत्कुचोन्नतिरिपून् परिभिद्य ।
यच्छ मे मणिगणानिति कान्ता-
तर्जितो युधि ययौ द्रुतमेकः ॥ १२ ॥

कम्पितः पतसि पादयुगे मे
नेत्रकोणनिहतोऽपि भयार्तः ।
युध्यसे किमिषुभिः प्रिय भीरु
भाषुकामिति हसंश्चलितोऽन्यः ॥ १३ ॥

कामयुद्धरसरागवशात्मा
कोऽपि दोलितमना रुचिभाजम् ।
कम्पिनीमहह पाणिगृहीतां
प्रेयसीमसिलतां च ददर्श ॥ १४ ॥

मा कृथा युधि वृथात्मकलङ्कं
मां निधाय हृदये हृदयेश ।
साहसिन्निह परत्र च यन्मे
त्वं गतिः प्रियमुवाच परैवम् ॥ १५ ॥

स्पर्धया लसदसिश्चलवेणिः
कुम्भिकुम्भसुभगा सुकुचश्रीः ।
हृत् परस्य सदिषुः सकटाक्षा-
लोलयत् परचमूश्च वधूश्च ॥ १६ ॥

अस्मि वीरतनया वरवीर-
प्रेयसी च कुरुवीरसवित्री ।

अद्य हृद्यसमरैरिति माता
कंचिदाह तिलकाञ्चतपूर्वम् ॥ १७ ॥
पत्युरेव पुरतः सुतमेका स्माह
साहसनिधेः समरोत्कम् ।
विक्रमं युधि तथा विदधीथा
नो यथा भवति वत्स विकल्पः ॥ १८ ॥
उत्सुकास्मि तव संमुखपश्चा-
द्घातपङ्क्तिममृतेश्च विषैश्च ।
अर्जितैर्निजसतीव्रतशक्त्या
सेक्तुमित्यवददङ्गजमन्या ॥ १९ ॥
आशिषं च तिलकं च जनन्या
मन्यते स्म कवचाधिकमन्यः ।
तेन संयति स एव भटानां
विक्रमैः कवचतां प्रतिपेदे ॥ २० ॥
कोऽपि पाणिधृतकार्मुकपाणो
बालकोऽप्यनुपतन् जनकं स्वम् ।
हन्मि वीरतनयानिति जल्पन्
भक्तिशक्तिभिरधारि जनन्या ॥ २१ ॥
जीवतां युधि यशांसि मृतानां
यद्यशांसि च सुरप्रमदाश्च ।
सत्यमित्यशकुनान्यपि वीरा
मेनिरे सुशकुनानि चलन्तः ॥ २२ ॥
वज्रसूचिमुखयोस्तटिनीभू-
शक्रसूघटितयोः सुभटैस्तैः ।
व्यूहयोरथ रथद्विपवाजि-
स्थास्नुभिश्च पदिकैश्च विलेसे ॥ २३ ॥
व्यूहयुग्ममिदमद्भुतमाप्तं
तैर्भटैरभवदुद्भटघोरम् ।
नूनमुल्लसितकेतुकराग्रै-
राहवाय मिथ आह्वयमानम् ॥ २४ ॥
हाटकीयपटुकंकटपिङ्गे
ते बले चलदुकूलपताके ।
रेजतुर्युगभिदेऽद्भुतजिह्वा-
वौर्वरौद्रदहनाविव दीप्तौ ॥ २५ ॥
संभ्रमप्रसृतदृष्टिचलौष्ठं
हुंकृतीरकृत यद्भटवर्गः ।
तद्ध्रुवं मुहुररातिजयश्री-
कृष्टिमन्त्रमिह गुप्तमपाठीत् ॥ २६ ॥
अग्रतो रिपुषु विस्फुरितेषु
क्रोधिनामिह वधोत्कभुजानाम् ।
शत्रुतां प्रभव एव भटानां
भेजिरे मृधविधावदिशन्तः ॥ २७ ॥
तत्र राजतरथः सितवर्णा-
प्यौषवर्मतुरगः कुरुवृद्धः ।
हेमनद्धसितपञ्चशिखाभृत्
तालकेतुरभवन्मृधमूर्धा ॥ २८ ॥
अर्जुनो रिपुपदानथ पश्यन्
संगरे गुरुपितामहबन्धून् ।
बाष्पपूरममुचन्नयनाभ्यां
शस्त्रमण्डलमथाशु कराभ्याम् ॥ २९ ॥
तं कृपामयमपाभयशक्तिं
मङ्क्षु वीक्ष्य चकितो हरिरूचे ।
आयुधं धर भटस्मरयोगं
कोऽपि कस्यचिदपीह न किंचित् ॥ ३० ॥
इत्युदीर्य परमं निजरूपं
विश्वरूपमयमेव मुरारिः ।
उद्भवप्रलयतत्परजन्तु-
व्रातसंकुलमदीदृशदस्मै ॥ ३१ ॥
वाङ्निदर्शनवशादिति दैत्य-
द्वेषिणा विरचितप्रतिबोधः ।
संस्मरन् नवमिवारिषु वैरं
चापमाप विजयी यमरौद्रः ॥ ३२ ॥
अर्जुने रणरसस्पृशि यावत्
पाण्डवाः किलकिलां कलयन्ति ।
तावदुज्झितशरासनवर्मा
धर्मसूरवततार रथान्तात् ॥ ३३ ॥

१ नूतनो—इति पा० ।

न्यायमायतभुजेषु परेषु
क्रोधिषु व्रजति संप्रति राजा ।
विस्मयं ददतीति स्वभटानां
सोदरैः सह जगाम स भीष्मम् ॥ ३४ ॥
भीष्ममाप रिपुरेष शरण्यं
कौरवा जयरवानिति चक्रुः ।
आदधौ क्षितिपतिस्तु जयश्री-
लोभकं शिरसि भीष्मपदाब्जम् ॥ ३५ ॥
यत् त्वया सह पितामह योत्स्ये
यच्छ तन्मयि जयार्थमनुज्ञाम् ।
एवमुद्गिरति भूभुजि भीष्मः
स्माह संयति यतस्व जयास्मान् ॥ ३६ ॥
नाव्रजेरिति यदि प्रधनान्त-
स्त्वां तदा क्षितिपमुख्य शपेयम् ।
औचितीचतुर संप्रति हृष्टः
किं प्रियं तव वरं करवाणि ॥ ३७ ॥
इत्युदीरितगिरं गुरुमूचे
प्राञ्जलिः कलितधीर्धरणीशः ।
प्रीतिमान् यदि ततः कथय त्वं
तत्त्वतो निजवधार्थमुपायम् ॥ ३८ ॥
न म्रिये रणपरैरपि देवै-
राव्रजेः पुनरपीह कदाचित् ।
एवमुल्लसितवाचि स भीष्मे
द्रोणमाप च ननाम च राजा ॥ ३९ ॥
भीष्मवत् कृतवचाः स च राज्ञे
पृच्छते स्ववधबुद्धिमुवाच ।
हन्त हन्ति यदि कोऽपि रणे मां
न्यस्तशस्त्रमिति मे मरणं स्यात् ॥ ४० ॥
अप्रियं यदि महन्महनीयात्
त्वादृशादसमसत्य शृणोमि ।
संत्यजामि रणसीमनि शस्त्रं
तद्यतस्व विजयस्व च शत्रून् ॥ ४१ ॥
इत्युपायमनपायमवाप्य
द्रोणतः कृपमगाज्जगतीशः ।
तं प्रणम्य च निशम्य च तस्मा-
दाशिषं सपदि शल्यमगच्छत् ॥ ४२ ॥
भूपतिर्जयमतिः प्रणिपात-
प्रीतिभाजि वरदायिनि शल्ये ।
प्राच्यमद्रढयदेव तदेवो-
द्योगकर्मणि वचः प्रतिपन्नम् ॥ ४३ ॥
कर्णमर्णवसुतारमणस्तु
द्रागजगाम च जगाद च हृष्टम् ।
युध्यसे न खलु जीवति भीष्मे
तत्र पातिनि पुनः स्फुरितव्यम् ॥ ४४ ॥
तद्वचोमतविधायिनि राधा-
नन्दने हरिरवाप धरापम् ।
पाण्डुसूनुरवदत् पुनरस्मान्
यो वृणोत्यखिले वृणुमस्तम् ॥ ४५ ॥
बुद्धिधाम कुरुभूपसुतानां
दुर्धियामपरमातृकबन्धुः ।
शिश्रिये तमथ मङ्क्षु युयुत्सु-
स्त्यक्तबान्धवबलः स्वबलेन ॥ ४६ ॥
धीनिधिर्जयजयेति गदद्भिः
स्तूयमानचरितोऽथ पृथाभूः ।
सैन्यमाप्य निजमादृतवर्मा
युद्धकर्मणि रथी प्रवणोऽभूत् ॥ ४७ ॥
दध्मुरुद्धुररवानथ शङ्खा-
नर्जुनप्रभृतयो रथभाजः ।
स्वैर्गुणैरपि तदा विहसद्भि-
र्दीर्यमाणमिव खं विरराज ॥ ४८ ॥
कौरवैरपि विपिष्टदिगन्ता-
श्चक्रिरे किमपि कम्बुनिनादाः ।
नूनमम्बरगुणो न रवो यैः
प्रत्युत ध्वनिगुणं वियदासीत् ॥ ४९ ॥
संमदध्वनिरतीव विरोधं
बन्धुतां च दधतां भुजभाजाम् ।
क्रोधतो नु मदतो नु न जानेऽ-
न्योन्यभेदकलितो मिलितः खे ॥ ५० ॥

निश्चितागतरणोत्सवहृष्यद्-
भीमसेनकृतनादपयोधौ ।
व्यूहयोरुभयतः सुभटानां
क्ष्वेडसिन्धुभिरमज्ज्यत ताभिः ॥ ५१ ॥
विस्फुटीभवितुमुद्गमतान्त-
र्विक्रमेण रणविभ्रमभाजः ।
विस्फुटद्भिरिव बाहुभिरुच्चैः
प्राचलन्नुभयतोऽथ भटौघाः ॥ ५२ ॥
सादिनं हयवरो रथभाजं
स्यन्दनी गजगतं च निषादी ।
पत्तिमप्यथ पदातिरवाप
द्वन्द्वयुद्धमिति जातममीषाम् ॥ ५३ ॥
मग्नमन्यरदिनो रदयुग्मं
कोऽपि संयति गजः प्रतिमाने ।
छिन्नमूलमिषुभिर्निजभर्त्रा
बिभ्रदाप सुरसिन्धुरशोभाम् ॥ ५४ ॥
तादृशं रणविलासमतन्वन्
पर्यताडि शिरसि स्वरदेन ।
कोऽपिनेव परकुञ्जरहस्ता-
भ्युद्धृतेन युधि कश्चन हस्ती ॥ ५५ ॥
कस्यचिद्रथिवरस्य न बाणा
रक्तपानसुखमापुररीणाम् ।
तत्करस्फुटितघोरधनुर्ज्या-
टंकृतिध्वनितनश्यदसूनाम् ॥ ५६ ॥
सारसारथिजुषं तरलाश्वं
स्यन्दनं हतपतिं निजपक्षे ।
कोऽपि मङ्क्षु विरथो रथभर्ता-
रुह्य संयति जघान विरुद्धम् ॥ ५७ ॥
सादिनौ सपदि कौचन युद्धे-
ऽन्योन्यवक्रवहदाहितभल्लौ ।
निर्व्यथं पुरत एव मिलित्वा
चक्रतुः परहतिं छुरिकाभ्याम् ॥ ५८ ॥
धावतः समिति हर्षितहेषं
कश्चिदात्मतुरगस्य हृदेव ।
पातितेषु परसादिषु सद्यो
न द्विषद्वधमहोत्सवमाप ॥ ५९ ॥
खण्डितैकचरणो विपरीतैः
कोऽपि यान्तमहितं पदपातैः ।
धावितो युधि जघान मुहुर्भू-
स्थापितोद्धृतकरस्फुरकोटिः ॥ ६० ॥
अम्बरोत्पनतः प्रपतन्तं
वीरमुल्लसदसिं युधि कंचित् ।
एकमप्युपरि वज्रशिलाव-
न्मेनिरे भयपराः परवीराः ॥ ६१ ॥
मत्तदन्तिपृतनासु पयोद-
श्रेणिकासु हिमकान्तिरिवैकः ।
द्राक् प्रविश्य परितः स्फुरिताङ्गः
कौमुदीमिव यशांसि वितेने ॥ ६२ ॥
भूतले निरवकाशतयाश्व-
श्रेणिमूर्धसु कृतक्रमचारः ।
उत्पतन्नरिबलेषु बलीयान्
सादिनः सपदि कोऽपि जघान ॥ ६३ ॥
स्वैरमप्रहतसारथिरथ्याः
क्षत्रधर्ममधुरेण परेण ।
चक्रिरे रिपुचमूषु रणप्राक्-
सज्जिता इव रथा रथिहीनाः ॥ ६४ ॥
धैर्यधन्यतममर्जितवत्यो-
र्ध्यातमेकसुभटं सुरवध्वोः ।
हेलया बत बिभेद विवादं
तद्वधूः शिखिपथेन गताग्रे ॥ ६५ ॥
कापि चित्तदयिते च्युतमौलौ
नृत्यति स्म निभृतिर्मृगनेत्रा ।
तूर्यपाणिधृतकुण्डलताला
तद्वरामरवधूर्विरसाभूत् ॥ ६६ ॥
कोऽपि तत्क्षणमदक्षिणपक्ष-
स्वर्गभीरुरपि वीक्ष्य निजस्त्रीम् ।
स्पर्शनव्यसनिनीं स्वकबन्धे
संगमं स्पृहयति स्म भटात्मा ॥ ६७ ॥

एनमेनमथवा वृणवानि
स्वर्वधूरिति विचारपरैका ।
वञ्चिता निजहृदैव पराभि-
द्राग्वृता यदधिकाधिकवीराः ॥ ६८ ॥
भीरवोऽपि समसंगतिभीरु-
व्रीडया व्यधुरभीरुवदेके ।
युद्धमुद्धतकृपाणनिपात-
क्रीडया मृदितपूर्वकलङ्काः ॥ ६९ ॥
लोहमुद्गर इवाङ्गचतुर्दिक्-
खड्गवेगचलनास्फुटमूर्तिः ।
कोऽपि निष्फलपरास्त्रनिपातो-
ऽचासयद्रिपुकुलानि कुलीनः ॥ ७० ॥
कर्णतालयुगवीजितमूर्ति-
र्दानलुभ्यदलिगीतचरित्रः ।
कोऽपि भर्तुरनृणो गुरुनिद्रः
स्वापमाप रदिनो रदतल्पे ॥ ७१ ॥
एकतः परिकिरन् युधि बाणान्
भानुमानिव करानभिमन्युः ।
निर्बिभेद परतामसमुच्चै-
राततान च महान्ति महांसि ॥ ७२ ॥
एष विश्वमहितां जयलक्ष्मी-
मुद्धरन्नहितसैन्यमदैन्यम् ।
मन्दराद्रिरिव वार्धिममन्दा-
डम्बरं द्रुतमलोडयदेकः ॥ ७३ ॥
विस्फुरन्तमिति तं प्रति कोपाद्
द्राग्बृहद्बलकृपौ नृपविप्रौ ।
पेततुः कुरुचमूचपलाक्षी-
लोचने इव तदा रथिराजौ ॥ ७४ ॥
तं बृहद्बलमखण्डबलश्री-
र्मन्यमानमियियावभिमन्युः ।
आर्जुने रणसहायतयाथो
कैकयक्षितिपतिः कृपमाप ॥ ७५ ॥
दन्तिनोरिव तदा कुरुपाण्डु-
व्यूहयोरुभयतो रदनाभान् ।
तान् प्रहारचतुरांश्चतुरोऽपि
प्रेक्षत ध्वनिघनानमरौघः ॥ ७६ ॥
तन्मिथो विरथितौ सकृपाणौ
मङ्क्षु कैकयनृपश्च कृपश्च ।
तत् किमप्यसृजतां युधि येना-
लोकितौ रणमपास्य भटैस्तौ ॥ ७७ ॥
दुर्मुखस्य धृतराष्ट्रसुतस्य
द्राग्बृहद्बलसहायपदस्य ।
सारथिं युधि शरेण सरोषो
निर्जघान सहसा सहदेवः ॥ ७८ ॥
आर्जुनेर्विकिरतः शरवीचीं
ज्यानिनादनिपतद्रिपुपङ्क्तेः ।
अच्छिनद्युधि बृहद्बलभूपो
मार्गणैः सपदि सारथिकेतू ॥ ७९ ॥
तत्कृतप्रतिकृतः स कृतज्ञः
कोपतः किमपि युद्धमधत्त ।
फाल्गुनिर्घनघनाघनसान्द्रै-
श्छादयन् गगनवर्त्म शरौघैः ॥ ८० ॥
एकमप्यतुलवीर्यमनेकं
मेनिरे निजनिजायविभागे ।
रोदसी दश दिशोऽपि शरौघैः
प्लावयन्तमिव फाल्गुनिमन्ये ॥ ८१ ॥
अप्यभेद्यमुपलावलिवृष्ट्या
मण्डपं दिवि विधाय स काण्डैः ।
अग्निवज्जनकमातुलरीत्या-
चारयद्रिपुवने निजतेजः ॥ ८२ ॥
भिन्नभद्रगजरौद्रसुभद्रा-
नन्दनास्त्रगणविक्रमणेन ।
इत्यभिद्रुतकुरुप्रकरेण
प्राणिने समिति पाण्डवसैन्ये ॥ ८३ ॥
आपपात तटिनीतनयस्य
स्यन्दनो भुवनभीषणघोषः ।
चक्रयोर्गतिभिरेव मृतानां
जीवतां च हृदयानि विभिन्दन् ॥ ८४ ॥

युग्मम् ।

आपतन् प्रलयमारुतकल्पः
सिन्धुसूनुरतुलस्तु बलान्तः ।
भूभृतां स कटकानि कुलानि
व्यक्तशक्तिरुदपीडयदग्रे ॥ ८५ ॥

न श्रमः समजनिष्ट तटिन्या
नन्दनस्य धनुषा विशिखैर्वा ।
भ्रूविभङ्गचललोचनरोचिः-
स्रग्भिरेव विमुखेषु परेषु ॥ ८६ ॥

अस्थिरा युधि युधिष्ठिरसेना
भीष्मभीष्मधनुरुद्धृतबाणैः ।
तुद्यमानतनुरातनुते स्म
व्याकुलेव सकलापि विलापम् ॥ ८७ ॥

सिन्धुजन्मनि जगत्त्रयरौद्रे
मुञ्चति त्वयकरानिति बाणान् ।
आरुरोह परमं वियदर्कः
कौतुकीव रणवीक्षणहेतोः ॥ ८८ ॥

आकुलान्यथ बलानि विलोक्य
स्यन्दनो पितृपितामहमागात् ।
अन्यवीरसमरेण सुभद्रा-
नन्दनः स्फुटमपूर्णविनोदः ॥ ८९ ॥

स्वप्रणप्ररिषुणा हृदि विद्ध-
स्तच्चमत्कृतिविकम्पितमौलिः ।
तादृशे समिति शान्तनवोऽपि
व्याकुलः कुरुचमूभिरशङ्कि ॥ ९० ॥

भीष्मसीमनि कृपः कृतवर्मा
ते च दुर्मुखविविंशतिशल्याः ।
फाल्गुनेर्विशिखवल्गितकेन
व्याहताः कमपि कम्पमवापुः ॥ ९१ ॥

ऐन्द्रिसूनुरभितः परिभिन्नः
कोपनिर्जितयुगान्तकृतान्तः ।
अच्छिदत् सपदि दुर्मुखसूतं
भीष्मकेतुमिषुभिः कृपचापम् ॥ ९२ ॥

केतुपातकुपिते युधि भीष्मे
कालदण्डवदुदस्यति बाणान् ।
पाण्डुसैन्यरथिनो दश दीप्ता
रक्षितुं नरसुतं परिवव्रुः ॥ ९३ ॥

आपतत्पतगराडिव भीमो
भीष्मबाणगणपातितकेतुः ।
तत् किमप्यकृत संगरसङ्गी
येन वीररस एव स मेने ॥ ९४ ॥

आत्मयुग्यगजघातितसूत-
स्यन्दनाश्वनिकराय सकोपः ।
उत्तराय तु विराटसुताय
स्वर्णशक्तिममुचद्युधि शल्यः ॥ ९५ ॥

पर्वतादिव गजादथ तस्मा-
दुत्तरस्तरलया युधि शक्त्या ।
विद्युतेव कृतगाढनिपातं
पातितः शिखरदेश इवोच्चैः ॥ ९६ ॥

खड्गभिन्नरिपुसिन्धुरशुण्डे
तत्र राज्ञि कृतवर्मरथस्थे ।
भ्रातृमृत्युकुपितो युधि शङ्खः
सिन्धुजेन रुरुधे परिधावन् ॥ ९७ ॥

शङ्खरक्षणधियाथ धुनीजं
दुर्धरं लघु रुरोध किरीटी ।
तत् तयोः प्रलयविभ्रमदायी
सायकै रणरसः प्रससार ॥ ९८ ॥

पादचारबलशल्यगदाप-
ध्वस्तसारथिहयस्तु स शङ्खः ।
जीवितव्यमिव मङ्क्षु गृहीत्वा
खड्गमर्जुनरथेऽधिरुरोह ॥ ९९ ॥

सिन्धुसूनुरथ पाण्डुचमूषु
त्यक्तफाल्गुनरणः[1] प्रणनाद ।
कोपविस्तृतयमाननतुल्या-
कृष्टचापदशनायितबाणः ॥ १०० ॥

लोठयन् गजघटां भटचक्रं
संहरन् विघटयन् रथवीथीम् ।

१—रथः इति पा० ।

चूर्णयन् हयचयं युधि जातो
वज्रपात इव शत्रुषु भीष्मः ॥ १०१ ॥

मार्गणेषु गगनं पिदधत्सु
क्रुद्धभीष्मधनुरुल्लसितेषु ।
अस्तभूधरगुहान्तरमागात्
सोऽपि भीतवदशीतमरीचिः ॥ १०२ ॥

इत्थं भीष्मेऽतिभीष्मे चयसमयसमुद्भूतधूमध्वजोग्र-
ज्वालाकल्लोललीढान्तरमिव तरसा कुर्वति व्योम बाणैः ।
यावद्युद्धान्निषेद्धुं किल निजकुलजानेति पूर्वाद्रिमिन्दु-
स्तावत् ते मतवीराः स्वयमतनिषत व्रीडयेवावहारम् ॥१०३॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के भीष्मपर्वणि प्रथमदिनसाङ्गमवर्णनो नाम प्रथमः सर्गः ॥ १ ॥ :: :: ॥

---

॥ श्रीः ॥

खण्डप्रशस्तौ

रामावतारवर्णनम् ॥

(६०) स्थाणुः कूर्मोच यष्टिर्भुजगपतिरसौ भाजनं भूतधात्री
तैलापूरःसमुद्राः कनकगिरिरयं वृत्तवर्त्तिप्ररोहः ।
अर्चिश्चण्डांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमाना
शत्रुश्रेणीपतङ्गा जयति रघुपते त्वत्प्रतापप्रदीपः ॥

हेरघुपते त्वत्प्रतापप्रदीपस्तव प्रताप एव प्रदीपो जयति प्रकर्षेण वर्तते, अथ प्रदीपसाधर्म्यं प्रतापस्य प्राह । अत्र प्रतापप्रदीपे कूर्मः कमठः स्थाणुः स्तम्भोवष्टम्भहेतुः, तथा भुजगपतिः शेषराजोयष्टिर्दीपदण्डः, तथा भूतधात्री वसुंधरा भाजनं दीपाधारपात्रं, तथा समुद्रास्तैलापूरास्तैलपूर्णाः, तथाऽसौकनकगिरिः सुमेरुर्वृत्तवर्तिप्ररोहे मध्यवर्तित्वाद्वर्तुलदशाङ्कुरोऽभूत्, तथा चण्डांशोः सूर्यस्य रोचिः कान्तिः साऽर्चिर्ज्वालाऽभूत्, एवंभूते त्वत्प्रतापप्रदीपे दह्यमाना भस्मीभवन्ती शत्रुश्रेणी वैरिराजिः पतङ्गा अभूर्वन्निति भावः ॥ ६० ॥

(६१) गङ्गीयत्यसितापगां फणिगणं शेषीयति श्रीपतिं
श्रीकण्ठीयति कैरवीयति कुलं नीलोत्पलानां वने ।
कर्पूरीयति कज्जलं पिककुलं लीलामरालीयति
स्वःकुम्भीयति कुम्भिनामपिघटां त्वत्कीर्तिसंघट्टतः ॥

हेराम त्वत्कीर्तिसंघट्टतस्त्वद्यशः संयोगादसितापगां यमुनां गङ्गीयति गङ्गामिवाचरति, सर्वोपि जनइत्यध्याहारः सर्वत्र, तथा फणिगणं कृष्णसर्पसमूहं शेषीयति शेषमिवाचरति, तथा श्रीपतिं श्रीकण्ठीयति विष्णुं हरमिवाचरति, तथा वने जले नीलोत्पलानां नीलकमलानां कुलं समूहं कैरवीयति कैरवमिव कुमुदमिवाचरति, तथा कज्जलमञ्जनं कर्पूरीयति कर्पूरमिवाचरति,तथा पिककुलं कोकिलव्रजं लीलामरालीयति लीलाया यो मरालो हंसस्तमिवाचरति, तथा कुम्भिनां हस्तिनां घटामपि स्वःकुम्भी ऐरावणस्तमिवाचरति, अत्र यमुनादीनां कृष्णानामपि सितायास्त्वत्कीर्तेः संयोगात्सितरूपवत्वादिसाधर्म्येण गङ्गाद्यारोपो ज्ञेयः। उपमानादाचारइति क्यचि गङ्गीयतीत्यादिरूपसिद्धिरिति बोध्यम्, ॥ ६१ ॥

(६२) देव त्वत्करनीरदे दिशिदिशि प्रारब्धपुण्योन्नतौ
वञ्चत्कङ्कणरत्नकान्तितडिति स्वर्णामृतं वर्षति ।
स्फीता कीर्तितरङ्गिणी समभवत्तृप्ता गुणग्रामभूः
पूर्णं चार्थिसरः शशाम विदुषां दारिद्र्यदावानलः ॥

हेदेव हेराम त्वत्करनीरदे तव कर एव नीरदो मेघस्तस्मिन्, किंभूते तस्मिन्, दिशिदिशि प्रारब्धपुण्योन्नतौ प्रतिदिशं प्रारब्धा प्रवर्तिता पुण्या पवित्रा उन्नतिर्येन स तस्मिन्, पुनः किंविशिष्टे, वञ्चत्कङ्कणरत्नकान्तितडिति वञ्चन्ती देदीप्यमाने ये कङ्कणे वलये तयोर्या रत्नकान्तिः सैव तडिद्विद्युद्विद्यते यस्मिन्स तस्मिन्, स्वर्णामृतं स्वर्णमेवामृतं पानीयं वर्षति सति कीर्तितरङ्गिणी कीर्तिरेव तरङ्गिणी नदी स्फीता जलभरैर्वृद्धिं प्राप्ता समभवज्जाता, तथा गुणग्रामभूर्गुणसमूहभूमिस्तृप्ता अन्यस्मिन्नपि मेघे वर्षति सति ग्राम्यभूस्तृप्यति एवं त्वत्करमेघे वर्षति सति गुणग्रामभूस्तृप्तेति, तथा च पुनः अर्थिसरः अर्थिनो याचकास्त एव सरः, यद्वा अर्थिनां याचकानां सरो मनो गृहं वा तत्पूर्णं स्वर्णाम्भोभिर्भृतं, तथा त्वत्करनीरदे वर्षति सति विदुषां विपश्चितां दारिद्र्यदावानलः दारिद्र्यरूपोऽग्निः शशाम शान्तोऽभूत्, वृष्ट्याप्यते सकलगुणा भवन्तीति भावः ॥ ६२ ॥

(६३) एकं काञ्चनभूधरं सुवलयं वासः सुधावारिधिं
तारं तारकराजमण्डलमिदं संप्राप्य सत्कुण्डलम् ।
दूरस्थापि च तेन तेन सदृशं त्वाभूषणं चापरं
स्त्रीमानग्रहिलेव याचतितरां श्रीराम कीर्तिस्तव ॥

हेश्रीराम तव कीर्तिर्दूरस्थापि दिक्पर्यन्तं प्राप्तापि त्वां प्रति तेन काञ्चनभूधरादिना सदृशं समानमपरं भूषणमन्यन्मण्डनं स्त्रीमानग्रहिलेव स्त्रिया यो मानः स्वपतिसौभाग्य-

सुरूपत्वादिगर्वस्तेन ग्रहिला ग्रहगृहीता ग्रहाख्यापस्मारपरवशा इवेत्युत्प्रेक्षायां याचतितरामतिशयेन याचतीत्यर्थः, अन्यापि या मानिनी मानग्रहगृहीता भवेत्सा विदेशस्थापि पतिं प्रभविष्णु तत्तद्वस्तु याचते, यद्भूमण्डलेपि नाप्यते, तथेयं कीर्त्तिरपि अपरं भूषणं याचते, किंकृत्वा, एकमसहायं काञ्चनभूधरं स्वर्णाद्रिं सुवर्णमयं शोभनकटकं संप्राप्य यतो हे स्वामिन् ममैकः काञ्चनगिरिर्दक्षिणे करे कटकोस्ति वामे तु न किमपीत्येकनेत्राऽञ्जनवन्न शोभेते पाणी अतोऽपरं तादृशं वलयाख्यं भूषणं मह्यं देहीति प्रार्थयते, पुनः किंकृत्वा, एकं सुधावारिधिं क्षीरसमुद्रं वासो वस्त्रं प्राप्यापरं तत्समं याचते, यतो नह्येकं वासउपर्यधस्त्वाङ्गे परिधातुं शक्यते, तथा पुनः इदमेकं तारकराजमण्डलं तारकाणां राजा तारकराजश्चन्द्रस्तस्य मण्डलं सत्कुण्डलं शोभनकुण्डलमेकस्मिन्कर्णे संप्राप्य तत्सममपरकुण्डलं द्वितीयकर्णार्थं याचति, किंभूतं तत् तारमुज्ज्वलं सकलकलाभिः संपूर्णमिति भावः । अत्र ग्रहिलेति ग्रहशब्दात्पिच्छादित्वादिलचिप्रत्यये ज्ञेयम् ॥ ६३ ॥

(६४) अत्युक्तौ यदि न प्रकुप्यसि मृषावादं न चेन्मन्यसे
तद्ब्रूमोद्भुतवस्तुवर्णनविधौ व्यग्राः कवीनां गिरः ।
राम त्वत्तरुणप्रतापदहनज्वालावलीशोषिताः
सर्वे वारिधयस्त्वदारिवनितानेत्राम्बुभिः पूरिताः ॥

हेराम अत्युक्तौ बहुभाषिते यदि न प्रकुप्यसि चेत्कोपं न कुरुषे तथा मृषावादं असत्यवचनं चेद्यदि न मन्यसे न जानासि तर्हि तत्किमपि वयं ब्रूमः, तत्किमित्याह, हेराम अद्भुतवस्तुवर्णनविधौ अद्भुतमाश्चर्यकारि यद्वस्तु तस्य यद्वर्णनं शुभवाग्विलासैः कथनं तस्य विधौ विधाने कवीनां मेधाविनां गिरो वाण्यो व्यग्रा व्याकुला बभूवुरन्यवस्तुवर्णनमनस्काः कवयोऽन्यदेव व्याचक्षतेत्यर्थः । ननु गिरां शब्दात्मकत्वेनाचेतनत्वात्कथं व्यग्रत्वमिति चेत्सत्यम् । परमत्र कवीनामद्भुतस्तुतौ चेतसो व्याकुलत्वे तदुद्भवत्वात्तासामपि व्याकुलत्वमुपचर्यत इति भावः । अथ तत्किमद्भुतं वस्तु यस्य वर्णनविधौ कविगिरां व्यग्रत्वमिति तदाह । हेस्वामिन् सर्वे वारिधयः समुद्रास्त्वत्तरुणप्रतापदहनज्वालावलीशोषितास्तव तरुणः प्रत्यग्रोऽयं प्रतापः स एव दहनज्वालावल्योऽग्निशिखाश्रेणयस्ताभिः शोषिताः शोषं प्राप्ताः सन्तस्त एव पुनस्त्वदारिवनितानेत्राम्बुभिः वैरिस्त्रीनयनाश्रुभिः पूरिता भृतादृति, अत्र सर्वसमुद्राणां शोषणं पुनश्च तेषां शत्रुवनितानेत्राम्बुभिः पूरणमेतत्सर्वमद्भुतमतोऽस्मिन्वर्णने कविगिरो व्यग्रा इति भावः ॥ ६४ ॥

॥ शेषवत्तराङ्के ॥

॥ श्रीकाशिराजसंस्थापितकाशीधर्म्मसभायाः संक्षिप्तं वृत्तम् ॥

आसीत् किल श्रीमदखिलराजन्यवृन्दवन्दितचरणकमलः सकलभुवनविख्यातप्रभावो महानुभावो मानधनप्रधानं श्रीमदुदितनारायणसिंहशर्म्मेतिशुभाभिधानो महाराजाधिराजः श्रीकाशिराजः । स भूपतिरेकदातिप्रबलेन कलिनातितरां पीड्यमानस्य श्रौतस्मार्त्तसद्धर्म्माचारस्य तन्मूलस्य श्रुत्यादिप्रचारस्य चोत्तरोत्तरं ह्रासमाकलय्य तदभिवृद्धये परमसौजन्याद्यखिलगुणगणसमृद्धेन श्रीमत्प्रसिद्धनारायणसिंहशर्म्मेतिनाम्ना प्रसिद्धेन निजानुजेन सविनयमभ्यर्थितस्तत्कालप्रसिद्धैरसंख्यातगुणगणस्तव्यैर्वाराणसीवास्तव्यैः श्रीभैरवमिश्रश्रीचन्द्रनारायणतर्कालङ्कारप्रमुखैर्विद्वद्वर्य्यैः सह मन्त्रयित्वा तेऽप्यभूतपूर्वां परिषदं स्थापयामास । ततः कतिपयदिवसापगमे तस्मिन् महीपाले कालवशात्कलिनीदलगतजलबिन्दुचञ्चलं पाञ्चभौतिकं देहं विहाय निर्वाणपदं प्रविष्टे तेषु तेषु विद्वद्वर्य्येषु च यथाकालं लोकान्तरं प्रस्थितेषु सा सभापि फलविशेषमनुत्पाद्यैव कथाशेषतामयासीत् । अथ सम्प्रति तस्यैव महाराजस्य राज्यपदं प्रशासत् श्रीमत्समस्तसामन्तचक्रचूडामणिमरीचिनिचयचुम्बितचरणारविन्दः शरदिन्दुसुन्दरयशःपूरपूरिताखिलदिगन्तरो निरन्तरसम्पादितसपर्य्यासम्भारसमाराधितमहेश्वरः श्रीमदीश्वरीप्रसादनारायणसिंहशर्म्मेतिसुगृहीतनामधेयो विद्वज्जनविधेयो महाराजाधिराजः श्रीकाशिराजः श्रीमत्पण्डितलक्ष्मीरामद्विवेदश्रीताराचरणतर्करत्नप्रभृतिभिर्विद्वद्वर्य्यैस्तस्याः परिषदः पुनः स्थापनाय प्रोत्साहितः षड्विंशत्यधिकैकोनविंशतिशततमे वैक्रमेऽब्दे पौषमासस्य कृष्णद्वादश्यां वाराणस्याम्मरालमालकोपलक्षिते प्रदेश एकस्मिन् पाकशासनसदनसुन्दरे स्वमन्दिरे सुधर्म्मामिव विबुधवराधिष्ठितां "श्रीकाशीधर्म्मसभे"त्यभिख्यया समलङ्कृतां विद्वत्सभां समतिष्ठिपत् । स्वीचक्रुश्च श्रीमतां सभासदां संमत्या वाराणसीस्थराजकीयसंस्कृतविद्यालयावलम्बिनो विद्वद्वर्य्या इतरेऽपि कतिपये नगरनिवासिनः पण्डितश्रेष्ठा राज्यकार्य्याधिकारिणश्च प्रतिष्ठितपुरुषाः प्रधानाध्यक्षोपाध्यक्षलेखाध्यक्षकोषाध्यक्षकार्य्यनिर्वाहकसामाजिकानां पदानि यथायथं पालयितुम् । तदाप्रभृत्येव प्रधानाध्यक्षप्रमुखाः परिषदीश्वराः प्रतिचतुर्दशि निर्दिष्टचरे मन्दिरे मध्याह्नादूर्द्ध्वं समेत्य यथासम्भवं सभाकृत्यं निर्वर्त्तयन्ति । तच्च कृत्यं——धर्मसंक्रान्तेषु केषुचिद्विषयेषु जातसंशयेभ्यः साक्षात् पत्रादिद्वारा वा पृच्छद्भ्यो लोकेभ्यो यथाशास्त्रमुत्तरदानम्, धर्मसंबन्धिनं कमपि विषयमवलम्ब्य संस्कृतगिरा सुललितबन्धस्य प्रबन्धस्य निर्म्माणम्, सभायां प्रवृत्तायां तद्विषये विचारश्च । अवकाशश्चेद्धर्म्मप्रतिपादकानां

मनुस्मृत्यादिप्रबन्धानां कस्यचित् प्रकरणस्य पाठः, तद्बोद्धुमक्षमेभ्यस्तत्र संगतेभ्यो लोकेभ्यो देशीयभाषया तदर्थप्रतिपादनम्, सकलकृत्यमेतल्लिभूतमद्यावधि सभासद्भिरननुष्ठितं केवलमनुष्ठेयत्वेन निर्धारितं तावदिदं यत् संस्कृतविद्याया वृद्धये प्रतिवर्षं परीक्षाकालात् पूर्वं नियमितेषु विषयेषु छात्राणां परीक्षां कृत्वा तेभ्यो योग्यतानुसारेण छात्रतावेतनस्य पारितोषिकस्य तत्तच्छास्त्रीयपाटवतारतम्यबोधकानां "व्याकरणप्रविष्ट"इत्याद्युपनाम्नां प्रशंसापत्रस्य च वितरणम् । प्रतिश्रुतं च श्रीमता तत्रभवता सततसदाचारतत्परेण कीर्त्तितचरेण महाराजाधिराजेनैतत्समाजस्य समुदितकार्यसम्पत्तये प्रत्यब्दं सहस्रमुद्राः प्रदातुम् । श्रूयते किलैतस्यां पौषकृष्णचतुर्दश्यां परीक्षाविषयाणां परीक्षकाणां पारितोषिकस्य च नियमो जातः परीक्षाप्य चिराद्भविष्यतीति । संवत् १९२७पौषकृष्णामायाम् ॥

पण्डितशीतलप्रसादत्रिपाठी ।

---

THE APHORISMS

OF THE

# YOGA PHILOSOPHY

OF

PATAÑJALI.

*(Continued from page 177.)*

[1] He [now] mentions the result of the conquering of the elements.—

ततोऽणिमादिप्रादुर्भावः कायसम्पत् तद्धर्म्मानभिघातश्च ॥ ४६ ॥

Aph 46. Therefrom spring up [three perfections i. e ] minuteness &c , excellence of body, and non-destruction of the merits of it.

[2] "Minuteness" [animá] attainment of an atomic form —or the power of becoming as minute as an atom, [by this power the ascetic can enter into a diamond &c]; [by the word 'Et cætera' are meant the other seven perfections viz.] 'Magnitude' [mahimá] greatness—or the power of magnifying oneself [by this power the ascetic can occupy as much space as he likes]. 'Gravity' [garimá] attainment of heaviness—or the power of becoming heavy; 'Lightness' [laghimá] the power of becoming as light as a ball of cotton ; 'Reach' [prápti] the power of touching the moon &c , with the tip of the finger &c ; 'Irresistible will' [prákámya] means non-frustration of desires in the corporeal internal organ; 'Dominion' [íśitva] the power of prevailing everywhere ; 'Subjection' [vaśitva] means that all the elements obey (or are unable to disobey) his (the ascetic's) command. These, viz 'Minuteness' and the other seven perfections, which are conducive to meditation, result from the conquest of the elements, and [they] are called the eight great perfections [mahásiddhi]; the "Excellence of body" which will be described hereafter [in the next aphorism] is attained by the ascetic [who has conquered the elements]; "Merits of it" mean the qualities of the body [of the ascetic], colour &c , their destruction—annihilation—cannot be effected by anything, for example, fire cannot burn nor can air dry up his [the ascetic's] colour : such and other cases may be considered.

[1] [Next] He mentions what the 'Excellence of body' is:—

रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् ॥ ४७ ॥

Aph. 47. The excellence of body consists of colour, loveliness, strength, and adamantine density.

[2] "The excellence of body" ['káya-sampat'—which is one of the three perfections that arise from the conquest of the elements] consists of "Colour" ['rúpa,'—which means the virtue of becoming white &c. from black &c. and so on] ; ' Loveliness" [lávanya—excellent beauty—or the virtue of becoming exceedingly beautiful] "Strength' ['bala'—or the power of becoming very strong] and "adamantine density" ['vajrasanhananatva'] i. e hardness of the body like that of a diamond [or the power of making the body as hard as a diamond].

[3] [Having described the conquest of the elements] He now mentions the conquest of the organs of sense :—

---

[1] भूतजयस्य फलमाह ।

[2] अणिमा परमाणुरूपतापत्तिर्महिमा महत्त्वङ्गरिमा गुरुत्वप्राप्तिः प्राप्तिरङ्गुल्यग्रेण चन्द्रादिस्पर्शनशक्तिः प्राकाम्यमिच्छाऽनभिघातः शरीरान्तःकरणे ईशित्वं सर्वत्र प्रभविष्णुता वशित्वं सर्वाण्येव भूतानि तदुक्तमनुगच्छन्ति तएते अणिमाद्याः समाध्युपयोगिनो भूतजयात् प्रादुर्भवन्ति एत अणिमादयोऽष्टौ महासिद्धय उच्यन्ते कायसम्पद् वक्ष्यमाणा ताम्प्राप्नोति तद्धर्म्मानभिघातश्च तस्य कायस्य ये धर्म्मारूपादयस्तेषामनभिघातो नाशो नास्य कुतश्चिदपि भवति नास्य रूपमग्निर्दहति न च वायुः शोषयतीत्यादियोज्यम् ॥

[1] कायसम्पदमाह ।

[2] वज्रसंहननत्वं वज्रवत्काठिनाङ्गत्वमन्यत्प्रसिधम् ॥

[3] इन्द्रियजयमाह ।

ग्रहणस्वरूपाऽस्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥ ४८ ॥

Aph. 48 The conquering of the organs of sense results from the restraint performed with regard to perception, nature, egotism, concomitance, and possession of objects.

[1] The ascetic attains victory over the organs of sense, having as aforesaid [Aph 45] performed restraint with regard to the five states of the organs of sense, viz "Perception" ['grahana'] the function of the organs of sense directed towards their objects; "Nature" [svarúpa] the state of revealing in general—or the eleven organs, viz, [the five organs of action and the five of sense and the mind], "Egotism" [asmitá] notion of selfishness; "Concomitance" and Possession of objects are as before-stated [Aph 45]

[2] He (now) states the result of the conquering of the organs of sense:—

ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४९ ॥

Aph. 49 Therefrom spring up velocity of mind, the state of modification, and the conquest of nature

[3] "Velocity of mind" ('manojavitva') means attainment of rapid motion by the body like that of mind; [that is, the ascetic can move his body from one place to another as quick as the mind] "The state of modification" ('vikaranabháva) is, the attainment of functions in the organs of sense independent of body; [that is, the modifications of the organs of sense take place independently of the body at any time, whenever the ascetic desires, with regard to any place or object]

"The conquest of nature" [pradhána-jaya, the chief or universal victory,] controlling all things,—[that is altering anything from one state into another at will] These perfections are attained by the ascetic who has conquered the organs of sense. And these are, here—in this system, called the honey-like [perfections, madhupratíka] because like an individual particle of honey each of them is tasteful.

*(To be continued)*

---

[1] ग्रहणमिन्द्रियाणां विषयाभिमुखी वृत्तिः स्वरूपं सामान्येन प्रकाशत्व-मस्मिता अहङ्कारानुगमोऽन्वयार्थवत्त्वे पूर्ववत् । एतेषामिन्द्रियाणामव-स्थापञ्चके पूर्ववत् संयमङ्कृत्वा इन्द्रियजयी भवति ॥

[2] तस्य फलमाह ।

[3] शरीरस्य मनोवदुत्तमो गतिलाभो मनोजवित्वङ्कायनिरपेक्षाणामिन्द्रि-याणां वृत्तिलाभो विकरणभावः सर्ववशित्वम्प्रधानजयः । एताः सिद्धयो जितेन्द्रियस्य प्रादुर्भवन्ति ताश्चास्मिन् शास्त्रे मधुप्रतीका इत्युच्यन्ते यथा मधुन एकदेशोऽपि स्वदते एवम्प्रत्येकमेताः सिद्धयः स्वदन्त इति मधु-प्रतीकाः ॥

TO THE EDITOR "PANDIT".

SIR,

Allow me to point out, what appears to me to be an inaccuracy in the current number of the Pandit In translating Śankara Miśra's comment on Kanáda, the translator has rendered the word आततायिन् by "felon". But as the Sanscrit word is capable of being used in some such sentence as ममायमाततायी which itself does not admit of being rendered, "he is my felon", it appears that the word "felon" ought not to be fixed as a good rendering for आततायिन्. Some such phrase as "imminent foe," unless it grates on an English ear for its novelty, might imply what आततायिन् denotes, judging from its etymology, आतत+इ+णिन् "one who comes with an आतत or uplifted weapon".

I grant that the English criminal jurisprudence classifies as felonies every one of the crimes enumerated in the well known text which characterises an आततायी, but that is no reason for considering the limitation of the two words "felon" and "आततायिन्" as identical; a fact that ought to be carefully noticed as the only test for the correctness of the rendering of one word into another.

In the last number of the Pandit there is another point that strikes me as somewhat odd and whimsical. One signing himself as शिवप्रसाद holds up for the emulous imitation of our countrymen, the proficiency of the Germans in our ancient mother-tongue, and he reproduces the German soldier's Sanskrit letter, which has recently made some noise in the papers. But it appears to me that if शिवप्रसाद thought it worth his while to do so much, he ought as well to have pointed out the glaring marks of the exceedingly insufficient knowledge of Sanskrit evinced by the German in his very small Sanskrit letter. The phrases सुकुशलोऽस्मि, महद्भयंगतः, क्षेत्रे सुपार्श्वेते, are but a scanty instalment of the inaccuracies to which Europeans when attempting Sanskrit composition are necessarily liable Though it will not be palatable to the Europeans, it had better be set down as an inevitable fact that, unless a long residence among the Pandits of this country should unwontedly ripen their knowledge of Sanskrit, the Europeans pretty often fall into egregious mistakes that would excite the smile of a simple-minded indigenous Pandit The Anglo-maniacs of our country are welcome to applaud the zeal and perseverance of the European Sanskrit scholars and also their exertions in the publication of our ancient works; but to hold up such achievments as the German soldier's letter as an example is a proceeding that we might fairly ask them to spare.

Yours Obediently,

A. HINDU.

# THE RÁMÁYAN.

## BOOK III.

### CANTO I.

*THE HERMITAGE*

When Ráma, valiant hero, stood
In the vast shade of Dandak wood,
His eyes on every side he bent
And saw a hermit settlement,
Where coats of bark were hung around,
And holy grass bestrewed the ground.
Bright with Bráhmanic lustre glowed
That circle where the saints abode.
Like the hot sun in heaven it shone,
Too dazzling to be looked upon.
Wild creatures found a refuge where
The court well-swept was bright and fair,
And countless birds and roedeer made
Their dwelling in the friendly shade
Beneath the green of well-loved trees
Oft danced the gay Apsarases
Around was many an ample shed
Wherein the holy fire was fed,
With sacred grass and skins of deer,
Ladles and sacrificial gear,
And roots and fruit and wood to burn,
And many a brimming water-urn
Tall trees their hallowed branches spread,
Laden with pleasant fruit, o'erhead,
And gifts which holy laws require,[1]
And solemn offerings burnt with fire,[2]
And Veda chants on every side
That home of hermits sanctified.
There many a flower its odour shed,
And lotus blooms the lake o'erspread.
There, clad in coats of bark and hide,
Their food by roots and fruit supplied,
Dwelt many an old and reverend sire
Bright as the sun or Lord of Fire,
All with each worldly sense subdued,
A pure and saintly multitude.
The Veda chants, the saints who trod
The sacred ground and mused on God,
Made that delightful grove appear
Like Brahmá's own most glorious sphere.
As Raghu's splendid son surveyed
That hermit home and tranquil shade,
He loosed his mighty bow-string, then
Drew nearer to the holy men
With keen celestial sight endued
Those mighty saints the chieftain viewed,
With joy to meet the prince they came,
And gentle Sítá dear to fame.
They looked on duteous Ráma, fair
As Soma[3] in the evening air,
And Lakshman by his brother's side,
And Sítá his devoted bride,
And with glad blessings every sage
Received them in the hermitage
Then Ráma's form and stature tall
Entranced the wondering eyes of all,
His youthful grace, his strength of limb,
And garb that nobly sat on him
To Lakshman too their looks they raised,
And upon Sítá's beauty gazed
With eyes unclosing, lest their sight
Should miss the vision of delight.
Then the pure hermits of the wood,
Rejoicing in all creatures' good,
Their guest, the glorious Ráma, led
Within a cot with leaves o'erhead.
With highest honour all the best
Of radiant saints received their guest,
With kind observance, as is meet,
And gave him water for his feet
To highest pitch of rapture wrought
Their stores of roots and fruit they brought,
They poured glad blessings on his head,
And 'All we have is thine,' they said:
Then, reverent hand to hand applied,[1]
Each duty-loving hermit cried:
'The king is our protector, bright
In fame, maintainer of the right;
He bears the awful sword, and hence
Deserves an elder's reverence.
One fourth of Indra's essence, he
His people keeps from danger free;
Hence honoured by the world, of right
The king enjoys each choice delight.
Thou shouldst to us protection give,
For in thy realm, dear lord, we live:
Whether in town or wood thou be,
Thou art our king, thy people we
Our worldly arms are laid aside,
Our hearts are tamed and purified,
To thee our guardian, we who earn
Our only wealth by penance, turn'
Then the pure dwellers in the shade
To Raghu's son due honour paid,
And Lakshman, bringing store of roots,
And many a flower, and woodland fruits.
And others strove the prince to please
With all attentive courtesies

[1] The *bali*.

[2] The *homa*.

[3] The Moon-God: 'he is,' says the commentator, 'the special deity of Bráhmans.'

[1] 'Because he was an incarnation of the deity,' says the commentator, 'otherwise such honour paid by men of the sacerdotal caste to one of the military would be improper.'

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्कुरश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 57. Benares, February 1st, 1871. Vol. V.


## ॥ भाट्टचिन्तामणिवर्णनम् ॥

अथ प्रकरणपञ्चिकाया गुरुप्रभाकरमतप्रतिपादनैकपरायणायाः प्रकाशनोत्तरमवश्यं कश्चन भाट्टसिद्धान्तनिरूपणप्रवणो निबन्धः प्रकाशनमर्हति । यतो जैमिनिदर्शनमवलम्ब्य त्रीण्येव मतानि परस्परव्यावृत्तात्यन्तविशेषवन्ति प्रसिद्ध्यन्ति गुरुमतं भट्टमतं मुरारिमतं च । तत्र मुरारिमतानुसारी द्वादशाध्यायीव्याख्यानपरो निबन्धो नाद्यत्वे कोऽपि प्रसिद्ध्यति । भाट्टमतानुसारिणश्च भाट्टदीपिकाशास्त्रदीपिकाभाट्टरहस्यप्रभृतयो यद्यपि बहवो निबन्धा उपलभ्यन्ते ऽथापि ते ऽतिविस्तृताः कठिनतरसंस्कृतग्रथिताः सुलभपुस्तकाश्चेतिकृत्वा ऽयं भाट्टचिन्तामणिनामधेयः स्पष्टार्थसंस्कृतो नातिप्राचीनोऽपि प्राचीनतमसंप्रदायानुसारी संक्षिप्तः सकलभाट्टमतनिबन्धसारसंग्राहको ऽतिदुर्मिलपुस्तकः काशीविद्यासुधानिधिचकोरनेत्रातिथिभावमर्हतीति तन्मुद्रणाय सोल्लासं प्रयतामहे । रचयिता चास्य भट्टकुलतिलको विश्वेश्वरभट्टापराभिधानो गागाभट्टः । योऽद्य यावदागोपालाङ्गनमुत्तमोत्तमविद्वदुपमानभावं प्रतिपदं लभते ।

अथ तस्य प्रथममुद्रणीयतर्कपादस्यप्रकरणानि प्रतिपत्तिसौकर्याय सूच्यन्ते ।

१ शास्त्रारम्भोद्देशः
२ मङ्गलवादः
३ धर्मस्वरूपम्
४ धर्मे वेदस्य प्रामाण्यपरीक्षा
५ ज्ञानप्रामाण्यनिरुक्तिः
६ स्वतः प्रामाण्यव्यवस्थापनम्
७ प्रत्यक्षनिरूपणम्
८ चार्वाकनिराकृतिः
९ अन्यथाख्यातिवादः
१० सामान्यलक्षणाज्ञानलक्षणे
११ अनुमाननिर्वचनम्
१२ व्याप्तिग्रहप्रकारः
१३ परामर्शविमर्शः
१४ ईश्वरवादः
१५ शक्तिवादः
१६ कारणतावादः
१७ सृष्टिप्रलयचिन्ता
१८ विवर्त्तखण्डनम्
१९ जगत्सत्यत्वव्यवस्थापनम्
२० जीवात्मसाधनम्
२१ मोक्षस्वरूपनिरूपणम्
२२ उपमानस्वरूपम्
२३ अर्थापत्तिस्वरूपम्
२४ अनुपलब्धिस्वरूपम्
२५ अभाववादः
२६ शब्दप्रमाणनिर्वचनम्
२७ आकाङ्क्षायोग्यतयोःस्वरूपम्
२८ तात्पर्यकारणत्वकल्पनम्
२९ शक्तिग्रहप्रकारः
३० वृत्तिस्वरूपम्

इति ॥

सांख्य० बालशास्त्री

## ॥ भाट्टचिन्तामणिः ॥

॥ श्रीगणेशाय नमः ॥

अधिसरयूतटिनीतटमधिसाकेताङ्गणमधितद्युद्यानम् ।
खेलन्नीरदनीलो बालो मे मानसे सदा भूयात् ॥ १ ॥
सारं यच्छ्रुतिशिरसामगोचरं यन्मनोवचसाम् ।
तत्कौशल्यावचसां शिक्षापात्रं महो वन्दे ॥ २ ॥
विश्वामित्रकुलध्वजः समभवद्यो भट्टनारायण-
स्तद्वंशस्य करीरतां दधदयं विश्वेश्वराख्यः कृती ।
गागाभट्ट इति प्रथां दिनकरात्प्राप्तः पितुर्लालनाद्
मीमांसाम्बुनिधिं प्रमथ्य चिनुते श्रीभाट्टचिन्तामणिम् ॥ ३ ॥
गुरोरथ कुमारिलस्य मुरविद्विषोपि श्रम-
क्रमो न सफलो ऽभवद्भवति तत्र कस्योद्यमः ।
स साहसमिति प्रथामविनथां प्रकर्तुं ममो-
द्यमोयमिति चिन्तयन् बुधजनः परिक्षाम्यतु ॥ ४ ॥

अथातो धर्मजिज्ञासा ॥ १ ॥

अनेन सूत्रेण विषयप्रयोजनकथनद्वारा शास्त्रारम्भकर्तव्यता प्रतिपाद्यते । कर्तव्यपदाध्याहारेण जिज्ञासापदे विचारलक्षणया च वेदाध्ययनानन्तरं वेदाध्ययनहेतुको धर्मज्ञानेच्छाप्रयोज्यो धर्मप्रमाफलको विचारः कर्तव्य इति सूत्रार्थः । तेन विचारहेतुसूत्रसमुदायरूपशास्त्रस्य धर्मज्ञानप्रयोजनकता धर्मविषयता चोक्ता । संबन्धोपि प्रतिपाद्यप्रतिपादकभावः । वेदाध्ययनहेतुकता चाधीतवेदस्य धर्मेण पापमपनुदतीत्यादिवाक्येभ्यः । सामान्यतो धर्मज्ञानस्य विशेषधर्मप्रकारकज्ञानेच्छाहेतुत्वात् । तथाहि । धर्मेणेति वाक्येन सामान्यतो धर्मज्ञाने तदुत्तरं तदनुव्यवसाये धर्मज्ञानत्वसामान्यप्रत्यासत्त्या सकलधर्मज्ञानज्ञानम् । घटत्वसामान्यप्रत्यासत्त्या नीलघटादिज्ञानवत् । ततस्तद्विषयकेच्छेति क्रमेण सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकेच्छाप्रयोजकत्वम् । सा चेच्छा सप्रमाणकधर्मज्ञानं जायतामित्याद्याकारिका, तादृशेष्टसाधनताज्ञानजन्या च । तादृशज्ञानज्ञानं च धर्मज्ञानत्वसामान्यलक्षणप्रत्यासत्त्येति । तेन चाधीतवेदोधिकारी प्रदर्शितः । इदं च सूत्रं स्मृतिरूपं स्वसूचितन्यायानुग्राह्यप्रमाणसापेक्षं चेत्यध्ययनविधिमूलकम् । तेनापि वेदाध्ययनानन्तरं तदर्थज्ञानाय विचारविधानात् । तथाहि । स्वाध्यायो ऽध्येतव्य इत्यत्राध्ययनकरणकभावनायामर्थज्ञानं भाव्यम् । कर्मानुष्ठानौपयिकत्वेन पुरुषार्थत्वादिति । स्वर्गार्थत्वमिति चेत् । न । अदृष्टार्थत्वापत्तेः । नाप्यक्षरग्रहणम् । पुरुषार्थाननुबन्धित्वात् । व्याकरणादीनां वेदाङ्गत्वोपपत्तेश्च । अङ्गत्वं कार्यजनने सहकारित्वं, तच्च वेदाध्ययनस्यार्थज्ञानार्थत्वे उपपद्यते । व्याकरणादीनां वेदार्थज्ञानोपयोगित्वात् । स्वर्गार्थत्वे वा तदनुपयोगात् । वेदाध्ययनमिष्टजनकदृष्टार्थकम्, अर्थवद्विषयकविहिताध्ययनत्वात्, अङ्गाध्ययनवदित्यनुमानात् । अत्र स्तोभाध्ययने व्यभिचारवारणाय अर्थवद्विषयकेति । विषमन्त्राध्ययने व्यभिचारवारणाय विहितेति । अतो ऽर्थज्ञानं भाव्यम् । न चार्थज्ञानस्य भाव्यत्वे ऽनध्यायादिनियमानां स्वरूपकार्ययोरनुपयोगादध्ययनाङ्गत्वानुपपत्तिः । कार्योपयोगाभावेपि विघ्ननिवारणार्थत्वेन स्वरूपोपयोगित्वात् । नियमापूर्वे उपयोगाच्च । कर्मार्थकतव्यप्रत्ययस्तु संबन्धमात्रे लाक्षणिकः । विषं भुनक्ति सक्तूञ् जुहोतीतिवदनीप्सितकर्मत्वपरो वा । ईप्सितकर्मत्वपरत्वेपि स्वाध्यायकर्मकभावनाविशिष्टतत्करणभावनाविधित्वेनैतस्य विधेरर्थज्ञानभाव्यकत्वमिति कश्चित् । अत्र स्वाध्यायत्व स्वशाखात्वम् । स्वत्वं च परंपरया

ऽध्ययनविषयत्वमनुष्ठानविषयत्वं च । तेन वेदत्रयान्तर्गतैकैकशाखापरः स्वाध्यायशब्दः । तेनाध्ययनानुष्ठानयोः स्वपरंपरापरिगृहीताध्ययनानुष्ठानविषयत्वोपपत्तिः । तत्रेतिकर्तव्यतापेक्षायां योग्यतया विचार इतिकर्तव्यतात्वेन संबध्यतइति विचारकर्तव्यतासिद्धिः । एवं च “स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्” “योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मे”त्यर्थाभिज्ञतदनभिज्ञनिन्दास्तुती उपपद्येते इति वार्तिकादयः ॥

पितृचरणास्तु प्रोक्षणादिविधावपूर्वसाधनत्वेन व्रीहीणामिवात्रापि प्रयोजनवदर्थज्ञानजनकत्वेन स्वाध्यायस्यैव भाव्यत्वं, वेदार्थज्ञानस्य द्रव्यप्राप्तिप्रतिष्ठौपयिकत्ववत्कर्मानुष्ठानौपयिकत्वमिति लोकसिद्धं पुरुषार्थत्वं, द्रव्यार्जनवत् । अतोयं विधिः प्रतिग्रहादिनियमवदध्ययननियमार्थः । नन्वध्ययननियमस्य निषेधेषु नोपयोगः, अध्ययनेनैव विध्यर्थं जानन् विधेयानुष्ठानेन फलमाप्नुयादितिवदध्ययनेनैव निषेधार्थं जानन् निषेध्यानुष्ठानेन प्रत्यवेयादिति कल्पनायां निषेधाध्ययने प्रवृत्त्ययोगादिति चेत् । न । तत्रागत्या ऽध्ययनेनैव निषेधार्थमजानन् प्रत्यवेयादिति कल्पनात् । न चैतावता ऽदृष्टार्थकत्वं, नापि विनियोगभङ्गः । यदेव विद्यया करोतीति वाक्यं तु अर्थज्ञानस्य नाङ्गताबोधकं, किं तु श्रद्धोपनिषज्जन्यज्ञानार्थवादः । अस्तु वा यत्करोतीति वैदिककर्मसामान्यमुद्दिश्य विद्यापदलक्षितार्थज्ञानविशेषनियमार्थः सचाङ्गताबोधकः, व्रीहिविधिवत् । तथापि न क्रत्वपूर्वार्थज्ञानजनकत्वेनैवोद्देश्यता, येनाध्ययनस्याङ्गता स्यात्,स्याच्च प्रकरणापेक्षा । स्वाध्यायस्योद्देश्यत्वादेव तदङ्गतैकत्वाविवक्षया वेदानधीत्येत्यादिस्मृतेरेतन्मूलकत्वे न तन्मूलश्रुत्यन्तरकल्पनागौरवम् । तेनार्जनविधिवद् अर्थज्ञानजनकत्वेनैवोद्देश्यतेति अर्थज्ञानफलकविधिर्विचारकर्तव्यताक्षेपक इत्याहुः ॥

तेनार्थज्ञानपर्यन्तं गुरुकुलवासो विचारकरणं चाध्ययनविधेः फलम् । क्रत्वधिकारनियमाच्च । तथाहि । वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमित्यादिवाक्यैर्ब्राह्मणाद्यङ्गत्वेनोपनयनं विधीयते । अष्टवर्षं ब्राह्मणमुपनयीतेत्यादिवाक्येषु ब्राह्मणाद्युद्देशेनाष्टवर्षत्वादिविधिः तत्संनिधिपठितश्चाध्ययनविधिः कर्तृसापेक्षः कार्यापेक्षानुपनीतानेव कर्तॄन् गृह्णाति इत्यध्ययनविधिप्रयुक्ताध्ययनजन्यार्थज्ञाने त्रैवर्णिकानामेव सिद्धे क्रतुविधयो ऽप्यर्थज्ञानोपायाक्षेपकत्वाभावलाघवसहकृता ब्राह्मणादिपरा एव भवन्तीति शूद्रादेरुपनीतकर्तृकाध्ययनजन्यार्थज्ञानरूपाङ्गसंपादनासमर्थस्य नाधिकारः । तमध्यापयीतेति संनिधिसिद्धोपनीतकर्तृकत्वानुवादः । यद्वा उपनयनाध्यापनवाक्ययोः प्रयोजकव्यापाराविवक्षया उपगमनाध्ययनविधिः । अष्टवर्षो ब्राह्मण उपगच्छेत्सोधीयीतेति शाखान्तरीयत्वेन स्वाध्यायविधेर्नानर्थक्यम् । कर्मणां नित्यतया उपनयनाध्ययनयोः फलतो नित्यत्वम् । यद्वा

ब्रह्मक्षत्र विशां काल औपनायनिकः परः ।
अत ऊर्ध्वं पतन्त्येते

इति वाक्येन अनधीयाना व्रात्या भवन्तीति निषेधेन च नित्यत्वसिद्धिः । अधीतवेदस्य प्रयोजनवत्त्वं चेत्थमवसेयम् । विधीनां प्रवृत्तिजनकप्रवर्तनाज्ञानम्, अर्थवादानां प्राशस्त्यज्ञानं, मन्त्राणां विशिष्टार्थस्मरणं, नाम्नां कर्मभेदो गुणफलोपबन्धःसंकल्पलाघवं च, साम्नामक्षराभिव्यक्तिः, स्तोभानां सामकालपूर्तिः,उपनिषदां पारलौकिकफलककर्मप्रवृत्तिजनकशरीरव्यतिरिक्तजीवात्मज्ञानं, क्रमज्ञानादि च यथेष्टमूहनीयम् । एवमङ्गानां वेदोपकारकत्वम् । तच्च शिक्षायाः स्वरादिनिश्चयद्वारा, कल्पस्य शाखान्तरसंदिग्धविध्युपसंहारद्वारा, न्यायलभ्यार्थतात्पर्यनिर्णयद्वारा च, व्याकरणस्य वैदिकोहविज्ञानद्वारा, छन्दसां वैदिकवाक्यपरिमाणद्वारा, ज्यौतिषस्य वैदिककर्मप्रयोगोपयोगितिथ्यादिज्ञानद्वारा, अधीतवेदजन्यार्थज्ञानोपयोगित्वाद् शास्त्रारम्भसिद्धिर्वैधी । अधिकरणं च पञ्चाङ्गम् ।

विषयः संशयश्चैव पूर्वपक्षस्तथोत्तरः ।
प्रयोजनं च पञ्चाङ्गं शास्त्रे ऽधिकरणं स्मृतम् ॥

संगतिश्चेति क्व चित्पाठः । तच्चेत्थम् । अध्ययनविधिर्विषयः । वेदाध्ययनोत्तरं धर्माधर्मज्ञानफलकविचारविधायको न वेति संशयः । अध्ययनस्य गुरुमुखोच्चारणपूर्वकोच्चारणरूपत्वात्तस्य विश्वजिद्वत्स्वर्गार्थत्वादधीत्य स्नायादिति स्नानविधिना न कर्तव्य इति पूर्वपक्षः । उक्तयुक्त्या ऽध्ययनविधेरर्थज्ञानपर्यन्ततया तस्य विचारमन्तरेणासंभवात्कर्तव्यः । स्मृतिस्त्वध्ययनकरणकभावनोत्तरकालं स्नानमिति व्याख्येया, श्रुत्यनुरोधादिति सिद्धान्तः । प्रयोजनं स्पष्टम् । एवमग्रे ऽप्यधिकरणानि द्रष्टव्यानि । तथा च सिद्धं धर्मज्ञानाय शास्त्रमारम्भणीयमिति । तज्ज्ञानं च स्वरूपप्रमाणसाधनप्रयोजनविचारद्वारेणेति तच्चिन्ता । एवं सूत्रे अकारप्रश्लेषेणाधर्मचिन्ताया अपि शास्त्रे विषयत्वमुक्तम् ॥

अत्र जैमिनेर्विघ्नाभावनिश्चयाद् ग्रन्थादौ न मङ्गलाचरणे प्रवृत्तिरिति जीर्णाः । वस्तुतस्त्वतः पदेन अध्ययनहेतुत्वोक्तेरानन्तर्यस्यार्थप्राप्तत्वादथशब्दानर्थक्यापत्त्या अथशब्दो मङ्गलार्थकः । तत्त्वं च समाप्तिविघ्नध्वंसान्यतरहेतुत्वेन विहितत्वम् । विधायको वेदस्त्वाचारानुमेयः । न च नास्तिककृत्यकादम्बर्यादावन्वयव्यतिरेकव्यभिचारेण मङ्गलस्य तद्धेतुत्वेन

विधिर्न संभवतीति वाच्यम् । व्यभिचारस्य हेत्वन्तरप्रयुक्ततया श्रुतिबोधितहेतुत्वबाधकत्वाभावाद्विघ्नसमसंख्याकमङ्गलत्वेन कारणत्वकल्पनाद्वेति जीर्णाः । समाप्तेर्बुद्धिप्रतिभादिदृष्टसामग्रीजन्यतया मङ्गलाजन्यत्वेन विघ्नध्वंसहेतुत्वेन विहितत्वं मङ्गलत्वमिति मणिकृत् । अत्र चिन्तयन्ति । विघ्नध्वंसस्य न भाव्यता, अपुरुषार्थत्वात् । न च समाप्तिजनकत्वेन तस्य पुरुषार्थता । समाप्तौ विघ्नसंसर्गाभावस्यैव जनकतया ध्वंसस्याजनकत्वात् । अन्यथा विघ्नात्यन्ताभाववदारब्धस्य समाप्तिर्न स्यात् । इष्टसाधनत्वभाव्यत्वयोः समानप्रकारकत्वनियमात् । न च विघ्नसंसर्गाभावस्यैव भाव्यता । अत्यन्ताभावप्रागभावयोर्ध्वंसवदजन्यत्वेन संसर्गाभावत्वस्य भाव्यतानवच्छेदकत्वात् । अतो ऽदृष्टद्वारा मङ्गलस्य बुद्धिप्रतिभादीनां च दृष्टद्वारा समाप्तिजनकत्वम् । यदि चोपवापकर्मत्वेन तुषाणामन्वये तादृशनियमस्य व्यभिचार इति विभाव्यते तदा कीर्णकरप्रतिपत्तिकर्मत्वातिरिक्तकर्मत्वान्वये तादृशनियमाद्विघ्नध्वंसत्वस्य भाव्यतावच्छेदकत्वानुपपत्तिरेव । अदृष्टकल्पनागौरवं तु विघ्नध्वंसस्य फलत्वेपि मङ्गले पूर्वोत्तराङ्गोपसंहृतये तुल्यमिति दिक् ॥

चोदनालक्षणोर्थो धर्मः ॥ २ ॥

अनेन सूत्रेण धर्मस्वरूपं तत्प्रमाणं चोच्यते । न तावद्यागापूर्वोभयनिष्ठा धर्मत्वं जातिः । यागस्य क्रियेच्छान्यतररूपतया क्रियात्वेनेच्छात्वेन च संकरात् । अतो ऽपूर्वनिष्ठैव सुखकारणतावच्छेदिका धर्मत्वं जातिरिति नैयायिकाः ॥ अपूर्वमजानतामपि यागादिकर्तरि धार्मिक इति प्रयोगाद्वेदबोधितेष्टसाधनत्वरूपो यागापूर्वोभयनिष्ठोपाधिरेव धर्मत्वमिति केचित् । वस्तुतस्तु अलौकिकश्रेयःसाधनत्वेन विहितक्रियात्वं विहितत्वं वा धर्मत्वम् । सोमादिष्वङ्गत्वेन विहितेष्वतिव्याप्तिवारणाय तृतीयान्तम् । अलौकिकत्वं च वेदतदुपजीविप्रमाणातिरिक्तप्रमाणागम्यत्वे सति प्रमितिविषयत्वम् । वेदत्वं च न मुख्यवेदप्रयोगविषयत्वं शाखासमुदायत्वं वा, शाखात्वस्य वेदैकदेशत्वरूपतया आत्माश्रयात् । नापि संदिग्धकर्तृकवाक्यत्वम् । वादिनोः संदेहाभावेन मध्यस्थस्य वादिपञ्चावयववाक्यप्रयोगजन्यतया तत्र पक्षतावच्छेदकज्ञानाभावेनान्योन्याश्रयात् । अतो मन्त्रत्वब्राह्मणत्वव्यापकजातिविशेषो वेदत्वमिति केचित् । तदपि पौराणमन्त्रब्राह्मणत्वव्यापकपुराणत्वे ऽतिव्याप्तेर्न युक्तम् । शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दाजन्यवाक्यार्थज्ञानजन्यप्रमाणशब्दत्वं वेदत्वमिति चिन्तामणिः । अत्र लौकिकवाक्ये ऽतिव्याप्तिवारणाय सत्यन्तं, घटादिवारणाय द्वितीयं, स्मृतिपुराणादिवाक्येष्वतिव्याप्तिवारणाय शब्दाजन्येति । तादृशेश्वरीयज्ञानजन्यत्वाद्वेदस्य लक्षणसमन्वयः । अपौरुषेयवाक्यत्वं वेदत्वम् । अपौरुषेयत्वं च पौरुषेयभिन्नत्वम् । पौरुषेयत्वं च न तावत्स्वतन्त्रपुरुषप्रणीतत्वम् । स्वातन्त्र्यस्य निर्वक्तुमशक्यत्वाद्, व्यर्थविशेषणत्वात्, पठ्यमानभारते ऽव्याप्तेश्च । नापि शब्दाजन्यवाक्यार्थगोचरयथार्थज्ञानजन्यजातीयत्वं, पठ्यमानभारते अव्याप्तिवारणाय तज्जातीयेति । महाभारतादावसंभवात् सर्वस्यैव शब्दजन्यवाक्यार्थज्ञानजन्यत्वात् । तदुच्चारणेच्छाजन्यवाक्यत्व, तदर्थधीजन्यवाक्यत्वं वा, सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वं वा स्मृतिपुराणादिष्वव्याप्तिवारणाय सजातीयेति । एतादृशपौरुषेयत्वाभावस्य वेदे सत्त्वात् । तथा च सिद्धमपौरुषेयं वाक्यं वेद इति । उपपादयिष्यते चेदमुपरिष्टात् । अनिष्टसाधनकलञ्जभक्षणादौ व्यभिचारवारणाय श्रेयःपदम् । अपूर्वे व्यभिचारवारणाय विहितेति । तत्त्वं च विधिविषयभावनान्वयित्वम् । तेन फलसाधनत्वेन विहितक्रियाद्रव्यगुणादीनां धर्मत्वम् । एतेन विहितक्रियाजन्यत्वमपूर्वनिष्ठमेव धर्मत्वमित्यपास्तम् । धर्मः क्षरति कीर्तनादित्यादौ तु लाक्षणिकः प्रयोगः । एवं च "यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणी"ति ।

"इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मः"

इति निर्धारणषष्ठ्यपि संगच्छते । न चैवं श्येने धर्मत्वापत्ति,रिष्टत्वात् । प्राणवियोगरूपहिंसायाः श्येनफलत्वेन श्येने हिंसात्वाभावान्निषेधाप्रवृत्तेरधर्मत्वायोगात् । तदुक्तम् ।

हिंसा हि फलमेतेषां भिन्ना तेभ्यः स्वरूपतः ।
सा हि प्राणवियोगात्मा श्येनस्तत्रासिवत्पृथक् ॥

यदि च प्राणवियोगानुकूलव्यापारस्य हिंसात्वमुपेयते तदाप्यदृष्टाद्वारकव्यापारस्य हिंसात्वात् श्येने तदभावः सुवचः । अस्तु वा हिंसात्व तथाप्यग्नीषोमीयहिंसावद्विधेयतया निषेधाप्रवृत्तेर्धर्मत्वोपपत्तिः । यागे रागादङ्गे वैधी प्रवृत्तिरित्यादि प्राभाकरवचनं निर्युक्तिकत्वादनादेयम् । यदि च तत्र हिंसात्वाभावेप्यदृष्टद्वारकमरणानुकूलव्यापारस्याभिचारत्वेन

"अभिचारमहीनं च त्रिभिः कृच्छ्रैर्विशुध्यति"

इति स्मृत्या ऽभिचारस्य निषिद्धतया तत्राधर्मत्वं विभाव्यते, तदा तस्यान्यतररूपेण धर्मत्वेपि न क्षतिः । अलौकिकपदेनैव विवाहार्थमिथ्यावादस्य विधेयत्वेपि धर्मत्वं व्यावर्त्यते । तस्य विवाहमात्रसाधनतया तदभावात् । अत एव

पञ्चानृतान्याहुरपातकानि

इति पातकत्वाभावमात्रं तत्र, न तु धर्मत्वम् । उपनिषज्जन्यात्मज्ञानस्याविद्यानिवृत्तिद्वारा मोक्षजनकस्य प्रमाणान्त-

रप्राप्तत्वाच्चालौकिकत्वमिति न तत्रधर्मत्वम् । अस्तु वा तत्र धर्मत्वम् । निषेधबोधितालौकिकानिष्टसाधनत्वमधर्मत्वम् । इदमप्यवधेयम् । स्वप्रकृतगङ्गास्नानादीनां मिथ्यात्वेपि श्रेयः-साधनतया धर्मत्वम् ।

"यस्यांयस्यामवस्थायां यद्यत्कर्म करोति यः ।
तस्यांतस्यामवस्थायां तत्तत्फलमुपाश्नुते,, ॥

इति वचनात् । अतः सिद्धं क्रियादीनां धर्मस्वरूपत्वम् ॥ एतत्प्रमितिकरणं वेदः । तत्रापि प्राधान्येन विधिनिषेधौ । ननु कोयं विधिस्तेन च कथमलौकिकश्रेयःसाधनत्वबोध इति चेत् । अत्र केचित् । लिङादिश्रवणे प्रवृत्तिर्जायतइति लिङादिज्ञानं प्रवृत्तिसामग्रीजनकम् । सा च कृतिसाध्यत्वप्रकारकेच्छारूपा चिकीर्षा,तज्जनकज्ञानं च लिङादिभिर्जन्यते, तच्चेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानम् । अन्यतराभावे प्रवृत्त्यजननात्।अतो लिङादिज्ञानेन त्रितयज्ञानजननात् त्रितयेपि शक्तिः। पुष्पवन्तशब्दवद्युगपदर्थत्रयस्य बोधः । अन्वयश्च तेषां विधेयधात्वर्थे । एवं च यागादिनिष्ठेष्टसाधनताबोधाद्धर्मे प्रामाण्यं, निषेधेष्वपि कलञ्जभक्षणादावनिष्टसाधनत्वबोधादधर्मे प्रामाण्यमिति ॥ मीमांसकास्तु विधेः प्रवर्तनायां शक्तिः । शब्दजन्यप्रवृत्तौ प्रवर्तनाज्ञानस्य हेतुत्वात् । प्रवर्तनाज्ञानस्य प्रवृत्तिहेतुत्वम् अहमेनं प्रवर्तयामि आचार्यो मां प्रवर्त्तयतीत्यनुभवात् । न च तत्रेष्टसाधनत्वज्ञानमेवप्रवर्त्तकम् । अनिष्टसाधनेपि आचार्यप्रवर्त्तितोहं करोमीत्यनुभवात् । प्रवर्त्तना च परनिष्ठप्रवृत्तिहेतुः प्रवर्त्तकधर्मः। प्रवर्त्तकधर्मत्वं चाहमेनं प्रवर्तयामीति देवदत्तस्त्वां प्रवर्तयति नाहमित्यादिप्रतीतिसाक्षिकं, भोजनस्य स्वनिष्ठप्रवृत्तिहेतुत्वेन प्रवर्तनात्ववारणाय परनिष्ठेति प्रवृत्तिविशेषणम् । आचार्यत्वादिवारणाय प्रवृत्तिहेतुरिति । प्रवृत्तिहेतुलिङादिवारणाय धर्मत्वं समवेतत्वं बोध्यम् । स च धर्मो लोके इच्छादिरूपो वेदे तु तदसंभवाल्लिङादिनिष्ठो ऽलौकिकः कल्प्यते । प्रवृत्तिजनकत्वं च प्रवृत्तिविषयेष्टसाधनताज्ञानजननद्वारेत्याक्षिप्तेष्टसाधनताबोधकत्वात्सिद्धं विधेः प्रामाण्यम् । एतच्च नियोज्यान्वयवादे स्फुटीकरिष्यते । एवमर्थवादानामपीष्टसाधनयागविशेष्यकलक्षितप्राशस्त्यप्रकारकप्रमितिजनकत्वेन भावनाविशेष्यकप्राशस्त्यादिप्रमितिजनकत्वेन वा प्रकारांशे अनधिगतार्थगन्तृत्वं विशेष्यांशे धर्मप्रमाजनकत्वं चोपपादनीयम् । एवं मन्त्राणां निर्वापाग्न्यादिस्मारकत्वेनानधिगतार्थगन्तृत्वरूपप्रामाण्यासंभवेपि अविसंवादिफलकत्वमेव प्रामाण्यमिति जीर्णाः ॥ अङ्गताविधिकल्पनद्वारेष्टसाधननिर्वापादिविशेष्यकमन्त्रप्रकारकप्रकाश्यतादिसंसर्गकप्रमाप्रयोजकत्वेनोभयोपपत्तिरिति सोमेश्वरः ॥ प्रयाजादिमन्त्रादिविशिष्टेन भावयेदिति प्रयोगविध्यर्थे पदार्थे पदार्थविधया प्रामाण्यमिति मिश्राः ॥ वस्तुतस्तु मन्त्राणां मन्त्रवाक्यार्थबोधजनकत्वेनैव प्रामाण्यं निर्वापाग्न्यादिसंसर्गस्यानधिगतत्वेनानधिगतार्थगन्तृत्वोपपत्तेः । इष्टसाधननिर्वापस्य विशेष्यत्वाद्धर्मप्रामाण्योपपत्तेश्च । यदि च स्वसमानाधिकरणस्वाव्यवहितपूर्वक्षणवृत्तिज्ञानाविषयविषयकत्वरूपमनधिगतार्थकत्वं विभाव्यते तदा सुतरां स्मारकत्वे ऽपि प्रामाण्योपपत्तिः । एवं नाम्नां सप्रकारकप्रमितिजनकत्वेन प्रामाण्यम् ॥

तस्य निमित्तपरीष्टिः ॥ ३ ॥

धर्मे वेदः प्रमाणमित्युक्तं, तत्संभवति नवेति परीक्षा, प्रत्यक्षादीनां धर्मप्रामाण्यासंभवनिरूपणद्वारा क्रियतइत्यर्थः । किं नाम प्रामाण्यं, प्रमाकरणत्वम् । ननु किं प्रमात्वम् । उच्यते । यथार्थानुभवत्वम् । याथार्थ्यं च तद्वद्विशेष्यकत्वे सति तत्प्रकारकज्ञानत्वं, भ्रमवारणाय विशेष्यकान्तम्, रजतविशेष्यकद्रव्यत्वप्रकारकज्ञाने रजतत्वप्रमात्ववारकं तत्प्रकारकमिति । न च रङ्गरजतयो रजतरङ्गप्रतीतेः प्रमात्वापत्तिः, ज्ञानैक्येन तद्वद्विशेष्यकत्वतत्प्रकारकत्वयोः सत्त्वादिति वाच्यम् । तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वस्य विवक्षणात् । तत्रापि येन संबन्धेन तद्वत्त्वं तेन तत्प्रकारकत्वं बोध्यम् । अतो न समवायेन लोहितः स्फटिक इति ज्ञाने ऽतिप्रसङ्गः । न चैवं पाकरक्ते इदानीं श्यामरूपवानिति प्रतीतेः प्रमात्वप्रसङ्गः । यदवच्छिन्नेत्यस्य विवक्षितत्वात् । रूपप्रकारताया वर्तमानकालावच्छिन्नरूपवद्विशेष्यकत्वानवच्छेदकत्वात् । अन्ये तु अयं विनाशीत्यादौ मतुपो वर्तमानार्थत्वासंभवेन संबन्धार्थकत्ववदत्रापि संबन्धार्थकत्वादव्याहतमेव प्रमात्वमित्याहुः ॥ निर्विकल्पकस्य तु भ्रमप्रमोभयबहिर्भूतत्वमेवाकरे व्यक्तम् । अस्तु वा तस्यापि प्रमात्वं, विशेष्यावृत्त्यप्रकारकत्वस्यैव प्रमात्वात् । अत्र ज्ञानत्वघटितमेव प्रमात्वं सुवचं, तथापि तस्य स्मृतिसाधारण्येन तत्कारणस्य प्रमाणान्तरतापत्त्यानुभवत्वघटितमेवानुमन्यन्ते सांप्रदायिकाः । अनुभवत्वस्य जातित्वेन ज्ञानत्वाघटितत्वाच्च गौरवमित्यन्ये ॥ वस्तुतस्तु ज्ञानत्वघटितमेव तल्लाघवात् । न च स्मृतिकारणस्य प्रमाणान्तरतापत्तिः । इष्टत्वात् । निर्युक्तिकप्रवादस्य हेयत्वात् । अत एव मन्त्राणां स्मारकत्वे ऽपि प्रामाण्यम् । अनुभवत्वं च स्मृतिभिन्नज्ञानत्वं, स्मृतिजनकतावच्छेदकजातिविशेषो वा । न च स्मृतौ निश्चयत्वेन ज्ञानत्वेन वा जनकतेति वाच्यम् । गौरवात् । बहुतरानियताजनकवृत्तित्वाच्च । न च स्मृतितो ऽपि स्मृतिजननाच्चानुभवत्वेन स्मृतिहेतुतेति वाच्यम् । प्रथमानुभवस्यैव सं-

स्कारद्वारा तत्र हेतुत्वात् । न च स्मरणेनानुभवजन्यसंस्कारनाशात्स्मरणोत्तरमस्मरणप्रसङ्गः । चरमस्मृतेरेव तन्नाशकत्वकल्पनात् । अतो ऽनुभवत्वेन स्मृतिजनकता । संस्कारं प्रति तु उपेक्षान्यनिश्चयत्वेन । संशयात्संस्काराजननान्निश्चयेति । समानप्रकारकस्मृतेरेव संस्कारनाशकत्वकल्पनात्समूहालम्बनाद्वितो नैकैकगोचरक्रमिकस्मरणानुपपत्तिः । उद्बोधकसमवधानस्यैव तत्तत्स्मृतिजनकत्वात् । उपेक्षात्वं च प्रवृत्तिनिवृत्त्यजनकज्ञानत्वम् । तादृशेन संस्कारानुत्पत्तेः सर्वसंमतत्वात् । उपेक्षान्यत्वं च उपेक्षात्वात्यन्ताभावत्वम् । तेनांशे उपेक्षात्मकस्यांशे ऽनुपेक्षात्मकस्य सुवर्णतृणे इति ज्ञानस्याद्यांशेन संस्कारजनकत्वमप्रत्यूहम् । तदंशे उपेक्षात्वाभावसत्त्वात् । इदं रजतमिति ज्ञाने प्रकारांशे प्रमात्वाभाववत् । अतो ऽनुभवत्वं जातिः ॥ वस्तुतः संस्कारं प्रति उपेक्षान्यसंशयान्यानुभवत्वेन स्मृतिं प्रति ज्ञानत्वेन जनकता, नातः षण्डसंस्कारकल्पनेति युक्तम् । एवं च संस्कारजनकतावच्छेदकतया ऽनुभवत्वजातिसिद्धिरिति ॥ संस्कारश्च सविषयकः । अन्यथा पटविषयकानुभवस्य स्वजन्यसंस्कारसंबन्धेन स्मृतिहेतुत्वे घटत्वप्रकारकानुभवात् तद्विशेष्यकस्मरणापत्तिः । अतः समानप्रकारकसमानविशेष्यकसंस्कारस्य तादृशस्मृतिं प्रति हेतुत्वान्नानुपपत्तिः । एवं च स्मृतिजनकतावच्छेदके ऽनुभवत्वस्याप्रवेशेन लाघवम् । समानविशेष्यकसमानप्रकारकत्वेनैव स्मृतिजनकत्वादिति दिक् ॥ स्मृतित्वं च ज्ञातविषयकज्ञानत्वं, संस्कारजन्यज्ञानत्वं वा । एवं चाज्ञातविषयकं बाधकज्ञानरहितज्ञानं प्रमेति फलितम् । अनेनैवाशयेनागृहीतग्राहित्वं प्रामाण्यमित्याचक्षते । न चैवं गृहीतविषयकधारावाहिकज्ञानस्याप्रामाण्यप्रसङ्गः । कालस्य षडिन्द्रियवेद्यत्वेन पूर्वक्षणविशिष्टघटस्य विषयीकरणेन तादृशस्योत्तरज्ञानाविषयतया ऽनधिगतार्थविषयकत्वसंभवात् । मन्त्राणामनुवादवाक्यानां स्मृतीनां च स्वसमानाधिकरणस्वाव्यवहितपूर्वक्षणवर्त्तिज्ञानाविषयविषयकत्वस्वरूपागृहीतग्राहित्वेन प्रामाण्योपपत्तिः ॥ तानि च प्रमाणानि प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्ध्याख्यानि षड् लौकिकानि । धर्मप्रमाणानि विध्यर्थवादमन्त्रनामधेयस्मृतिशिष्टाचाररूपाणि षट् । धर्मभेदकानि शब्दान्तराभ्याससंख्यानामगुणप्रकरणान्तराणीति षट् । धर्माङ्गताबोधकानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्येति षट् । श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तिरूपाणि षट् क्रमबोधकानि । वचननामलिङ्गान्यतिदेशप्रमाणानि । स्थानापत्तिरूहप्रमाणम् । प्रत्याम्नानप्रतिषेधार्थलोपरूपाणि बाधप्रमाणानि । एवमेकत्रिंशदलौकिकप्रमाणानि । एषामालोकसंयोगादिवत्सहकारितामात्रं, विधिरेवात्र मानमित्यपि केचित् ॥ इदं तु चिन्त्यते । ज्ञानप्रामाण्यं ज्ञानहेतुभिन्नहेतुजन्यं ज्ञानग्राहकभिन्नज्ञानग्राह्यं वा, तज्ज्ञानसामग्रीजन्यं ज्ञानग्राहकसामग्रीग्राह्यं वेति ॥ अत्र नैयायिकाः । प्रमात्वं ज्ञानसामान्यकारणभिन्नकारणजन्यतावच्छेदकम् । ज्ञानवृत्त्यनित्यधर्मत्वात् । अप्रमात्ववदित्यनुमानेन प्रमात्वस्येन्द्रियादिगतगुणजन्यत्वं सिद्ध्यति । दोषाभावस्य कारणत्वे गौरवात् । पीतः शङ्ख इति शङ्खप्रमानुत्पत्तिप्रसङ्गाच्च । अन्वयव्यतिरेकाभ्यां तद्धेतुकत्वसिद्धेश्च । एवं च प्रमायां गुणः भ्रमे दोषः कारणम् । किं च रङ्गादपि रजतज्ञानोत्पत्तिदर्शनान्न ज्ञानमात्रस्य तत्प्रकारकत्वावच्छिन्नतद्धुद्विशेष्यकत्वनियमः । अतस्तत्र भिन्ना सामग्री वाच्या । ज्ञानसामान्यकारणजन्यत्वे जन्यज्ञानमात्रस्य प्रमात्वप्रसङ्गः । तेन प्रामाण्यमप्रामाण्यं च परत उत्पद्यते । एवं ज्ञानान्तरेण गृह्यते । तच्च इदं ज्ञानं प्रमा, गुणवत्कारणजन्यत्वात्, अर्थक्रियासंवादाद्, बाधाभावाद्, इत्याद्यनुमानम् । संवादत्वं च तद्विषयविषयकत्वम् । न चैवं वेदवाक्यजन्ययागस्वर्गसाध्यसाधनभावज्ञाने ऽर्थक्रियासंवादाभावाद् न कदापि प्रामाण्यनिश्चयः स्यादिति वाच्यम् । तेषामीश्वरवाक्यजन्यतया गुणवत्कारणजन्यत्वेन तदनुमानात् । न चार्थक्रियादिज्ञानेषु कथं प्रामाण्यनिश्चय इति वाच्यम् । अगत्या तत्र स्वतःप्रामाण्यग्रहाङ्गीकारात् तस्मात्परतः प्रामाण्यं निश्चीयतइत्याहुः ॥ सिद्धान्तस्तु अनन्तगुणानां हेतुत्वमपेक्ष्य ज्ञानसामान्यसामग्रीजन्यत्वस्यैवोचितत्वात् । दोषवदिन्द्रियजन्यस्यापि धर्म्यंशे प्रमात्वाच्च । एतेन गुणज्ञानज्ञाप्यत्वं दोषाभावज्ञानज्ञाप्यत्वं चापास्तम् । अनेकदोषाभावानामननुगतत्वेन गौरवात् । अतो न ज्ञानोत्पत्तेः परतस्त्वं, नापि ज्ञप्तेः परतस्त्वं संभवति । तथाहि । नोदकाहरणरूपार्थक्रियाज्ञानेनार्थनिश्चयद्वारा पूर्वज्ञाने प्रामाण्यनिश्चयः । तस्यापि स्वप्नावस्थायामर्थव्यभिचारेण तेनार्थनिश्चयासंभवात् । नापि तज्जन्यसुखोप्तत्त्या । अयथार्थादपि स्वप्ने चन्दनलेपादिज्ञानात्सुखोत्पत्तेस्तस्याप्यर्थव्यभिचारात् । किं चोदकाहरणादिरूपार्थक्रियया व्याप्यविधया घटनिश्चयः । व्याप्तिश्च संबन्धरूपेति नागृहीते संबन्धिनि ग्रहीतुं शक्यते । तत्र संबन्धिघटज्ञाने स्वत एव प्रामाण्यनिश्चयो वाच्यः । एवं गुणज्ञानसंवादज्ञानयोरपि । न चैताभ्यां विषयो निश्चेतुं शक्यते । न च तत्रापि ज्ञानान्तरेण प्रामाण्यनिश्चयः । अनवस्थापत्तेः । एवं च स्वत एवार्थतथात्वनिश्चयो वाच्यः । एवं तर्हि घटादिज्ञानेपि स्वत एव प्रामाण्यं, तस्यापराधाभावात् । तेन ज्ञानग्राहकेणैव तस्य ज्ञानमिति सिद्धं प्रामाण्यज्ञप्तेः स्वतस्त्वम् । किं च ज्ञानं न प्रत्यक्षम् । तस्य प्रत्यक्षत्वे निर्विकल्पप्रत्यक्षवारणाय निष्प्रका-

रकत्वनिर्विशेष्यकत्वनिःसंसर्गकत्वानां विनिगमकाभावेन त्रयाणामपि प्रतिबन्धकत्वकल्पने गौरवात् । न च विशिष्टवैशिष्ट्यप्रत्यक्षे विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुतया तदभावाच्च निर्विकल्पकप्रत्यक्षतापत्तिरिति वाच्यम् । विशेष्ये विशेषणमिति रीत्या एकत्रोभयमिति रीत्या वा तादृशप्रत्यक्षे विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुत्वाभावेन तद्रीत्या निर्विकल्पकप्रत्यक्षापत्तेर्दुर्वारत्वात् । एवं चावश्यकप्रतिबध्यप्रतिबन्धकभावकल्पनमपेक्ष्यात्मनिष्ठगुणप्रत्यक्षे तादात्म्येन ज्ञानस्यैव धर्माधर्मभावनानामिव ज्ञानभावनादृष्टसाधारणवैजात्यकल्पनया तज्जात्यवच्छेदेनैव वा प्रतिबन्धकत्वकल्पनमुचितम् । जानामीत्याद्यनुभवानामपि अनुभवामीत्युपनीतभानत्वम् । एवं च विषयनिष्ठज्ञाततया तन्निष्ठमेव ज्ञानमनुमीयते । घटो ज्ञानवान् ज्ञाततावत्त्वादिति । तत्र घटत्वनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन ज्ञानानुमितौ तादृशप्रकारतानिरूपितविशेष्यतारूपप्रामाण्यग्रहः । न च ज्ञाततायाः प्रमात्वाव्याप्यतया तदनुमापकत्वासंभव इति वाच्यम् । प्रमात्वस्याननुमेयत्वात् । ज्ञानानुमाने समानसंवित्संवेद्यतया ज्ञानत्ववत्प्रमात्वस्य स्वतस्त्वसंभवात् । न च ज्ञातताया मानाभावः, तस्या विषयज्ञानातिरिक्ताया आवश्यकत्वात् । तथाहि । न तावद्विषयता ज्ञानस्वरूपा । घटप्रकारकभूतलविशेष्यकज्ञानाद्भूतलप्रकारकघटविशेष्यकानुव्यवसायापत्तेः । नापि विषयस्वरूपा, विशिष्टज्ञानसमूहालम्बनयोरवैलक्षण्यापत्तेः । अत उभयातिरिक्ता, सा च नित्या, लाघवात् । अन्यथा ऽनन्ततत्तद्विषयकज्ञानैरनन्ततत्तद्विषयतोत्पत्तितन्नाशकल्पनागौरवापत्तेः । एवं च नष्टयुधिष्ठिरादिविषयकज्ञानोत्पत्तिरपि सुलभेति युक्तम् ॥ अन्ये तु आत्मघटयोर्व्याप्यतालक्षणः संबन्धो मानसप्रत्यक्षः सविषयतेत्याहुः । तेषां भावं नाकलयामः ॥ अन्ये तु तत्तज्ज्ञानजन्या तत्तद्विषयनिष्ठा ज्ञातता सा च नष्टभाविविषयनिष्ठापि । न चासतोः कथं कार्योत्पत्तिरिति वाच्यम् । द्वित्वादिवदुत्पत्तौ बाधकाभावात् । न च तत्र नष्टद्वित्वस्य स्मरणमिति वाच्यम् । अननुभूतद्वित्वस्य स्मरणासंभवात् । न च यावदाश्रयप्रत्यक्षं विना कथं द्वित्वप्रत्यक्षमिति वाच्यम् । लाघवेन संयोगप्रत्यक्षे तस्य हेतुत्वाङ्गीकारेण व्यासज्यवृत्तिधर्मप्रत्यक्षे तस्य हेतुत्वाभावेन तत्प्रत्यक्षस्य सुवचत्वात् । न चाश्रयप्रत्यक्षं विना कथं तन्निष्ठगुणप्रत्यक्षमिति वाच्यम् । वायुप्रत्यक्षाभावे ऽपि तन्निष्ठस्पर्शप्रत्यक्षस्य त्वयैवाङ्गीकारात् । अतो द्वित्वबहुत्वयोर्भाविभूतपदार्थनिष्ठत्ववत् तत्तज्ज्ञानोत्पाद्यविषयताया अपि भाविभूतपदार्थनिष्ठत्वम् । न च द्वित्वादेर्गुणस्य समवायिकारणाभावेन भाविभूतयोः कथमुत्पत्तिरिति वाच्यम् । समवायसंबन्धेन भावकार्योत्पत्तौ तादात्म्यसंबन्धेन द्रव्यस्य जनकतेति समवायिकारणकार्यकारणभावस्य वक्तव्यत्वेन संख्यायाः पदार्थान्तरत्वेन विषयतावत् समवायेनोत्पत्त्यभावेन समवायिकारणानावश्यकत्वात् । संख्याया विषयतायाश्चाभावं जानामि, अभावौ द्वौ, चतुर्विंशतिर्गुणा इति प्रतीत्या ऽभावगुणादिनिष्ठतया स्वरूपसंबन्धेनैवोत्पत्त्यङ्गीकारेण समवायिकारणानावश्यकत्वात् । न च द्वित्वादीनामाकस्मिकत्वप्रसङ्गः । अपेक्षाबुद्धेरेव जनकतया नियामकत्वात् । अपेक्षाबुद्धेरभिव्यञ्जकत्वे तु नित्यतया न तदापत्तिप्रसङ्गोपि । न च कार्यसमवेतगुणत्वेनानित्यत्वानुमानात् कथं नित्यत्वमिति वाच्यम् । एकत्वेनाङ्गीकृतासु अरुणादिव्यक्तिषु व्यभिचाराद्, अनुकूलतर्काभावेनाप्रयोजकत्वाच्च । न च आश्रयाभावे विषयताद्वित्वादेः क्वावस्थानमिति वाच्यम् । कपालादिनाशे क्षणमात्रं घटादेरिव विषयताया अपि सत्त्वे बाधकाभावात् । अतो नष्टघटादावपि घटो ज्ञात इत्याद्यनुभवाद् भूतभाविनिष्ठत्वमिति दिक् ॥ अत एव ज्ञानजन्यज्ञाततावत्त्वाद् घटं जानामीति कर्मत्वोपपत्तिः । तस्मादतिरिक्ता विषयता । किं च ज्ञानेच्छाकृतिसंस्काराणां समानविषयकत्वेनैव कार्यकारणभावे लाघवादपि विषयता ऽतिरिक्ता, सैव च ज्ञातता, तयैव ज्ञानं गृह्यते, तन्निष्ठप्रमात्वमपीति स्वतस्त्वम् ॥ नन्वेवमिदं ज्ञानं प्रमा नवेति संदेहो न स्यात्, ज्ञानाग्रहे धर्मिज्ञानाभावात्, तद्ग्रहे तन्निष्ठप्रमात्वस्यापि ग्रहादिति चेन्न । नायं ज्ञानविशिष्टप्रमात्वसंशयः, किं तु विषयसंशय एवायं, पुरोवर्त्तिनि रजतत्वमस्ति वा नवेति रजतादिज्ञानोत्तरं प्रमात्वस्मरणे रजतादिज्ञाननाशात्तत्संशयोपपत्तेः । यद्वा धर्मिज्ञानाभावेपि धर्मीन्द्रियसन्निकर्षमात्रेण संशयोत्पत्तिः । यद्वा सत्यपि प्रामाण्यज्ञाने दोषवशादेव तदुत्पत्तिः । दोषश्चानभ्यासदशानापन्नत्वमिति । तस्माद्युक्तं ज्ञप्तिप्रामाण्यस्य स्वतस्त्वमिति ॥ गुरवस्तु घटादिमात्रविषयकं न ज्ञानं, सर्वज्ञानानां त्रिपुटीविषयकत्वाङ्गीकारात् । त्रिपुटी च ज्ञानात्मविषयरूपा, तेन सर्वं ज्ञानं घटं जानामीत्याद्यनुव्यवसायाकारमिति स्वेनैव स्वस्य घटादिविषयकत्वग्रहणात्ततः प्रामाण्यमित्याहुः ॥ मुरारिमिश्रास्तु घटादिज्ञानोत्तरं घटं जानामीत्याद्यनुव्यवसायो जायते तेन घटत्ववद्विशेष्यकत्वघटत्वप्रकारकत्वरूपप्रामाण्यग्रह इत्याहुः ॥ वस्तुतो जलादिज्ञानोत्तरं प्रवृत्त्या जलादिनिश्चयोत्तरं पूर्वज्ञाने प्रामाण्यं जानातीति कश्चित् ॥ कश्चित्तु ज्ञात्वा प्रामाण्यं प्रवर्तते इत्यनुभवाज्ज्ञातं ज्ञानं प्रमा न वेत्यादिसंशयानुभवाच्च ज्ञानमात्रे स्वतः प्रामाण्यनिश्चयो युक्तः । नापि परतः प्रामाण्यं क्व चित्सिद्धान्तभङ्गापादकम् ।

किं तु कुत्र चित्स्वतः प्रामाण्यग्रहः । क्व चित्परत इत्यननुगत एव प्रामाण्यग्रहः । शक्तिग्रहवत् । तेन वेदजन्यज्ञाने संशयाभावात्स्वतः प्रामाण्यं, तद्भिन्नज्ञाने तु परतः प्रामाण्यं ज्ञायते । अत एव स्मृतिजन्यज्ञाने सन्मूलकत्वगुणज्ञानादेव प्रामाण्यं सिद्धान्तेप्यङ्गीकृतमिति युक्तमुत्पश्यामः ॥

इति गागाभट्टकृतभाट्टचिन्तामणौ ज्ञानप्रामाण्यविचारः ॥

---

## ॥ अथ बालभारतस्य ॥

॥ द्वितीयः सर्गः ॥

क्षीरोदचिरशायित्वात् पीयूषमिव संचितम् ।
स्फारयन् भारतं व्यासः श्रीकृष्णावतरः श्रिये ॥ १ ॥
राजानमहनि म्लानमथ भीष्मार्कतेजसा ।
गोभिरुल्लासयामास निशाकाले जनार्दनः ॥ २ ॥
निशान्तोद्घटिते वीरमुक्तिद्वारे रवौ ततः ।
कौन्तेयाः कौरवाः क्रौञ्चव्यूहव्यूहकृतोऽमिलन् ॥ ३ ॥
शिरांसि भूभुजामेव शरपातैरपातयत् ।
फलानि नालिकेराणामिव सिन्धुसुतस्ततः ॥ ४ ॥
राज्ञां भीष्मशरोत्क्षिप्ता मूर्धानो युधि नृत्यताम् ।
वरयित्रीं सुरवधूमिव द्रष्टुमगुर्दिवम् ॥ ५ ॥
क्षिप्तानां नभसि क्ष्मापमूर्ध्नां स्वस्मिन् प्रपातिनीः ।
रोषारुणा दृशोऽपश्यद्भीष्मः पुलककन्दलः ॥ ६ ॥
धुनीसुतशरोद्धूतैरास्यै राज्ञां सकुण्डलैः ।
सर्वाङ्गमफलद्व्योमसूर्येन्दुफलपादपः ॥ ७ ॥
इत्यस्य विशिखापातैर्वातैरिव विलोडिताम् ।
विलोक्य वाहिनीं क्रोधादधावद्धनुमद्ध्वजः ॥ ८ ॥
मर्माविद्भिर्द्विषां बाणैः कटाक्षैरिव सुभ्रुवः ।
पुरतस्ताड्यमानोऽपि हृष्यन्नेवापपात सः ॥ ९ ॥
स बाणविद्धसर्वाङ्गं गलद्रक्तं द्विषद्बलम् ।
मनसः कोपतप्तस्य धारागृहमिव व्यधात् ॥ १० ॥
तमभ्यधावत् क्रुद्धोऽथ धुनीसूनुः किरन् शरान् ।
संहर्षात्तालपातालकुमारप्रकरोपमान् ॥ ११ ॥
पार्थस्य चापतः सिन्धोर्मर्यादात इवोर्मिभिः ।
शरैः प्रसन्ने रुन्धद्भिर्लोकान् रोद्धुमवारितैः ॥ १२ ॥
विक्रमोपक्रमस्ताभ्यां तदा कोऽपि तथा दधे ।
व्योमापि विशिखस्तोमै रोमाञ्चीव यथैक्ष्यत ॥ १३ ॥
स्पर्शैकपेयं मधुरममरीकारकारणम् ।
अन्येऽप्यारेभिरे वीरा द्वन्द्वयुद्धरसायनम् ॥ १४ ॥
क्षतेभकुम्भोद्यन्मुक्ताछलोच्छलितसीकरम् ।
रेमे कलिङ्गवाहिन्यां भीमः साकं जयश्रिया ॥ १५ ॥
भीमभिन्नकरिश्रेणिरक्तवेणिषु मज्जताम् ।
तत्रासन् जीवितत्राणशरणं जीवतां मृताः ॥ १६ ॥
व्योम्नि भीमक्षतोत्क्षिप्ता द्विरदा नीरदा इव ।
रक्तवर्षैः कलिङ्गेषूत्पातं कंचिदसूचयन् ॥ १७ ॥
भीमोऽवधीच्छक्रदेवं भानुमन्तं च गोपतिम् ।
इत्युत्थिते ध्वनौ सिद्धा न्यधुरिन्द्रार्कयोर्दृशम् ॥ १८ ॥
ततो मूर्च्छत्यतद्वीरमुन्ननाद वृकोदरः ।
दिग्गजा द्यां तदैक्षन्त त्रुटद्ब्रह्माण्डशङ्कया ॥ १९ ॥
कुम्भीन्द्रेणेव भीमेन यमलीलावता युधि ।
ध्वस्तो वीररसस्येव प्रासादः केतुमान् नृपः ॥ २० ॥
अथ भीष्मास्त्रविरथस्तां चमूमत्यतापयत् ।
मारुतिर्मारुतोद्धूतजीमूत इव भानुमान् ॥ २१ ॥
सौभद्रशरवीचीभिः कुमारः कुरुभूपतेः ।
बालद्रुम इवाम्भोदधाराभिर्विधुरीकृतः ॥ २२ ॥
शराः सुयोधनादीनामितश्चेतश्च पातिनः ।
व्यजयन् संयतिश्रान्तमार्जुनिं वाजमारुतैः ॥ २३ ॥
द्रुमाणां कुसुमानीव यशांसि क्ष्माभुजां क्षिपन् ।
तत्रातित्वरया वायुरिवायात् कपिकेतनः ॥ २४ ॥
विपक्षविशिखास्तस्मिन्नकिंचित्करतां ययुः ।
नरेऽतिनीरसे नारीनिरीक्षणगुणा इव ॥ २५ ॥
कीनाशदासहस्ताग्रैरिव भल्लिनखोत्कटैः ।
असून् क्रष्टुं विपक्षेषु विष्वक् पेते तदाशुगैः ॥ २६ ॥
कौन्तेयकृत्तैर्वीरेन्द्रैर्विध्यमानः समन्ततः ।
उद्विग्न इव तीक्ष्णांशुस्तदास्ताद्रिगुहां गतः ॥ २७ ॥
ततोऽवहारव्याहारभाजि भीष्मे भुजाभृतः ।
ययुर्निजनिजं धाम धामनिह्नुतवह्नयः ॥ ॥ २८ ॥

द्वितीयमहः ।

अथोल्बणरणश्रद्धाः संनद्धा दोर्भृतोऽभितः ।
रत्नकङ्कटकान्त्योच्चैः क्षपाशेषे तमोऽक्षिपन् ॥ २९ ॥

भीष्मो व्यूहं व्यधाद्वैरिदर्पसर्पाय गारुडम् ।
तद्व्यूहगलहस्तार्थमर्धचन्द्रमथेन्द्रभूः ॥ ३० ॥

अभीष्टोद्दामसङ्ग्राममिथोदानसुहृत्तमाः ।
परस्परं प्रशंसन्तः प्रीता भुजभृतोऽमिलन् ॥ ३१ ॥

तदापलिप्रक्रीलालबालार्कद्युतिमालया ।
न प्रत्यङ्गं लगन्तोऽपि प्रहारा जज्ञिरे भटैः ॥ ३२ ॥

प्रविष्टौ कुरुसैन्येषु द्रुतं भीमघटोत्कचौ ।
भक्ष्येषु सममाबद्धौ बालकस्य कराविव ॥ ३३ ॥

तच्चापयोः शरासारैर्नो मुहुर्मुहुः कृति ।
कटाक्षैर्लङ्घितास्तीक्ष्णैः कालरात्रिदृशोरिव ॥ ३४ ॥

रिपुराजशरश्रेणिस्तयोरुपरि निष्फला ।
पपात जलभृद्वृष्टिर्भूधरार्णवयोरिव ॥ ३५ ॥

भीमसेनपृषत्केन हृदयान्तःप्रवेशिना ।
मूर्च्छा कौरवभूभर्तुर्मृतिदूतीव योजिता ॥ ३६ ॥

तस्मिन् मूर्च्छाभृति हृते द्रुतेन रथशायिनि ।
कृष्णाद्यैस्तद्बलं चक्रे विवशं विशरारुभिः ॥ ३७ ॥

द्रुतमाहितमोहेन नृपेणोत्साहितस्ततः ।
पालिं वीररसस्येव भीष्मः कृष्टं धनुर्दधौ ॥ ३८ ॥

मुहुर्धन्व धुनीसूनोः शरापातैर्नतोन्नतम् ।
भटालिचर्वणव्यग्रयमवक्त्राभमैक्ष्यत ॥ ३९ ॥

एकैककङ्कपत्रास्तवीचीभिरुधिरार्णवे ।
सपार्थरथपत्त्यश्वं निमज्जयितुमुद्यतः ॥ ४० ॥

विश्वेषामीशभीष्मस्य विशिखोर्मिषु मज्जताम् ।
न किं भवार्णवोत्तारपोतः पोतत्वमेषितः ॥ ४१ ॥

इत्युपालभ्यमानोऽन्तरनन्यमतिकैर्नृपैः ।
विभुर्भीष्मरथस्याग्रं निनाय रथमार्जुनम् ॥ ४२ ॥

युग्मम् ।

प्रसरन् भीष्मदावाग्निबाणकीलाचयोऽयतः ।
चण्डैः पाण्डवकाण्डानां वातैरेव विवर्तितः ॥ ४३ ॥

रिपुच्छेदोच्छलद्बाणे चापचक्रे किरीटिनः ।
प्राकार इव संलीनं पाण्डुसैनिकजीवितैः ॥ ४४ ॥

भीष्मस्य विशिखानेव छिन्दन् भिन्दन् परान् शरैः ।
गुरोर्भक्तिं च शक्तिं च दर्शयामास वासविः ॥ ४५ ॥

ततस्त्रसद्भयो भीष्मः कृष्णौ नाराचपञ्जरे ।
निनाय निजशौर्यश्रीजयश्रीकेलिकीरताम् ॥ ४६ ॥

कृष्णौ बिबभतुर्भीष्मप्रहारक्षतजोक्षितौ ।
कालीकटाक्षपिशुभौ कालभुजाविव ॥ ४७ ॥

गाङ्गेयवह्निमुख्यानां सायकानां समागमे ।
तदासीत् पाण्डवी सेना गणिकेव पराङ्मुखी ॥ ४८ ॥

शिथिलं युध्यमानेऽथ फाल्गुने गुरुगौरवात् ।
सुघोरैर्भीष्मनिर्घातैः साक्रन्दे चाखिले बले ॥ ४९ ॥

स्वार्थसार्थच्छिदे पार्थ पदबन्धमथो युधि ।
यदेवं दीप्रमुद्भ्रान्तं न वृद्धं विनिषेधसि ॥ ५० ॥

अद्य हन्म्यहमेवामुं किं त्वयेत्युद्गमद्वचाः[2] ।
चण्डांशुचक्रचण्डांशुचक्रज्वालाज्वलन्नभाः ॥ ५१ ॥

दृष्टः कथं बलद्भिर्विस्त्रसद्भिस्त्रिदशैरपि ।
रथाग्रादुद्धवेगश्रीरुत्ततार क्रुधा हरिः ॥ ५२ ॥

कालापकम् ।

तं प्रेक्ष्यायान्तमुद्भ्रान्तः स्मेरो हृष्यन् प्रसन्नदृक् ।
रोमाञ्ची चञ्चयंश्चापमाचष्ट वसुसप्तमः ॥ ५३ ॥

एह्येहि नाथ मुक्तिं मे द्राग् दत्तां त्वत्सुदर्शनम् ।
मूढाश्चिरं तपःकष्टं सेवन्ते दर्शनान्तरम् ॥ ५४ ॥

द्रुतमुक्तिकृते कैश्चिन्नाथ पूज्योऽपि कोप्यसे ।
धन्योऽहमपकर्तास्मि किंचिन्न कुपितोऽसि च ॥ ५५ ॥

इत्युक्तिपरिभक्त्या च चक्राग्निस्पृहयापि च ।
नमन्मूर्धनि गाङ्गेये मुक्तिलक्ष्मीकटाक्षिते ॥ ५६ ॥

अनूत्पत्य समुत्थाप्योन्मुन्यारोप्य रथे हरिम् ।
जज्ञेऽर्जुनस्त्रिजगतीप्रेक्षणीय इव क्षणम् ॥ ५७ ॥

युग्मम् ।

विश्वेश कोऽयमारम्भः संरम्भस्त्यज्यतामयम् ।
प्रभावः प्रेक्ष्यतां प्रेक्षन् स्व एव मयि बिम्बितः ॥ ५८ ॥

इत्युक्त्वा हृष्टवैकुण्ठकम्बुनादैः कृतोद्यमाः ।
ज्यानादैराह्वयत् पार्थः सुरीर्वैरवरोत्सुकाः ॥ ५९ ॥

भुजगीव भुजा तस्य कृष्टचापबिलाग्रजा ।
असूतेवाशुगान् सर्पान् नरेन्द्रैरपि दुर्धरान् ॥ ६० ॥

---

१ सममेव द्वौ इति पा० ।

२–द्रुतः इति पा० ।

तुल्यकालोच्छलच्छस्त्रैररोधि क्रोधनैरयम् ।
संभूय भूभुजां भारैर्जम्भारिरसुरैरिव ॥ ६१ ॥

अथोत्कृत्तद्विषट्देहवाहनायुधकेतनम् ।
माहेन्द्रमस्त्रं माहेन्द्रिर्व्यधाद्विश्वक्षयक्षमम् ॥ ६२ ॥

कोऽप्यासीत् खण्ड्यमानानां पाण्डवास्त्रैर्विरोधिनाम् ।
धीवरैर्धूयमानानां शङ्खानामिव निस्वनः ॥ ६३ ॥

पतन्त्येव बलाङ्गानि विखण्ड्याहर्तुमुत्सुकाः ।
व्यलसन् रक्तकुल्यासु पिशाचास्तिमिरूपिणः ॥ ६४ ॥

धनंजयजये वीरा बहुभ्यासभुजामदम् ।
तदोच्चैरमुचन्नब्धितरणे तारका इव ॥ ६५ ॥

पार्थास्त्रक्षुण्णसैन्योद्यद्रक्तसिक्त इवारुणः ।
दिनेशः प्रविवेशाब्धौ तदा स्नानमनोरथः ॥ ६६ ॥

आप्रभातं रणाम्भोधौ संपृक्तं दिवसात्यये ।
तदिति व्यथितं चक्रद्वयं विघटितं तदा ॥ ६७ ॥

तृतीयमहः ।

अथावासेषु निर्वर्त्य शर्वरीं स्वप्नसंगरैः ।
व्यूहेन्द्रं कौरवाश्चक्रुरर्धचन्द्रं च पाण्डवाः ॥ ६८ ॥

अथ रक्षोघसंवृत्तप्रातःकृत्यपिशाचकम् ।
भीष्माभिमन्युप्रमुखा विदधुर्युद्धमुद्धतम् ॥ ६९ ॥

भूपालैः कालबालस्य प्रातराशं प्रकल्पयन् ।
कर्मव्यूह इवात्मानं भीष्मोऽर्जुनमयोधयत् ॥ ७० ॥

कृताधिकप्रतिकृतैस्तौ हृष्यन्तौ मुहुर्मिथः ।
चिरं चिक्रीडतुश्चारुसौहार्दौ सुहृदाविव ॥ ७१ ॥

अभिमन्युः शरासारैरेकः शत्रूननेकशः ।
आच्छादयदुडुस्तोमान् करैरिव दिवाकरः ॥ ७२ ॥

पौरव्यपुत्रं दमनं नृपं सांयमनिं पुनः ।
कर्मकालाविव ज्ञानी धृष्टद्युम्नस्तदावधीत् ॥ ७३ ॥

भीमो भेजे द्रुतं प्रीतिभावं धावत्सु संमुखम् ।
मगधेन्द्रगजेन्द्रेषु भेकेष्विव भुजंगमः ॥ ७४ ॥

गदापाणेस्तदा तस्य पादातस्य प्रसर्पतः ।
तदोत्पातेन नागेन्द्रा द्वयेऽपि विचकम्पिरे ॥ ७५ ॥

खण्डितं तद्गदापातैरुच्छलन्मौक्तिकच्छलात् ।
तदोत्पपात कुम्भिभ्यो दिक्कुम्भिजयजं यशः ॥ ७६ ॥

भीमस्य पादपातैर्या पीडा भोगिविभोरभूत् ।
नैव सा तद्गदोत्क्षिप्तगजेन्द्रगिरिपाततः ॥ ७७ ॥

घ्नति तस्मिन् रयोत्पातापातरक्ताब्धिमज्जनैः ।
गजान् वीक्ष्याकुलान् देवाः क्षिप्राद्रेरस्मरन् हरेः ॥ ७८ ॥

इति क्षतसमस्तेभवल्गनं फाल्गुनाग्रजम् ।
कृतान्तमिव संभ्रान्तमीयुर्दुर्योधनादयः ॥ ७९ ॥

काण्डेन कुरुराजेन ताडितः पीडितः क्षणम् ।
स्तब्धोऽभूत् तद्वधोपायं ध्यायन्निव वृकोदरः ॥ ८० ॥

पार्थेनाथ रथस्थेन पृषत्केन हृदि क्षतः ।
वर्णिकां मरणस्येव मूर्च्छामाप सुयोधनः ॥ ८१ ॥

सेनापतिसुषेणाख्यौ जलसंधसुलोचनौ ।
भीममुग्रं भीमरथं भीमबाहुमलोलुपम् ॥ ८२ ॥

समं विवित्सुविकटौ दुर्मुखं दुष्प्रधर्षणम् ।
इमान् यमातिथीकृत्य तत्सुतांश्च चतुर्दश ॥ ८३ ॥

चतुर्दशसु विश्वेषु व्रजतां यशसामसौ ।
उच्चैः सहचरीचक्रे सिंहनादान् वृकोदरः ॥ ८४ ॥

विशेषकम् ।

विषमास्त्रप्रगल्भेऽथ भगदत्ते समेयुषि ।
संचुकोच नवीनेव रामा भीमपताकिनी ॥ ८५ ॥

भीमो मूर्च्छन् ध्वजालम्बी विद्धस्तदिषुणा हृदि ।
घूर्णन् बभौ स्तम्भबद्धो मदान्ध इव सिन्धुरः ॥ ८६ ॥

स्वभटारूढदिग्दन्तिघटो मायी घटोत्कचः ।
तमिभस्थं सुरेभस्थस्ततस्तातक्रुधारुधत् ॥ ८७ ॥

तदस्त्रवृष्टिभिः शौर्यलताकन्दौ तदापतुः ।
उत्कर्षं भगदत्तश्च सुप्रतीकश्च तद्गजः ॥ ८८ ॥

प्रणादैर्भगदत्तस्य सुप्रतीकस्य चाद्भुतैः ।
द्राङ्नरेन्द्रा गजेन्द्राश्च बभूवुर्विमदास्तदा ॥ ८९ ॥

समुज्झितेव दिङ्नागैर्घटोत्कचहृतैरिव ।
तदा तमीतमःक्रान्ता सिन्धुमग्नेव भूर्बभौ ॥ ९० ॥

मायिनां रणराज्याय रक्षसां दिवसो निशा ।
इति भैमिभिया भीष्मोऽवहारं व्याहरज्जवात् ॥ ९१ ॥

न मृतास्तावदद्येति ध्यायन्तः कौरवा ययुः ।
श्वोऽप्यमून् हन्म एवेति स्मरन्तः पाण्डवाः पुनः ॥ ९२ ॥

चतुर्थमहः ।

किं त एव जयन्तीति निशि पृष्टः सुतेन ते ।
भीष्मो जगाद गां विष्णुमना विष्णुपदीनिभाम्[1] ॥ ९३ ॥
स्वयंभुवा भुवो भारं निराकर्तुं स्मृतः पुरा ।
गतः प्रत्यक्षतां तेन सूतो नारायणः प्रभुः ॥ ९४ ॥
विश्व विश्वेश विश्वात्मन् विश्वकार्यौघ विश्वधीः ।
जय विश्वस्थिते विश्वक्षय विश्वोदय प्रभो ॥ ९५ ॥
ज्ञाताज्ञातप्रभो[2] ज्ञान ज्ञप्ते तुभ्यं नमो नमः ।
मोक्षभोग्यप्रभो भोगमोक्षे तुभ्यं नमो नमः ॥ ९६ ॥
ये जघ्निरे त्वया नाथ दिवस्तोषाय दानवाः ।
भारयन्ति भुवं देवीं मानवीभूय तेऽधुना ॥ ९७ ॥
यदंशमेरुमौलिर्द्यौः पातालं यत्तलं पुनः ।
हर्तुं तस्या भुवो भारं भगवन् भव मानवः ॥ ९८ ॥
स्वयं स्वयंभुवेत्युक्ते स श्रीनारायणः प्रभुः ।
नरेण सुहृदा सार्धं भेजे भूषणतां भुवः ॥ ९९ ॥
वासुदेवार्जुनीभूय ताभ्यां गुप्तो युधिष्ठिरः ।
जयत्येव स धर्मात्मा युक्तस्तेन समं शमः ॥ १०० ॥
इति भीष्मगिरा भूपः प्रभावं भावयन् हरेः ।
आसाद्य सदनं वीरविनयैरनयन्निशाम् ॥ १०१ ॥
आपपात ततः प्रातर्भीमभीष्ममुखो मृधे ।
प्रवीरप्रकरः श्येनमकरव्यूहसंहतः ॥ १०२ ॥
कालक्रीडावने युद्धे व्यत्ययाद्वीरशाखिषु ।
यशःकुसुमशुभ्रेषु तदा पेतुः शिलीमुखाः ॥ १०३ ॥
बाणभिन्नेभकुम्भासृग्धाराभारैर्बभूव भूः ।
प्रेतप्रीतिकरी प्रेतपतिपुण्यप्रपेव सा ॥ १०४ ॥
न दन्तिघातजं रक्तं रुग्रक्तेयं रवेरिति ।
भ्रातरः कातरा धीरैर्वारयांचक्रिरे चनाः ॥ १०५ ॥
भिन्नभूपमुखाम्भोजैः कर्णान्तोत्थशिलीमुखैः ।
इभवद्भीमभीष्माद्यैर्जगाहे वाहिनीद्वयम् ॥ १०६ ॥
ध्वनद्वुन्व नदद्वाणं सत्त्वालंकारभासुरम् ।
सात्यकिः सुरनारीभ्यो रथिनामयुतं ददौ ॥ १०७ ॥
नीरन्ध्रयन् शरैः शत्रुपलायनपरान् दिशः[3] ।
तमरुद्ध ततो युद्धसूरिर्भूरिश्रवा जवात् ॥ १०८ ॥
युद्धाय धावतस्तत्र दश सात्यकिनन्दनान् ।
भूरिश्रवाः शरैश्चक्रे दिक्पालेभ्यो बलीनिव ॥ १०९ ॥
ततः प्रवृद्धवेगौ तौ वीरौ तरलितक्रुधौ ।
मिथः क्रियाभिर्विरथौ धृतासी समधावताम् ॥ ११० ॥
भुग्नाशाकरिकूर्माहिवराहगिरितिद्रुरात् ।
तत्सत्यसत्त्वावष्टभ्यं नामज्जद्भूतलं यदि ॥ १११ ॥
भीमदुर्योधनाभ्यां तौ स्वरथाभ्यामथान्यतः ।
द्राङ्नीतौ तौ तु मेनाते जीवनं निधनाधिकम् ॥ ११२ ॥
तदा तु सात्यकिसुतध्वंसक्रोधी धनंजयः ।
धनंजयोऽभवद्धाम्ना क्रूरः कौरवकानने ॥ ११३ ॥
अब्दादिव महाशब्दाद्गाण्डकोदण्डतोऽर्जुनात् ।
भूभृन्मौलिषु संपातं व्यधुः शम्पा इवेषवः ॥ ११४ ॥
तद्बाणपातव्यथिता पिण्डीभूय भवच्चमूः ।
इतश्चेतश्च लुलितैर्मृत्योः कवलतां ययौ ॥ ११५ ॥
इति निर्दम्भसंरम्भात् तदा जम्भारिजन्मना ।
अहन्यन्त सहस्राणि नृपाणां पञ्चविंशतिः ॥ ११६ ॥
दूतैः पल्लवितं रक्तैः पुष्पितं हारमौक्तिकैः ।
मौलिभिः फलितं राज्ञां तदा दुर्मन्त्रितं तव ॥ ११७ ॥
एवमाखण्डलो चण्डशूरमण्डलखण्डिनि ।
दुर्गमं दुर्गमम्भोधिं बिम्बोऽम्बरमणेरगात् ॥ ११८ ॥
युद्धादप्यधिकं कष्टं कलयन् रक्तकर्दमे ।
उत्सुकोऽप्यगमद्धाम वीरवारः शनैः शनैः ॥ ११९ ॥

पञ्चमहः ।

पुनः प्रभाते संनद्धाः क्रुद्धाः कौरवपाण्डवाः ।
ते क्रौञ्चमकरव्यूहभाजो युयुधिरेऽधिकम् ॥ १२० ॥
विपक्षादागतेभ्योऽपि तीक्ष्णेभ्योऽपि भृशं मुखे ।
ते मार्गणेभ्यस्तृणवद्दातारो वपुरप्यदुः ॥ १२१ ॥
समरेऽस्मिन् यमक्रीडातडाग इव खेलताम् ।
नाकर्षन् क्षतजं केषां जलौकस इवेषवः ॥ १२२ ॥
कोपाटोपारुणरुची पेततुर्भीमपार्षतौ ।
कुरुषु स्फुरदिष्वासभ्रुवौ यमदृशाविव ॥ १२३ ॥
पीड्यमाना दृढं ताभ्यां प्रियदोर्भ्यामिव प्रिया ।
सिस्वेद च चकम्पे च संमुमोह च सा चमूः ॥ १२४ ॥

1—मिव इति पा० ।
2 ज्ञातज्ञेय इति प० ।
3 दृशः इति पा० ।

अङ्गुल्विट्पूर्णमध्यानि चापचक्राणि दोष्मताम् ।
भोजनाहृतकीनाशसैन्यभाजनतां ययुः ॥ १५७ ॥
रिपुबाणोच्छलद्रक्तधारासिक्तपुरोभुवः ।
अनुत्थितरजःपूराः सुखं शूराः प्रतस्थिरे ॥ १५८ ॥
चिपद्भिः क्ष्माभृतां मौलीन् नारिकेलीफलोपमान् ।
परा लङ्घितुमारेभे वाहिनीं भीष्मसायकैः ॥ १५९ ॥
तेन दीर्णोदरैश्छिन्नैः रुण्डैर्मुण्डैश्च भूभुजाम् ।
कपर्दकन्दुकाकारै रेमिरे यमकिंकराः ॥ १६० ॥
दधतः प्रधनाधिक्यं कुण्डलीकृतधन्वनः ।
अहो वृद्धस्य तस्याभूत् पार्थसेना पराङ्मुखी ॥ १६१ ॥
चस्तासु तासु सेनासु भीष्मः खेलन् यशोऽर्णवे ।
भीममेकं पुरोऽपश्यत् प्रतिबिम्बमिवात्मनः ॥ १६२ ॥
असृग्धाराबभुर्भीमहृदि भीष्मशराहते ।
रिपुदाहक्रियानिर्यत्प्रकोपाग्निशिखा इव ॥ १६३ ॥
अथ भीमशरायस्तसारथिः शान्तनो रथः ।
वाहैराहवतोऽकर्षि ददद्भिर्द्विषतां यशः ॥ १६४ ॥
बह्वाशिनं कुण्डधारं विशालाक्षापराजितौ ।
महोदरं पण्डितकं सुनाभं चेति ते सुतान् ॥ १६५ ॥
निघ्नतः सप्त भीमस्य प्रतापदहनस्तदा ।
समुच्छलद्भिः कीलालैः सप्तकील इवाज्वलत् ॥ १६६ ॥
युग्मम् ।
अथ बन्धुवधक्रुद्धो युद्धोग्रस्तनयस्तव ।
आदित्यकेतुरादित्यवर्त्यैकारि बकारिणा ॥ १६७ ॥
विचास्य द्विट्चभूर्भीमो भीमोऽथ चयभीमवत् ।
उन्ननादोच्चकैर्भालप्रह्लढज्वलदीक्षणः ॥ १६८ ॥
उलूपीपन्नगीसूनुर्दिवि पिचार्जुनेन यः ।
प्रार्थितो युद्धसाहाय्यं स इरावानथोत्थितः ॥ १६९ ॥
चूडामणिप्रभापिङ्गैः स पातालतुरंगिभिः ।
आवृतः प्राविशद्वैरिसेनां दावो वनीमिव ॥ १७० ॥
स गान्धारबलाम्भोधिं तरङ्गाभतुरंगमम् ।
कालानल इवोद्दीप्तो हेतिपातैरशोषयत् ॥ १७१ ॥
स हत्वा शकुनेः पुत्रान् सप्त दृष्टो न कैर्नदन् ।
अग्निमूर्तिरिवोच्चैस्तद्रक्तनिर्झरबिम्बितः ॥ १७२ ॥
दुर्योधनप्रणुन्नोऽथ तमभ्यायादलम्बुसः ।
मायामयहयारूढरचोभटघटावृतः ॥ १७३ ॥
मुखोच्छलच्छिखिज्वालाविषोल्काविषमायुधैः ।
रचःफणिभरैर्जेचे युध्यमानैः चयो मिथः ॥ १७४ ॥
मण्डलाग्रेण कोदण्डं खण्डयित्वाधिरत्नसः ।
चक्रे विरावान् दीप्तोऽसाविरावान् भीतिदस्तदा ॥ १७५ ॥
उत्प्लुत्यालम्बुसस्त्रासात् खं गतः खगवत् ततः ।
अनूत्पपात तं चासिचञ्चुः श्येन इवार्जुनिः ॥ १७६ ॥
इरावत्खड्गवल्ल्या खे सवितेवाब्दलेखया ।
द्विधाकृतोऽप्ययं क्रव्यात् पूर्णाङ्गो मुहुरैक्ष्यत ॥ १७७ ॥
अथ मायिन्यजेयेऽस्मिन् युद्धवल्गिनि फाल्गुनिः ।
कीनाशदासदोर्दण्डचण्डान् फणभृतोऽदिशत् ॥ १७८ ॥
चूडामणितडित्ताराः चयधाराधरा इव ।
ते तस्मिन् भस्मनि कृते ववृषुर्विषमं विषम् ॥ १७९ ॥
तार्क्ष्यीभूयामुना भुज्यमानानां फणिनां मणीन् ।
पततः कार्ष्णिरैचिष्ट दिवा नचत्रवृष्टिवत् ॥ १८० ॥
भुक्त्वाथ भोगिनो भूरीन् कृतभीमनिजाकृतिः ।
पलादः प्रोन्ननाद द्राङ्लोकत्रयभयंकरः ॥ १८१ ॥
परो मायामयीं मूर्तिं कृत्वा योद्धुं निशाचरः ।
खड्गेनापातयत् पश्चात् कार्ष्णेरुत्कुण्डलं शिरः ॥ १८२ ॥
दृष्ट्वा हतमिरावन्तं नेतुमन्तं द्विषच्चमूम् ।
क्रुद्धोऽस्तदिक्करिक्रीडां चवेडां चक्रे घटोत्कचः ॥ १८३ ॥
स राज्ञां षड्रसास्वादसंभूतरससंकरैः ।
स्वभटान् प्रीणयन् मांसैर्ममन्थारिवरूथिनीम् ॥ १८४ ॥
गजेन्द्रगजानीको मानी कोपारुणेचणः ।
तमभ्यधावद्धात्रीशो मृत्युं यम इवोद्धतः ॥ १८५ ॥
घटोत्कचस्य चतुरश्चकर्त सुभटानयम् ।
शौर्यश्रीमन्दिरस्तम्भानिव जम्भारिविक्रमः ॥ १८६ ॥
शक्तिर्घटोत्कचेनाथ चिप्ता क्ष्मापतये रयात् ।
नागं वङ्गाधिपेनान्तर्नीतं विघ्नरुषापिषत् ॥ १८७ ॥
रङ्गद्गुजतरङ्गेऽथ घटोत्कचबलेऽचले ।
उद्वेलार्णवतुल्याभूद् वाहिनीयं पराङ्मुखी ॥ १८८ ॥

१—खोच्छिखः इति पा० ।
२—रोद्धस्त—इति पा०

नमद्भूमि भ्रमद्वार्धि त्रुटदद्रि त्रसज्जगत् ।
तदाभूत् कोऽपि संमर्दः पलादभगदत्तयोः ॥ १८६ ॥
श्रुत्वा सुतवधं जिष्णुर्निमन्त्रितयमः क्रुधा ।
चक्रे महीं महीन्द्राणां शीर्षैर्मोदकशालिनीम् ॥ १९० ॥
अनावृष्टिं कुण्डलिनं व्यूढोरोदीर्घलोचनौ ।
कुण्डभेदं दीर्घबाहुं सुबाहुं कनकध्वजम् ॥ १९१ ॥
विरजं चेति राजेन्द्र हत्वा नव सुतांस्तव ।
भ्रातृपुत्रवधक्रोधी भीमोऽमृद्वाद्भवच्चमूम् ॥ १९२ ॥
युग्मम् ।
पाण्डवैः खण्ड्यमानानामिति भूप भवद्भुवाम् ।
कृपयेव पयोराशिं गतेऽर्केऽवहृतं नृपैः ॥ १९३ ॥
अष्टममहः ।
आनाय्य कर्णो राज्ञाथ पृष्टः पार्थपराभवम् ।
ऊचेऽहं संहराम्येकः शत्रून् भीष्मोऽस्त्रमुज्झतु ॥१९४॥
सारालंकारभाग्दीपैर्महीपैरिव भासुरः ।
गतोऽथ पार्श्वं भीष्मस्य तेन राजेति पूजितः ॥ १९५ ॥
भीष्मं भूयोऽभ्यधात् तात भग्नस्त्वद्बाहुनामुना ।
क्षत्रान्तकारी कृष्णस्यावतारो भृगुनन्दनः ॥ १९६ ॥
इति शक्तोऽपि यद्येतान् क्षत्रियान् कृष्णरक्षितान् ।
न हंसि कृपया तत् तान् हन्तु कर्णस्त्वदाज्ञया ॥१९७॥
इत्युक्ते भूभुजा भीष्मः कोपोद्भूतिं जयन् जगौ ।
केन जेयोऽर्जुनः किंतु दृश्या मन्मार्गणाः प्रगे ॥ १९८ ॥
इति प्रीते गते राज्ञि प्रातः शान्तनवो व्यधात् ।
द्राग्व्यूहं सर्वतोभद्रं प्रतिव्यूहं च सौकृतिः ॥ १९९ ॥
सेनासंपातखातायां रणोत्थरुधिरच्छलात् ।
रेजिरे रत्नगर्भायां गर्भरत्नद्युतिस्तदा ॥ २०० ॥
सौभद्राम्बुदनाराचधाराचक्रप्रपञ्चतः ।
ययौ दिशि दिशि त्रस्तं धार्तराष्ट्रबलं ततः ॥ २०१ ॥
तमभ्यधावत् क्रोधेन धुर्यो दुर्योधनेरितः ।
क्ष्वेडयैव क्षिपन् प्राणान् भूपालानामलम्बुसः ॥ २०२ ॥
द्रौपदेयैर्मदाटोपज्वलितैः स्खलितः क्षणम् ।
सोऽभिमन्युरथं निन्ये शल्यैः शल्लकतुल्यताम् ॥ २०३ ॥
प्ररूढशरशैलाग्रशृङ्गतां कार्ष्णिमार्गणैः ।
नीयमानो भयात् तेने सोऽथ मायां तमोमयीम् ॥२०४॥
कवलीकृतमार्तण्डं तदोच्चैः प्रसृतं तमः ।
रक्षोमुखाग्निकीलाभिः स्फारोद्गारमिवाबभौ ॥ २०५ ॥
तमोबलज्वलन्नेत्ररक्षोभिः क्षोभिते बले ।
आर्जुनिर्व्यतनोदस्त्रं तापनं स्वप्रतापवत् ॥ २०६ ॥
क्व यास्यतीदमित्यर्कैः सर्वतोऽभ्युदितैस्तदा ।
क्ष्मायां छायामयमपि ध्वान्तमग्रासिहासिभिः ॥ २०७ ॥
तमसि ग्रस्यमानेऽर्कैस्तमःश्यामं निजं वपुः ।
निभाल्येव भयार्तेन पलादेन पलायितम् ॥ २०८ ॥
प्रहारचण्डैर्नोचालि वाचालैर्घटितोऽप्यथ ।
भीष्मादिभिः परिणतैः सौभद्रोऽद्रिरिव द्विपैः ॥ २०९ ॥
अथेदृक्सुतसंघट्टकुपितः कपिकेतनः ।
अस्त्रं ससर्ज वायव्यं कायव्ययकृते द्विषाम् ॥ २१० ॥
लोठितानां भटेन्द्राणां यशांसीव समीरणाः ।
छत्राण्युत्क्षिप्य मलिनीचक्रिरे धूतधूलयः ॥ २११ ॥
क्षिप्ताः शैलास्ततः शैला द्रोणेन स्खलितानिलाः ।
अधावन्नधरीकर्तुमिन्द्रवैरादिवेन्द्रजम् ॥ २१२ ॥
अथ पार्थेन नाराचसार्थेन कुलिशत्विषा ।
विकीर्य जालं शैलानामालभ्यत बलं द्विषाम् ॥ २१३ ॥
वातपुत्रगदाघातक्षतमातङ्गजातजाः ।
तत्रासृक्सरितः सस्रुः प्रेतहासौघफेनिलाः ॥ २१४ ॥
शिरःकलिङ्गकैः रुण्डकूष्माण्डैर्भुजचिर्भटैः ।
क्षिप्रं राज्ञां व्यधाद्भीष्मः कालशाकवनं मृधम् ॥ २१५ ॥
भीष्मबाणाच्युतै राज्ञां छत्रैश्चामरसंयुतैः ।
कीर्णा तदाशसां शीर्षैर्मुक्तकेशैरिवावनिः ॥ २१६ ॥
भीष्मो भालाग्रविश्रान्तभ्रमत्कुण्डलपाणिभिः ।
वृद्धवेतालनारीभिर्दत्ताशीः प्राहरच्चमूः ॥ २१७ ॥
इत्यस्य निष्ठापयतो भटान् भीष्मस्य सत्वरः ।
प्रतिज्ञां स्मारयन् विष्णुर्जिष्णुमभ्यानयत् पुरः ॥ २१८ ॥
गाङ्गेयमार्गणगणैः सर्वाङ्गप्रचरिष्णुभिः ।
सर्पिसर्पस्य बीभत्सुश्चन्दनस्य निभो बभौ ॥ २१९ ॥
प्रभुं वधाय धावन्तं क्रुधावन्तं विलोक्य तम् ।
वपुः सपुलकं बिभ्रद्भीष्मो धुन्वन् धनुर्जगौ ॥ २२० ॥
एह्येहि नाथ गोविन्द मां प्रतोदेन ताडय ।
उत्तारणमिव संसारारण्योल्लङ्घनमन्यरम् ॥ २२१ ॥

इत्युक्तिभाजि भीष्मे द्रागनूत्पत्य धनंजयः ।
मुकुन्दं स्यन्दनं निन्ये नत्वा युद्धप्रतिज्ञया ॥ २२२ ॥
अथार्जुनशरोत्क्षिप्तराजराजिमुखच्छलात् ।
प्रनृत्यत्सु कबन्धेषु पद्मवृष्टिरिवाभवत् ॥ २२३ ॥
प्रेक्ष्य भीष्मक्षुरप्रायोत्क्षिप्तान् क्ष्मापशिरोभरान् ।
राहुव्यूहभियेवाब्धिं गतेऽर्केऽवाहरन् नृपाः ॥ २२४ ॥

नवममहः ।

अथ ध्यायन् वरूथिन्या मथनं पार्थपार्थिवः ।
निशायामवदद् दीनमना दानवसूदनम् ॥ २२५ ॥
यदि त्रिजगतीसत्त्वमेकीभूयापि युध्यते ।
तथापि नापगेयस्य क्वामं रोमापि कम्पते ॥ २२६ ॥
गाङ्गेयजेयताबुद्धिस्तन्मूढमनसामियम् ।
अन्तायैव पतङ्गानां दीपे रत्नस्पृहेव नः ॥ २२७ ॥
अथाचष्ट हरिः कष्टमिदं भजसि भूप किम् ।
आपगेयं प्रगे हन्मि को भेदः कृष्णकृष्णयोः ॥ २२८ ॥
नृप नाहमसत्यत्वं सत्यसंध तनोमि ते ।
अनपायं जयोपायं प्रष्टव्यस्तु पितामहः ॥ २२९ ॥
इति निश्चित्य कृष्णेन सोदरैश्च समं नृपः ।
गुप्तो गत्वा जयोपायं ततः पप्रच्छ भीष्मतः ॥ २३० ॥
गाङ्गेयोऽथ जगौ युद्धाटोपे कोऽपि न मां जयेत् ।
तज्जेयोऽहमवध्येन स्त्रीपिण्डेन शिखण्डिना ॥ २३१ ॥
श्रुत्वेति ह्रीनतो राजा तं नत्वा शिबिरं ययौ ।
प्रातर्जातमहाव्यूहैर्वीरव्यूहैरथोत्थितम् ॥ २३२ ॥
प्रवीरमुक्तैः शस्त्रौघैर्दिवि संघट्टिभिर्मिथः ।
चूर्णिता इव चण्डांशुकरा वह्निकणा बभुः ॥ २३३ ॥
वीरेषुपूरा वीरेषु ययुर्व्योम्ना भुवा पुनः ।
तच्छायच्छद्मना कालकिंकराणां कराः समम् ॥ २३४ ॥
ततश्चलच्चमूत्खातक्षितिस्पृष्टाः फणीशितुः ।
रत्नभास इवेक्ष्यन्त युद्धोत्थाः क्षतजोर्मयः ॥ २३५ ॥
आसन्नवीरलग्नेऽपि द्विड्बाणे स्वाङ्गवह्निनि ।
रक्तबालातपप्रेक्षामासन् वीराः क्षतभ्रमात् ॥ २३६ ॥
वीरैः शिखण्डिगाण्डीविप्रमुखैर्विमुखीकृतम् ।
गौरयन् कौरवं चक्रं विचक्राम पितामहः ॥ २३७ ॥
ममज्जुर्वीरगात्रेषु तन्मुक्ता बाणपङ्क्तयः ।
यथा मरुस्थले नीरधारा धाराधरोज्झिताः ॥ २३८ ॥
भीष्मः शिरोभिर्भूपानां क्षुरप्रोत्क्षेपपातितैः ।
ममर्द द्विट्चमूं यन्त्रोपलगोलकुलैरिव ॥ २३९ ॥
गोचक्रतप्रविचस्तविश्वस्य ज्वलनोऽजनि ।
कृकलास इवार्कस्य शिखण्डी तस्य संमुखः ॥ २४० ॥
अथाभ्यधत्त तं भीष्मः कामं प्रहर हन्त माम् ।
कृतिनोऽर्थी इवापात्रे न यान्ति त्वयि मे शराः ॥ २४१ ॥
भीष्म प्रहर मा जीवन् जीवन् यास्यसि नाद्य मत् ।
इत्युक्त्वा पार्षतः काण्डैस्तं बिभेदार्जुनेरितः ॥ २४२ ॥
रोमाग्रखण्डितोद्दण्डं शिखण्डिविशिखेषु सः ।
रोपैरापूरयन् कृष्णो संजहार महारथान् ॥ २४३ ॥
नमद्भूस्फुटनोद्भ्रान्तस्वभ्रध्वान्तभरैरिव ।
रजोभिर्व्याप्तदिग् जज्ञे संमर्दो विद्विषां मिथः ॥ २४४ ॥
उत्पातजातसंभ्रान्तद्रोणाज्ञात्वरितास्ततः ।
कुरुवीरा धुनीसूनोः प्राकाराकारतां ययुः ॥ २४५ ॥
भीष्मस्यास्त्रैर्मणीभूषा बभुः कूटीकृता नृपाः ।
मेरुणेव तमाह्वातुं प्रहिताः शिखरश्रियः ॥ २४६ ॥
दूरादेत्याथ घृणया भीष्मोऽभाषत धर्मजम् ।
खिन्नोऽस्मि कदनादस्मात् पुत्र पातय मामिति ॥ २४७ ॥
इत्युक्त्वा शिथिलास्त्रोऽपि स बहूनां क्षयोऽभवत् ।
क्रीडन्नपि करी मूलोन्मूलनं हि महीरुहाम् ॥ २४८ ॥
रक्ताब्धिबूडदन्द्रीन्द्रतुङ्गमातङ्गपुंगवः ।
भीमो बभूव बीभत्सोः शरव्यतिकरः परः ॥ २४९ ॥
भीष्मो दिव्यास्त्रवान् धावन् मध्यमेत्य शिखण्डिना ।
निवारितोऽर्जुनध्वंसे सीधुर्नवामृताहुतौ ॥ २५० ॥
तं क्षणेऽस्मिन् रणे स्वैरमभ्येत्य वसवोऽभ्यधुः ।
कालोऽयं धन्य संन्यासहेतुस्तेऽस्माकमीहितः ॥ २५१ ॥
अथ भीष्मः श्लथारम्भः शिखण्डिविशिखव्रजैः ।
वातात्यकुसुमस्तोमैरारामिक इवार्चितः ॥ २५२ ॥
पतच्छीर्षोच्छलद्रक्तच्छलनृत्यत्पराक्रमः ।
चक्रेऽरिचक्रं साक्रन्दं सांक्रन्दनिरिषुव्रजैः ॥ २५३ ॥
भीष्मेणास्त्रं धृतं यद्यत् तत् तदैन्द्रिस्तदाच्छिदत् ।
स्वीकृतं वादिना पक्षवितानमिव संमतिः ॥ २५४ ॥

छिन्दन्तो भीष्मशस्त्राणि भिन्दन्तो वैरिभूपतीन् ।
निन्दन्तोऽथ पविं देवैरसूयन्त नरेषवः ॥ २५५ ॥
भीष्मे शिखण्डिकाण्डौघगुप्ताः पार्थेषवोऽपतन् ।
वियोगिनि विधूद्योतलीनाः स्मरशरा इव ॥ २५६ ॥
द्रोणादीन् निघ्नतो गुप्ताः पेतुर्भीष्मेऽस्य सायकाः ।
पश्यन्त्याः पतिमेणाक्ष्याः कटाक्षा इव वल्लभे ॥ २५७ ॥
वज्राङ्कुरैरिव गिरिर्भिद्यमानोऽथ तच्छरैः ।
दुःशासनं संनिधिस्थं भीष्मः सस्मितमभ्यधात् ॥२५८॥
भुजंगमा बिलानीव जालानीव रवेः कराः ।
मन्मर्माणि विशन्त्येते विशिखा न शिखण्डिनः॥ २५९ ॥
पुत्रप्रेम्णा सुरेन्द्रेण वज्रधारा इवार्पिताः ।
पार्थस्यामी पृषत्कास्ते किरातरणसाक्षिणः॥ २६० ॥
अथो कथान्ते शिथिलः काण्डपात इव क्रुधा ।
शिक्षार्थमिव पौत्राय गाङ्गेयः शक्तिमक्षिपत्॥ २६१ ॥
तां छित्त्वाथ त्रिधा भीष्मं रोम्णि रोम्णि व्यपूरयत् ।
मुहुर्मुहुर्मुकुन्देन तर्ज्यमानोऽर्जुनः शरैः ॥ २६२ ॥
यमाविष्टेष्विव स्वाङ्गमजानत्सु क्षताकुलम् ।
मिथस्तदा मदान्धेषु युद्धोद्दुर्जिषु राजसु ॥ २६३ ॥
रणोद्रेकमृतानेकवीरद्वारमिवात्मनि ।
देवे दर्शयति च्छिद्रमपराह्णविवर्तने ॥ २६४ ॥
छिन्नः पार्थशरैर्भिन्नतनुः श्रीशन्तनोः सुतः ।
क्षितौ पपात घस्रान्ते लघ्वंशुरिव घर्मरुक् ॥ २६५ ॥
विशेषकम् ।
पृष्ठनिःसृतकाण्डौघसुखपर्यङ्कशायिनि ।
वीरेऽस्मिन् वीरकृत्कर्ता हाहाकारो जगत्स्वभूत्॥२६६॥
दुःखशोकभयार्तेषु गलदश्रुदृगम्बुषु ।
महामोहप्रविष्टेषु कम्पमानेषु राजसु ॥ २६७ ॥
अलुप्तात्मनि गाङ्गेये दीप्यमाने द्युवागभूत् ।
उत्तरायणकालाय प्राणान् योगीन्द्र धारय ॥ २६८॥
युग्मम् ।
नियुक्तैर्गङ्गया हंसरूपैर्मुनिवरैरपि ।
इत्येवं कथिते योगी स्थितोऽस्मीति जगाद सः ॥ २६९ ॥
शान्तनिः सान्त्वयित्वाथ चकितान् कुरुपाण्डवान् ।
शिरो मे लम्बते कष्टं धार्यतामित्यभाषत ॥ २७० ॥
उपधानाय धावत्सु धात्रीशेषु धनंजयः ।
शरैस्त्रिभिरथ प्राज्ञस्तन्मूर्धानमधारयत् ॥ २७१ ॥
स्तुवंस्तमथ गां वीरानभ्यधत्त धुनीसुतः ।
मदन्तमस्तु वो वैरं पत्यन्तं योषितामिव ॥ २७२ ॥
निशि याचन् जलं हेमकुम्भहस्तेषु राजसु ।
दिव्यैर्जलैर्जलास्त्रस्य तर्पितः स किरीटिना ॥ २७३ ॥
तेनाथ पूजिते पार्थे पार्थिवेषु गतेषु च ।
एत्य प्रसादयामास कर्णस्तं प्रसृताञ्जलिः ॥ २७४ ॥
पातङ्गिमूचे गाङ्गेयः पृथायाः सूनुषु त्वया ।
सहोदरेषु संरब्धो मुच्यतां वत्स मत्सरः ॥ २७५ ॥
कर्णोऽभ्यधात् प्रभो वैरं न मे बन्धुषु किंतु माम् ।
अनुजानीहि मित्रैकसौहार्दवशगं युधि ॥ २७६ ॥
गङ्गासुतेनानुमतः पतङ्गतनयस्ततः ।
ययौ मन्दितवातेन स्यन्दनेन वरूथिनीम् ॥ २७७॥
तदनु दिनपतिश्रीभाजि भीष्मेऽस्तभाजि
प्रतिनृपति महास्त्रध्वान्तभीकम्पितानाम् ।
कुरुपतिपृतनानां कर्णवीरेन्दुतेजः-
प्रसरसरभसत्वव्याकुलं चित्तमासीत् ॥ २७८ ॥
भेजे श्रीजिनदत्तसूरिसुगुरोरर्हन्मतार्हस्थितेः
पादाब्जभ्रमरोपमानममरो नाम व्रतीन्द्रः कृती ।
षष्ठं पर्व गतं सुपर्वतटिनीसूनोरिदं तन्मति-
व्यक्तादर्शनबालभारतमहाकाव्ये रसस्रोतसि ॥ २७९॥
सर्गाभ्यामभवद् द्वाभ्याममुष्मिन् भीष्मपर्वणि ।
अनुष्टुभां चतुःशती षड्विंशतिसमन्विता ॥ २८० ॥
इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के भीष्मपर्वणि दशदिवससङ्ग्रामवर्णनं तदनु भीष्मवधो नाम द्वितीयः सर्गः ॥ २ ॥

---

## ॥ अथ बालभारतस्य द्रोणपर्वारम्भः ॥

॥ तत्र प्रथमः सर्गः ॥

क्षमां दधानः स गिरिं प्रधानः
सिद्ध्यै सतां व्यासमुनिर्महोच्चः ।
यः पुण्यकृत् पर्वशतावबद्ध-
भास्वन्महाभारतवंशहेतुः ॥ १ ॥

इत्थं पितुः पातकथां निशम्य
मूर्च्छां गतं धीनयनं प्रबोध्य ।
गत्वा पुनर्दृष्टरणोऽभ्युपेत्य
गावल्गणिस्तं क्षितिपं जगाद ॥ २ ॥

राजन् सुतास्ते पतितेऽथ भीष्म-
भानौ महामोहतमःसु मग्नाः ।
प्रीताः पुरः प्रेङ्खति कर्णदीपे
व्यधुर्विधेयेषु पुनः प्रयत्नम् ॥ ३ ॥

कर्णानुमत्या पृतनाधिपत्ये
द्रोणः प्रसन्नो विधिनाभिषिक्तः ।
वरप्रदः प्रार्थि सुयोधनेन
धृत्वा श्वसन्तं नृपमर्पयेति ॥ ४ ॥

नरो न रक्षां सविधे विधाता
यदा तदा धर्मसुतं ग्रहीष्ये ।
इत्युल्लसद्वाचि गुरौ कुरूणां
बले बभूव प्रबलप्रणादः ॥ ५ ॥

इत्थं विदित्वार्जुनरक्षितात्मा
क्रौञ्चाह्वयं व्यूहमधत्त धार्मिः ।
बभूव सज्जः शकटाभिधेन
व्यूहेन युद्धाय सुयोधनोऽपि ॥ ६ ॥

द्रोणस्ततः शोणहयो हिरण्य-
कमण्डलुस्थण्डिलचापकेतुः ।
आकर्णभास्वत्पलितोऽसितश्रीः
सुवर्णसंनाहरथः पुरोऽभूत् ॥ ७ ॥

उरः प्रविष्टस्य महाभटानां
दृग्वर्त्मनेव त्वरितं निरीय ।
कोपानलस्य ज्वलतो महोल्का
इव प्रपेतुर्द्विषतः पृषत्काः ॥ ८ ॥

कलम्ब*जालं परवाहिनीषु
विस्तीर्णमल्पान्तरगुम्फसान्द्रम् ।
द्रोणप्रमुक्तं परितोऽभिपत्य
प्रभूतजीवक्षयहेतु जज्ञे ॥ ९ ॥

प्रतापमित्रस्य रवेस्तनूजं
कालं करस्थं करबालमूर्त्या ।
अप्रीणयत् पौरवभूमिपाल-
कपालरक्तासवतोऽभिमन्युः ॥ १० ॥

तस्याथ मद्रेशजयद्रथाश्व-
सूतच्छिदास्फुरितासिलेखा ।
तेजोऽग्निकीलेव रराज राज-
वंशप्रतापोच्छलितस्फुलिङ्गा ॥ ११ ॥

भीमौ ततो मद्रनरेन्द्रभीमौ
भ्राम्यद्गदाभीतरवीन्दुतारौ ।
अधावतां भारनमद्धरित्री-
विचस्तशेषाहिवराहकूर्मौ ॥ १२ ॥

दक्षाणि वामान्यथ मण्डलानि
प्रदर्शयन्तौ मिलितौ रसेन ।
तौ पेततुर्जातमिथःप्रहारौ
वायुद्वयोत्थौ जलधेरिवोर्मी ॥ १३ ॥

रथेन कृष्टे कृतवर्मणाथ
शल्ये समुत्थाय रथेन भीमः ।
जघान शत्रोर्बलमुद्यदस्त्र-
सिन्दूरसीमन्तितदिग्वधूकः ॥ १४ ॥

कर्णस्य सूनुर्वृषसेनवीरः
शरप्रपातैः परिपीडितायाः ।
पञ्चेन्द्रियाणीव परध्वजिन्या
द्राग् द्रौपदेयान् विधुरीचकार ॥ १५ ॥

ततः प्रतिक्षारभसेन सिंह-
युगंधरव्याघ्रनृपान् कृपीशः ।
युधिष्ठिरेप्सुर्निजघान मान-
लोभप्रमादानिव धर्मलिप्सुः ॥ १६ ॥

तद्बाणभिन्ने प्रबले नृपाल-
मौलिप्रसूनस्रगनूपवासम् ।
नालीकनालैरिव हस्तिहस्तै-
र्दूरं पिशाचाः पपुरस्रपूरम् ॥ १७ ॥

कृत्तानुपादाय करीन्द्रकर्णान्
प्राणेश्वरीभिः परिवीज्यमानाः ।
मांसाद्यतृप्ताः सुखिनः पिशाचाः
किरीटिकोदण्डरवानशृण्वन् ॥ १८ ॥

* कलम्बो बाणः ।

सत्वचधर्मैकपराः पुरस्ता-
न्निरूपयन्तो युधि विश्वरूपम् ।
स्वयं नरेण प्रहताः सुसत्त्वा-
स्तत्त्वस्पृशां लोकमपि व्यतीयुः ॥ १९ ॥

इत्थं कृपीशेन किरीटिना च
निहन्यमानस्य बलद्वयस्य ।
पूर्णाम्बरेण ध्वनिनेव नुन्ने
गतेऽस्तमर्के रथिनोऽवजह्रुः ॥ २० ॥

प्रथममहः ।

शक्यो ग्रहीतुं न महीन्दुरैन्द्र-
गुप्तो गुरौ नक्तमिति ब्रुवाणे ।
तमाह्वयिष्ये जयिनं युधीति
त्रिगर्तभर्ता कुरुराजमूचे ॥ २१ ॥

पृथक् प्रभातेऽथ कृतार्धचन्द्र-
व्यूहः सुशर्मा चिरथायुतीभाक् ।
सुतं हरे राह्वयताशु योद्धुं
स्पर्धोद्धुरं क्रूरचमूमुखेन ॥ २२ ॥

ततोऽभिमन्त्र्य क्षितिपं तदग्रे
वीराग्रिमं सत्यजितं नियोज्य ।
धनुर्मिषव्यात्तमुखस्त्रिगर्त-
बलौघकालः प्रचचाल पार्थः ॥ २३ ॥

तेऽप्येककालं बलिनो बलौघाः
प्रहस्य बाणैः परिघप्रमाणैः ।
आच्छादयन्नर्जुनमुच्छलद्भि-
र्भरैस्तृणानामिव दीप्तमग्निम् ॥ २४ ॥

व्यावृत्तसिन्धूर्मिभरः प्ररुद्ध-
व्योमानिलः प्रोच्छलितोडुचक्रः ।
नतक्षितिर्निःश्रुतिकत्रिलोक-
स्तदैन्द्रिणावाद्यत देवदत्तः ॥ २५ ॥

तच्छब्दसंरम्भसुलम्भदेह-
स्तम्भानुभावेषु रिपूच्चयेषु ।
समुल्लिलेखेव निजप्रताप-
प्रशस्तिमैन्द्रिः शरसारटङ्कैः ॥ २६ ॥

वज्राङ्कुरक्रूरमुखेन नून-
मन्योन्यसंघट्टजपावकेन ।
तद्बाणपूरेण निरन्तरेण
हताश्च दग्धाश्च न के विपक्षाः ॥ २७ ॥

नीरन्ध्रसंसप्तकबाणवृष्टि-
विखण्डितानां द्युमणिद्युतीनाम् ।
गर्भात् तमिस्रेव सदोपभुक्ता
तदापतत् सान्द्रतमश्छलेन ॥ २८ ॥

अस्त्रं ततस्त्वाष्ट्रमुदस्य वल्गन्
पृथक् पृथग वीरकुलैर्व्यलोकि ।
स्वस्वोपरिक्षिप्तकराग्रहेति-
र्मध्याह्नमार्तण्ड इवैष चण्डः ॥ २९ ॥

रक्तौघसिक्ते रथचक्रभिन्ने
क्षेत्रे सुधन्वक्षितिपालमौलिम् ।
अपातयद्भूषणभासुराभं
निजप्रतापद्रुमबीजमैन्द्रिः ॥ ३० ॥

इन्द्रात्मभूचारितमारुतास्त्र-
निवारितास्त्रप्रसरैस्त्रिगर्ताः ।
इतस्ततः संपतितैर्मिथोऽपि
शरैर्निजानेव निजघ्नुरेते ॥ ३१ ॥

प्रहासशुभ्रैर्वदनैर्नृपाणां
छत्रैः पताकावसनैश्च पेते ।
पार्थेषुकृत्तैः फलगुच्छपत्रै-
रिव त्रिगर्ताधिपकीर्तिवल्लेः ॥ ३२ ॥

इतश्च ते व्यूहितमण्डलार्ध-
क्रौञ्चैर्बलैः पार्थकुरुप्रवीराः ।
चेलुर्मिथःसायकपातनिर्य-
द्रक्तच्छलाग्रेसरयुद्धरागाः ॥ ३३ ॥

उन्मूलयन् भूपतिभूरुहोऽथ
प्रोड्डाययन् सैन्यतृणानि धावन् ।
द्रोणो महावात इवाचलेन
सत्यौजसा सत्यजिताभिरुद्धः ॥ ३४ ॥

पाञ्चाल्यवीरस्य सुरेन्द्रशक्तेः
सहस्रशः सत्यजितः पृषत्काः ।
द्रोणेऽपतन् दुःसहपातसङ्गा-
स्तडित्तरङ्गा इव वज्रशैले ॥ ३५ ॥

दृग्वाजिभृत्कुण्डलचक्रचारु
सङ्ग्रामदीक्षातिलकोत्पताकम् ।
अपातयत् सत्यजितस्तदास्यं
शौर्यश्रियः पुण्यरथं[1] कृपीशः ॥ ३६ ॥

क्रुद्धः शतानीकनृपं विराटा-
नुजं ससेनं दृढसेनवीरम् ।
श्रीक्षत्रदेवं प्रधनैकदेवं
तेजोनिधानं वसुदानभूपम् ॥ ३७ ॥

पलायिते धर्मसुतेऽथ तस्य
चतुर्दिगुर्वीजयकुञ्जराणाम् ।
स्तम्भानिवैतांश्चतुरश्चकर्त
गुरुः कुरुक्ष्मापमुदां निदानम् ॥ ३८ ॥
युग्मम् ।

तेनातिनिर्नाथ इवातिदीन-
श्चमूसमूहस्तरलत्वरेण ।
नदीरयेणेव निरस्यमानो
भीमं महाद्वीपमिवाससाद ॥ ३९ ॥

ततः स्वतेजोभिरिव प्रवीरै-
र्वृतोऽभितोऽसौ प्रसरच्छरोल्कः ।
गुरोः परीवारबलानि बाढं
गिरेर्वनानीव दवो ददाह ॥ ४० ॥

युयुत्सुरच्छिन्नरिपूद्यमस्य
बाहुं सुबाहुं कृतबाहुकं च ।
भीमस्तु धम्मिल्लमिवोरुरत्नं
सवङ्गराजं युधि नागराजम् ॥ ४१ ॥

इत्युच्छलत्सप्रचमूसमुद्रो
रजस्तमःकल्पितकालरात्रिः ।
संहृत्य सर्वं रभसेन भीमो
जगद्गुरौ ब्रह्मणि घातमैच्छत् ॥ ४२ ॥

अथावनीभाररुषेव दष्टो
नखच्छलादङ्घ्रिषु शेषपुत्रैः ।
मुखेन बिभ्रत् खलु तद्रुषेव
फूत्कारिणं हस्तमिषेण शेषम् ॥ ४३ ॥

दिग्दन्तिनो निर्मदयन् मदौघं
गन्धैः स्फुरत्कर्णमरुत्प्रणुन्नैः ।
पुच्छच्छलात् क्रौर्यजितेन काल-
दण्डेन नित्यानुगतेन सेव्यः ॥ ४४ ॥

गर्भान्तरालस्थितभूतभावि-
कल्पद्वयीवासरदीप्रिदण्डौ ।
वहन् मुखद्वारि मणिप्रणद्ध-
दन्तच्छलेन प्रलयो नु मूर्तः ॥ ४५ ॥

कृतान्तकान्ताकुचकर्कशत्व-
विरोधसक्रोधमिवातिरक्तम् ।
कुम्भद्वयं द्विट्कुलजीवकृष्टि-
ध्यानाभसिन्दूरभरं दधानः ॥ ४६ ॥

मृत्योः कृतान्तस्य च जीविताभ्यां
कनीनिकाभ्यामतिरौद्ररूपे ।
कः संप्रहारोऽयमितीव किंचि-
दुन्मील्य नेत्रे किमपीक्षमाणः ॥ ४७ ॥

स्फुरत्पदाङ्गुष्ठयुगाङ्कुशाग्र-
हक्कानकैः संयति सुप्रतीकः ।
भीमाय भीमध्वनितो नियुक्तः
प्राग्ज्योतिषक्षोणिभुजा गजेन्द्रः ॥ ४८ ॥

केषांचिदुत्कर्षकरः परेषा-
मापत्करो दोलितविश्वविश्वः ।
चतुर्युगीचारुपदप्रचारः
स्वैरी शरीरीव चचाल कालः ॥ ४९ ॥
सप्तभिः कुलकम् ।

अक्षौहिणीरेष कराङ्घ्रिदन्तै-
रेकोऽपि सप्तापि निहन्तुमीशः ।
इति द्विषद्भिः परिशङ्क्यमानो
निघ्नन् बलान्यापदिभः स भीमम् ॥ ५० ॥

स कुञ्जरः कुण्डलितोरुशुण्डो
दोर्दण्डमेवैकमुदस्य भीमः ।
अधावतामुद्धतयुद्धतप्तौ
सपाशदण्डाविव लोकपालौ ॥ ५१ ॥

क्रमोच्छलद्धूलिमयेऽन्धकारे
दुर्लक्ष्यविक्रान्तिकलाविशेषौ ।

---

१ पुण्डरथं इति पा० ।

मिथोऽपि गर्जारवसिंहनादा-
नुमेययुद्धावभिजघ्नतुस्तौ ॥ ५२ ॥
युधिष्ठिराद्येषु महारथेषु
क्रुधाभिधावत्सु विमुक्तभीमः ।
द्विपोऽयमुच्चैस्तनुवातघात-
पतत्तलारद्ध्यबलोऽभ्यगच्छत् ॥ ५३ ॥
दाशार्हभूपे भगदत्तभल्ल-
भुजंगमग्रस्तसमस्तवायौ ।
शिनेस्तनूजेऽपि च सुप्रतीक-
द्विपेन्द्रकोपानललीढपक्षे ॥ ५४ ॥
भृशं पिशाचा भगदत्तभल्ल-
विदारितानां जगतीपतीनाम् ।
रक्तं शरीरात् पतदेव सौख्य-
निमीलिताक्षाः पपुरुष्णमुष्णम् ॥ ५५ ॥
युग्मम् ।
प्रदीप्तकोपाग्निकृताश्वहस्ति-
नृमेधमालामहनीयहस्तः ।
प्रभूतभूतप्रमदाय नास्रक्-
पूर्तानि चक्रे कति सुप्रतीकः ॥ ५६ ॥
त्रस्तैरथाश्वैरथ सुप्रतीक-
सीत्कारचीत्कारभयादपि द्राक् ।
वृकोदराद्येष्वतिदूरगेषु
कश्चित् तदाभूत् तुमुलो बलानाम् ॥ ५७ ॥
श्रुत्वा तथाक्रन्दमथेन्द्रजन्मा
निर्जित्य वज्रास्त्रवशात् त्रिगर्तान् ।
समीरवेगी शरभो मृगेन्द्र-
मिव प्रमत्तो भगदत्तमागात् ॥ ५८ ॥
स आपतन् काण्डहतप्रवीर-
कीलालपङ्कोच्चयमूकचक्रः ।
ज्याघोषमूकीकृतसुप्रतीकः
खिन्नैरखिन्नैश्च नरैर्निरैक्षि ॥ ५९ ॥
प्राग्ज्योतिषेन्द्रेण तदा मदान्धं
द्विपेन्द्रमद्रीन्द्रमिव प्रयुक्तम् ।
देवोऽपसव्येन रथेन विष्णु-
र्वृथोद्यमीकृत्य पुनः पुरोऽभूत् ॥ ६० ॥
छित्त्वाथ नाराचशतानि पार्थे
नारायणास्त्रं स मुमोच वीरः ।
तद्वक्षसादत्त सुपर्णकेतुः
सुवर्णसूचायितमेव देवः ॥ ६१ ॥
युद्धेऽप्ययोग्योऽस्मि धृतं यदस्त्रं
त्वयेति खिन्नोक्तिपरेऽथ पार्थे ।
कुक्षिस्थितक्षीरसमुद्रसान्द्र-
सुधार्द्रमूचे वचनं मुरारिः ॥ ६२ ॥
दैत्याय दत्तं नरकाय भूमि-
सुताय भूप्रार्थनया मयास्त्रम् ।
तेनेदमस्मै स्वसुताय तच्च
स्वमित्यगृह्णां जय संप्रतीमम् ॥ ६३ ॥
इत्युक्तिमाकर्ण्य हरेर्नरेण
क्षिप्तैः क्षणादूर्ध्वमुखैः पृषत्कैः ।
विध्वा द्विपं तं च नृपं चरद्भि-
रभ्रान्तरभ्राम्यत नाकिलोकः ॥ ६४ ॥
कृत्ता शरैस्तस्य गजस्य घण्टा
च्युतानि खात् तत्क्षणमस्रपङ्के ।
प्यधत्त मार्कण्डपुराणविद्या-
बीजानि चत्वारि खगाण्डकानि ॥ ६५ ॥
तदा नदन्तौ नरबाणपात-
विद्धौ बलाढ्यौ भगदत्तनागौ ।
विलोडयामासतुरस्रधारा-
स्खलोच्छलद्विद्रुमवल्लिजालम् ॥ ६६ ॥
ततः किरीटिप्रदरेण मौलि-
प्रवेशिना बुध्नविनिर्गतेन ।
विभिन्नकायः स पपात कुम्भी
महाद्रिपादस्तडितेव तूर्णम् ॥ ६७ ॥
अथार्धचन्द्रेण वितन्द्रचन्द्र-
सहस्रसान्द्रोज्ज्वलकीर्तिजालः ।
प्राग्ज्योतिषक्षोणिपतेः सकोप-
वित्तानसूनाशु नरो निरास ॥ ६८ ॥

* प्रदरो बाणः ।

श्रीकामरूपक्षितिपे हतेऽथ
पार्थेषुपङ्क्त्या परिपीड्यमाना ।
न कंचिदापारिचमूः शरण्य-
मरौ पशुश्रेणिरिवाब्दवृष्ट्या ॥ ६६ ॥

गान्धारवीरौ वृषकाचलाख्यौ
सुसंहतावुद्धतयुद्धसिद्धौ ।
अपातयच्छ्राचवशौर्यदन्ति-
दन्ताविवैकेन शरेण पार्थः ॥ ७० ॥

जिग्येऽथ मायामयदुष्टसत्त्व-
शस्त्रान्धकारादिविकारयुद्धः ।
गान्धारभूपोऽनुजलोपकोपी
किरीटिना सौरमहास्त्रयोगात् ॥ ७१ ॥

द्रोणस्तु धार्मिग्रहणप्रपञ्ची
पाञ्चालभूपालचमूं प्रविश्य ।
चित्रैः सरोजैरिव वीरवक्त्रै-
र्दिशः स्वतेजोविधुराः व्यधत्त ॥ ७२ ॥

नीलाम्बरस्यन्दनसूतसप्ति-
र्नीलस्तडित्वानिव पावकास्त्रैः ।
माहिष्मतीशः शरवारिवर्षी
द्राग् द्रोणसेनां विधुरीचकार ॥ ७३ ॥

छिन्नातपत्रध्वजकार्मुकोऽथ
द्रोणात्मजेनाभिपतन् धृतासिः ।
नीलद्युतिर्दण्डधरो नु नीलः
श्रीनीलकण्ठावतरेण जघ्ने ॥ ७४ ॥

छिन्नेऽथ तन्मूर्धनि पाण्डुसेना-
मौलीन्द्रनीले कुरुषून्नदत्सु ।
पार्थः पुनर्निर्दलितत्रिगर्त-
स्तत्राशु निर्घात इवापपात ॥ ७५ ॥

एकोऽपि तुल्योऽखिलदेवदैत्यैः
पार्थः परं बभ्रुसखो बलाब्धिम् ।
विलोडयामास तथा यथाभूद्
व्योम स्फुरत्सोमभरं भटास्यैः ॥ ७६ ॥

ततान भनोस्तनयस्तदास्त्र-
माग्नेयमग्निप्रबलप्रतापः ।
अतर्कि वीरैः प्रधनप्रदत्तो
यद्द्वीपितैः स्वस्य रविप्रवेशः ॥ ७७ ॥

हत्वा तमग्निं हरिनन्दनोऽब्दैः
कर्णं शरैर्वेणुवनं विधाय ।
न चोणिभृन्नः कति रक्तसिन्धू-
र्युद्धाम्बुराशेर्दयितास्ततान ॥ ७८ ॥

ततो जघानावरजं विपाटं
शत्रुंजयं वीरमयं प्रवीरः ।
कर्णानुजान् वैरिनरेन्द्रराज्य-
श्रियः पुमर्थानिव तत्र पार्थः ॥ ७९ ॥

शौर्यातिरेकशुभयोरुभयोः
कर्णार्जुनप्रबलयोर्बलयोः ।
आसीत् ततोऽतिनिधनं प्रधनं
हृष्यन्निशाचरपिशाचरवम् ॥ ८० ॥

विद्विष्टशस्त्रफणिदष्टतनो-
र्मूर्च्छाभृतो भटभरस्य तदा ।
कीलालपूरपरिपूर्णनदी-
वाहैः प्रवाहनमभूदुचितम् ॥ ८१ ॥

उच्छिन्दन् सुभटभुजासरोजनाला-
न्युद्भिन्दन् हरिलहरीः समीरसूनुः ।
उद्गर्जन् गज इव विस्फुरन् मदोष्मा
तां दोष्मानसहनवाहिनीं जगाहे ॥ ८२ ॥

कोऽप्यासीन्नरशरपातताडिताना-
माक्रन्दः स युधि विरोधिवाहिनीनाम् ।
सस्मार स्वदहनदह्यमानलङ्का-
लोकानां कपिरपि येन स ध्वजस्थः ॥ ८३ ॥

पार्थोद्यमात् त्रसति शत्रुबले
व्याकम्पिभूमितलभूमिधरे ।
अस्ताचलादपतदुष्णरुचि-
र्वीराः प्रतेनुरवहारमतः ॥ ८४ ॥

द्वितीयमहः ।

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के द्रोणपर्वणि दिनद्वयसङ्ग्रामवर्णनो नाम प्रथमः सर्गः ॥ १ ॥ :: :: ॥

## ॥ अथ खण्डप्रशस्तौ

रामावतारवर्णनम् ॥

(६५) भ्रान्त्वा भूवलयं दशास्यदमन त्वत्कीर्तिहंसी गता
व्योम ब्रह्ममरालसंगमवशात् सा तत्र गुर्विण्यभूत् ।
पश्य स्वर्गतरङ्गिणीपरिसरे कुन्दावदातं यया
मुक्तं भाति नवीनमण्डकमिदं शीतद्युतेर्मण्डलम् ॥

हेदशास्यदमन दशमुखनाशन त्वत्कीर्तिहंसी तव कीर्तिरेव हंसीरूपा भूवलयं पृथ्वीमण्डलं भ्रान्त्वाऽटित्वा व्योमाकाशं गता सती तत्र व्योम्नि सा कीर्तिहंसी ब्रह्ममरालसंगमवशाद् ब्रह्मणो विधेर्मरालो हंसस्तस्य यः संगमः संयोगस्तद्वशाद्गुर्विण्यभूत्, तदनन्तरं स्वर्गतरङ्गिणीपरिसरे त्रिपथगातीरे यया हंस्या मुक्तं कुन्दावदातं कुन्दवदुज्ज्वलं नवीनमण्डकमेवेदं शीतद्युतेश्चन्द्रस्य मण्डलं भाति शोभते, एतेन रामकीर्तिस्त्रिपथगामिनीति सूचितम् ॥ ६५ ॥

(६६) संग्रामाङ्गणमागतेन भवता चापे समारोपिते
रामाकर्णय येनयेन सहसा यद्यत् समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥

हेराम संग्रामाङ्गणं रणभूमिमागतेन भवता चापे धनुषि समारोपिते सति येनयेन यद्यत् सहसा झटिति समासादितं तत्तदाकर्णय, कोदण्डेन धनुषा शराः प्राप्ताः, शरैश्चारिशिरो वैरिमस्तकं, तेन च भूमण्डलं पृथिवी, तेन भूमण्डलेन त्वं स्वामित्वेन प्राप्तो, भवता चातुलाऽनुपमा कीर्तिर्लब्धा, तया लोकत्रयं व्याप्तमिति ॥ ६६ ॥

(६७) पूर्णेन्दुः करकन्दुको हिमगिरिः क्रीडाविहारस्थली
क्षीराब्धिर्गृहदीर्घिका प्रियसखी वाचां पतिर्देवता ।
शय्या दिग्गजराजदन्तवलभी त्वत्कीर्तिकन्याकृते
पाञ्चालीमिथुनं व्यधायि विधिना गौरीगिरीशावपि ॥

हेराम त्वत्कीर्तिकन्याकृते त्वत्कीर्तिरेव कन्या तदर्थं "तत्क्रीडार्थमिति भावः" विधिना ब्रह्मणा व्यधायि निर्मितम्, किं तदित्याह, पूर्णेन्दुः करकन्दुकः पूर्णचन्द्रः करस्यो गेन्दुको गोलत्वात्, तथा क्रीडाविहारार्थं स्थली अकृत्रिमभूमिर्हिमगिरिर्हिमालयः, तथा गृहदीर्घिका गृहवापी क्षीराब्धिः क्षीरसमुद्रः, प्रियसखी सहेली वाचां गिरां पतिः सरस्वतीदेवता, शय्या दिग्गजराजदन्तवलभी दिग्गजराजानां दन्तवलभी दशनाग्रभूमिः, पाञ्चालीमिथुनं पुत्रिकायुगलं गौरीगिरीशावुमामहेश्वरावपि निर्मितौ, एतेन रामे सर्वतः श्रेष्ठत्वमस्तीति सूचितम् ॥ ६७ ॥

(६८) संग्रामो दिवसायते तव भुजः पूर्वाचलेन्द्रायते
त्वत्क्रोधोऽप्यरुणायते तव लसच्छौर्यं प्रकाशायते ।
त्वद्वैरी तिमिरायते तदबलाहृत् सूर्यकान्तायते
त्वत्कीर्तिः कमलायते रघुपते त्वत्खड्गचण्डद्युतेः ॥

हेरघुपते तव खड्ग एव चण्डद्युतिः सूर्यस्तिग्मांशुत्वात् तस्य सर्वथा सूर्योपमत्वमस्तीति शेषः । तदेव कथयति । संग्रामो दिवसायते दिवस इवाचरति यथा दिवसे सूर्यः प्रभाप्रगल्भतामुपैति तथा त्वत्खड्गभानुरपि संग्रामे स्वस्पष्टतां प्रकटयतीत्यर्थः, तथा तव भुजो बाहुः पूर्वाचलेन्द्रायते पूर्वाचलेन्द्र उदयगिरिः स इवाचरति यथा भानुरुदयाचले भासते तथा चासौ त्वद्भुजे भासत इत्यर्थः, तथा त्वत्क्रोधस्तव कोपोऽप्यरुणायते अरुणः सारथिः स इवाचरति यथाऽरुणो रक्तवर्णोऽग्रे प्रादुर्भवति तथा क्रोधोऽपि रक्तमुखनेत्रादिना प्रादुर्भवतीत्यर्थः, तथा तव लसच्छौर्यं देदीप्यमानं शूरत्वं प्रकाशायते प्रकाश इवाचरति यथा सूर्यस्योदये सर्वत्र प्रकाशः प्रसरति तथा त्वत्खड्गभानोरुदये तव शौर्यं स्पष्टमुदेतीत्यर्थः, तथा त्वद्वैरी तव शत्रुस्तिमिरायते तिमिरवाचरति यथोदये तमांसि नाशमायान्ति तथा त्वत्खड्गभानूदये तव वैरिणो दिगन्तगामिनो भवन्तीत्यर्थः, तथा तदबलाहृत् तेषामरीणां या अबलाः स्त्रियस्तासां हृद्धृदयं सूर्यकान्तायते सूर्यकान्त इवाचरति यथा भानोरुदये सूर्यकान्तमणिषु महांस्तापः संजायते तथा चैतदुदये सति वैरिस्त्रीहृदयेषु महान् पश्चात्तापो भवतीत्यर्थः; तथा त्वत्कीर्तिः कमलायते कमलमिवाचरति यथा भानोरुदये कमलानि विकस्वराणि भवन्ति तथा त्वत्खड्गभानोरुदये त्वत्कीर्तिर्विकाशमुपैतीत्यर्थः, एतेन रामकरखड्गः सहस्रांशुरिति सूचितम् ॥ ६८ ॥

(६९) आकृष्टे युधि कार्मुके रघुपते वामोऽब्रवीद्दक्षिणं
पुण्ये कर्मणि भोजने च भवतः प्रागल्भ्यमस्मिन्न किम् ।
वामान्यः पुनरब्रवीन्न मम भीः पृच्छाम्यहं स्वामिनं
छिन्द्यां रावणवक्त्रपङ्क्तिमथवेत्येकैकमादिश्यताम् ॥

हेरघुपते त्वया युधि संग्रामे कार्मुके धनुषि आकृष्टे कर्णपर्यन्तं नीते सति वामः करो दक्षिणं करमब्रवीदुवाच, हेदक्षिणपाणे पुण्ये कर्मणि भवतस्तव प्रागल्भ्यं च पुनर्भोजनेऽपि दृश्यते यतः सर्वत्र सुकरे पुण्ये च कर्मणि सर्व्वदैक्षिण एवादृतोऽस्ति, अत्र च संग्रामलक्षणे दुष्करे कृत्ये यत् पश्चाद्यासि अहं च त्वत्पुरो वैर्यभिमुखं स्यास्यामि तत् किं भवतोऽत्र प्रागल्भ्यं नास्तीति, ततः पुनर्वामान्यो दक्षिणो वाममब्रवीत् हेवाम न मम भीः नाहं भीत्या पश्चाद्यास्यामि किंतु पृच्छा-

म्यहं स्वामिनं यतोऽनुचराः स्वामिनं पृष्ट्वैव कृत्यं कुर्वते नान्यथा अतोऽहं स्वामिनं किंचित् प्रष्टुं कर्णपर्यन्तं गच्छामि, किं तदित्याह, हेस्वामिन् अहमेकेनैव बाणेन एकदैव रावणवक्त्रपङ्क्तिं रावणाननदशकं छिन्द्यां लुनीयामथवैकैकं प्रत्येकं छिन्द्यामित्यादिश्यतामिति ॥ ६१ ॥

(७०) अस्माकं परमन्दिरस्य चरितं यद्यप्यवाच्यं भवेत्
स्वामी त्वं कथयामि तेन भवतः किंचित् प्रियादूषणम् ।
श्रीमद्राम नृप त्वया रणमुखे पाणिग्रहः सादरं
यस्याः साऽसिलता परस्य हृदये दृष्टा लुठन्ती मया ॥

हेराम यद्यपि परमन्दिरस्य परस्त्रियाः "तात्स्थ्यात् तद्व्यपदेश इतिन्यायेन मन्दिरशब्दोऽत्र स्त्रीवाची" चरितं कृत्यमवाच्यं वक्तुमनुचितं तथापि त्वमस्माकं स्वामी यतस्तेन हेतुना भवतो युष्मान् प्रति किंचिदनिर्वाच्यमपि प्रियादूषणं स्त्रीदुर्लक्षणं कथयामि "यतो भक्ताः स्वस्वामिनः कथमपि हानिं सोढुमक्षमाः स्त्रीदुर्लक्षणं तु परमपमानकारणमतो ब्रवीमीति भावः" तदेवाह, श्रीमदिति हेश्रीमद्राम त्वया रणमुखे संग्रामादौ स्वपरनरसुरसाक्षिकं यस्या असिलतायाः सादरमादरेण पाणिग्रहः करे ग्रहणं कृतं विवाह इति यावत् साऽसिलता परस्य शत्रोर्हृदये लुठन्ती विलसन्ती मया दृष्टाऽदर्शीति, यथा काचित् पाणिगृहीती परपुरुषस्य हृदये विलासं कुर्यात् तदा तस्या असतीत्वलक्षणेन पुरुषस्य महद्दूषणं लग्नं भवेत्, एतेन सकलवैरिहन्तृत्वमसिलताया द्योतितमिति भावः ॥ ७० ॥

(७१) सत्यं सा बहुरूपिणी समभवत् सिद्धिस्वरूपा भवत्कीर्तिः श्रीरघुवंशरत्न विमला जागर्ति विश्वोदरे ।
क्ष्मापारे रिपुमन्दिरे नृपपुरे रत्नाकरे निर्झरे
कान्तारे गिरिशेखरे विषधरागारे तथैवाम्बरे ॥

हेश्रीरघुवंशरत्न सा भवत्कीर्तिस्तवकीर्तिः सिद्धिस्वरूपाऽणिमाद्यष्टसिद्धिमती सती बहुरूपाऽनन्तरूपा सत्यं नियमेन समभवज्जाता नानारूपत्वेन विश्वव्यापिन्यभूदिति भावः, तदेव विवृणोति, सा विमला निर्मला सती विश्वोदरे विश्वमध्ये जागर्ति, तथा क्ष्मापारे भूमेः परे पारे, तथा रिपुमन्दिरे वैरिगृहे, तथा नृपपुरे सुराजवर्यमन्दिरे, तथा रत्नाकरे समुद्रे, तथा निर्झरे गिरिवरनिस्सरन्नीरप्रवाहे, तथा कान्तारेऽरण्ये, तथा गिरिशेखरे पर्वतशृङ्गे, तथा विषधरागारे पाताले, तथैवाम्बरे नभसि जागर्ति, यथा योगिनी सिद्धा गिरिदर्यादिषु स्वकामचारिणी भवेत् तथा त्वत्कीर्तिर्योति भावः ॥ ७१ ॥

(७२) कीर्तिस्तव क्षितिप याति भुजङ्गगेहं
मातङ्गसंगमकरी च दिगन्तकेषु ।
त्यक्त्वाम्बरं भजति नन्दनमप्यगम्यं
किंकिं करोति न निरर्गलतां गता स्त्री ॥

हेक्षितिप राजन् तव कीर्तिर्भुजङ्गगेहं नागलोकं याति, च पुनर्दिगन्तकेषु दिक्पर्यन्तेषु मातङ्गसंगमकरी मातङ्गानामैरावतादीनामष्टदिग्गजानां सगमं संयोगं कर्तुं याति, तथाम्बरं व्योम त्यक्त्वोल्लङ्घ्याऽगम्यमपि नन्दनं सुरालयवनं भजति सेवते, तथा च सर्वत्र त्वत्कीर्तिरस्तीति भावः, तस्याः सर्वत्र गमने कारणमाह, या हि परायत्ता स्त्री सा कदापि परगृहं नो सेवेत या च स्त्री निरर्गलतामुच्छृङ्खलतां गता प्राप्ता सा किंकिं न करोति सर्वमप्यकृत्यं कुर्यादेव यथोच्छृङ्खला काचन स्त्री भुजङ्गगेहं गणिकापतिगेहं "भुजङ्गो गणिकापतिः" याति जारगृहं यातीत्यर्थः, तथा दिगन्तकेषु विजनप्रदेशेषु गत्वा मातङ्गसंगमकरी चण्डालसंगमकारिणी भवति मातङ्गश्चण्डालः, तथाम्बरं वस्त्रं त्यक्त्वा निर्लज्जा भूत्वाऽगम्यमपि गमनानर्हमपि नन्दनं पुत्रं रिरंसया भजति सेवते तथेयं त्वत्कीर्तिरुच्छृङ्खला सती सर्वत्र प्रयातीति भावः ॥ ७२ ॥

(७३) देवे दिग्विजयोद्यते परिपतत्काम्बोजवाहावलीवीङ्खोल्लेखविसर्पिणि क्षितिरजःपुञ्जे वियच्चुम्बति ।
भानोर्वाजिभिरङ्गभूषणरसानन्दः समासादितो
लब्धः किंच नभःस्थलामरधुनीपङ्केरुहैरन्वयः ॥

श्रीरामे देवे दिग्विजयोद्यते दिग्यात्रां कर्तुं प्रवृत्ते सति भानोः सूर्यस्य वाजिभिरश्वैरङ्गभूषणरसानन्दोऽङ्गे भूषणमिव भूषणं भूमिविलुण्ठनलक्षणं तस्य यो रसस्तस्यानन्द आह्लादः समासादितः प्राप्तः, यतो वाजिनां भूमौ विलुण्ठनं परमं भूषणं सुखावहं चातो रजःसश्लेषे सूर्याश्वैर्भूविलुण्ठनसुखं लब्धमिति भावः, किंचापरोऽपि विशेषः समुत्पन्नः, नभःस्थलामरधुनीपङ्केरुहैर्नभःस्थले आकाशे याऽमरधुनी गङ्गा तस्यां पङ्केरुहैः कमलैरन्वयो वंशो लब्धः, यतो गङ्गायां रजोलेशाभावेन पङ्काभावात् कथं तस्यां पङ्केरुहस्थितिः कुतश्च तेषामुत्पत्तिर्भवेद्यानि पद्मानि तत्रासंस्तेषु पङ्केरुहत्वमपि तत्सादृश्यादेव, यदा त्वं दिग्विजयोद्यतस्तदा त्वदश्वखुरक्षुण्णभूरजो नभःसरिति गतं ततस्तत्र तद्रजो जलयोगात् पङ्कत्वं प्राप्तात् ततश्च तेषु पङ्केरुहत्वं सत्यमभूदथ पद्मानामुत्पत्तिरपि तत्राभूदिति भावः । कदा चेदमभूदित्याह, क्षितिरजःपुञ्जे भूमिपांशुसमूहे वियदाकाशं चुम्बति सति, कथंभूते क्षितिरजःपुञ्जे, परिपतत्काम्बोजवाहावलीवीङ्खोल्लेखविसर्पिणि प-

रिपतन्तो गच्छन्तो ये काम्बोजवाहाः काम्बोजदेशोत्पन्ना अश्वास्तेषां याऽऽवली श्रेणिस्तस्या या वीङ्खा गतिः "गतौ वीङ्खेति हेमकोषः, गतिविशेषे चानेकार्थे, वीङ्खा तु शूकशिम्बायां गतिभेदे च नर्तने इति" तस्याउल्लेख उद्गमो वाजिनां हेषणादिकरणं तेन विसर्पति ऊर्ध्वं गच्छति तच्छीलस्तस्मिन्निति ॥ ७३ ॥

(७४) गर्वावेशविशालरावणभुजप्रोद्यत्प्रतापानल-
ज्वालाजालनवाम्बुदः कथमसौ सीतापतिर्वर्ण्यते ।
यस्यारातिनृपाः कृपाणजलधौ मग्नाः पुरो गौरवा-
दत्युच्चैर्गतयो भवन्ति च पुनर्भित्त्वा रवेर्मण्डलम् ॥

असौ सीतापती रामः कथं वर्ण्यते तत्र स्तवनाशक्यत्वे हेतुमाह । यस्य रामस्य पुरोऽग्रेऽरातिनृपा वैरिराजाः कृपाणजलधौ कृपाण एव कृष्णाभत्वाज्जलधिः समुद्रस्तस्मिन् गौरवाच्छौर्यान्मग्ना बुडितास्ते वैरिनृपाः पुना रवेर्मण्डलं सूर्यमण्डलं भित्त्वोच्चैर्गतयः स्वर्गयायिनो भवन्ति, यदुक्तं वृद्धैः ।

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदकौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥ १ ॥

अन्यो हि यो जलधौ निमग्नो भवति स च नीचैर्गतिरेव भवतीति प्रसिद्धम्, अत्र यो वैरिणामपि मोक्षदाता स कथं वर्ण्यः स्यादिति भावः, किंविशिष्टो रामः, गर्वावेशेन दर्पाटोपेन विशालौ विस्तीर्णौ यौ रावणभुजौ ताभ्यां प्रोद्यन्त्यो देदीप्यमानाः प्रतापानलज्वालाः प्रतापाग्निशिखास्तासां यज्जालं समूहस्तत्र नवाम्बुद इव नवमेघ इव यः सः, अन्योप्यनलोऽम्बुदेन शाम्यते यथा तथा तत्प्रतापाग्निरपि रामेण शमित इति भावः ॥ ७४ ॥

(७५) चिन्तागम्भीरकूपादनवरतचलद्वैरिशोकारघट्ट-
व्याकृष्टं निश्वसन्त्यः पृथुनयनघटीयन्त्रनिर्मुक्तधारम् ।
नासावंशप्रणाली वेषमपथपतद्बाष्पपानीयमेता
राम त्वद्वैरिनार्यः कुचकलशयुगेनान्वहं संवहन्ति ॥

हेराम त्वद्वैरिनार्यस्तव शत्रोः स्त्रियः कुचकलशयुगं कुचौ स्तनौ ताविव कलशयुगं घटद्वन्द्वं तेन, नासावंश एव प्रणाली जलमार्गः सैव विषमपथः समोचतमार्गस्तस्मात् पतज्जलं बाष्पपानीयमश्रुजलं तदन्वहं प्रतिदिनं संवहन्त्युद्वहन्ति, सर्वा अपि नार्यः कलशयुगेनैव जलं वहन्ति तथैता अपीति भावः, किंभूतास्ताः, निश्वसन्त्यः निश्वासं मुञ्चन्त्यः, किंविशिष्टं बाष्पजलं, चिन्ता स्वभर्तृहननाज्जातो यः पश्चात्तापः सैव गम्भीरोऽलब्धमध्यो यः कूपस्तस्मादनवरतं निरन्तरं चलन् भूरि बहुलो यः शोकः स एवारघट्टस्तेन करणभूतेन व्याकृष्टं निष्कासितं, यथान्यथापि स्त्रिया पानीयं कूपादरघट्टद्वारा निष्कास्यते तथेदमपि, पुनः किंभूतं, पृथूनि विस्तीर्णानि नयनान्येव घटीयन्त्रं तेन निर्मुक्ता धारा जलप्रवाहो यस्मिन् तदिति ॥ ७५ ॥

(७६) महाराज श्रीमन् जगति यशसा ते धवलिते
पयःपारावारं परमपुरुषोऽयं मृगयते ।
कपर्दी कैलासं त्रिभुवनपतिः स्वं करिवरं
कलानाथं राहुः कमलभवनो हंसमिथुनम् ॥

हेश्रीमन्महाराज रामचन्द्र ते तव यशसा कीर्त्या जगति भुवने धवलिते पाण्डुरतां प्रापिते सति अयं परमपुरुषो विष्णुः पयःपारावारं क्षीरसमुद्रं मृगयते, तथा कपर्दी शिवः कैलासं, त्रिभुवनपतिरिन्द्रः स्वं करिवरमैरावतं, राहुश्च कलानाथं चन्द्रं, तथा कमलभवनो विधिर्हंसमिथुनं, यतः सर्वेषां समुद्राणां पर्वतानां गजानां सर्वभक्ष्याणां पक्षिणां च त्वत्कृतकीर्त्या श्वेतत्वात् क्षीराब्ध्यादीनामनवगमस्तेषामतस्ते तान् सर्वत्रावलोकयन्तीति भावः ॥ ७६ ॥

---

"श्रीकाशीधर्म्मसभा" प्रकाशितपरीक्षाविषयादि-
व्यवस्थितिप्रतिपादकपत्रसंक्षेपः ।

परीक्षाया आरम्भः श्रीमत्या भगवत्याखिलभुवनवन्दितचरणकमलया कमलया भक्तजनोपनीतमाघ्यकुङ्कुमाद्युपहारस्वीकारेणानुगृहीतायां माघशुक्लपञ्चम्यां भविता ।

अस्मिन् वर्षे वेदव्याकरणज्योतिषन्यायसाङ्ख्ययोगधर्मशास्त्रवेदान्तपूर्वमीमांसासर्वदर्शनद्वैतवादकाव्यालङ्कारपुराणेतिहासवैद्यकसंगीतमन्त्रशास्त्रसूत्रकोषकामशास्त्रेषु शतद्वयपरिमितानां छात्राणां परीक्षा भविष्यति ।

तत्र वेदे, परीक्षकः श्रीपण्डितबापूभट्टः श्रीपण्डितजयरामभट्टः । माध्यन्दिनशाखाप्रमुखेषु चतुर्षु विषयेषु श्रीपण्डितकृपाकृष्णप्रभृतयोऽन्येऽपि सप्त परीक्षकाः । प्रथमश्रेण्यां पारितोषिकं १०१) द्वितीयश्रेण्यां पारितोषिकं ३१) तृतीयश्रेण्यां पारितोषिकं ११) व्याकरणे परी॰ श्रीपण्डितसखारामभट्टः श्रीपण्डितचन्द्रशेखरत्रिपाठी । प्र॰ पा॰ ५१) द्वि॰ पा॰ ३१) तृ॰ पा॰ ११) ज्योतिषे परी॰ श्रीपण्डितबापूदेवशास्त्री श्रीपण्डितदेवकृष्णमिश्रः । प्र॰ पा॰ ५१) द्वि॰ पा॰ ३१) तृ॰ पा॰ ११) न्याये परी॰ श्रीराधामोहनतर्कभूषणभट्टाचार्य्यः श्रीताराचरणतर्करत्नभट्टाचार्य्यः । प्र॰ पा॰ ५१) द्वि॰ पा॰ ३१) तृ॰ पा॰ ११) साङ्ख्ययोगयोः परी॰ श्रीपण्डितबेचनरामत्रिपाठी श्रीप-

ण्डितराजारामशास्त्री। प्र० पा० २१) द्वि० पा० ११) तृ० पा० ५) धर्म्मशास्त्रे परी० श्रीरामदुलारविश्रामशिभट्टाचार्य्यः श्रीपण्डितबालकृष्णशास्त्री। प्र० पा० ५१) द्वि० पा० २१) तृ० पा० ११) वेदान्ते परी०* ———— प्र० पा० ५१) द्वि० पा० ३१) तृ०पा०११) पूर्वमीमांसायां परी० श्रीपण्डितहरेकृष्णः श्रीपण्डितगणेशशास्त्री श्रीपण्डितनीलदेवः। प्र० पा० ५१) द्वि० पा० ३१) तृ० पा० ११) सर्वदर्शने परी० श्रीजयनारायणतर्कालङ्कारभट्टाचार्य्यः श्रीताराचरणतर्करत्नभट्टाचार्य्यः प्र० पा० ५१) द्वि० पा० ३१) तृ० ५) द्वैतवादे परी० ———— प्र० पा० ३१) द्वि० पा० २१) तृ० पा० ११) काव्यालङ्कारयोः परी० श्रीपण्डितशीतलप्रसादत्रिपाठी श्रीपण्डितरामचन्द्रशास्त्री। प्र० पा० ४१ द्वि० पा० २१ तृ० पा० ११) पुराणेतिहासयोः परी० श्रीपण्डितभाऊशास्त्री श्रीपण्डितपरमेश्वरदत्तः। प्र० पा० ४१) द्वि० पा० ३१) तृ० पा० ११) वैद्यके परी० श्रीपण्डितरामचन्द्रशास्त्री श्रीपण्डितहरिरामः प्र० पा० ३१) द्वि० पा० २१) तृ० पा० ११) सङ्गीते परी ———— श्रीहरिरामवाजपेयी स्वरभेदे परीक्षकः। प्र० पा० ४१) द्वि० पा० २१) तृ० पा० ११) मन्त्रशास्त्रे परी० श्रीपण्डितगौरीशङ्करः श्रीमदुदयचन्द्रशि-रोमणिभट्टाचार्य्यः। प्र० पा० ३१) द्वि० पा० २१) तृ० पा० ११) सूत्रे परी० ———— प्र० पा० ३१) द्वि० पा० २१) तृ० पा० ५) कोषे परी० ———— प्र० पा० ५१) द्वि० पा० २१) तृ० पा० ११) कामशास्त्रे परी० ———— प्र० पा० ३१) द्वि० पा० २१) तृ० पा० ११)

अथ परीक्षकसहायकाः।

श्रीपण्डितदेवदत्तद्विवेदः। श्रीपण्डितवंशीरामद्विवेदः। श्रीपण्डितविभवरामः। श्रीकालीप्रसादशिरोमणिभट्टाचार्य्यः। श्रीकैलासचन्द्रशिरोमणिभट्टाचार्य्यः। श्रीपण्डितानन्तरामभट्टः। श्रीपण्डितलक्ष्मीनृसिंहशास्त्री। श्रीपण्डितढुण्ढिराजपन्तधर्म्माधिकारी। श्रीपण्डितवेणीरामशेषः। श्रीपण्डितवामनाचार्य्यः। सत्यामपेक्षायामिमे विद्वांसः परीक्षकाणां साहाय्यमवलम्बिष्यन्ते।

अथ परीक्षानिरीक्षकाः।

श्रीमान् बाबू ऐश्वर्य्यनारायणसिंहः। श्रीमान् बाबू शिवप्रसादः। श्रीमान् मित्रोपनामको बाबू प्रमदादासः। श्रीमान् बाबू हरिश्चन्द्रः। श्रीपण्डितरघुनाथप्रसादः। एते खलु विश्रुतकीर्त्तयो महामतयो महाशयाः परीक्षाकर्म्मणि कृताकृतावेक्षकाः स्यास्यन्ति।

यथोक्तासु तत्तद्विद्यासु दत्तयथोचितपरीक्षश्छात्रः प्रथमश्रेण्यां "तद्विद्यापारङ्गतो" द्वितीयश्रेण्यां "तद्विद्याप्रवीण" स्तृतीयश्रेण्यां,, तद्विद्याप्रविष्ट" इति यथाक्रममुपाधित्रयं लप्स्यते।

तत्रापि प्रतिश्रेणि प्रश्नोत्तरदाने लब्धशतपरिमितयोग्यताबोधकाङ्क "उत्तम" श्छात्रस्तच्छ्रेणीनियतं पारितोषिकमुपनामप्रशंसापत्रञ्चेति त्रितयं "मध्यमश्छात्र" उपनाम प्रशंसापत्रञ्चेति द्वितयं," सामान्यश्छात्रः केवलं प्रशंसापत्रमधिगमिष्यति।

परीक्षां दित्सवो लोकाः पौषीं पूर्णिमामारभ्य माघशुक्लचतुर्थीं यावत्, पूर्वनिर्द्दिष्टविद्यान्तर्गतस्वेष्टविषयनामनिर्द्देशगर्भं स्पष्टसन्दर्भमधोनिवेशितनिजसत्रं प्रार्थनापत्रं लिखित्वा प्रस्तुतसभाया लेखाध्यक्षाणा*मन्यतमस्य समीपं प्रेषयितुमनुज्ञायन्ते।

प्रश्नोत्तरलेखनावकाशश्च प्रतिदिनं मध्याह्नादुत्तरं घण्टाद्वयवादनमारभ्य घण्टापञ्चकवादनं यावत्।

ब्राह्मणातिरिक्तौ क्षत्रियवैश्यावपि परीक्षां दित्सू तां दातुमनुमन्यते; तौ पुनर्योग्यतानुसारेणोपाधिप्रशंसापत्रे एवाधिगमिष्यतो नतु पारितोषिकम्।

अथ पूर्वनिर्द्दिष्टपारितोषिकातिरिक्तं पारितोषिकम्।

कौथुमशाखायां पाठे व्याख्याने च समर्थाय छात्राय श्रीमान् सर्वजनमान्यः परमवदान्यो बाबू ऐश्वर्य्यनारायणसिंहः १०१) पारितोषिकं प्रदास्यति। श्रीमान् ताराचरणतर्करत्नभट्टाचार्य्यः न्यायशास्त्रस्य प्रथमश्रेण्यां २५) माध्यन्दिनशाखायां पाठे व्याख्याने च समर्थाय गौड़जातीयायान्तेवासिने २५) सङ्गीतशास्त्रस्य प्रथमश्रेण्यां १०) पारितोषिकं वितरिष्यति। प्रतिश्रुतञ्च श्रीमता विद्वत्कुलकुमुदचन्द्रेण बाबू हरिश्चन्द्रेण काव्यकामशास्त्रान्यतरस्य प्रथमश्रेण्यां ५०) समग्रस्य यजुषः पाठे व्याख्याने च समर्थाय महात्मने १०००) वेदान्तशास्त्रे रत्नप्रभे भाष्यप्रकाशे च १००) पारितोषिकं प्रदातुम्। वेदान्तातिरिक्तायाः कस्याश्चिद्विद्यायाः कस्यामपि श्रेण्यां काचिद्वनिता सम्यक् परीक्षां दास्यति चेत् तस्यै श्रीमान् बाबू हरिश्चन्द्रः तच्छ्रेणीनियतात् पारितोषिकादष्टगुणाधिकं पारितोषिकं प्रदास्यति।

एतस्यां माघकृष्णचतुर्द्दश्यां प्रधानाध्यक्षसंमत्या सभासद्भिः काव्यफलितयोः पृथग्विभागः कृतः तत्र पारितोषिकाद्यपि पार्थक्येन व्यवस्थापितम्।

संवत् १९२७ माघकृष्णामायाम्

पण्डितशीतलप्रसादत्रिपाठी।

* अनिर्द्दिष्टपरीक्षकाभिख्यकासु विद्यासु परीक्षाकाले केचित् सभ्याः छात्रात् परीक्षां प्रार्थिता भविष्यन्ति।

* लेखाध्यक्षाः श्रीपण्डितबालशास्त्री श्रीपण्डितगयादत्तः श्रीताराचरणतर्करत्नभट्टाचार्य्यः श्रीमान् बाबू ऐश्वर्य्यनारायणसिंहः श्रीमान् बाबू शिवप्रसादः श्रीपण्डितरघुनाथप्रसादः श्रीमान् बाबू हरिश्चन्द्रः।

## THE APHORISMS
### OF THE
## YOGA PHILOSOPHY
### OF
### PATAṄJALI.

(*Continued from page* 207.)

[1] He [now] mentions the conquering of the internal organ :

**सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाभाधिष्ठातृत्वं सर्वज्ञातृत्वञ्च ॥ ५० ॥**

Aph. 50 Omniscience and Supremacy over all existence arise merely [in the ascetic] who has the discriminative knowledge of the element of purity and soul.

[2] [In the ascetic] Who has practised asceticism with regard to the clear modification of the pure element [—i e. with regard to internal organ, antahkaraṇa] arises the knowledge of the difference between the quality of purity [sattwa] and soul [purusha], in the shape of inertness of the notion in regard to the qualities existing as agents, [or in other words, by which [knowledge the conceit that, 'the qualities are agents' is rendered inert]. From the influence of this [knowledge] arises in the ascetic, situated in the selfsame position, meditation—or recognition—viz, "Supremacy over all existence" and "Omniscience."

[3] "Supremacy over all existence" means, overcoming like a master all entities, which are modifications of the qualities [guna].

"Omniscience" means, the distinctive knowledge of them [i e of entities] as they are in themselves, which exist in the modes as subsided [Śánta] emerged [udita] and not yet named—[avyapadeśya]—viz, the things past, present and future. In the state of perfect consciousness of having overcome [them] the perfection which in this system is [technically] called viśoká, or free from sorrow, takes place.

[4] He [now] states another ground—or position in order :—

---

[1] अन्तःकरणजयमाह ।

[2] तस्मिन् शुद्धे सात्त्विके परिणामे कृतसंयमस्य या सत्वपुरुषयोरुत्पद्यते विवेकख्यातिर्गुणानाङ्कर्तृत्वाभिमानशिथिलीभावरूपा तन्माहात्म्यात् तत्रैव स्थितस्य योगिनः सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वञ्च समाधिर्भवति ॥

[3] सर्वेषाङ्गुणपरिणामानाम्भावानां स्वामितयाऽऽक्रमणं सर्वाधिष्ठातृत्वं तेषामेव शान्तोदिताव्यपदेश्यधर्म्मित्वेन स्थितानां यथावद्विवेकज्ञानं सर्वज्ञातृत्वम् । एषां चास्मिन् शास्त्रे परस्यां वशीकारसञ्ज्ञायां विशोकानामसिद्धिरुत्पद्यते ॥

[4] क्रमेण भूमिकान्तरमाह ।

**तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ५१ ॥**

Aph. 51. From an indifference even to this [perfection] through the destruction of the germ of perniciousness, results isolation.

[1] When an indifference even to this perfection [which is called] viśoká—or free from sorrow, results in the ascetic; then through that [indifference] on the absolute destruction—eradication of ignorance which is the germ of the evils—or perniciousness—i e. desire &c. [—desire and aversion &c]—isolation—absolute cessation of pain—that is, permanence of soul in its own state, takes place in consequence of the conclusion of the supremacy of the qualities [guṇa]. G. D.

(*To be continued.*)

---

## THE
## VAIŚESHIKA APHORISMS
### OF
### KAṆÁDA.

### SIXTH BOOK, FIRST DAILY LESSON.

(*Continued from page* 184.)

**तद्दुष्टभोजने न विद्यते ॥ ६ ॥**

Aph. 6. That does not exist in the case of the eating of the wicked.

[2] 'That' denotes the fruit of a benediction. When evil Bráhmans, unworthy recipients, are fed at the obsequial rites, no fruit accrues from this to the ancestor; or the meaning is simply that the result of the obsequial rites does not accrue to the ancestor. U.

**दुष्टं हिंसायाम् ॥ ७ ॥**

Aph 7. The evil has reference to wrong.

[3] 'Has reference to wrong' implies prohibited actions in general It should therefore be understood that a man occupied in forbidden action is the wicked. U.

**तस्य समभिव्याहारतो दोषः ॥ ८ ॥**

Aph. 8. Demerit results from association with him.

---

[1] तस्यामपि विशोकायां सिद्धौ यदा वैराग्यमुत्पद्यते योगिनस्तदा तस्माद्दोषाणां रागादीनां यद्बीजमविद्यादयस्तस्य क्षये निर्मूलने कैवल्यमात्यन्तिकी दुःखनिवृत्तिः पुरुषस्य गुणानामधिकारपरिसमाप्तेः स्वरूपप्रतिष्ठत्वम् ॥

[2] तदित्याशीर्दानफलं परामृशति दुष्टब्राह्मणाः पात्रानधिकारिणो यत्र श्राद्धे भोज्यन्ते तत्रापि पितरि तत्फलं न विद्यते न भवतीत्यर्थः श्राद्धफलमेव वा न भवति पितरीत्यर्थः ॥

[3] हिंसायामिति निषिद्धकर्म्ममात्रोपलक्षणम् तेन निषिद्धे कर्मणि प्रवृत्तं दुष्टं विजानीयादित्यर्थः ॥

[1] It is stated that not only is there absence of fruit in the partaking of an unworthy Bráhman invited to the obsequial rite, but also sin accrues. Demerit or guilt results from association, characterised as eating in the same row, sleeping, reading and the like, together with him, i. e. with a Bráhman occupied in illicit action. U.

तददुष्टे न विद्यते ॥ ९ ॥

Aph. 9. This does not exist in the case of one not unworthy.

[2] This—guilt—does not exist—does not accrue—in the case of a Bráhman not unworthy, i. e. one who acts according to sacred precepts, caused to partake in the obsequial rite. U.

पुनर्विशिष्टे प्रवृत्तिः ॥ १० ॥

Aph. 10. Again the procedure should be in relation to that which is excellent.

[3] If excellent persons, those who regulate their conduct according to sacred precepts, are procured at obsequial rites or in receiving gifts, a man should avoid those who are censurable though invited. The text 'A man should not reject those who are invited' refers to worthy recipients. But a man should gratify blameable persons, when invited, by giving money, &c. U.

समे हीने वा प्रवृत्तिः ॥ ११ ॥

Aph. 11. Again the procedure should be in relation to an equal or an inferior.

[4] Where persons more excellent than oneself are not procured at obsequial rites, it is explained that the procedure in obsequial rites, charity &c., should be in relation to an equal, one like oneself, or an inferior, one less in point of merit &c, than oneself. Persons prohibited are by all means to be avoided, but not the unblemished whether they be equals or inferiors. U.

एतेन हीनसमविशिष्टधार्मिकेभ्यः परस्वादानं व्याख्यातम् ॥ १२ ॥

Aph. 12. By this is explained reception of property from another, from inferior, equal, and superior, virtuous persons.

[1] Merit—successively an increase of merit—results in the acquisition of land &c, whether from an inferior, or an equal, or one more excellent than oneself, being virtuous. Acquisition is the reception of property or wealth from another. According to the author of the Vṛitti by the reception of property from another the taking of property by theft &c., is explained. In conformity with this is the text 'From a Śúdra on the seventh day, from a Vaiśya on the tenth, from a Kshatriya on the fifteenth, from a Bráhman in case of danger to life.' To save himself or his family when starving a man may steal the food of a Śúdra when he has been without food for seven days; when he has been without food for ten days, that of a Vaiśya; when he has been fifteen days without food, that of a Kshatriya. When his life is in danger stealing food from a Bráhman, tends not to demerit. U.

तथा विरुद्धानां त्यागः ॥ १३ ॥

Aph. 13. Likewise the making away with those who are contrary.

[2] Not only is the taking of others' property, when in danger of life, not forbidden, but in such circumstances those who do not give anything to take away, should even be put to death. And by all this there is no loss of merit, or manifestation of demerit. In such a case those who are contrary, those who act in the contrary manner, are to be put to death. Therefore it has been said: Let a man save himself when in despair by whatsoever deed fair or foul; when he is able let him practise righteousness. U.

हीने परे त्यागः ॥ १४ ॥

Aph. 14 Making away with another has reference to an inferior.

[3] If another who does not give anything to take away is inferior to oneself, he, the Śúdra &c., may be put to death. U.

---

[1] न केवलं दुष्टब्राह्मणस्य श्राद्धे निमन्त्रितस्य भोजनेन फलाभावः किन्तु पापमपि भवतीत्याह तस्य निषिद्धे कर्म्मणि प्रवृत्तस्य ब्राह्मणस्य समभिव्याहारात् एकपङ्क्तिभोजनसहशयनसहाध्ययनादिलक्षणात् दोषः पापमित्यर्थः ॥

[2] तत् पापमदुष्टे यथाशास्त्रं व्यवहारमाणे ब्राह्मणे श्राद्धे भोजिते न विद्यते न भवतीत्यर्थः ॥

[3] श्राद्धे प्रतिग्रहे वा विशिष्टा यथाशास्त्रमनुवर्तमाना यदि लभ्यन्ते तदा निमन्त्रितानपि निन्द्यान् परिहृत्य तानेव भोजयेत् न निमन्त्रितान् प्रत्याचक्षीत इति तु सत्पात्रपरम् निन्द्यांस्तु निमन्त्रितान् द्रविणदानादिना सन्तोषयेत् ॥

[4] समे स्वसदृशे हीने स्वापेक्षया गुणादिना न्यूने अदुष्टे पात्रे श्राद्धदानादौ प्रवृत्तिस्तेषामेवाशीर्दानात् पितरि सुखमित्यर्थः निषिद्धानां परं त्यागो नत्वादुष्टानां समहीनानामपीति भावः ॥

[1] यथोत्तरं धर्म्मोत्कर्षः हीनादपि भूम्यादिप्रतिग्रहे समादपि स्वापेक्षया विशिष्टादपि धार्म्मिकात् धर्म्म इत्यर्थः परस्यादानं परस्मात् स्वस्य धनस्यादानं प्रतिग्रहः वृत्तिकारस्तु परस्वादानं चौर्य्यादिना परस्वग्रहणं व्याख्यातं तथा च श्रुतिः शूद्रात् सप्तमे वैश्याद्दशमे क्षत्रियात्पञ्चदशे ब्राह्मणात् प्राणसंशये इति क्षुधार्पीडितमात्मानं कुटुम्बं रक्षितुं सप्तदिनान्याहारमप्राप्य शूद्रभक्ष्यापहारः कार्य्यः एवं दशदिनान्याहारमप्राप्य वैश्यात् पञ्चदशदिनान्याहारमप्राप्य क्षत्रियात् प्राणसंशये ब्राह्मणात् भक्ष्यापहरणं न दोषायेत्याहुः ॥

[2] न केवलं प्राणसंशये परस्वादानं न निषिद्धं किन्तु तस्या दशायामपहर्त्तुं ये न प्रयच्छन्ति तेषां वधोऽपि कार्य्यो न तावता धर्म्महानिरधर्म्मप्रादुर्भावो वेत्याह तस्यां दशायां विरुद्धानां विपरीतमाचरतां त्यागो वधः कार्य्य इत्यर्थः तदुक्तम् कर्म्मणा येन केनापि मृदुना दारुणेन वा उद्धरेद्दीनमात्मानं समर्थो धर्म्ममाचरेत् इति ॥

[3] यदि स्वस्माद्धीनः परो भवति योऽपहर्त्तुं न ददाति तस्य शूद्रादेस्त्यागो वधः ॥

**समे आत्मत्यागः परत्यागो वा ॥ १५ ॥**

Aph. 15. In the case of an equal, suicide, or the destruction of the other.

[1] If the opposite party be one's equal—but only if a Bráhman—in such a case suicide—the destruction of oneself by fasting &c.—is to be committed. If there appear no means of preserving oneself or one's family, and the opposite party be an equal, he is to be made away with, or destroyed. U.

**विशिष्टे आत्मत्याग इति ॥ १६ ॥**

Aph. 16. In the case of a superior suicide [is to be committed.]

[2] In the case of an opposite party superior to oneself, distinguished by study of the Veda &c., suicide alone is lawful; though there be danger to life, a man may design only his own death, but must not slay a Bráhman. U.

---

## SECOND DAILY LESSON.

**दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय ॥ १ ॥**

Aph. 1. Of actions of which the motives are seen and unseen, a motive, where there is none seen, tends to exaltation.

[3] Actions where the motives are seen are agriculture, merchandise, service of the king, &c. Actions where the motives are unseen are sacrifice, charity, chastity, &c. Among these actions where a visible motive is not observed, an invisible motive is to be supposed, and such a motive conduces to exaltation, or knowledge of the truth. Or the dative case 'to exaltation' may be employed in the sense of the nominative, when the sense will be that exaltation is the result. An unseen result is a remote consequence. If this be produced by asceticism, the exaltation is presentation of soul; if by sacrifice, almsgiving &c., the exaltation is paradise. In this instance such actions as sacrificing, giving alms, practising chastity &c, do not immediately bear fruit, as such actions as milking, cooking &c, have immediate results, and such actions as sowing, ploughing &c., after a while bear fruit; for there is no such [immediate] result observed. Nor is gain &c, through being known as virtuous, the result. For those who practise secret chastity &c., do not design such results. The result therefore is the remotely future paradise &c, and this does not immediately suceed the action which rapidly ceases to exist. It results therefore that there is an intermediate common substratum of the action and the fruit, a remote consequence. U.

[1] यदि स्वसदृशे ब्राह्मण एव विरोधी भवति तदात्मनएवोपवासादिना त्यागोऽवसादः कर्त्तव्यः यदि स्वस्य कुटुम्बस्य वा रक्षाप्रकारो न दृश्यते विरोधी च समो भवति तदा तस्यैव त्यागो वध इत्यर्थः ॥

[2] स्वापेक्षया विशिष्टे वेदाध्ययनादिना उत्कृष्टे विरोधिनि आत्मन एव त्यागो विधेयः प्राणसंशये सत्यप्यात्मानमेवाभिप्रेयात् न तु ब्राह्मणं हन्यादित्यर्थः ॥

[3] दृष्टप्रयोजनानि कृषिवाणिज्यराज्यसेवादीनि अदृष्टप्रयोजनानि यागदानब्रह्मचर्यादीनि एतेषां कर्मणां मध्ये यत्र दृष्टं प्रयोजनं नोपलभ्यते तत्रादृष्टं प्रयोजनं कल्पनीयम् तच्चाभ्युदयाय तत्त्वज्ञानाय यद्वा अभ्युदयायेति चतुर्थी प्रथमार्थे तेन फलमभ्युदय इत्यर्थः अदृष्टं फलमपूर्व्वमेव तद् यदि योगजं तदाऽभ्युदय आत्मसाक्षात्कारः यदि यागदानादिजं तदाऽभ्युदयः स्वर्गः तत्रापि यथा दोग्धि पचतीत्यादिक्रिया सद्यःफलिका वपति कर्षतीत्यादिक्रिया च विलम्बभाविफला तथा यजति ददाति ब्रह्मचर्य्यं चरतीत्यादिक्रिया तावत् सद्यःफलिका न भवति तादृशस्य फलस्यानुपलब्धेः न च धार्मिकतया ज्ञानाल्लाभादिकमेव फलम् प्रच्छन्नं ब्रह्मचर्यादि चरतां तत्फलानुद्देशात् तस्माच्चिरभाविस्वर्गादिकमेव फलं तच्चाशुतरविनाशिन्याः क्रियाया न साक्षादित्यान्तरालिकं क्रियाफलयोः समानाधिकरणम् पूर्व्वं पर्य्यवस्यति ॥

**अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय ॥ २ ॥**

Aph. 2. Inaugurations, fasting, continence, residence in the family of a spiritual guide, life in the forest, sacrifice, almsgiving, oblation, the cardinal points, constellations, sacred texts, seasons, and religious observances, conduce to invisible result.

[1] Of these, some of the actions of which the result is unseen, are pointed out. These actions conduce to, that is produce, unseen results. Among these inauguration is the sprinkling of kings; fasting, the abstinence of the Śiva-rátrí; continence, the avoidance of sexual intercourse; residence in the house of a spiritual guide that of religious students for the purpose of studying the Veda; living in the forest, the actions of those who set out at the close of life for the forest; sacrifice, the Râja-sûya &c.; almsgiving, at the beginning of the month Áshádha; oblation, of rice, cattle &c; the cardinal points, eating towards the east &c.; constellations, the obsequial rites of [the tenth lunar asterism] Maghá &c; sacred texts, the holy monosyllable [Om,] the Gáyatrí &c.; seasons, the Cháturmásya rites &c.; religious observances, purifications, contentment, penance, study, and meditation on the Deity. By the word 'and,' are to be understood also those not here enumerated, but which are prescribed by revelation and tradition. V.

**चातुराश्रम्यमुपधा अनुपधाश्च ॥ ३ ॥**

Aph. 3. The duty of the four periods of religious life [has been declared.] Fidelities and infidelities [are causes of merit and demerit.]

[1] तत्रादृष्टफलकानि कानिचित्कर्म्माणि प्रदर्शयति एतानि कर्म्माणि अदृष्टाय अदृष्टजनकानि तत्र अभिषेचनमभिषेको राज्ञाम् उपवासः शिवरात्र्युपवासादिः ब्रह्मचर्यमष्टविधमैथुनादिवर्ज्जनम् गुरुकुलवासो ब्रह्मचारिणां वेदाध्ययनाद्यर्थः वानप्रस्थं वयःशेषे वनप्रस्थितानां पुटपाकादिकर्म्म यज्ञो राजसूयादिः दानमाषाढ्यादौ प्रोक्षणं व्रीहिपश्वादीनाम् दिक्प्राङ्मुखभोजनादि नक्षत्रं मघाश्राद्धादि मन्त्रः प्रणवगायत्र्यादिजपः कालः चातुर्मास्यव्रतादिः नियमाः शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि चकारादनुक्तानि श्रौतस्मार्त्तान्यपि ॥

[1] The duty of the four periods of religious life is the conduct prescribed in these four stages, viz , those of the religious student, householder, hermit, and mendicant. This has been already declared :—such are the words to be supplied. Infidelities are defects of faith ; fidelities non-deficiencies of faith, efficient causes of merit and demerit. V.

भावदोष उपधा ऽदोषो ऽनुपधा ॥ ४ ॥

Aph. 4. A deficiency of faith is an infidelity ; a non-deficiency a fidelity.

[2] Deficiencies of faith, lust, anger, covetousness, infatuation, intoxication, envy &c , are expressed by the term infidelity ; non-deficiencies of faith, freedom from negligence and sloth, tranquillity of mind &c , are to be understood by the term fidelity. V.

यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितञ्च तच्छुचि ॥ ५ ॥

Aph. 5. That which is of prescribed colour, taste, smell, and touch, the aspersed, and the sprinkled, are pure.

[3] That colour &c , which is enjoined by revelation and tradition is prescribed. The substance to which such [colour &c ] belongs is such [is pure ] Of these colour [is prescribed] in such texts as, He buys the soma for a cow, ruddy, one year old, with tawny eyes ; He should take a white goat. The aspersed is sprinkled with water during the recitation of a sacred text ; the sprinkled, that which is sprinkled with water without a sacred text. The word 'and' implies that which is lawfully acquired This is such as is denoted by such precepts as that a Bráhman should acquire wealth by performing sacrifices, by teaching, and by receiving presents. U.

अशुचीति शुचिप्रतिषेधः ॥ ६ ॥

Aph. 6 'Impure' denotes the negation of the pure.

[4] The contrary of such substance as is pure is impure. A substance of wrong colour, taste, smell, or touch, one not aspersed or sprinkled, or sprinkled with forbidden water, or unlawfully acquired, as the property of a Bráhman acquired by agriculture or merchandise, is impure. U.

अर्थान्तरञ्च ॥ ७ ॥

Aph. 7. And something else.

[1] ब्रह्मचारिगृहिवानप्रस्थभिक्षुरूपेषु चतुर्षु आश्रमेषु विहितं यत्कर्म्म तत् चातुराश्रम्यं पूर्वमुक्तमितिशेषः उपधा भावदोषाः अनुपधा भावदोषाश्च धर्म्माधर्म्मसाधनानीत्यर्थः ॥

[2] कामक्रोधलोभमोहमदमात्सर्य्यादयो भावदोषा उपधाशब्दवाच्याः श्रद्धाऽप्रमादानालस्यमनःप्रसादादयोऽदोषा अनुपधाशब्दवाच्या इत्यर्थः ॥

[3] इष्टं श्रुत्या स्मृत्या च यद्रूपादिकं विहितं यस्य द्रव्यस्य तत्तथा तत्र रूपं अरुणया एकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति श्वेतं छागलमालभेतइत्यादौ प्रोक्षितं मन्त्रेणोदकसिक्तम् अभ्युक्षितं विनामन्त्रमुदकसिक्तं चकाराच्चायतो लब्धं तच्च याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेदित्यादिनियमविधिबोधितम् ॥

[4] यद्द्रव्यं शुचि तद्विपरीतमशुचीत्यर्थः अप्रशस्तरूपरसगन्धस्पर्शमन्त्रप्रोक्षितमनभ्युक्षितं निषिद्धजलाभ्युक्षितं वा अन्यायागतम् कृषिवाणिज्यागतं ब्राह्मणस्य द्रव्यमशुचीत्यर्थः ॥

[1] That which is vitiated by speech or by disposition even in that which is of excellent colour, taste, smell, or touch, or in that which is aspersed or sprinkled, or justly acquired, is also impure. U.

अयतस्य शुचिभोजनादभ्युदयो न विद्यते नियमाभावात् विद्यते वा ऽर्थान्तरत्वाद्यमस्य ॥ ८ ॥

Aph 8. To the unrestrained there accrues no exaltation from eating what is pure, inasmuch as there is an absence of religious observance ; or it accrues, because restraint is something else

[2] 'To the unrestrained' means to one deficient in restraint, or wanting in self-control. The eating of one void of the restraint denoted by such a rule as, A man should eat after washing his hands and feet, and rinsing his mouth, restrained in speech when food is presented to him, though pure, he should twice rinse his mouth, does not tend to exaltation, but to sin. It may be asked why: the answer accordingly is furnished. 'Inasmuch as there is an absence of religious observance,' in consequence of the non-existence of the religious observance, the secondary cause That which takes place where the observance is performed is stated. 'Or it accrues,' —exaltation accrues only in the case of eating with the accompaniment of the prescribed restraint. It may be asked why: hence it is stated that it is because restraint is something else, that is, is something other than eating. The sense, therefore, is that without the accessory cause there is no realisation of the result, and that with it there is. U.

असति चाभावात् ॥ ९ ॥

Aph. 9. For there is non-existence [of exaltation] where [the eating of pure food] does not exist.

[3] Though there be restraint, where the eating of pure food is not, there is non-existence of exaltation :—such is the completion of the ellipse Restraint and eating are therefore both causes of merit The word eating implies other notions Restraint and religious observance are accessories also of sacrifice, almsgiving, ablutions, oblations and other acts prescribed by revelation and tradition. U A E G.

*(To be continued.)*

[1] अप्रशस्तरूपरसगन्धस्पर्शमपि प्रोक्षितमभ्युक्षितं न्यायार्जितञ्च यत्तत्रापि वाग्दुष्टं भावदुष्टञ्च यत्तदप्यशुचीत्यर्थः ॥

[2] अयतस्य यमरहितस्यासंयतस्येति यावत् हस्तौ पादौ प्रक्षाल्याचम्य वाग्यतो भुञ्जीत भोक्ष्यमाणः प्रयतोऽपि द्विराचामेत् इत्यादिबोधितयमरहितस्य भोजनं नाभ्युदयाय किन्तु पापाय कुत एवमित्यत आह । नियमाभावात् नियमस्य सहकारिणोऽभावात् नियमे सति यत्तदाह विद्यते वा यथोक्तयमसाहित्येन भोजने भवत्येवाभ्युदयः कुत इत्यत आह। अर्थान्तरत्वाद्यमस्य भोजनादर्थान्तरं यतो यमः तथा च सहकारिकारणं विना न फलसिद्धिस्तस्मिन् सति फलसिद्धिरित्यर्थः ॥

[3] यमे सत्यपि शुचिभोजनेऽसति अभावादभ्युदयस्येतिशेषः तथा च यमो भोजनञ्च द्वयमेव पुण्यकारणमित्यर्थः भोजनमित्युपलक्षणं यागदानहोमादीनामपि श्रौतस्मार्तकर्मणां यमनियमौ सहकारिणौ ॥

TO THE EDITOR OF THE 'PANDIT.'

SIR,

'Bless them that curse thee'—this divine precept is still believed by thousands of educated Christians and even perhaps by some of my own countrymen to have been first taught by Jesus Christ. There may possibly be some even among the readers of your valuable Journal labouring under this delusion, for the removal of which it seems worth while to give prominence to the following verse from Manu :—

न क्रुध्यन्तं प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् । Chap. VI, Śl. 48.

Though the verse is not new to European Sanskritists it has not, I believe, been carefully compared with the above Biblical teaching, nor their striking correspondence noticed. Sir William Jones, for instance, renders the latter clause thus wrongly—'Abused, let him speak mildly.' Now, there are two distinct words of the same orthography—कुशल, the one, an adjective, meaning 'skilful,' and the other, a substantive, signifying 'blessing.' The word, as used here, is doubtlessly not the adjective, but the substantive, which can neither be used adverbially nor rendered 'mildly.' The phrase कुशलं वदेत् is, in fact, equivalent to आशिषं वदेत् or आशीर्व्वादं कुर्य्यात् (He shall utter a benediction.) Further I should think that the English word 'curse' is a corrupted, or cognate form, as European philologists would call it, of the Sanskrit root क्रुश् from which the participle आक्रुष्ट is formed. Hence the clause in question ought to be translated—'When cursed, he shall utter a blessing, or *benediction, towards the offender.* So strong is the belief of zealous Missionaries that meekness and forgiveness are exclusively Christian, that one can not persist too much in controverting it, and the following quotation from the Mahábhárata may scarcely be deemed a tautology :—

अतिवादं न प्रवदेन्न वादयेत्
यो नाहतः प्रतिहन्यान्न घातयेत् ।
हन्तुं च यो नेच्छति पापकं वै
तस्मै देवाः स्पृहयन्त्यागताय ॥ (Udyoga parva, Chap. 26, Śl. 11.)

"He who does not speak, nor incites another to speak reproachful words, who, when struck, strikes not in return nor incites another to strike, who wishes not *in his mind* to strike the evil-doer—the gods long for the advent of such *a man.*"

Professor Max Müller does not venture to give the Bráhmans the credit of a full perception of that fundamental maxim of morality.—'Do ye unto others as ye would that others should do to you.' He says—"The Bráhmans too had *a distant* perception of the same truth which is expressed, for instance, in the Hitopadeśa in the following words:—'Good people show mercy unto all beings, considering how like they are to themselves." *Chips from a German Workshop, Vol. I, p.* 312. I should therefore call the Professor's attention to the following from the Mahábhárata.

श्रूयतां धर्म्मसर्व्वस्वं श्रुत्वा चाप्यवधार्य्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥*

'Hear the sum-total of duties and having heard, bear it in mind—' Thou shalt (lit. he shall) not do to others what is disagreeable to thyself.'

It has the advantage of brevity over the Biblical sentence, expressing at the same time the entire sense though in the negative form.

How cheeringly, it may be remarked *en passant* does this sublime tone of ancient Indian morality harmonize with the equally sublime impartiality and unselfishness of a distinguished Indian of the present day who encourages his dear countrymen to emulate the virtues of the noble races of Europe in the following manner :—(I quote from memory.)

'As long as light will differ from darkness, so long will the European differ from the Native.'

Methinks I hear an echo answering in a sigh—As long as light will differ from darkness, so long will the European differ from the Native—*when such is the patriotism that animates our breasts !*

In the spirit of veneration peculiar to the Hindoos, our ancient Law-givers have represented the king as an incarnation of the *Lokapálas*, but the remarkable stanza which concludes this letter refutes the common notion that the sages meant to enjoin a slavish toleration of his tyranny or adoration of him as a divinity, though he act the devil :

अहं वो रक्षितेत्युक्त्वा यो न रक्षति भूमिपः ।
स संहत्य निहन्तव्यः श्वेव सोन्माद आतुरः ॥

*Mahábhárata, Anuśásana parva,*
*Dána-dharma, chap.* 61.

"Having declared 'I am your preserver,' that Monarch who does not preserve *his people*—let him be conspired against and killed like a dog, diseased and mad."

Loyalty indeed to such a sovereign as Victoria, I can truly say, notwithstanding the shortcomings of British rule in India, is a sacred duty enjoined on us by our very religion.

Yours Obediently,

BENARES : 31*st January*, 1871. } PRAMADADÁSA MITTRA.

* A similar verse was translated by me in the 'Pandit,' No. 19.



PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्कुरश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

# THE PANDIT.

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 58. Benares, March 1st, 1871. Vol. V.


## ॥ भाट्टचिन्तामणेस्तर्कपादः ॥

सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥

इदानीं प्रत्यक्षस्य धर्मप्रामाण्यनिराकरणाय प्रत्यक्षलक्षणमुक्तं सूत्रकारेण । न तावदिन्द्रियजन्यं ज्ञानं प्रत्यक्षमिति लक्षणम् । ज्ञानमात्रस्य मनोजन्यत्वात् । अत इन्द्रियार्थसंबन्धजन्यं ज्ञानं प्रत्यक्षमिति सूत्रकारः । न चेश्वरप्रत्यक्षे ऽव्याप्तिः । ईश्वरज्ञानस्यानुमितिविलक्षणत्ववत् प्रत्यक्षविलक्षणत्वादिति जीर्णाः ॥ यद्वा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् । अनुमित्युपमितिशाब्दबोधार्थापत्तिस्मृतीनां ज्ञानकरणकत्वात् । न च सविकल्पकप्रत्यक्षे विशिष्टवैशिष्ट्यप्रत्यक्षे चाव्याप्तिः, तयोर्निर्विकल्पकादिज्ञानकरणकत्वादिति वाच्यम् । व्यापारवदसाधारणकारणस्य करणतया तज्जन्यत्वे सति तज्जन्यजनकस्य व्यापारतया च निर्विकल्पकादेः कारणत्वे ऽप्यकरणत्वात् । जन्यज्ञानजन्यमात्रवृत्तिजातिशून्यज्ञानत्वं वा । सर्वत्र प्रत्यक्षे इन्द्रियस्य करणत्वात् तत्संबन्धस्य व्यापारत्वाच्च तादृशानामनुमितित्वादीनां प्रत्यक्षे ऽभावाल्लक्षणसंगतिः । सविकल्पकत्वादिकं तु न जातिः । इन्द्रियत्वं च संबद्धार्थविशदावभासकत्वम्, अपरोक्षज्ञानजनकद्रव्यत्वं वा ज्ञानानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वं वा ॥ तच्च षड्विधम् । घ्राणरसनचक्षुस्त्वक्श्रोत्रमनोभेदात् । तत्राद्यानि चत्वारि गन्धरसरूपस्पर्शमात्राभिव्यञ्जकतया गन्धादिमत्त्वानुमानेन पृथिव्यप्तेजोवायुप्रकृतीनि । श्रोत्रमपि शब्दमात्रग्राहकतया शब्दवत्त्वानुमानेनाकाशात्मकमित्यक्षपादीयाः ॥ आर्धिगुप्तेयास्तर्कदिशःश्रोत्रमिति लिङ्गाद्दिगात्मकत्वं युक्तम् । मनसि च सुखीति प्रत्यक्षमिन्द्रियजन्यं, प्रत्यक्षत्वा,दित्यनुमानं प्रमाणम् ॥ अन्ये तु सुखादीनां नित्यद्रव्यविशेषगुणत्वेन द्रव्यान्तरसंयोगासमवायिकारणकत्वे सिद्धे तादृशसयोगाश्रयतया मनःसिद्धिरित्याहुः ॥ तन्न । शरीरसंयोगेन सिद्धसाधनादर्थान्तरत्वाच्च । तच्चान्तरिन्द्रियं स्वातन्त्र्येणात्मतद्योग्यगुणतद्गतजातिमात्रग्राहकं, बाह्यविषयेषु तस्य स्वातन्त्र्याभावात् । कुतो न स्वातन्त्र्यमिति चेन्न । तस्याणुपरिमाणस्य देहाद्बहिर्भावाभावेन सन्निकर्षासंभवाद्युगपज्ज्ञानानुत्पत्तिश्च मनसोणुत्वे प्रमाणम् । येपि तस्य विभुत्वमाहुस्तेषामपि देहावच्छिन्नस्येन्द्रियत्वादस्वातन्त्र्यात्क्षतिः, युगपज्ज्ञानोत्पत्तिरिष्टैव । सन्निकर्षश्च संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायश्चेति । द्रव्यं संयोगेन, तद्गतगुणकर्मजातयो द्वितीयेन, गुणकर्मगतजातयस्तृतीयेन । के चित्तु समवायरूपप्रत्यासत्त्या द्रव्यगुणकर्मसामान्यगता सत्ता गृह्यते । सत्ता च तत्कालसंबन्ध इति तस्य जातिगतत्वं नानुपपन्नमित्याहुः, तेषां भावं नाकलयामः । शब्दस्य च द्रव्यत्वात्तत्रापि संयोग एव संबन्धः । ननु बाह्येन्द्रियग्राह्यतया शब्दे गुणत्वमिति चेत् । न । वायौ रूपत्वादिसामान्ये च व्यभिचारात् । प्रत्यक्षद्रव्यगुणत्वाभावविशिष्टप्रत्यक्षेण गुणत्वाभावानुमानाच्च । तत्रापि कर्मवेगवत्त्वेन द्रव्यत्वानुमानम् । न च तथापि शब्दे श्रोत्रसंयोगासंभवः, तस्य सर्वत्रोपलम्भेन विभुतया दिगात्मकश्रोत्रस्यापि विभुतया संयोगासमवायिकारणकर्माभावादिति वाच्यम् । न तावत्संयोगत्वावच्छिन्नं प्रति कर्मणो जनकता, संयोगजसंयोगे व्यभिचारात् । किं तु विजातीयसंयोगे, तत्र वैजात्यकल्पनमपेक्ष्य

जन्यसंयोगे कर्मत्वेन कारणता युक्ता । संयोगजसंयोगानङ्गीकाराच्च न व्यभिचारः । विभुनौ मिथः संयुक्ते, निरन्तरद्रव्यत्वाद्, घटाकाशवदित्यनुमानेन विभुसंयोगसिद्धेश्च ॥

तच्च प्रत्यक्षं निर्विकल्पकं सविकल्पकं चेति द्विधा । प्रकारताविशेष्यतादिविषयतारहितं ज्ञानं निर्विकल्पकं, तद्विशेषणविशेष्यभावानापन्नघटघटत्वादिविषयकम् । इन्द्रियसंयोगानन्तरमविविक्तसामान्यव्यक्तिभागस्य व्यक्तिमात्रगोचरज्ञानस्य जायमानत्वात् । तच्च प्रत्यक्षं, किं चिद्भासतइति प्रतीतेः, अश्वोप्ययं न तथा पूर्वं प्रतीत इति प्रतीतेश्चेति के चित् ॥ विशिष्टज्ञानरूपसविकल्पकस्य विशेषणज्ञानं विनोत्पत्त्यसंभवादनुमानगम्यमित्यन्ये ॥ विशेष्यविशेषणेन्द्रियसन्निकर्षस्य विशिष्टज्ञानहेतुतया विशेषणज्ञानस्य विशिष्टज्ञाने न हेतुत्वमिति के चित् ॥ तत्सिद्धं घटत्वनीलपीतादिनानाधर्मविषयकं निर्विकल्पकम् ॥ सविशेष्यकं सप्रकारकं ससंसर्गकं वा ज्ञानं सविकल्पकम् । तच्च जातिद्रव्यगुणक्रियानामविषयकतया पञ्चधा । चाक्षुषादिभेदेन षोढा च । तत्र प्रत्यक्षमात्रे महत्त्वं हेतुः । तच्च द्रव्यप्रत्यक्षे समवायेन, गुणक्रियाजातिप्रत्यक्षे समवायघटितसामानाधिकरण्येन, गुणक्रियागतजातिप्रत्यक्षे त्वेकार्थसमवायसमवायेन। चाक्षुषे चोद्भूतरूपमुद्भूतानभिभूतरूपालोकसंयोगश्च । कालादिचाक्षुषे महत्त्वोद्भूतरूपादीनां न हेतुतेति के चित् । स्पार्शने चोद्भूतस्पर्शः । न तु रूपमपि । तेन वायुरपि त्वाचप्रत्यक्षः । एवं च बहिरिन्द्रियजन्यप्रत्यक्षत्वं नोद्भूतरूपकार्यतावच्छेदकं, किं तु चाक्षुषत्वादिजातिरेवेति लाघवम् । मानसेपि महत्त्वं हेतुरिति के चित् । नेत्यन्ये ॥ केचित्तु क्रिया न प्रत्यक्षा, किं तु विभागोत्तरसंयोगाभ्यामनुमेया । अतस्तत्प्रत्यक्षे महत्त्वस्य न हेतुतेत्याहुः ॥

द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोन्धकारशब्दरूपाण्येकादश । गुणा रूपरसगन्धस्पर्शपरिमाणसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारादृष्टबुद्धिसुखदुःखेच्छाद्वेषयत्ना इति विंशतिः । कर्म चलनात्मकमेकम् । सामान्यं परापररूपं द्विधा । समवायश्चैकः । शक्तिस्त्रिधा । सहजा ऽऽधेया पदशक्तिश्चेति । अभावस्त्रिधा । ध्वंसो ऽत्यन्ताभावो भेदश्चेति ॥ एवं च द्रव्यगुणकर्मसामान्यसमवायशक्त्यभावाः सप्त पदार्थाः ॥ संख्यापि गुणादिवृत्तित्वात्पदार्थान्तरमित्यन्ये ॥ गुणसमुदाय एव पृथिव्यादिद्रव्यं, नातिरिक्तमिति के चित् । तन्न । पृथिव्यादौ पाकादिना पूर्वरूपनाशस्योत्तररूपोत्पत्तेश्चानुभवसिद्धत्वात् ॥ अन्ये त्ववयवसमुदायमेवावयविनमाहुः । तदपि न । उत्पन्नः पटो विनष्टः पट इत्यादिप्रतीतेः । तेन पटो रूपवान् नीलश्चलति डित्थो ऽयमिति सविकल्पकं सिद्धम् ॥

ननु नेयं प्रमा । अलीकघटत्वादिजातिविषयकत्वात् । तथाहि । न तावद्व्यक्तिभिन्ना जातिः प्रत्यक्षत उपलभ्यते । इह गवि गोत्वमिति प्रतीत्यभावात् । भिन्नापि सा सर्वगता व्यक्तिमात्रनिष्ठा वा । अन्तरालेनुपलब्धेर्नाद्यः, द्वितीयेपि नित्याया उत्पत्त्ययोगात् । अमूर्त्ताया व्यक्त्यन्तरादागमनासंभवाद् भविष्यति घटे सा न स्यात् । न चांशत आगमनं, निरवयवत्वात् । एवमेकस्यां व्यक्तौ कृत्स्नायामंशेन वा न वृत्तिः संभवतीत्यवगन्तव्यम् । अतो न व्यक्तितो भिन्ना जातिः संभवति । व्यक्त्यात्मकत्वं तु नित्यत्वानित्यत्वाभ्यां विरुद्धधर्माभ्यामपहस्तितं, भेदाभेदश्चात्यन्तविरुद्धः । एवं च स्वलक्षणरूपशुद्धविषयकमेव निर्विकल्पकं प्रमेति चार्वाकैकदेशिनः । तन्न । काणकूटाक्षसदृशगोव्यक्तिष्वेकाकारप्रत्ययानुपपत्तेः । किं च सामान्यस्यालीकत्वं वदता वस्तुत्वव्यापकभेदाभेदासंभवेन सामान्ये वस्तुत्वं निराक्रियते । सिद्धं तर्हि वस्तुत्वसामान्यम्। भेदाभेदाङ्गीकारेण च पूर्वोक्तप्रत्यक्षापादनादिनिरासः । इयं गौरिति पदयोर्भिन्नप्रवृत्तिनिमित्तकयोः सामानाधिकरण्येनानुवृत्तव्यावृत्ताकारबोधकत्वेन भेदाभेदसिद्धिः । किं च जातिव्यक्त्योः समवायसंबन्धाङ्गीकारेण चाभेदसिद्धिः । येन संबन्धेनाधेयमाधारस्य स्वानुरक्तबुद्धिजनकं स संबन्धः समवायः न त्वयुतसिद्धसंबन्धः सः । युतसिद्धेर्वक्तुमशक्यत्वात् । पृथक्चलनवत्त्वस्य वृक्षशाखयोः सत्त्वेन तयोः समवायसंबन्धो न स्यात् । अतो भेदाभेदः । एवमवयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोरपि भेदाभेदोनुसंधेयः । तेन सिद्धं सामान्यं जातिरूपं, तद्बाधके तूपाधिरूपम् । सामान्यं च नित्यमेकमनेकानुगतम् । तद्बाधकानि च ।

व्यक्तेरभेदस्तुल्यत्वं संकरोथानवस्थितिः ।
रूपहानिरसंबन्धो ह्यांशिकत्वमपीष्यते ॥

इति । एकव्यक्तिगतं न सामान्यम् । तुल्यव्यक्तिगतं न सामान्यद्वयम् । यथा घटत्वकलशत्वादि । परस्परात्यन्ताभावसमानाधिकरणमेकव्यक्तिवृत्ति न सामान्यं द्वयम् । यथा भूतत्वमूर्तत्वे । अनित्यं न सामान्यम् । यथा पृथुबुध्नोदराकारत्वम् । असमवेतं न सामान्यम् । यथा ऽभावत्वादि । आंशिकं न सामान्यम् । यथोपेक्षात्वमिति दिक् । तत्राप्यांशिकत्वं संकरान्तर्गतम् । स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्य जातिनिष्ठस्वस्वाभावोभयसामानाधिकरण्यकत्वस्य भेदाभेदगर्भस्य दूषकताबीजस्य तुल्यत्वादित्यस्तु प्रसक्तानुप्रसक्तम् । अतः सविकल्पकप्रमा सिद्धा ॥

अत्र निरालम्बनवादिनः । सर्वाणि बाह्यघटादिविषयकाणि सविकल्पकज्ञानानि मिथ्यार्थविषयकाणि, बाह्यार्थवि-

षयकज्ञानत्वात् । स्वप्नप्रत्ययवत् । स्वप्नज्ञानानां हि बाह्यघटाद्याकारेण परिणतं ज्ञानमेव विषयो न घटादि, तदानीमभावात् । मनःप्रत्यासत्त्यभावात् । स्वशिरश्छेदादीनामसंभवाच्च । अतस्तत्र ज्ञानरूपात्मैव विषयः । एवं सर्वज्ञानानामिति दृष्टान्तेन न किं चिदपि ज्ञानं प्रमेत्याहुः ॥ तन्न । स्वप्नप्रत्ययानामात्मविषयकत्वासिद्ध्या दृष्टान्तासिद्धेः । किं च नीलोयमित्यादिसविकल्पकानामात्मविषयकत्वे नीलोहमित्याकारत्वापत्तिः । अत इदं बाह्यविषयकम् । बाधकाभावेन प्रमैवेति ॥

शून्यवादी तु न ज्ञानातिरिक्तो बाह्यो विषयोऽस्ति, ज्ञानस्यैवाकारो विषयो ज्ञानस्वरूपात्मक एव, स्वप्नज्ञानवत्, तेन सविकल्पकं न प्रमा । तथाहि । नीलादेः किं ज्ञानविषयत्वम् । न तावत्पदार्थत्वं सत्तावत्त्वं वा । नीलज्ञाने पीतादेरपि विषयत्वप्रसङ्गात् । न ज्ञानहेतुत्वम्, इन्द्रियादेरपि तत्त्वप्रसङ्गात् । नापि ज्ञानजनकसन्निकर्षाश्रयत्वम् । रूपज्ञाने स्पर्शस्य विषयत्वापत्तेः । नापि सादृश्यविशिष्टहेतुत्वं, विशेषणज्ञानस्य ज्ञानत्वेन सादृश्याद्धेतुत्वाच्च विशिष्टज्ञाने विषयत्वप्रसङ्गात् । न चात्यन्तसादृश्यं विवक्षितं, तच्च न ज्ञानत्वेन, तस्य साधारणत्वात् । किं त्वेकज्ञानविषयत्वेन । तच्च त्रिपुटीप्रत्यक्षाङ्गीकारेण ज्ञाननीलयोरेकज्ञानविषयत्वाद्धेतुत्वाच्चोपपन्नं विषयत्वमिति वाच्यम् । धारावाहिकज्ञानेषु पूर्वज्ञानस्य सादृश्येनोत्तरज्ञाने विषयत्वापत्तेः । ज्ञानस्य स्वस्मिन्स्वस्य हेतुत्वासंभवेन विषयत्वानुपपत्तेः । न च ज्ञाने नीलाद्याकारतासमर्पकत्वे सति हेतुत्वम्, तच्च जपाकुसुमस्येव सन्निधिनेति वाच्यम् । विषयस्य नीलाद्याकारतासमर्पकत्वे मानाभावात् । ज्ञानवैचित्र्यं मानमिति चेत् । न । अर्थं विनापि स्वप्नज्ञानवैचित्र्यदर्शनात् । नापि ज्ञानजन्योपादानहानादिव्यवहारवत्त्वम् । घटज्ञाने घटत्र्यणुकानां विषयत्वापत्तेः । सुखादीनां स्वज्ञानाविषयत्वापत्तेश्च । न च सुखादिषु सुखीत्यादिशब्दप्रयोगो व्यवहार इति वाच्यम् । शब्दप्रयोगस्य ज्ञानविषयनिरूपकत्वाभावात् । ज्ञानविषयनिरूपणपूर्वकत्वेन शब्दप्रयोगस्य तेन विषयनिरूपणे इतरेतराश्रयापत्तिः । नापि ज्ञानजन्यज्ञाततावत्त्वं तत् । भूतभविष्यतोस्तदसंभवात् । तत्र मानाभावाच्च । अतो ज्ञानात्मकमेव तत् । किं च विषयो ज्ञानात्मको, ज्ञानेन सहोपलभ्यमानत्वात्, ज्ञानत्ववत् । सहानुपलभ्यमानयोर्घटपटयोर्भेददर्शनमनुकूलतर्कः । न च घटोयमिति ज्ञानस्य ज्ञानाविषयत्वेनासिद्धः सहोपलम्भ इति वाच्यम् । उत्तरकालं ज्ञातो घट इति ज्ञानघटयोः स्मरणदर्शनेन पूर्वानुभवस्यावश्यकतया घटोयमिति ज्ञानस्य ज्ञानविषयकत्वकल्पनात् । स्वप्नादिज्ञानानां साकारत्वमिव सर्वेषां साकारत्वेन ज्ञानातिरिक्तविषयाभाव इति स्वमतं परिष्करोति ॥ तच्चिन्त्यम् । नीलादेर्ज्ञानात्मकत्वे ज्ञानस्य स्वविषयाकारत्वे मानाभावात् । उक्तानुमानस्याप्रयोजकत्वात् । समूहालम्बने सहोपलभ्यमानयोर्घटपटयोरभेदाभावेन व्यभिचाराच्च । किं च न ज्ञानात्मको विषयः । ज्ञानाभावविषयके ज्ञाने ज्ञानाभावस्य ज्ञानात्मकत्वासंभवात् । तदेवेदमिति स्थायित्वविषयके ज्ञाने स्थायित्वस्य क्षणिकज्ञानात्मकत्वासंभवात् । इदं नानाकारमिति चित्रबुद्धावनेकाकारस्यैकस्मिन्नसंभवाच्च । किं च विषयस्य ज्ञानात्मकत्वे ज्ञानस्यापरोक्षत्वनियमेनानुमितिविषयवह्न्यादेः परोक्षत्वानुपपत्तिः, किं चातीतकालसंबन्धानुमानविषयस्यातीतकालसंबन्धस्य वर्त्तमानज्ञानात्मकत्वानुपपत्तिः । न च तत्रातीतं ज्ञानमेव विषय इति वाच्यम् । अतीतत्वस्य ज्ञानाकारत्वासंभवात् । अतोवश्यं ज्ञानभिन्नो विषयो वाच्यः । तन्निष्ठविषयत्वं ज्ञानजन्यफलभागित्वं नित्यमतिरिक्तं वेत्युक्तं प्राक् । न च स्वप्नदृष्टान्तो युज्यते । तस्यापि बाह्यविषयत्वात् । तथाहि । स्वप्ने दिवसानुभूतदेशकालान्तरगताः शिरश्छेदादयो विषया अदृष्टोद्बोधितसंस्कारवशात्स्मर्यमाणा निद्रारूपदोषवशेनात्मनिष्ठतया भासन्ते । एवं चान्यसंबन्धित्वेनावगतानामन्यसंबन्धित्वेन भानं शुक्तिरजतज्ञानवत् । इयमेव चान्यथाख्यातिः । न च बाह्यविषयेषु मनसस्तदानीमसंबन्धात्कथं भानमिति वाच्यम् । ज्ञानलक्षणायाः प्रत्यासत्तेरङ्गीकारात् । प्रमुष्टतत्ताकस्मरणाङ्गीकाराद्वा न दोषः । अतः स्वप्नज्ञानानां बाह्यविषयत्वं सिद्धम् । तेनानुभूयमानानां बाह्यार्थानामपलापासंभवात्तद्विषयकज्ञाने न मिथ्यात्वं, किं तु दुष्टकारणजन्यं बाधितमिति ॥

गुरवस्तु शुक्तिरजतज्ञानादौ न संसर्गग्रहो मानाभावात् । किं तु स्मरणानुभवविषययो रजतत्वशुक्त्योरसंसर्गाग्रहमात्रं, नान्यथा ख्यातिः । किं त्वसंसर्गाग्रहरूपेयमख्यातिः । एवं चासंसर्गाविषयकतत्प्रकारकज्ञानस्य प्रवृत्तौ व्यवहारे च हेतुत्वादतिलाघवमित्याहुः ॥ तन्न । असंसर्गाविषयकत्वरजतत्वप्रकारकत्वयोर्ज्ञानविशेषणयोर्विशेषणविशेष्यभावे विनिगमकाभावेन कार्यकारणभावद्वयकल्पनागौरवात् । एवं सामान्यतः प्रवृत्तौ कार्यताज्ञानस्य हेतुत्वे यत्र कार्यताभ्रमात्प्रवृत्तिस्तत्रासंसर्गाविषयकत्वकार्यत्वप्रकारकत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण हेतुहेतुमद्भावद्वयकल्पनम् । एवमप्रामाण्यज्ञानाभावविशिष्टकार्यत्वप्रकारकज्ञानस्य हेतुत्वेन यत्राप्रामाण्यग्रहो भ्रमरूपस्तत्राप्रमात्वात्संसर्गाविषयकत्वकार्यत्वप्रकारकत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण हेतुहेतुमद्भावद्वयकल्पने

ऽतिगौरवापत्तिः । अतो ऽत्रासंसर्गाग्रहस्य प्रवृत्तिव्यवहारादिहेतुत्वानुपपत्तेर्नाख्यातिसंभवः । तेनान्यथाख्यातिरूपरजतत्वविशिष्टज्ञानस्यैव ग्रहे प्रवृत्त्यादिहेतुता युक्तेति । न चैवं चैत्रो रजतज्ञानवान् । कार्यताज्ञानवत्त्वादिति ज्ञानान्मैत्रस्य प्रवृत्त्यापत्त्याभ्रान्तभ्रान्तिज्ञसंकरापत्तिरिति वाच्यम् । भ्रान्तिज्ञस्य बाधादेव प्रवृत्त्यभावोपपत्तेः । परकीयरजतत्वप्रकारकज्ञानज्ञानवतः क्षणविलम्बेन रजतत्वप्रकारकज्ञानादेव प्रवृत्त्यङ्गीकारात् । ज्ञानाविषयकज्ञानत्वेन प्रवृत्त्यङ्गीकाराद्वा न दोषः । यद्वा रजतविषयकप्रवृत्तित्वावच्छिन्नं प्रति रजतत्वप्रकारतानिरूपितरजतनिष्ठमुख्यविशेष्यताशालिज्ञानत्वेन हेतुत्वान्न काप्यनुपपत्तिरिति । किं च सर्वत्र प्रवृत्तौ नासंसर्गाग्रहो हेतुः । सर्वदा प्रवृत्त्यापत्तेः । किं तु प्रमाजन्यप्रवृत्तौ तत्प्रकारकनिश्चयो हेतुः । भ्रमजन्य प्रवृत्तौ चासंसर्गाग्रह इति कार्यकारणभावद्वयकल्पनागौरवम् । मम तु सर्वत्र प्रवृत्तौ तत्प्रकारकनिश्चयत्वेनैव हेतुत्वमिति लाघवमिति दिक् ॥

तच्च सविकल्पकं द्विविधम् । लौकिकमलौकिकं च । उक्तसन्निकर्षजन्यमाद्यम् । सामान्यलक्षणाज्ञानलक्षणाजन्यं द्वितीयम् । सामान्यलक्षणा च सामान्यज्ञानं ज्ञायमानं सामान्यं वा । तेन संबन्धेनेन्द्रियसंबद्धानां तत्सामान्याश्रयव्यक्तीनां प्रत्यक्षम् । इदं चावश्यकम् । अन्यथा व्यवहारविषये घटे शक्तिग्रहे सर्वव्यक्तीनामप्रत्यक्षतया सर्वत्र शक्तिग्रहो न स्यात् ॥

गङ्गेशस्तु महानसीयधूमे व्याप्तिप्रत्यक्षे सति धूमत्वसामान्यलक्षणप्रत्यासत्त्या सकलधूमप्रत्यक्षानङ्गीकारे धूमो वह्निव्याप्यो न वेति संशयो न स्यात् । प्रसिद्धधूमे प्रत्यक्षेण व्याप्तिनिश्चयात् । अन्यस्य चाज्ञानात्संदेहानुपपत्तिः । किं च सुखार्थं कर्मणि प्रवृत्तिर्न स्यात्, सिद्धसुखेच्छाविरहात् । असिद्धस्य चाज्ञानात् । एवं सुखादाविच्छापि न स्यात् । किं च कपालेषु घटप्रागभावप्रत्यक्षं न स्यात् । प्राचीनघटानां प्रतियोगित्वानुपपत्त्या प्रागभावविशेषणीभूतस्य प्रतियोगिनो घटस्याज्ञानात् । एवं कपालाधिकरणको वर्त्तमानप्रागभावप्रतियोगी घट इति शाब्दबोधो ऽपि न स्यात् । अतः सामान्यलक्षणा ऽङ्गीकार्येति ॥

अत्र शिरोमणिः । प्रसिद्धधूमे तद्धूमत्वेन व्याप्तिनिश्चयेपि धूमत्वेन तन्निश्चयाभावाद् उक्तसंशयस्य नानुपपत्तिः । समानप्रकारकनिश्चयस्यैव संशयादिविरोधित्वात् । धूमत्वेन व्याप्तिनिश्चये संशयाभावस्येष्टत्वात् । एवमिच्छाप्रवृत्त्योरपि तत्प्रकारकनिश्चयहेतुकतया नानुपपत्तिः । विशिष्टज्ञाने विशेषणज्ञानस्य हेतुत्वानङ्गीकारेण विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुत्वानङ्गीकारेण च नात्यन्ताभावप्रत्यक्षानुपपत्तिः । किं च प्रागभावसत्त्वेप्यत्र घटो भविष्यतीत्यत्र न घटप्रागभावप्रतीतिः किं तूत्पत्तिप्रागभावस्य । तस्याश्च कालसंबन्धरूपाया अप्रत्यक्षत्वात् तत्प्रतियोगिकप्रागभावस्य सुतरामप्रत्यक्षत्वात् तत्प्रतियोगिप्रत्यक्षार्थं का कथा सामान्यलक्षणायाः । तथाहि । भविष्यति भवितेत्यादौ उत्पत्तिर्धात्वर्थः । आख्यातार्थस्तदनुकूलव्यापारः, तेन वर्त्तमानकालोत्तरकालीनकपालाधिकरणकोत्पत्त्यनुकूलव्यापारवान् वर्त्तमानप्रागभावप्रतियोग्युत्पत्त्यनुकूलव्यापारवान् वा घट इति बोधः । उत्पत्त्याश्रय इति वा । एवं नङ्क्ष्यतीत्यत्र नाशो धात्वर्थः, वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वरूपं भविष्यत्त्वं प्रतियोगितासंबन्धेन धात्वर्थे ऽन्वेति । तेन वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिककपालाधिकरणकनाशप्रतियोगी घट इति बोधः । एवं चात्र वर्त्तमानोत्तरकालीनत्वं न प्रागभावेन तत्प्रतियोगिना घटेन वा नाशेन वा ऽन्वेति । तदन्वये परश्वो भविष्यति परश्वो नङ्क्ष्यति श्वो नङ्क्ष्यति श्वो भविष्यतीति प्रयोगापत्तिः । गृहाङ्गणमागमिष्यति देवदत्ते श्व उत्पत्स्यति गृहाङ्गणे भविष्यतीति प्रयोगापत्तिश्च । तेन वर्त्तमानोत्तरकालत्वस्य उत्पत्तावेवान्वय इति न तदर्थं सामान्यलक्षणापेक्षा । वस्तुतः प्रागभावे प्रमाणाभावात् सर्वमिदं गर्भस्रावगलितमिति । न च प्रागभावानङ्गीकारे उत्पन्नस्य पुनरुत्पत्तिप्रसङ्गः । शततन्तुकपटे द्वितन्तुकपटोत्पत्तिप्रसङ्गश्चेति वाच्यम् । तद्व्यक्तेरेव प्रतिबन्धकत्वाङ्गीकारात् । अक्लृप्तप्रागभावतद्धेतुत्वकल्पने गौरवात् ॥

केचित्तु प्रागभावो नाशश्च नाभावरूपः । किं त्वाद्यक्षणसंबन्धरूपोत्पत्तिपूर्वकालरूप एव प्रागभावः । एवं चरमक्षणसंबन्ध एव नाशः । तस्योत्तरकालमेव नाशादनित्यत्वम् । अत एव घटो भविष्यति नष्टो घट इति प्रतीतिः । नहि नाशोस्ति प्रागभावोस्तीति कश्चित्प्रत्येति । अतो नाशप्रागभावौ न स्त इति वदन्ति ॥

वस्तुतः सिद्धसुखविषयकप्रवृत्त्यभावादसिद्धसुखज्ञानार्थमरण्यस्थदण्डादौ प्रवृत्तिजनकघटहेतुताग्रहार्थं शक्तिग्रहार्थं च सामान्यलक्षणावश्यकीति युक्तम् ॥

एवं ज्ञानलक्षणानङ्गीकारे ज्ञातस्य सुरभिचन्दनखण्डस्य चक्षुषा सुरभि चन्दनमिति ज्ञानं न स्यात् । सौरभांशे सौरभत्वांशे वा प्रत्यासत्तेरभावात् । अतस्तत्र तज्ज्ञानमेव प्रत्यासत्तिः ॥

न्यायविदस्तु योगजधर्मप्रत्यासत्तिं तृतीयामाहुः ॥ तद्योगिषु मानाभावेनासुंदरम् । न चेतिहासपुराणादि मानम्, तस्यान्यतात्पर्यकत्वादिति दिक् ॥

इति गागाभट्टकृते भाट्टचिन्तामणौ प्रत्यक्षपरिच्छेदः ॥

अनुमान तु

"ज्ञातसंबन्धस्यैकदेशदर्शनाद्देशान्तरे ऽसन्निकृष्टे बुद्धिः"

इति सूत्रेणोक्तम् । सामान्यरूपेण ज्ञातव्याप्तिकस्य व्यक्तिविशेषदर्शनजन्यं संदिग्धसाध्यवदधिकरणकमसन्निकृष्टसाध्यविषयकं निश्चयरूपं ज्ञानमनुमितिरित्यर्थः। व्याप्यतावच्छेदकप्रकारकपक्षधर्मतानिश्चयजन्यं ज्ञानमनुमितिरित्यर्थः । न चैवं पदजन्यपदार्थस्मरणवद्व्याप्यज्ञानेन व्यापकस्मृतिरिति वाच्यम् । व्यापकवत्पक्षस्यानुभवाभावेन व्यापकवत्पक्षस्मृतित्वासंभवात् । न चांशे उपेक्षात्वानुपेक्षात्ववद् आंशिकं स्मृतित्वानुभवत्वमिति वाच्यम् । उपेक्षात्वानुपेक्षात्वयोरविरुद्धयोर्धर्मयोरेकानुभववृत्तित्वेपि विरुद्धयोः स्मृतित्वानुभवत्वयोरेकज्ञानवृत्तित्वासंभवात् । अत एव चाक्षुषत्वमानसत्वयोर्विरोधेन वह्न्यंशे मानसत्वमपास्तम् । बहिर्विषये तस्यास्वातन्त्र्यात् पक्षचाक्षुषसामग्र्याः प्रतिबन्धकत्वाच्च । न च तथापि व्याप्यतावच्छेदकप्रकारकपक्षधर्मतानिश्चयजन्ये तदनुव्यवसाये तद्विशिष्टवैशिष्ट्यप्रत्यक्षे तत्सदृशज्ञानजन्यानुमितौ विशिष्टशाब्दबोधे तत्स्मरणे चातिव्याप्तिरिति वाच्यम् । तादृशनिश्चयत्वेन हेतुत्वस्य विवक्षणात् । उक्तस्थलेषु अनुव्यवसाये विषयत्वेन विशिष्टवैशिष्ट्यप्रत्यक्षे विशेषणतावच्छेदकप्रकारकनिश्चयत्वेनोपमितौ सादृश्यज्ञानत्वेन शाब्दबोधे चावान्तरवाक्यार्थज्ञानत्वेन स्मृतावनुभवत्वेन हेतुत्वात् । एवं भ्रमसंशयोत्तरप्रत्यक्षे विशेषदर्शनस्य भ्रमादिविरोधित्वेन हेतुत्वाद्भ्रमसंशयोत्तरैककोटिकप्रत्यक्षत्वस्यार्थसमाजसिद्धतया विशेषदर्शनजन्यत्वानङ्गीकाराद्वा नातिव्याप्तिः । न चान्वयव्यतिरेकव्याप्त्योरननुगमेनैकोपादाने ऽपरत्राव्याप्तिरिति वाच्यम् । व्यभिचारज्ञानविरोधिज्ञानविषयत्वेन व्याप्तिज्ञानस्यानुगमात् । तेन व्यभिचारधीविरोधिधीविषयतावच्छेदकधर्मप्रकारकपक्षधर्मताज्ञानजन्यज्ञानमनुमितिरिति तु फलितम् ॥ नैयायिकास्तु लाघवाद् व्यभिचारधीविरोधिधीविषयधर्मप्रकारकपक्षधर्मताज्ञानजन्यज्ञानमनुमितिरिति वदन्ति । तत्परामर्शवादे निराकरिष्यते । यद्वा अनुमितित्वजातिमती अनुमितिः । अनुमितित्वजातिस्तु अनुमिनोमीत्यनुभवसिद्धा । तत्करणमनुमानं, तच्च भूतभाविलिङ्गेनानुमित्यनुत्पत्त्यापत्तेर्ज्ञानमेव न तु ज्ञायमानो हेतुः ॥

अथ केयं व्याप्तिः ॥ अत्र गौडमैथिलसर्वस्वम् । साध्यवदन्यावृत्तित्वं व्याप्तिः । वह्निमन्महानसान्यह्रदावृत्तित्वाद् धूमे लक्षणसमन्वयः । धूमवन्महानसान्यायोगोलकवृत्तित्वाद् धूमवान् वह्नेरित्यसद्धेतौ च नातिव्याप्तिः । अत्र साध्यतावच्छेदकसंबन्धेन साध्यवान् बोध्यः । तेन समवायेन वह्निमद्वह्न्यवयवान्यमहानसवृत्तित्वेपि धूमस्य नाव्याप्तिः । साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान् बोध्यः । तेन यत्किंचिद्वह्निमदन्यवृत्तित्वेपि धूमस्य नाव्याप्तिः । वृत्तित्वाभावश्च वृत्तित्वत्वावच्छिन्नप्रतियोगिताकः । तेन धूमवदन्यजलावृत्तित्वेपि वह्नौ नातिव्याप्तिः । न चैवमीदृशव्याप्तिज्ञानस्य केवलान्वयिन्यसंभवात्कथमनुमितिरिति वाच्यम् । इष्टापत्तेः । केवलान्वयिव्यतिरेकिणोस्तयोः पञ्चरूपोपपन्नत्वाभावेनानुमापकत्वाभावात् । एवं च केवलान्वयिव्यतिरेक्यनुमानमेव नेति ॥ यद्वा हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः । अत्र प्रसिद्धानुमाने घटाभावमादाय लक्षणसमन्वयः । व्यभिचारिण्ययोगोलकवृत्तिधूमाभावमादाय नातिव्याप्तिः । अत एव महानसीयवह्न्यभावं वह्निघटोभयाभावं वादाय नाव्याप्तिः । तत्र महानसीयवह्नित्वस्य च प्रतियोगितावच्छेदकत्वेन वह्नित्वस्य प्रतियोगितानवच्छेदकत्वात् । दण्डिमान् दण्डिसंयोगादित्यादौ रूपत्वव्याप्यजातिमद्वान् पृथिवीत्वादित्यादौ च स्वाश्रयसंयुक्तत्वादिसंबन्धेन दण्डत्वादिकमेव साध्यतावच्छेदकम् । तस्य प्रतियोगितानवच्छेदकत्वान्नाव्याप्तिः । हेत्वधिकरणं च तदवच्छेदकसंबन्धेन हेतुतावच्छेदकविशिष्टाधिकरणं च बोध्यम् । तेन वह्निमान् धूमादित्यादौ समवायेन धूमावयववृत्त्यभावप्रतियोगितावच्छेदकत्वेपि वह्नित्वस्य द्रव्यं विशिष्टसत्त्वादित्यादौ च शुद्धसत्त्वाधिकरणगुणादिनिष्ठाभावप्रतियोगितावच्छेदकत्वेपि द्रव्यत्वस्य नाव्याप्तिः । अभावश्च हेत्वधिकरणावच्छेदेन प्रतियोग्यव्यधिकरणः प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणश्च बोध्यः । तेन संयोगी द्रव्यत्वात्कपिसंयोगी एतत्त्वादित्यादौ नाव्याप्तिः । न वा संयोगी सत्त्वाद्विशिष्टसत्ताया जातेरित्यादावतिव्याप्तिः । प्रतियोग्यनधिकरणत्वं च साध्यतावच्छेदकसंबन्धेन, तेन ज्ञानवान्सत्त्वादित्यादौ सत्ताधिकरणघटादेर्विषयतया ज्ञानाधिकरणत्वेपि न क्षतिः । ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्य चिदनधिकरणत्वं तत्सामान्यस्य यत्किंचित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वा विवक्षितम् । आद्ये कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिः । कपिसंयोगाभावस्य हि प्रतियोगितावच्छेदकावच्छिन्नो वृक्षावृत्तिरपि कपिसंयोगो भवति तदनधिकरणं च वृक्ष इति । द्वितीये प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः । सर्वस्यैवाभावस्य पूर्वलक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात् । न च वह्निमान् धूमादित्यादौ घटाभावादेः स्वात्मकप्रतियोग्यधिकरणत्वं यद्यपि पर्वतादेस्तथापि साध्यतावच्छेदकसंबन्धेन

तत्प्रतियोग्यनधिकरणत्वमस्त्येवेति कथं प्रतियोगिव्यधिकरणाप्रसिद्धिरिति वाच्यम् । घटाभावे यो वह्न्यभावस्तस्य घटाभावात्मकतया घटाभावस्य वह्निरपि प्रतियोगी तदधिकरणं च पर्वतादिरिति क्रमेण प्रतियोगिव्यधिकरणस्याप्रसिद्धत्वात् । यदि तु घटाभावादौ वह्न्यभावादिर्भिन्न इत्युच्यते तथापि धूमाभाववान् वह्न्यभावादित्यादावव्याप्तिः । तत्र साध्यतावच्छेदकसंबन्धः स्वरूपसंबन्धस्तेन संबन्धेन सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं हेत्वधिकरणस्येति । तृतीये तु कपिसंयोगाभाववानात्मत्वादित्यादौ अव्याप्तिः । आत्मवृत्तिकपिसंयोगाभावाभावः कपिसंयोगस्तस्य च गुणत्वात् तत्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वं तदवच्छिन्नानधिकरणत्वं च हेत्वधिकरणस्यात्मन इति चेत् । मैवम् । यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् । ननु कालो घटवान् कालपरिमाणादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः । हेत्वधिकरणस्य महाकालस्य जगदाधारतया सर्वेषामभावानां साध्यतावच्छेदकसंबन्धेन कालिकविशेषणत्वेन प्रतियोग्यधिकरणत्वसत्त्वात् । अत्र के चित् । महाकालभेदविशिष्टघटाभावस्तत्र प्रतियोगिव्यधिकरणः । महाकालस्य घटाधारत्वेपि महाकालभेदविशिष्टघटानाधारत्वात् । महाकाले महाकालभेदाभावात् । यद्वा प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यद्धर्मावच्छिन्नत्वयत्संबन्धावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं व्यापकसामानाधिकरण्यं च व्याप्तिः । अव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिवारणायानधिकरणान्तं हेत्वधिकरणविशेषणम् । यद्वा हेतुसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकसाध्यवत्त्वावच्छिन्नवृत्तित्वं व्याप्तिः, अन्योन्याभावस्य व्याप्यवृत्तित्वादत्र न प्रतियोगिव्यधिकरणत्वादिनिवेश इति लाघवमिति जीर्णाः ॥ तस्याप्यव्याप्यवृत्तित्वात्तथैव प्रतीतेरस्त्येव तद्विवक्षेति नव्याः ॥ अत्राचार्याः । व्यापकसामानाधिकरण्यं न व्याप्तिः । किं तु व्यापकसंबन्धमात्रम् । तेनाधश्छायादेरुपरि सवितरि कृत्तिकोदयस्य रोहिण्युदये हेतुत्वोपपत्तिरित्याहुः ॥ न चैवं व्यतिरेकव्याप्तौ कथं व्याप्तिपदप्रयोग इति वाच्यम् । अनुमितिकारणीभूतज्ञानविषयव्याप्तेर्लक्ष्यतया व्यतिरेकव्याप्तौ व्याप्तिपदप्रयोगाभावेपि बाधकाभावात् ॥ वस्तुतो व्यभिचारधीविरोधिविषयधर्मविशिष्टहेतुतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन हेतुतेति युक्तम् । तेनानुमानत्रैविध्यमुपपन्नम् । पञ्चरूपत्वनियमस्त्वविवक्षित इति ॥

तादृशव्याप्तिग्रहे व्यभिचाराग्रहः सहचारग्रहश्च हेतुः । भूयोदर्शनं तु न हेतुः । व्यभिचारास्मरणे सकृद्दर्शनेनापि व्याप्तिग्रहात् । भूयोदर्शनं तु क्व चिद् व्यभिचारशङ्कानिवर्त्तकम् । क्व चित्तर्कः । व्याप्यारोपेण व्यापकारोपद्वारानिष्टप्रसञ्जनं तर्कः । तथा ऽपि वह्निविरहेपि धूमः स्यादित्याशङ्का कार्यकारणभावप्रतिसंधानान्निवर्त्तते । तत्राप्यहेतुको भवत्वित्याशङ्का तु धूमार्थं वह्नेर्नियमत उपादाने प्रवृत्तिर्न स्यादिति व्याघातेन निरसनीया । यत्र स्वत एव शङ्का नावतरति न तत्र तर्कापेक्षेति दिक् ॥ व्याप्तिग्रहश्च सकलधूमे सामान्यलक्षणप्रत्यासत्त्या, सा च निरूपिता प्राक् । तदङ्गीकारे तु महानसीयधूमे धूमत्वप्रकारकव्याप्तिग्रहात् पर्वतीयधूमे धूमत्वप्रकारकव्याप्तिस्मरणोपपत्तिः । उपाधिज्ञानेन च व्याप्तिग्रहप्रतिबन्धः । स च यद्धर्मावच्छिन्नसाध्यव्यापकस्तद्धर्मावच्छिन्नसाधनाव्यापकः । भवति धूमवान् वह्नेरित्यत्र धूमत्वावच्छिन्नव्यापकं तत्साधनवह्नेरव्यापकमार्द्रेन्धनम् । स श्यामो मित्रातनयत्वादित्यत्र मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकं शाकपाकजत्वं मित्रातनयत्वाव्यापकम् । वायुश्चाक्षुषः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र द्रव्यत्वावच्छिन्नचाक्षुषत्वव्यापकमुद्भूतरूपवत्त्वं तदवच्छिन्नहेतोरव्यापकं च । एवं ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वं जन्यत्वावच्छिन्नसाध्यव्यापकं साधनाव्यापकं च । एवं यत्र तादृशो धर्मो नास्ति तत्र साध्याधिकरणतदनधिकरणान्यतरत्वरूपधर्मो बोध्य इति । अयं च स्वव्यभिचारेण साधने साध्यव्यभिचारज्ञापनेन व्याप्तिग्रहप्रतिबन्धकः । वह्निरनुष्णः कृतकत्वादित्यत्र वह्नीतरत्वमुपाधिः । अयमेव बाधोन्नीत इत्युच्यते । प्रसिद्धानुमाने पर्वतेतरत्वं नोपाधिः । साध्यव्यापकत्वाग्राहकमानाभावात् । अयं च बाधानुन्नीतः । संदिग्धपक्षेतरत्वं तु नोपाधिः, संप्रदायादिति के चित् ॥ अन्ये तु उपाधेः सत्प्रतिपक्षोत्थापनेन दूषकता । वह्निना धूमसाधने आर्द्रेन्धनाभावेन तदभावः साध्यते । इत्थं करका पृथिवी कठिनसंयोगवत्त्वादित्यत्र साधनव्यापकमप्यनुष्णाशीतस्पर्शवत्त्वमुपाधिरित्याहुः ॥

पक्षत्वं च असत्यां सिद्धौ सत्यां वा सत्यामनुमित्सायाम् उभयासत्त्वे वा ऽनुमितेरुदयादनुमित्साविरहविशिष्टायाः सिद्धेरभावः । अनुमित्सा च यादृशयादृशेच्छासत्त्वे ऽनुमितिः सा सा विवक्षिता । तेन प्रत्यक्षभिन्नं वह्निज्ञानं जायतामालोकेन वह्निज्ञानं जायतामित्यादीच्छासंग्रहः । अत्रायं निष्कर्षः । तत्साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टतत्पक्षतावच्छेदकविशिष्टभिन्नाविषयिकाऽनुमितित्वभिन्नप्रमितिविभाजकधर्माविषयकतल्लिङ्गतावच्छेदकावच्छिन्नलिङ्गकत्वाप्रकारकत्वे सति त-

दन्यलिङ्गतावच्छेदकावच्छिन्नलिङ्गकत्वाप्रकारिका तल्लिङ्गतावच्छेदकावच्छिन्नलिङ्गकानुमितित्वावच्छिन्नानुद्देश्यकत्वे सति तल्लिङ्गतावच्छेदकाविरुद्धधर्मविशिष्टलिङ्गकानुमितित्वावच्छिन्नानुद्देश्यिका तद्विशिष्टलिङ्गकत्वाप्रकारकत्वे सति तद्विरुद्धधर्मविशिष्टलिङ्गकत्वाप्रकारिका तल्लिङ्गकालान्यकालाविषयिणी या तदनुमित्सा तद्विरहविशिष्टसिद्ध्यभावः पक्षतेत्यर्थः । अत्र तत्साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टतत्पक्षतावच्छेदकविशिष्टभिन्नाविषयिकेतिकरणात् पर्वते वह्न्यनुमितिर्जायतां, प्रत्यक्षातिरिक्तं ज्ञानं जायतां, पर्वते वह्निप्रत्यक्षं तद्व्याप्यपरामर्शः विषयान्तरे चानुमितिसामग्र्यभावस्तत्र यत्किंचिद् ज्ञानं जायतामितीच्छादीनां संग्रहः । अनुमितित्वभिन्नप्रमितिविभाजकधर्माविषयकेतिकरणादनुमितौ प्रत्यक्षत्वभ्रमदशायां पर्वतो वह्निमानिति प्रत्यक्षं जायतामितीच्छाया न संग्रहः । तल्लिङ्गतावच्छेदकावच्छिन्नलिङ्गकत्वाप्रकारकत्वे सति तदन्यलिङ्गकतावच्छेदकावच्छिन्नलिङ्गकत्वाप्रकारिकेति करणाद् धूमत्वावच्छेदेन व्याप्यत्वपरामर्शदशायां द्रव्यत्वावच्छेदेन द्रव्यत्वावच्छिन्नलिङ्गकानुमितीच्छाया न संग्रहः । तल्लिङ्गतावच्छेदकावच्छिन्नलिङ्गकानुमितित्वावच्छिन्नानुद्देश्यकत्वे सति तल्लिङ्गतावच्छेदकाविरुद्धधर्मविशिष्टलिङ्गकानुमितित्वावच्छिन्नानुद्देश्यिकेति करणाद् धूमेनालोकेन च वह्न्यनुमितिर्जायतामितीच्छाया न संग्रहः । यत्र द्रव्यत्वस्य लिङ्गतावच्छेदकत्वानुल्लेखिनी द्रव्येण वह्निमनुमिनुयामितीच्छा तस्याः संग्रहश्च । तद्विशिष्टलिङ्गकत्वाप्रकारकत्वे सति तद्विरुद्धधर्मविशिष्टलिङ्गकत्वाप्रकारिकेति करणाद् यत्र आलोकत्वस्यावच्छेदकत्वानवगाहिनी आलोकेन वह्निमनुमिनुयामितीच्छा तस्या न संग्रहः । तल्लिङ्गकालान्यकालाविषयिणीतिकरणात् पूर्वकालीनपर्वतीयधूमेन वह्न्यनुमितिर्जायतामितीच्छाया न संग्रहः ॥

गौडप्रलापैः स्वकपोलकल्पितै-
रिच्छासमारब्धमृषार्थकार्यैः ।
वृथैव कालक्षपणं विचिन्त्य
चिन्ता मयोपैक्षि खपुष्पतुल्या ॥ १ ॥

---

## ॥ अथ बालभारतस्य ॥

॥ द्वितीयः सर्गः ॥

धर्मशास्त्रकविमिष्टकवित्वाद्
धत्त चित्तभुवि कृष्णमुनीन्द्रस् ।
तत्कवित्वगुणनप्रतिशब्दा
येन वक्त्रकुहरे विहरन्ति ॥ १ ॥

धर्मजग्रहदृढीकृतसंध-
स्तैर्भटैर्युधि किरीटिनि हूते ।
प्रीणयन् कुरुवरानथ चक्र-
व्यूहमह्नि विमले गुरुराधात् ॥ २ ॥

तत्र भूभृदयुतेन कृतारे
तारनादिनि मणिध्वजतारे ।
भूपतिः परिवृतः पृतनाभि-
र्नाभितामधित चक्रसमाभिः ॥ ३ ॥

संहितः कुरुनरेन्द्रकनिष्ठै-
स्त्रिंशता त्रिदशवीरवरिष्ठैः ।
तन्मुखे गुरुरसौ बलसिन्धुः
सिन्धुराजसहितो विरराज ॥ ४ ॥

दुर्भिदं भवमिवाथ पुरस्तं[1]
व्यूहमुद्भटसमूहमुदीक्ष्य ।
दृग्भरेण परिरभ्य सुभद्रा-
सूनुमभ्यधित धर्मतनूजः ॥ ५ ॥

विष्णुजिष्णुमदनाश्च भवांश्च
व्यूहमेतमभिभेत्तुमधीशाः ।
त्वत्पिता स्फुरति संप्रति दूरे
तद्धुरं वहतु दुर्गमहःश्रीः ॥ ६ ॥

पार्थभूरथ मुदा गिरमूचे
व्यूहमद्य रभसेन भिनद्मि ।
मां निरीक्षयितुमक्षममी तु
स्यन्दनैर्भुजभृतोऽनुपतन्तु ॥ ७ ॥

एवमस्त्विति तपस्तनयेऽथ
व्यक्तवाचि सहसाञ्चितचापः ।
राजकानि गणयंस्तृणमल्पा
मङ्क्षु फाल्गुनिरनोदयताश्वान् ॥ ८ ॥

तप्तटङ्कहृतया रविभासा
निर्मितस्त्रिदशवर्धकिनेव ।
भासयन् दश दिशो रिपुशूरै-
र्दूरतोऽपि दुरवेक्षशरीरः ॥ ९ ॥

रुक्मकङ्कटरथः कपिशाश्वः
स्वर्णशार्ङ्गपतगोज्ज्वलकेतुः ।

---

१ पुरस्थं इति पा० ।

सर्वतोमुखसमुन्मिषदन्तः-
पौरुषोष्मशिखिशाख इवोच्चैः ॥ १० ॥
यन्मदादित बलो बलवत् तत्
कोपतप्तनयनद्युतिदीप्तम् ।
धारयन् धनुरपत्नपशूनां
होमकुण्डमिव कुण्डलितं सः ॥ ११ ॥
स्पर्धमानमहसं पतिमह्ना-
मप्यहो शरभरैः पिदधानः ।
शिष्यमाणशरणो रणशिष्ये-
स्त्रासवद्भिरसुरैश्च सुरैश्च ॥ १२ ॥
उग्रवेगहतया खलुरेखा-
रूपया तनुरुचाप्यनुयातः ।
मृत्युराक्षसमुखानलकीले-
ष्वाकुलेष्वरिकुलेषु पपात ॥ १३ ॥
पञ्चभिः कुलकम् ।
उन्नदन् परिहसन् धनुरुच्चै-
र्ध्वानयन् प्रविकिरन् विशिखौघान् ।
लोष्टुपातचलकाककुलाभं
तच्चकार बलमाशु कुमारः ॥ १४ ॥
तच्छरैर्गुरुभिराशु सुदूरा-
दापतद्भिरपराधपरैव ।
ताडिता च सहसा विरटन्ती
क्रोडिता च शिशुवद्रिपुसेना ॥ १५ ॥
द्रोणसिन्धुनृपती पटुघट्टै-
र्द्राक् कपाटपुटवद्विघटय्य ।
नागराज इव राजकुमार-
स्तद्बलं नगरवद्विजगाहे ॥ १६ ॥
पूर्वशर्ववरदुर्धरसिन्धु-
क्ष्मापनिर्जितधृतैः सबलौघैः ।
पाण्डवैः सहचरै रहितस्य
श्रीश्चुचुम्ब वदनं नरसूनोः ॥ १७ ॥
उद्भटप्रतिभटव्रयसंधा-
मुक्तवेणिरिव लोलपताकः ।
घोरघस्मररवोऽभवदस्य
व्यूहवीरभयदो रथ एव ॥ १८ ॥
सत्यसावभिगतोऽयमदीनं
हन्त हन्त्ययमनेन हता हा ।
लात लात हत रे हत रेऽमुं
तं प्रतीत्यजनि राजगणोक्तिः ॥ १९ ॥
राजकस्य तदिषुव्रतधूता
मौलयस्तरलकुण्डलपत्राः ।
संगरे भटभुजाभुजगाग्रे
हेमपर्णिपृथुका इव पेतुः ॥ २० ॥
रुण्डतुण्डमयमेव धरित्री-
पीठमस्त्रमयमेव विहायः ।
रक्तबिन्दुमयमेव तदाशा-
चक्रवालमकृतैष भुजालः ॥ २१ ॥
तस्य पत्रिषु ततेषु विभिन्नै-
र्व्यक्तमौक्तिकरदै रदिकुम्भैः ।
स्वर्वधूकुचतटार्पितहस्तं
स्वं निषादिभटवृन्दमहासि ॥ २२ ॥
तत्क्षुरप्रततिकृत्तनिषिक्तं
वीररुण्डकरिमुण्डकदम्बम् ।
कुञ्जराननकुलत्रयबुद्ध्या-
लोकि नाकिसुभटैरपि भीतैः ॥ २३ ॥
सा स्थली तदिषुपातविकृत्तैः
पूरिता भटहयाननदेहैः ।
चोणिवाहतनुवाहमुखानां
युद्धभूमिरिव किंपुरुषाणाम् ॥ २४ ॥
घ्नन्तमेनमभियुध्य महास्त्रै-
स्ते कृपीतनयकर्णकृपाद्याः ।
चासिनो विजितवायुजवानां
वाजिनां गमनमान्द्यमनिन्दन् ॥ २५ ॥
अश्मकादिनृपवृन्दमुखाब्जै
रत्नभूषणविभाजललीनैः ।
स व्यधत वियदस्त्रविधूतैः
कीर्तिकेलिकमलाकरकल्पम् ॥ २६ ॥
ते पुनः कृपकृपीसुतकर्ण-
द्रोणशल्यशलसौबलमुख्याः ।

एत्य तं कनकमार्गणचक्रै-
श्चक्रिरे द्विगुणदेहमयूखम् ॥ २७ ॥
ते तदस्त्रभरभिन्नशरीरा-
स्तत्रसत्तूर्णगतयः कुरुवीराः ।
लेभिरे न रुधिरासवलुब्धैः
खेचरैरपि निशाचरडिम्भैः ॥ २८ ॥
संनिहत्य युधि मद्रमहीभृ-
त्कर्णयोरवरजौ स वरौजाः ।
प्रेतराजपृतनासु सुभिक्षं
निर्ममे कुरुचमूभिरभूमिः ॥ २९ ॥
एकमेकमपि कौरववीरान्
संहतानपि पुनः पुनरेषः ।
कर्णसौबलसुयोधनमुख्यान्
पश्चिमारुततृणानि चकार ॥ ३० ॥
तत्र मुञ्चति शरान् परितोऽपि
छिद्रितः प्रपतितैः करिकर्णैः ।
रक्तसिन्धुसलिलानि कपाले
गालितानि न पपुः क्क पिशाचाः ॥ ३१ ॥
पूरिते जगति रेणुतमोभि-
र्निस्त्रपं वसति वीरसमूहे ।
वादनाय वदनेऽधित शङ्खं
द्विड्यशःकवलपिण्डमिवैषः ॥ ३२ ॥
दारयन्निव दिशो दश कम्बुं
वादयन् सपुलकं स ददर्श ।
वक्रहुंकृतिकृतः स्फुटमभ्यु-
त्तिष्ठतो भटकदम्बकबन्ध्यान् ॥ ३३ ॥
कम्बुनादकुपिताः पुनरीयु-
स्तं प्रति प्रतिमहीपतिवीराः ।
चूडरत्नरुचिरुच्यनभोऽग्राः
पक्षिपुंगवमिवोरगपूगाः ॥ ३४ ॥
रुद्रमुद्रणरणस्थितिरौद्रं
नाम धाम च धनुश्च दधानः ।
उच्चकर्त स तदा कुरुलक्ष्मी-
केलिखण्डभटमुण्डफलानि ॥ ३५ ॥
कर्णसूनुवृषसेनभुजाभृ-
त्तूलपूलपवनो जवनोऽयम् ।
अच्छिपत् क्षितिधवस्य वसन्ते
श्रीलताविटपिनो मुखपुष्पम् ॥ ३६ ॥
उच्चकर्त सच बाणचयैः स-
त्यश्रवोनृपजयौ भुजमौलौ ।
क्रन्दकारिमणिभूषणनादैः
शल्यजस्य युधि रुक्मरथस्य ॥ ३७ ॥
शल्यसूनुसुहृदः सुहृदर्थे
धावतः शतमिलापतिपुत्रान् ।
स व्यधत्त मुदितान् युधि गन्ध-
र्वास्त्रदर्शितसुहृत्पथभाजः ॥ ३८ ॥
भिद्यमानहृदयानि तदानीं
तस्य विक्रमगुणैश्च शरैश्च ।
दैवतानि च कुलानि च राज्ञां
मूर्धकम्पविवशानि बभूवुः ॥ ३९ ॥
शौर्यदन्तिदशनायितबाहुं
लक्ष्मणः कुरुनरेश्वरसूनुः ।
श्रीलताकिशलयः स्मरशोभा-
पल्वलैककमलं तमियाय ॥ ४० ॥
कार्ष्णिमार्गणगणैः पिहितेऽर्के
लक्ष्मणः शठ इवाशु भुजंगः ।
आलिलिङ्ग वसुधां वपुषा च
द्यां मुखेन च धुतेन चुचुम्ब ॥ ४१ ॥
अङ्गजव्ययजकोपकृशानु-
ज्वालजालनिभलोचनरोचिः ।
संहतैः सह महारथचक्रै-
राद्रवत् तमथ कौरवनाथः ॥ ४२ ॥
रोमरोमपतितैः प्रतिवीर-
स्तोमहेमविशिखैर्विरराज ।
अन्तरुद्घुषितधैर्यमयास्त्र-
प्रस्फुटत्पुलकदण्ड इवासौ ॥ ४३ ॥
दृग्विषो नु भुजगो भुजदण्ड-
स्तस्य चण्डचरितस्य तदानीम् ।

चापदण्डप्रसृमरेण ददाह
द्विड्गणानिषुविषज्वलनेन ॥ ४४ ॥
लक्ष्मणाय जलमेव ददौ
तद्गुरुक्षितिपतिव्रतजेन ।
कोशलेश्वरबृहद्बलमूर्ध्ना
पिण्डमप्यथ पितृव्यसुताय ॥ ४५ ॥
तत्कराम्बुजशिलीमुखदंश-
व्याकुले चुभितवत्यथ कर्णे ।
कौरवावनिधवध्वजिनी सा
संभ्रमेण सकलापि चकम्पे ॥ ४६ ॥
अङ्गराजपृतना नृपतीनां
रक्तकुङ्कुमरसैः स्नपिता च ।
पूजिता च मुखपङ्कजदम्बे-
स्त्र्यम्बकाङ्गमिति तेन तदाभूत् ॥ ४७ ॥
क्षुण्णभोजनृपकुञ्जरकेतु-
क्ष्मापतिर्जितसुशासनसूनुः ।
भग्नमद्रपरथो भृशमस्त्रा-
देष खिन्न इव कीर्तिपयोधौ ॥ ४८ ॥
मेघवेगविधुकेतुसुवर्चः-
शौर्यशत्रुजयभूपतिहन्ता ।
तेन सौबलबलत्रयकर्ता
वासितः शकुनिरस्त्रधुताङ्गः ॥ ४९ ॥
इत्यमुच शरसंहतिपातैः
संहरत्यहह मुक्तकचानाम् ।
हीति हेति ह हहेति च शब्दा-
स्त्रस्यतामुदभवन् सुभटानाम् ॥ ५० ॥
इत्यवेत्य स जगत्त्रयशूरः
शूरसूनुरपि दूरितयुद्धः ।
द्रोणमेत्य विदधौ गिरमुग्र-
श्वासखण्डितपदौघविवेकाम् ॥ ५१ ॥
विक्रमव्यतिकरैः शतमन्युः
स्फारमन्युरभिमन्युभटेन्द्रः ।
तात कातरयति प्रधनाग्रे
योद्धुमीयुषि यमेऽपि यमोऽस्मान् ॥ ५२ ॥
नेह कुण्डलितधन्वनि बाणाः
कृष्टिसंधितविमुक्तिषु दृष्टाः ।
वैरिरक्तरसनव्यसनेन
प्रोत्थिताः स्वयमिवाशु निषङ्गात् ॥ ५३ ॥
संगरे स यमदेवनिकेतं
कर्तुमारभत किं विदधे यत् ।
अश्वपीठगजपीठनृपीठ[१]-
श्रीकृतेऽश्वगजनृव्रजपातम् ॥ ५४ ॥
मृत्युरेष यम एष युगान्ता-
रम्भ एष इति दूरगतानाम् ।
स प्रतिक्षितिभुजां मृधि धाव-
द्बन्धुपालनकृतां तुमुलोऽभूत् ॥ ५५ ॥
पूरितं खलु दृढप्रहतीनां
कौतुकं न करिवीरकुलैस्तैः ।
तज्जवेन ययुरस्य दिगन्तान्
पञ्चिणो दिगिभदिक्पतिलोलाः ॥ ५६ ॥
तद् बले समुदितः क्षयरोगो
युज्यते न तदुपेक्षितुमेषः ।
स्वैरमेतदुपशान्तिभराय
प्रथ्यतां सपदि कश्चिदुपायः ॥ ५७ ॥
इत्युदीतगिरि तत्र गुरुर्गा-
मुज्जगार ननु सैष कुमारः ।
तातमातुलसमः समरान्त-
स्तावति क्षणलवेन बलेन ॥ ५८ ॥
व्यक्तकङ्कटरथायुधकेतु-
र्मृत्युहेतुरिह जेतुमशक्यः ।
सासुरैरपि सुरैः सुरभर्तुः
पौत्र एष कृतयुद्धविशेषः ॥ ५९ ॥
तद्रथास्त्रकवचप्रचयोऽस्य
छिद्यते यदि कथंचन शक्यम् ।
इत्युदीर्य गुरुरुद्गुणचापः
कार्ष्णिमभ्यचलदर्कसुतेन ॥ ६० ॥

१ रथाङ्ग इति पा० ।

उन्मर्द्दाः[1] सह महारथसार्थै-
राद्रवन्तममुमैन्द्रितनूजः ।
कोपपातितकृतान्तकदंष्ट्रा-
निष्ठुरैर्व्यमुखयद्विशिखौघैः ॥ ६१ ॥
कोपिनः फणिशिशोरिव तस्यो-
न्मुच्य तेऽच पथमेत्य च पार्श्वम् ।
स्यन्दनं हृदि कभूः कृपवीरः
सारथिं धनुरथाकिरकृन्तत् ॥ ६२ ॥
हेमचर्मकरवालकरोऽयं
चूर्णयन् परबलान्यथ कार्ष्णिः ।
तिग्मदीधितितमिस्रविराज-
त्पद्मयुग्म इव मेरुरचालीत् ॥ ६३ ॥
भस्मयन् भटमहीरुहचक्रं
चूर्णयन् करिगिरिप्रकरं च ।
उत्पपात च पपात च विद्यु-
द्दण्डचण्डचरितः परितोऽसौ ॥ ६४ ॥
उत्पतन्नुपरि नाकिकुलानां
न्यक् पतन्नवनिपालबलानाम् ।
नामयन्नवनिमङ्घ्रिनिपातै-
र्भोगिनामपि स भीतिकरोऽभूत् ॥ ६५ ॥
साहसेषु यदहासि महासि-
च्छेदनेऽप्युदितमौक्तिकदन्तैः ।
तद्विलासि हृदि दिव्यवधूनां
धूतकालिमभरैरिभकुम्भैः ॥ ६६ ॥
द्रोणबाणपरिखण्डितखड्ग-
श्चक्रपाणिरिव चक्रमुदस्य ।
द्विट्कुलं दनुभुवामवतारं
दारयन्नयमनूयत देवैः ॥ ६७ ॥
आकुलैर्नृपकुलैरिह चक्रे
खण्डितेऽपि तिलशः किल शस्त्रैः ।
तैर्गदाधर इवात्तगदोऽयं
भीप्रणश्यदसुभिर्भृशमैचि ॥ ६८ ॥
स कालसेनं शकुनेः कनिष्ठं
तदङ्गजान् सप्त च सप्ततिं च ।

१ उन्मदः इति पा० ।

नृपान् दश ब्रह्मवशातिजातीन्
जघान कैकेयरथप्रमाथी ॥ ६९ ॥
गदाप्रभिन्नद्विपचक्रवाल-
कीलाललीलास्तरिपुप्रतापम् ।
तमभ्यधावद्रथभङ्गकोपा-
द्दौःशासनिर्मङ्क्षु तदा गदास्त्रः ॥ ७० ॥
पदोत्थधूलीतिमिराग्निकीटैः
परिज्वलच्छौर्यशिखिस्फुलिङ्गैः ।
मिथोगदापातलसत्कृशानु-
कणैर्नभोवर्त्म विभूषयन्तौ ॥ ७१ ॥
चिरं चरन्तौ समराब्धिमध्या-
वर्तप्रवृत्ताविव मण्डलानि ।
मिथोऽभिघातादभिपेततुस्तौ
नवोढयोर्दृक्प्रसराविवोर्व्याम् ॥ ७२ ॥
युग्मम् ।
अथोऽभिमन्युं पतितं जघान
क्रूराशया कौरवराजसेना ।
तीव्रास्त्रपातेन सुखप्रसुप्तं
पतिं विरक्तेव विलोलनेत्रा ॥ ७३ ॥
उत्थाय दौःशासनिना च तस्य
धिग्धिक् कृतो मूर्ध्नि गदाभिघातः ।
तेने तदङ्गे न तदास्त्रवृष्टिः
साकं सुरस्त्रीजनलोचनेन ॥ ७४ ॥
विरथो रथिभिः वचयोधी कुचचयोधिभिः ।
एकोऽनेकैः शिशुः प्रौढैर्जघ्नेऽभूदिति खे ध्वनिः ॥ ७५ ॥
पुनरुत्थितिभीत्यैनं शङ्कमानैः क्रमात् पृथुः ।
अतन्यत तदा सिंहनादः कुरुमहारथैः ॥ ७६ ॥
ततो व्रजद्भिः कुरुवीरवृन्दै-
र्विद्राव्यमाणेषु पृथासुतेषु ।
प्रतापमित्रे पतितेऽभिमन्यौ
ययौ जलायेव पयोधिमर्कः ॥ ७७ ॥
जातेऽवहारे चलितः कलितारिचयोऽर्जुनः ।
इष्टनाशं वैमनस्याच्छङ्कमानोऽविशच्चमूम् ॥ ७८ ॥
शोकातुरान् स चतुरोऽपि निरूप्य बन्धू-

नूचेऽधुनापि न सुतः स्पृशति क्रमौ मे ।
तत् किं छलेन रिपुभिः स हतोऽद्य चक्र-
व्यूहं विशन्नकुशलः खलु निर्गमेऽस्य ॥ ७९ ॥
श्रुतेऽथ सुतवृत्तान्ते मूर्च्छितं तं जगौ हरिः ।
मा वीरं शोच रोचिष्णुचरितं दिव्यतां गतम् ॥ ८० ॥
उत्थाय लब्धसंज्ञोऽथ पार्थः प्राह क्व पुत्रकः ।
स्वप्नचिन्तामणिमिव द्रक्ष्यामि त्वन्मुखं पुनः ॥ ८१ ॥
भीमाद्यैरभिरुग्णास्त्रैरपि त्रातोऽसि नो तदा ।
क्व वा दन्तिभिरुद्भ्रान्तैर्ध्रियेताद्रिशिरः पतत् ॥ ८२ ॥
मातुलोऽपि तदा वीर त्वया धीरेण न स्मृतः ।
ईशेन सर्वगेनापि न त्रातोऽस्यधुनापि यत् ॥ ८३ ॥
हा पुत्र क्व गतोऽस्येहि दृढं परिरभस्व माम् ।
इत्युक्त्वा पतितः क्ष्मायां संज्ञामाप्योत्थितः पुनः ॥ ८४ ॥
रणैकरौद्रं सौभद्रमनुयान्तो महारथाः ।
रुद्धा जयद्रथेनेति श्रुत्वा शक्तिक्रुधाभ्यधात् ॥ ८५ ॥
भास्वत्यनस्ते यदि सिन्धुराजं
गुप्तं हरेणापि न संहरेयम् ।
लिप्ये महापातकिनां च पापै-
स्ततः कृशानुं च विशामि दीप्तम् ॥ ८६ ॥
इति प्रतिज्ञाय ततान वीरः
कम्बुध्वनिं कम्बुधरेण साकम् ।
युगान्तहेतोः परिपीय कर्णौः
संचीयमानं हृदि शूलिनापि ॥ ८७ ॥
इति प्रतिज्ञया तस्य हिमान्येव जयद्रथः ।
कम्पी दुर्योधनेनापि त्रातुं तेजोनिधिर्गुरुः ॥ ८८ ॥
ततस्तदा तादृशपुत्रशोकात्
तारप्रलापं रुदती सुभद्रा ।
रणव्यसूनां दिशता प्रभुत्वं
प्रबोध्यमाना हरिणा जगाद ॥ ८९ ॥
दयाशया ब्रह्मविदो वदान्याः
सत्योक्तयः शीलमया नयाढ्याः ।
अन्येऽपि ये केचन पुण्यभाज-
स्तेषां गतिं प्राप्नुहि पुत्रकेति ॥ ९० ॥
युग्मम् ।

कृष्णाज्ञया जयपरः परमस्मयोऽथ
तल्पे शुचौ सुचरितः सुचिरात् प्रसुप्तः ।
ऐन्द्रिः सहैव हरिणा हरशैलमौलिं
स्वप्ने जगाम च ननाम च चन्द्रमौलिम् ॥ ९१ ॥
तं च तुष्टाव तुष्टात्मा वरदं विहिताञ्जलिः ।
देवं विश्वत्रयीहारं हरं हरिसखोऽर्जुनः ॥ ९२ ॥
नमः शिवाय रुद्राय महेशाय कपालिने ।
ज्ञानिने पशुनाथाय भवाय भवमायिने ॥ ९३ ॥
कामदायास्तकामाय धर्मदाय मखच्छिदे ।
सुधाकरकिरीटाय विषग्रीवाय ते नमः ॥ ९४ ॥
एवं देवः स्तुतस्तस्मै महाहिमयविग्रहम् ।
जयिने धनुरस्त्रं च सस्थानकमदीदृशत् ॥ ९५ ॥
आशु पाशुपतमद्भुतमस्त्रं
पूर्वलब्धमधिगम्य महेशात् ।
मन्त्रमाप्य च जयी जयबन्धुं
स व्यबुध्यत कृती कृतकृत्यः ॥ ९६ ॥
ततः प्रातः प्रीतो रिपुनृपतिवीरव्ययमय-
प्रतिज्ञापाथोधिं किमपि कलयन् गोष्पदतया ।
प्रमोदप्रागल्भीभरपरवशं वासवसुतः
प्रतेने पृथ्वीशं सुररिपुमपि स्वप्नकथनात् ॥ ९७ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के द्रोणपर्वणि तृतीयदिवसेऽभिमन्युवधो नाम द्वितीयः सर्गः ॥ २ ॥ :: ::

---

## ॥ अथ बालभारतस्य ॥

### ॥ तृतीयः सर्गः ॥

छलनिर्दलितारातिकलङ्कच्छेदधीरिव ।
पाराशरशरीरेण तपस्यन् पातु वो हरिः ॥ १ ॥
ततः कृतदिनारम्भकृत्या जम्भारितेजसः ।
युद्धश्रद्धोद्धसत्काया निरीयुर्दोर्भृतोऽभितः ॥ २ ॥
नक्तमप्यर्जुनभयादसुप्तैरथ मन्थरैः ।
सुभटैः शकटव्यूहं विकटं विदधे गुरुः ॥ ३ ॥
दलालिशालि तन्मध्ये नरेशकुलकेसरम् ।
चक्रे पद्मं रथाश्वेभकोटिकल्पितकर्णिकम् ॥ ४ ॥

कृतवर्मादिभिः सूचिव्यूहं व्यूह्य तदन्तरे ।
न्यवेशयद्वृतं वीरैः सूचिपाशे जयद्रथम् ॥ ५ ॥
विपक्षपक्षमुत्क्षेप्तुं युधि गोप्तुं जयद्रथम् ।
स्वयं द्रोणोऽद्भुताङ्गस्य शताङ्गस्य धुरि स्थितः ॥ ६ ॥
माणिक्यप्रथितरथान्तरप्रतिष्ठ-
स्तत्कालं भयदवपुः कपीन्द्रकेतुः ।
सैन्याग्रे जलदरुचिर्दिनाधिनाथ-
क्रोडस्थः शमन इव व्यलोकि लोकैः ॥ ७ ॥
कल्पान्तप्रकुपितकालकण्ठकण्ठ-
प्रस्पर्धामिव दधतौ सुघोरघोषौ ।
कृष्णाभ्यां तनुरुचिमेचकौ तदानीं
दध्माते प्रलयकरौ परेषु शङ्खौ ॥ ८ ॥
अन्योन्यं द्रुतमथ साहसप्रसक्त्या[1]
दोष्मन्तः प्रधनभृतोऽभितोऽभिचेलुः ।
आक्रन्दो गुणरवकैतवेन तेने
तन्मुष्टिग्रहमसहिष्णुभिर्धनुर्भिः ॥ ९ ॥
आकृष्टैरथ हवतो हयत्वराया
मानेन स्फुरितुमनीश्वरैर्लुठद्भिः ।
चीत्कारं रथचरणैः क्षणं सृजद्भि-
र्द्राग्वेगादतिरथिनोऽमिलन् मदान्धाः ॥ १० ॥
संरम्भादुचितकृतप्रतिक्रियाणां
वीराणामजनि तदा स शस्त्रपातः ।
संक्षोभे जगति यथा करं न तेषु
प्रक्षेप्तुं क्षणमशकत्तमां यमोऽपि ॥ ११ ॥
सङ्ग्रामव्यतिकरजातखेदसादि-
स्वेदाम्भःप्रतिहतवर्णके तदानीम् ।
आरूढं रुधिरधुनीमहोर्मिवृन्दैः
सिन्दूरीभवितुमिवेभकुम्भदेशे ॥ १२ ॥
अथ ज्यामरुदुड्डीननिःसत्त्वतुषतण्डुलैः ।
कृतान्तं भोजयन् भूपैर्हतिसिद्धैर्महोष्मभिः ॥ १३ ॥
पुरःपातितमातङ्गस्थलस्थपुटितामपि ।
रसामुल्लङ्घ्य तरसा द्रोणमाद्रवदिन्द्रभूः ॥ १४ ॥
युग्मम् ।

१ प्रसक्ता इति पा० ।

नत्वानुमान्य प्राङ्मुक्ताशुगमाच्छाद्य चाशुगैः ।
दक्षिणीकृत्य च द्रोणं स व्यूहं रंहसाविशत् ॥ १५ ॥
चक्ररक्षौ विविशतुर्युधामन्यूत्तमौजसौ ।
सहैव तेन वीरश्रीदृक्कान्तिस्तबकाविव ॥ १६ ॥
लोलध्वजान् गजानद्रितनुजानिव सद्रुमान् ।
वज्रात्मजैरिव तदा शरैरैन्द्रिरपातयत् ॥ १७ ॥
गृह्यतां हन्यतां चैष कोऽमुं गृह्णीत हन्ति कः ।
हा हता वयमेवेति शब्दोऽभूत् तत्र भूभुजाम् ॥ १८ ॥
चक्रदारितभूजन्मा तदीयस्यन्दनस्वनः ।
व्यदारयत् तदा सिन्धुराजस्य हृदयावनिम् ॥ १९ ॥
निर्माय कृतवर्मादीन् धावतो धूमलाननान् ।
चक्रे जवनकाम्बोजवनदाहं धनंजयः ॥ २० ॥
अन्वेत्य गुरुणा मुक्तं ब्राह्मं ब्राह्मेण फाल्गुनः ।
अस्त्रमस्त्रेण जित्वाभूद्राजभूपचमूयमः ॥ २१ ॥
जलेशसूनुर्वर्णाशासिन्धुजन्मा श्रुतायुधः ।
कृष्णौ[1] चक्रे शरैरर्ककरविद्धाम्बुदोपमौ ॥ २२ ॥
स किरीटिशरोत्कृत्तसर्वास्त्रस्यन्दनो बभौ ।
क्षपाकर इवोष्णांशुकरक्षतकरक्षपः ॥ २३ ॥
अयुध्यमाने या मुक्ता मोक्तारं हन्ति सा गदा ।
वरुणेन पुरा पित्रा दत्ता तेनाददे तदा ॥ २४ ॥
रे रे कातर रे मूढ मुञ्चाध्वानं त्वमत्र किम् ।
इत्यादिवादिनि हरौ स क्ष्मापस्तां रुषाक्षिपत् ॥ २५ ॥
गदा गोविन्दमालिङ्ग्य व्यावृत्याशु श्रुतायुधम् ।
जघान स्वं पतिं स्त्रीव पराश्लेषोल्लसद्रुषा ॥ २६ ॥
वातेऽनुवात्यपि ततः पश्चाद्विस्तृतकेतुना ।
हयानां रंहसा चालीज्जयद्रथरुषा जयः ॥ २७ ॥
दीप्तं सुदक्षिणं क्षोणीकान्तं काम्बोजमोजसा ।
कृताद्भुतरणं कालशरणं प्राहिणोन्नरः ॥ २८ ॥
अथेत्य पार्थं पृथ्वीशावच्युतायुःश्रुतायुषौ ।
शूलतोमरनाराचैर्मोहयामासतुर्द्रुतम् ॥ २९ ॥
द्रुतमूर्च्छितमूर्च्छेन ततः शक्रास्त्रमोचिना ।
तावर्जुनेन गर्जन्तौ जघ्नाते सानुजानुगौ ॥ ३० ॥
अङ्गवङ्गकलिङ्गादिध्वजिनी रुधिरैर्व्यधात् ।

१ तूष्णौ इति पा० ।

वीगलङ्कारसबाद्याः स रत्नाकरमगृमम् ॥ ३१ ॥
तद्गलभिन्नकुम्भीन्द्रघटाकुम्भसमुद्भवैः ।
ताम्रपर्णीशतान्यासन् रक्तैर्मुक्तालिमालिभिः॥३२॥
प्रीतैः पीतैव रक्षोभिर्विलसन्नस्रासवैः ।
तेने तेनेषुभिर्म्लेच्छवाहिनी रक्तवाहिनी ॥ ३३ ॥
अम्बष्ठाधिपतेर्मौलिं युद्धद्रुमफलं जयी ।
जयश्रियै प्रियायै स दत्त्वा कृत्याय तत्वरे ॥ ३४ ॥
इतश्च त्वरया गत्वा गुरुं कुरुपतिर्जगौ ।
त्वां विलङ्घ्याविशत् पार्थः प्रियशिष्यतया तव॥३५॥
दत्ताभयेन निश्येव चस्यन्नस्यापि सिन्धुपः ।
विशन्नुपेक्षितश्चेन्द्रिर्विरुद्धं चरितं तव ॥ ३६ ॥
अथाचष्ट गुरुर्व्यूहमविशद्रासवात्मजः ।
हरित्वरितवाहेन लङ्घयित्वा रथेन माम्॥ ३७ ॥
यद्येनमनुगच्छामि तद्वीमाद्या विशन्त्यमी ।
त्वं तु युध्यस्व मन्मन्त्रवज्रवर्मवशेन तम्॥ ३८ ॥
इत्युक्त्वा वज्रमन्त्रेण वर्मितो गुरुणा नृपः ।
क्रमागतेन रुद्रेन्द्रपर्शुरामगुरुक्रमात् ॥ ३९ ॥
अधरोल्लङ्घनानीशमुखश्वासेन रंहसा ।
पार्थमन्वचलद्धन्वचलनोग्रैः समं बलैः ॥ ४० ॥
युग्मम् ।
प्रीयमाणोऽस्त्रटङ्कारलहरीतारगीतिभिः ।
वीज्यमानो विलोलासिभापूरव्यजनव्रजैः ॥ ४१ ॥
तदा व्यूहमुखे युद्धोत्सवे कौरवपाण्डवैः ।
यथेष्टं भोजयामास नैष्ठुर्यस्वजनो यमः ॥ ४२ ॥
युग्मम् ।
विशिखैः खरयोधचक्रवालं
दशनैरुग्रतरं करीन्द्रवृन्दम् ।
इतरेतरमङ्कुशप्रहारै-
र्मृधमाधोरणघोरणिश्चकार ॥ ४३ ॥
मुखमण्डलमम्बरे भटानां
विवृतं मारय मारयेति शब्दैः ।
रिपुखड्गहतं पतत्रिनाशे-
रवलोकागतदेवतुष्टयेऽभूत् ॥ ४४ ॥
अहितासिभिदोत्थितं दधानो
गलरन्ध्रस्थितमैभमास्यमुच्चैः ।
युधि नृत्तपरः परश्चकाशे
हरनाट्ये गुहबन्धुवत् कबन्धः ॥ ४५ ॥
रिपुमौलिरसिप्रहारनुन्नो
दिवि ताटङ्कयुतोऽभवद्घटेन ।
सुरभीतिकृदेककाललब्ध-
द्युमणिश्वेतकरोग्रराहुरौद्रः ॥ ४६ ॥
रणसीमनि वाञ्छितस्य पत्युः
प्रथमं प्राप्तमरातिखड्गघातान् ।
द्युगतं वदनं सहासहृद्यं
द्युवधूं वञ्चितुमुच्चकैरियेष ॥ ४७ ॥
रिपुमेकमहो जघान कश्चित्
प्रथमं जाङ्गिकपुंगवः कृपाण्या ।
सममुच्चलितं जवेन जित्वा
शरमुच्चैर्निजपत्त्रवीरमुक्तम् ॥ ४८ ॥
मणिमौलिजटाग्रकान्तिसिन्धुः
प्रधनाम्भोधिभवार्धचन्द्रभालः ।
असिदण्डशिखोद्धृतारिशीर्षः
किल खट्वाङ्गकरः परश्चकाशे ॥ ४९ ॥
शरकृत्तनिरन्तरान्तरालं
फलकं काञ्चननिर्मितं परस्य ।
पतितं मृतवीरभेदपीडा-
विधुरं भूमितले किलार्कबिम्बम् ॥ ५० ॥
अवलोक्य पुरः श्वसन्तमन्तः-
कुपितः कोऽपि कुले कलङ्कभीरुः ।
असिना प्रथमं जघान बन्धुं
रिपुमन्वेषिणमेव तस्य पश्चात् ॥ ५१ ॥
सुहृदा धृतमञ्चलं विकर्षन्
वपुषि प्रत्तपदो मृतस्य बन्धोः ।
दयितारटितान्यमन्यमानः
परचक्रेषु पपात कश्चिदेकः ॥ ५२ ॥
व्ययितास्त्रभरः परः समीके
द्रुतमुन्मूल्य रदं रिपुद्विपस्य ।
प्रसरन् प्रसभं बलेन दृष्टो

मुशलीवाद्रुतभीतिभङ्गुरेण ॥ ५३ ॥
खरशक्तिरपूर्णमण्डलोऽपि
प्रसभं पूर्णतरेऽपि नाशहेतुः ।
सकलेन्दुसमा भटास्यकूटा
द्विषतां चिच्छिदिरेऽम्बरेऽर्धचन्द्रैः ॥ ५४ ॥
युधि युद्धविधिं व्यधुर्गतास्त्राः
पतितोत्पाटितमुक्तमौलिगोलैः ।
दृढमुष्टिहते रदैर्नखैश्च
स्फुटरामायणवीरवद्भटेन्द्राः ॥ ५५ ॥
इतश्च प्रचलन् पार्थरथो रुद्धपुरःपथः ।
न तथास्खलि खलद्भिः परैः परिहतैर्यथा ॥ ५६ ॥
पत्रिणां पार्थमुक्तानां गव्यूत्या पुरतः पतन् ।
स रथस्त्वरयाश्चर्यं चक्रे केतुकपेरपि ॥ ५७ ॥
बिन्दानुबिन्दावावन्त्यौ व्यथयन्तौ शिलीमुखैः ।
रथादपातयत् पार्थस्तौ मधुच्छत्रलीलया ॥ ५८ ॥
पाययाम्बु हयान् खिन्नान् विशल्यान् कुरु शल्यितान् ।
इत्युक्ताथ हरिं जिष्णुरुत्ततार द्रुतं रथात् ॥ ५९ ॥
क्षणेऽस्मिन्नेव धावन्तीः सत्रासाः शरमालया ।
रुरोध योधपटलीर्वेलयाब्धिरिवापगाः ॥ ६० ॥
निःशङ्ककङ्कपत्रालिमयं मन्त्रालयं व्यधात् ।
तदन्तरप्यसौ वारि शरदारितभूमिजम् ॥ ६१ ॥
तत्राथ पाययित्वा च सारयित्वा च वाजिनः ।
स्पर्शेन निर्व्रणीकृत्य कृष्णः पुनरयोजयत् ॥ ६२ ॥
अथाधिरोहिणौ कृष्णौ द्विगुणोग्ररया हयाः ।
ऊहुः कम्बूर्ध्वशिरसः प्रागुत्पातेऽप्यकम्पिनौ ॥ ६३ ॥
शिल्पमल्पावशेषेऽह्नि पार्थः प्रकटयन् परम् ।
कल्पान्तवात इव कान् भूभृतो न व्यकम्पयत् ॥ ६४ ॥
अथेत्य गुरुणा बद्धकवचः कौरवेश्वरः ।
रुरोध क्रोधनो युद्धकिरीटाभं किरीटिनम् ॥ ६५ ॥
छिन्धि मूलमनर्थानामित्युक्तो हरिणा नरः ।
क्षणं तेन रणं चक्रे चमत्कृतसुरासुरम् ॥ ६६ ॥
अमज्जन्नर्जुने बाणाः सद्यो नद्यो यथाम्बुधौ ।
नृपे तु पेतुरकृतार्था यथा कृपणेऽर्थिनः ॥ ६७ ॥
किमेतदिति गोविन्दे वदत्यूचे धनंजयः ।
ज्ञातं मयास्मिन् गुरुणा वज्रं वर्मणि मन्त्रितम् ॥ ६८ ॥
वेद्म्यस्य च्छेदमित्युक्ता यदस्त्रं फाल्गुनोऽमुचत् ।
लेभेनेव महत्त्वं तद् द्रौणिनास्त्रेण वारितम् ॥ ६९ ॥
द्विः क्षेप्यं न खलु रणेषु दिव्यमस्त्रं
ध्यात्वेति क्षितिभुजि विक्षिपन् पृषत्कान् ।
छित्वान्तः प्रगुणगुणं धनुस्तदोजः-
श्रीकर्णद्वयवदपातयत् किरीटी ॥ ७० ॥
स्म छिन्ते मणिमिव तज्जयाभिकाङ्क्षी-
वामाक्षीमुकुटरुचे रथस्य सूतम् ।
तच्चेतःकलितचतुर्दिगन्तराज्य-
श्रीदूतानिव चतुरोऽभिदत् तुरंगात् ॥ ७१ ॥
चिच्छेद द्विरदरदप्रभानिभं च
छत्रं प्राक् शिर इव तद्यशोऽङ्कुरस्य ।
तत्तेजस्तस्करहाटवज्ज्वलन्तं
सौवर्णं कलशमपि ध्वजाच्चकर्त ॥ ७२ ॥
विशेषकम् ।
नाराचान् स कवचितेषु वज्रमन्त्रै-
स्तस्यैन्द्रिः कररुहसंधिषु न्यधाच्च ।
तत्रस्तः स नरपतिस्तनूजुषां दिक्-
पालानामपि विकिरन् महांसि रक्तैः ॥ ७३ ॥
हेमवर्माच्चयान् द्रौणिप्रभृतीनामपातयत् ।
तदा तेजोमयानीव शरीराणि शरैर्नरः ॥ ७४ ॥
ते बाणै रक्तसिक्ताङ्गाश्चक्रिरे शक्रसूनुना ।
स्वजयश्रीगृहस्तम्भा इव सिन्दूरचर्चिताः ॥ ७५ ॥
ततश्च पातुमारेभे बलाम्भोधिं विरोधिनाम् ।
बाणाङ्गुलिजुषा चापप्रसृत्या कलशोद्भवः ॥ ७६ ॥
हत्वा बलावलीस्तेन पार्थेशे विरथीकृते ।
हतो हतोऽद्य राजेति लोकाः शोकात् प्रचुक्रुशुः ॥ ७७ ॥
क्षिप्तां शक्तिं नृपेणाथ कटुक्वाणां सघण्टिकाम् ।
ब्रह्मास्त्रेणाच्छिदद् द्रोणस्तच्छौर्यरसनामिव ॥ ७८ ॥
सहदेवरथेनाथ पलाय्य प्रययौ नृपः ।
दर्शितस्वामिभक्त्येव सेनयाप्यन्वगामि सः ॥ ७९ ॥
अथ पार्थचमूवीरैः समीरैः क्षयजैरिव ।
शोषिताः परवाहिन्यो रङ्गितासितरङ्गिताः ॥ ८० ॥

क्रटीव बृहत्त्वचः कैकयानीकनायकः ।
द्रोणानुगं क्षेमधूर्तिं स्तम्भपातमपातयत् ॥ ८१ ॥
जघानाथ चिगर्तं स धृष्टकेतुं महारथम् ।
सहदेवोऽरिमिचं च व्याघ्रदत्तं च सात्यकिः ॥ ८२ ॥
त्वाष्ट्राऽस्त्रहतमायास्त्रं भीमं भीमवधोद्यतम् ।
अलम्बुसं रथात् कृष्ट्वा निष्पिपेष घटोत्कचः ॥ ८३ ॥
तदाभूद् द्रोणभैमिभ्यां भज्यमाने बलद्वये ।
क्षोणिभृत्क्षुभिताम्भोधिक्रोधी कलकलः किल ॥ ८४ ॥
अर्जुनप्रवेशः ।
दवीयसस्तदा जिष्णोरशृणवन् शङ्खनिस्वनम् ।
सात्यकिं कार्ष्णिचरितं परितप्तोऽभ्यधान्नृपः ॥ ८५ ॥
शूर क्रूरचरित्रेषु प्रविष्टस्ते गुरुः सुहृत् ।
धर्मज्ञ तव कालोऽयमालोकय शरण्यताम् ॥ ८६ ॥
प्रयातेऽपि त्वयि प्राणसदृक्षस्य दिदृक्षया ।
द्रोणाद् द्रौपदिभीमाभ्यां समेतस्य न मे भयम् ॥ ८७ ॥
इति श्रुत्वा तथेत्युक्त्वा दत्त्वा हुत्वा च सात्यकिः ।
स्रग्वी धात्रीशमामन्त्र्य मङ्गलालंकृतः कृती ॥ ८८ ॥
काण्डखण्डितविद्विषिरक्तसिक्तेन वर्त्मना ।
रथेन रंहसा चालीदुद्धुतरजसा सुखम् ॥ ८९ ॥
युग्मम् ।
द्रोणसात्यक्योः काण्डमण्डपच्छन्नचण्डरुक् ।
रणोऽभूदस्त्रसंघट्टस्फुलिङ्गास्ततमास्ततः ॥ ९० ॥
गुरो त्वच्छिष्यमन्वेष्टुर्न मे संरोद्धुमर्हसि ।
इत्युक्तिभाजि शैनेये गुरुरूचे न मुच्यसे ॥ ९१ ॥
इत्युक्तवन्तमुत्काण्डकोदण्डं दुर्जयं गुरुम् ।
वञ्चयन् रथवेगेन सात्यकिर्व्यूहमाविशत् ॥ ९२ ॥
निकृत्य कृतवर्मादीन् प्रमादीव विशन्नसौ ।
चक्रे क्षितिभुजंगानां क्षयं तार्क्ष्यैरिवाशुगैः ॥ ९३ ॥
पाण्डवाश्चण्डकोदण्डा व्यूहभेदोद्यतास्तदा ।
गुणा इव प्रमादेन वारिताः कृतवर्मणा ॥ ९४ ॥
रणात्पत्रिभृतव्योमा संरम्भात् ताम्रदीधितिः ।
शिनेः सूनुस्तदा वीरनेत्राम्भोजनिमीलनः ॥ ९५ ॥
सिन्धुराज्जलसंधाख्यं मगधेन्द्रमपातयत् ।
संध्याकाल इव क्षिप्रं चण्डांशुं चरमाचलात् ॥ ९६ ॥

युग्मम् ।
मार्गणान् लक्ष्यदानेन प्रीणयन् स पदे पदे ।
नरनारायणौ द्रष्टुं शैनेयोऽचलदुत्सुकः ॥ ९७ ॥
गन्धसिन्धुरगन्धर्ववीरेन्द्रध्वजिनीव्रजान् ।
यमोऽङ्गुलीभिस्तद्बाणैर्लीलं लोलं मुदागिलत् ॥ ९८ ॥
सुदर्शनादिभूपालमौलीन् पत्त्रिभिराक्षिपन् ।
व्योम्नः स चक्रे चण्डीशमूर्तेर्मुण्डालिमण्डनम् ॥ ९९ ॥
शैनेयसायकैर्लूनो दूनो दुःशासनस्तदा ।
द्रोणं प्राप ततस्तापम्लानाधरपल्लवः ॥ १०० ॥
तं जगाद गुरुर्मूढ किमु चस्तोऽसि सात्वतात् ।
पाञ्चालीचिकुराकृष्टौ हृष्टो यः क्व स ते मदः ॥ १०१ ॥
यो हासः पाशपातेषु रणाद्यूतेऽभवत् तव ।
पतत्सु यमपाशेषु प्राणद्यूते क्व तेऽद्य सः ॥ १०२ ॥
अधुनापि कुरु त्वं वा संधिं युधि भयं यदि ।
ननु चेत् परलोकाय युध्यध्वं तदशङ्किताः ॥ १०३ ॥
इत्युक्ते न्यग्मुखस्त्राणाभिलाषी सैष दीनदृक् ।
दैत्यावतारः पातालदैत्यान् गन्तुमिवैहत ॥ १०४ ॥
कृतान्तकिंकरस्वेच्छैर्म्लेच्छैर्व्यूढैः समन्ततः ।
स सात्यकिमगान्मङ्क्षु चतुर्वेगवरत्वरः ॥ १०५ ॥
मुहूर्तेऽस्मिन् गुरुर्विप्रः प्रज्वलत्कोपपावकः ।
चित्रं नृणां सुरस्त्रीणां व्यधात् पाणिग्रहान् बहून् ॥ १०६ ॥
धीरकेतुचित्ररथचित्रकेतुसुधन्वनः ।
पाञ्चालदिग्जयस्तम्भान् जङ्गमान् सोऽभ्यपातयत् ॥ १०७ ॥
यज्ञयोनिस्तदा वीरो मूर्च्छयित्वा शरैर्गुरुम् ।
कृपाणपाणिस्तं हन्तुं दण्डपाणिरिवाद्रवत् ॥ १०८ ॥
गुरुस्तं लब्धसंज्ञोऽथ शरैरासन्नपातिभिः ।
किष्कुप्रमाणैर्वैतस्तैर्वैशस्त्यैर्वैशद्धमपूरयत् ॥ १०९ ॥
चस्तेऽस्मिन् वाडवः सैष दीप्तहेतिरशोषयत् ।
अन्तर्धर्मिबलाम्भोधिं भुवनप्लवनक्षमम् ॥ ११० ॥
छिन्ने म्लेच्छबले बाणैः क्षीणवर्मायुधं युधि ।
दुःशासनं न शैनेयोऽवधीद्भीमभिया तदा ॥ १११ ॥
प्रविश्य पाण्डुवाहिन्यां नृपवक्त्राणि पद्मवत् ।
तदा लुलाव वीरश्रीपूजार्थीव द्विजो द्विगुः ॥ ११२ ॥
केकयाधिपतिज्येष्ठबृहत्क्षत्रद्रुमानलः ।

शिशुपालात्मभूधृष्टकेतुदावानलाम्बुद: ॥ ११३ ॥
जरासंधतनूजन्मसहदेवाम्बुदानिल: ।
धृष्टद्युम्नसुतक्षत्त्रधर्मश्वासानिलोरग: ॥ ११४ ॥
तेजसा प्रज्वलन् बाणैर्वर्षन् सर्पन्नुरुत्वर: ।
कोपेन नि:श्वसन् द्रोण: पार्थं व्याकुलयद्बलम् ॥११५॥
चि.भिर्विशेषकम् ।
सत्यकिप्रवेश: ।
क्षणेऽस्मिन्नन्तरिक्षान्तभाजि भास्वति भूपति: ।
अभ्यधत्त समभ्येत्य भीमं भीमग्रमानस: ॥ ११६ ॥
वत्स त्वत्सत्त्वकालोऽयं द्विट्प्रविष्टं व्रजानुजम् ।
कर्ण्यते केशव: कम्बु: क्रोशन् न पुनरार्जुन: ॥ ११७ ॥
द्विषद्विषमतामग्नं तात यातेऽर्जुनं त्वयि ।
द्रोणजां द्रौपदिर्भीतिं हन्ता हन्तायमेव मे ॥ ११८ ॥
इति श्रुत्वाभ्यधाद्भीम: प्रभो तेभ्योऽर्जुने क्व भी: ।
दधे मूर्ध्नि तथाप्येष शिष्यवत् तव शासनम् ॥ ११९ ॥
इत्युदीर्य महावीर्य: स्यन्दनस्वनगर्जन: ।
मदौघशाली कर्णान्तलीनोड्डीनशिलीमुख: ॥ १२० ।
पुरोलोकैर्दत्तमार्ग: प्रपतद्भिरितस्तत: ।
भीम: शकटभेदाय दन्ती मत्त इवाद्रवत् ॥ १२१ ॥
युग्मम् ।
कौन्तेय केयमिच्छा ते व्यूहं भेत्तुं मयि स्थिते ।
इत्युक्त्वामुं गुरु: क्रूरैर्बाणपूरैरपूरयत् ॥ १२२ ॥
तत्काण्डपतनव्यक्तसान्द्ररक्तो वृकोदर: ।
कालीकुचाग्रकाश्मीरक्लिन्न: काल इवाबभौ ॥ १२३ ॥
न शिष्योऽहं गुरुर्न त्वं नार्चामि त्वां यथार्जुन: ।
त्वां विजित्य विशन्तं मां पश्येत्युक्त्वानिलिर्गुरुम् ॥ १२४ ॥
याममुञ्चद्गजबलां घण्टाटङ्कारिणीं गदाम् ।
द्रुतं द्रुम इवाभञ्जि वस्तद्रोणस्तया रथ: ॥ १२५ ॥
युग्मम् ।
तदा त्वदात्मजा राजन् सानुजा मनुजेश्वर: ।
सव्यालचन्दनौपम्यं भीमं भीमाशुगैरगात् ॥ १२६ ॥
वृन्दारकं दीर्घनेत्रं सुषेणं दुर्विमोचनम् ।
रौद्रकर्माणमभयं चित्रकान्तिं सुमर्षणम् ॥ १२७ ॥
इत्यष्टौ त्वत्सुतान् राजन्नाजघान वृकोदर: ।
तच्छिरोभि: शरोत्क्षिप्तै: कन्दुकै: क्रीडयन् दिश: ॥ १२८ ॥
युग्मम् ।
वर्षन् कीनाशदासेभ्यो हूतैर्दण्डैरिवाशुगै: ।
स्यन्दनेनाब्दनादेन तदा द्रोणस्तमाद्रवत् ॥१२९॥
रामरावणसङ्ग्रामगुणग्राममलिम्लुच: ।
तदोच्छ्रसदवष्टम्भ: संरम्भ: कोऽप्यभूत् तयो: ॥१३०॥
रथादथावरुह्याशु भीमो हस्ताग्रलीलया ।
हस्तीवोत्पाट्य चिक्षेप दूरे दूरे रथं गुरो: ॥१३१॥
पृथक्कृताङ्गशतत: शताङ्गाद्विद्रुते गुरौ ।
रथी वरूथिनीं भीमोऽविशद्विशदविक्रम: ॥१३२॥
अपूर्णचरणश्रद्धान् दूरदेशान्तरागतान् ।
यमदन्तानिव शरान् प्रीणयन् प्राणिकोटिभि: ॥१३३॥
कर्णानीकं समीकार्थी घनाकुलमनाकुल: ।
भीमोऽभजद्गजक्रीडाकान्तारमिव केसरी ॥ १३४ ॥
संरब्धशैनेयधनुर्निनादा-
नादाय भीमोऽद्भुतमुन्ननाद ।
तत्क्ष्वेडया दध्मतुराशु कृष्णौ
कम्बू तदा धार्मिमनोविनोदौ ॥ १३५ ॥
पराङ्मुखोद्वर्तितवार्धिबिभ्यद्-
द्वीपान्तर: कोऽपि स शब्दपूर: ।
श्लथार्धनारीश्वरसंधिबन्ध:
समीरणस्कन्धसमीरणोऽभूत् ॥ १३६ ॥
सामीरिणा संयति भज्यमानं
विभज्यमानं यमदासवृन्दै: ।
बलं तदालोक्य नृलोकमस्त्र-
मयं वितन्वन् प्रचचाल कर्ण: ॥ १३७ ॥
मिथ:प्रमाथाकुलयोस्तदाभूत्
कौन्तेययो: कश्चन काण्डपात: ।
यद्वातजातप्रसरैरिवासीत्
सुरासुराणामपि मौलिकम्प: ॥ १३८ ॥
भीमेन भग्नप्रसर: शरौघै:
कर्णस्तदा दीर्णरथायुधौघ: ।
वस्तोऽपि वैरादिव रंहसैव
तदीयतातं जयति स्म वातम् ॥ १३९ ॥

म्लानाननः कृपीकान्तं तदागत्य नृपोऽभ्यधात् ।
प्रियोऽर्जुनस्ते यन्मुक्तौ तस्मै सात्यकिमारुती ॥ १४० ॥
अहो नु मन्दभाग्यानां सामर्थ्यं किंचिदद्भुतम् ।
येनापि वज्रदुर्भेदास्त्वत्प्रतिज्ञाः श्लथीकृताः ॥ १४१ ॥
ऊचे गुरुर्गुरुतरं किं युध्येयं चमूमिमाम् ।
किं वा तौ बाणवातौघचलाचलकुलाचलौ ॥ १४२ ॥
एकोऽपि वारयाम्येष सम्प्राप्यद्य चमूरमूः ।
एकादशचमूवीरैस्त्वं निवारय तत्त्रयम् ॥ १४३ ॥
इत्युक्तौ गुरुणा गत्वा द्रुपदोर्वीशनन्दनौ ।
पार्थिवौ विरथीचक्रे शक्रभूचक्ररक्षकौ ॥ १४४ ॥
इहान्तरे महाशौर्यः सूर्यसूनुरतापयत् ।
भीमं हैमैः शरव्रातैः पितुरातैः करैरिव ॥ १४५ ॥
भीमास्त्रैः कर्कशैरर्कसूनुर्लूनरथायुधः ।
नश्यन्नङ्घ्रिरजोव्याजात् तेनेऽभ्यव्यापि दुर्यशः ॥ १४६ ॥
भीमे भूपालमालाया मौलिजालानि कृन्तति ।
सुराणामप्यहो शीर्षैः कम्पितं चकितैरिव ॥ १४७ ॥
पुनरप्याययौ सज्जस्यन्दनः सूर्यनन्दनः ।
भीमं हेमशरैः कुर्वन् हेमवल्लिवनोपमम् ॥ १४८ ॥
छन्ने बाणगणैर्व्योम्नि द्रष्टुं तत्र रणं तयोः ।
देवा इवाययुः पश्यदनिमेषभटच्छलात् ॥ १४९ ॥
कौन्तेये कर्णकोदण्डरथप्लोषानले तदा ।
दुर्जयाख्यस्तव सुतो राजन् भेजे पतङ्गताम् ॥ १५० ॥
भीमेन भुवनक्षोभशोभमानशरोत्करः ।
गदया विरथीचक्रे पुनराधिरथी रथी ॥ १५१ ॥
तदा त्वदङ्गजो राजन् धावन् भीमेन निर्ममे ।
प्रमथः स्वर्गसुमुखीमुखपद्मशिलीमुखः ॥ १५२ ॥
आरुह्य प्रमथरथं ततोऽधिरथभूः शरान् ।
यान् भीमस्य हृदि न्यास तैस्तत्कोपानलोऽज्वलत् ॥ १५३ ॥
ततो दृष्ट्वा प्रविष्टेषु श्वभ्रं भीमेषुभोगिषु ।
कर्णो गुप्त्यै नरेन्द्राणां रथेन जविनाविशत् ॥ १५४ ॥
तान् दुर्मर्षणदुर्गाहजयदुर्धरदुःसहान् ।
जघान त्वत्सुतान् पञ्च भीमः सत्याभिधस्तथा ॥ १५५ ॥
रङ्गन्तं पुनरङ्गेशं कृत्वा कृत्तरथायुधम् ।
भीमे नदति भक्त्येव भियालोटि भटैर्भुवि ॥ १५६ ॥
सम्प्राप्य त्वत्सुताश्चित्रचित्रबाणशरासनाः ।
चारुचित्रकचित्राह्वौ चित्रवर्मोपचित्रकौ ॥ १५७ ॥
कर्णत्राणधियो भीमबाणपातनिपातिताः ।
युधि स्वपुत्रं पाहीति वक्तुं शङ्केऽर्कमव्रजन् ॥ १५८ ॥
युग्मम् ।
मुहुर्जितोऽपि राधेयस्तान् मृतान् वीक्ष्य बाष्पदृक् ।
अनिर्वेदः श्रियो मूलमित्येवं पुनरापतत् ॥ १५९ ॥
भीमः क्षरदसृग्धारो राधेयविशिखैर्बभौ ।
वीरश्रीस्नानकाश्मीरारुणनिर्झरशैलवत् ॥ १६० ॥
विमुक्तभीमकरया वामया शरमालया ।
आलिङ्ग्यमानः सर्वाङ्गं मुमोहाङ्गपतिस्ततः ॥ १६१ ॥
ते चित्रायुधचित्राश्वचित्रसेनविकर्णकाः ।
दृढः शत्रुंजयः शत्रुसहश्चेति सुतास्तव ॥ १६२ ॥
कर्णत्राणाय धावन्तो हता भीमेन तद्बभौ ।
सप्तगोदावर इव श्रीभीमस्तदसृग्रयैः ॥ १६३ ॥
ततो मूर्च्छान्तविक्रान्तः कर्णः स्वर्णमयैः शरैः ।
भीमं चक्रे दवार्चिष्मत्कीलालीढद्रुमोपमम् ॥ १६४ ॥
पार्थस्य विरथस्यास्य सर्वाण्यस्त्राणि धावतः ।
कर्णश्चिच्छेद पत्राणि तपस्य इव शाखिनः ॥ १६५ ॥
क्षीणायुधो हरिकरिव्रातान् वातात्मजोऽक्षिपत् ।
वैकर्तनश्चकर्तैषुसंतानैर्मङ्क्षु तानपि ॥ १६६ ॥
स्मरन् कुन्तीगिरं भीममनिघ्नन् भानुभूस्तदा ।
लीनं मृतेभकूटेषु धनुष्कोट्या स्पृशन् जगौ ॥ १६७ ॥
महद्भिर्न रणं कार्यमकृतास्त्र पुनस्तव ।
स्थूलमूर्तेर्बहुभुजः सूदतैव तवोचिता ॥ १६८ ॥
इत्युक्त्वा शल्ययन् भीमं दर्शितो दनुजद्विषा ।
अत्रासि दूरादुद्दण्डैः काण्डैः कर्णः किरीटिना ॥ १६९ ॥
आरूढोऽथ विपत्त्यक्तः सुतप्तः सात्यके रथम् ।
भीमः प्रावृड्विमुक्तोऽर्क इव पूर्वगिरेः शिरः ॥ १७० ॥
भीमसेनप्रवेशः ।

नरेण नाराचमुदञ्चितं तदा
पतङ्गभूसंमुखमद्भुतप्रभम् ।
अखण्डयन् द्रौणिपतत्रिपङ्क्तय-
स्तदुन्मुखं दावमिवाब्दवृष्टयः ॥ १७१ ॥

ततः पतत्रिप्रकरैः पराङ्मुखं
विरच्य नाराचरुचा गुरोः सुतम् ।
असृक्प्रभामन्वितसांध्यविभ्रमान्
जघान संघानवनीभृतां नरः ॥ १७२ ॥

हयाङ्घ्रिधूतानपि रक्तवाहिनी-
प्रवाहबिन्दूनुदितान् पदे पदे ।
त्वरातिरेकादभिवञ्चयन् ययौ
जयद्रथेच्छोर्जयिनस्तदा रथः ॥ १७३ ॥

तदा हरीणामपि कृष्णयोरपि
द्युतिस्त्वरादीर्घतरैव मिश्रिता ।
मुदा भटैः संयति जह्नुनन्दिनी-
कलिन्दजासङ्गनिभा व्यभाव्यत ॥ १७४ ॥

सव्यसाची रविरिव प्रत्यङ्गाग्रशिलीमुखम् ।
इतस्ततः कीर्णदर्पं पद्मव्यूहमथ व्यधात् ॥ १७५ ॥

विगाह्य वाहिनीं पद्मव्यूहोद्दलनलालसे ।
नरे नाग इवोद्भ्रान्ते राजहंसैः पलायितम् ॥ १७६ ॥

महारथघटागुप्तपाशस्थितजयद्रथम् ।
सव्यसाची ततः सूचीव्यूहं निचितमाविशत् ॥ १७७ ॥

उद्यत्कीलालकीलालिमालिनं मारुतिस्तदा ।
अग्न्युज्ज्वलगदाहस्तो ददाह स्तोममस्त्रिणाम् ॥ १७८ ॥

सात्यकेर्निघ्नतः शत्रून् मुहुर्धन्व नतोन्नतम् ।
निमेषोन्मेषभृन्मृत्योर्विलोचन इवाबभौ ॥ १७९ ॥

धन्विना युयुधानेन युधानेन क्रुधार्दितम् ।
कौरवेन्द्रमहाचक्रं ह हा चक्रन्द तत् तदा ॥ १८० ॥

अलं वृषनृपस्यैष खे चिक्षेप शरैः शिरः ।
यद्विधुंतुदवद्वीक्ष्य विचस्तं राजमण्डलम् ॥ १८१ ॥

अपात्यन्त शरैस्तेन वीराः पञ्चशतीमिताः ।
क्ष्मासंमुखाः पतङ्गस्य करा इव दिवस्तदा ॥ १८२ ॥

नृपाङ्घ्रिपान् विमृद्नन्तं यूथेशमिव केसरी ।
भूरिश्रवाः समभ्यायाद्रूपस्तं यूपकेतनः ॥ १८३ ॥

उद्गर्जितौ विविधरत्नविचित्रचापौ
चञ्चत्तडित्तरलकाञ्चनकाण्डपातौ ।
चक्राब्धिनीररसनप्रसरद्विरोधौ
धाराधराविव जवादभिजग्मतुस्तौ ॥ १८४ ॥

दोःशालिनां मृधमियःशिथिलादराणां
तेजोमयान्यगुणनूनि मनांसि नूनम् ।
अस्त्रौघघट्टजघनाग्निकणच्छलेन
पेतुस्तयोरुपरि कौतुकनस्खलानि ॥ १८५ ॥

धिक्त्वां विभग्नविभुवाञ्छितमद्य धिग्धिक्
दिक्चक्रवालविदितं मम शायकत्वम् ।
यच्छायितो न रिपुरित्यविशद्भियेव
भूमिं शरव्यसफलोऽपि तयोः शरौघः ॥ १८६ ॥

अन्योन्यबाणततिपातितसूतसप्ति-
धन्वध्वजौ कलितकाञ्चनचर्मखड्गौ ।
चेरे प्रचेलतुरथोग्रनिजप्रताप-
द्विड्दुर्यशोविटपिबीजकराविवैतौ ॥ १८७ ॥

क्ष्वेडाभिः खड्गखाङ्कारैः स्फुलिङ्गैर्गतिभङ्गिभिः ।
स्फुरद्घर्घरघोषैश्च तौ जातौ प्रेक्षणक्षणौ ॥ १८८ ॥

अथाकृष्य कचैर्हत्वा हृदि पादेन सात्यकिम् ।
सौमदत्तिः प्रपात्यैच्छच्छिरश्छेत्तुं महासिना ॥ १८९ ॥

तदाचष्ट हरिः पार्थं शिष्यस्ते पश्य सात्यकिः ।
जगज्जेतापि धिग् दैवात् सौमदत्तिवशं गतः ॥ १९० ॥

श्रुत्वेति पत्रिणा पार्थः सासिं भूरिश्रवोभुजम् ।
चिच्छेद घाताभिमुखं तार्क्ष्येणेवाहिरुत्फणी ॥ १९१ ॥

स क्वणत्कङ्कणो मुक्तामुद्रिकादन्तदीप्तिभिः ।
हसन् विवेकं पार्थस्य पपात भुवि तद्भुजः ॥ १९२ ॥

च्युतेऽथ बाहौ सत्कर्मसहाये सोमदत्तजः ।
पार्थं प्रोवाच भग्नेच्छो मुक्तसात्यकिमूर्धजः ॥ १९३ ॥

दर्शितं कूटयुद्धं दि पुंसो मैत्र्यफलं हरेः ।
त्वयाद्य छिन्दतैवान्यरणसक्तस्य मे भुजाम् ॥ १९४ ॥

इत्युक्त्वा विरचय्येषुशय्यां वामकरेण सः ।
प्रायोपविष्टो विष्टोऽन्तः समं स्पर्शादिवृत्तिभिः ॥ १९५ ॥

प्राणान् प्राणानले तस्य जुह्वतो मूर्ध्नि निर्ययौ ।
काचित् कान्तिशिखा धूमस्तोमयन्ती नभस्तलम् ॥ १९६ ॥

अथोचे निन्दतः क्ष्मापान् पार्थः किं कृत्यमस्त्रिणाम् ।
रक्षन्ति वैरे वैषम्ये मज्जन्तं स्वजनं न चेत् ॥ १९७ ॥

प्राणतुल्यसुहृद्रक्षाकारिणं किमु निन्दथ ।
सन्तो मूर्च्छितसौभद्रमृत्यूद्यत्पत्रिणोऽपि माम् ॥ १९८ ॥

कृष्णौ तु संमदपरः परिरभ्य वीरौ
भूपो नुनाव हरिमेव जयस्य हेतुम् ॥ २१८ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के द्रोणपर्वणि चतुर्थदिने जयद्रथवधो नाम तृतीयः सर्गः ॥ ३ ॥ :: ::

---

॥ अथ खण्डप्रशस्तौ

रामावतारवर्णनम् ॥

(७८) देवाधिपो वा भुजगाधिपो वा
नराधिपो वा यदि हैहयःस्याम् ।
संदर्शनं ते गुणकीर्तनं ते
सेवाञ्जलिं ते तदहं विदध्याम् ॥

हे राम यद्यहं देवाधिप इन्द्रः स्यां तत्तदा शक्रवच्चक्षुःसहस्रेण ते तव संदर्शनं सम्यगवलोकनं विदध्यां कुर्यां, प्रतिप्रतीकं त्वद्वपुषि लावण्यातिशयान्नयनयुगेन त्वज्ज्ञानस्याशक्यत्वादिति भावः । तथा यदि भुजगाधिपः शेषराजः स्यां तर्हि तद्वज्जिह्वासहस्रेण तव गुणानां कीर्तनं विदध्यां त्वद्गुणानामानन्त्यादेका रसना त्वद्गुणस्तुतावपर्याप्तेति भावः । तथा यद्यहं नराधिपो हैहयः स्यां तदा तद्वत्करसहस्रेण ते तव सेवार्थमञ्जलिं विदध्यां, भुजद्वयेन प्रणामकरणे मे संतुष्टिः कथं भवेदिति भावः ॥ ७८ ॥

(७९) पौलस्त्यस्यावमन्ता त्रिदशपतिसुतश्चक्रवर्ती कपीनां
कर्ता संध्यासमाधेर्जलनिधिषु चतुर्दिक्कुञ्जाश्रितेषु ।
किष्किन्धाराजधानीं भुजपरिघबलात्त्रायमाणस्त्वयाऽसौ
वाली हेमाब्जमाली गुणनिधिरिषुणा निर्मितो दक्षिणस्याम् ॥

हे राम वाली वानरस्त्वया इषुणा बाणेन साधनेन दक्षिणस्यां दिशि निर्मितः दक्षिणाशाधिपतेरतिथीकृतः इषुणा मारित इति यावत्, कथंभूतः सः, पौलस्त्यस्य रावणस्यावमन्ताऽवगणयिता, पुनःकथंभूतः, त्रिदशपतेरिन्द्रस्य सुतः, पुनःकथंभूतः, कपीनां वानराणां चक्रवर्ती सार्वभौमः, पुनःकिंविशिष्टः, जलनिधिषु समुद्रेषु संध्यासमाधेः संध्यावन्दनस्य कर्ता, कथंभूतेषु तेषु, चत्वारो दिक्कुञ्जास्तेषु ये आश्रितास्तेषु, तथा किष्किन्धाख्यां राजधानीं भुज एव परिघः परिघास्त्रं तद्बलात्त्रायमाणः पालयन्, तथा हेमाब्जानां स्वर्णकमलाकराणां माला अस्यास्तीति, हेमाब्जानि मलते धारयतीति वा सः, पुनःकथंभूतः, गुणानां शौर्यादीनां निधिरित्यर्थः ॥

(८०) भीमं यज्जलधिं जवेन हनुमानुल्लङ्घ्य लङ्कां गतो
यच्चाशोकमहावनं दलितवानक्षं च यत्क्षुण्णवान् ।
सीतोपायनरत्नमौलिसहितः प्राप्तश्च यस्त्वामसौ
तत्राप्येष भवत्प्रतापमहिमा निर्यन्त्रणः कारणम् ॥

हे राम यद्धनुमान् भीमं रौद्रं जलधिं जवेन वेगेनोल्लङ्घ्यातिक्रम्य लङ्कां गतः प्राप्तः, तथा यच्चाशोकमहावनं दलितवान्बभञ्ज, तथा स यदक्षं रावणपुत्रं क्षुण्णवान् मारितवान्, तथा यश्चासौ हनूमान् सीताया उपायनत्वेन ढौकनिकत्वेन यन्मौलिरत्नं चूडारत्नं तेन सहितस्त्वां रामं प्राप्तः, तत्र सर्वत्रापि एषोऽयं निर्यन्त्रणोऽस्खलितो भवतः प्रतापस्य कीर्तेर्महिमा महत्त्वं कारणं संपादकमिति, यतो हनूमते सीताशुद्धौ गच्छते रामेण प्रत्यभिज्ञानाय स्वमुद्रिका समर्पिता ततोऽपि व्यावर्तमानाय हनूमते सीतया स्वोपायनचूडारत्नमभिज्ञानाय दत्तमित्येतिह्यमस्तीति भावः ॥ ८० ॥

(८१) धाराधीर धरामहीशगणने कौतूहलीयानसौ
धाता तद्गणने चकार खटिकाखण्डेन रेखां दिवि ।
सेयं स्वर्गतरङ्गिणी समभवत्त्वत्तुल्यपृथ्वीधवा-
भावात्तां त्यजतिस्म सोयमवनीपीठे तुषाराचलः ॥

हे धारायामसिधारायां धीर शूर धरायां पृथ्व्यां ये महीशा राजानस्तेषां गणने संख्याकरणे कौतूहलीयान् कुतूहलविशिष्टः असौ धाता ब्रह्मा त्वद्गणने तव रामस्य गणने दिव्याकाशे खटिकाखण्डेन खटिनीशकलेन रेखां चकार, ततः सेयं रेखा स्वर्गतरङ्गिणी गङ्गा समभवज्जाता ततस्त्वया तुल्यस्यान्यस्य पृथ्वीधवस्याभावेनाग्रे रेखाकर्षणस्याभावात्तां खटिकां त्यजतिस्म तत्याज, ततः स खटिकाखण्डोऽयमवनीपीठे भूमिपृष्ठे तुषाराचलो हिमाद्रिरभूदिति शेषः, रामचन्द्रसदृशं भूपतिमन्यं लोके विधिर्नापश्यदिति भावः ॥ ८१ ॥

(८२) धत्ते नायक राम तावकयशो रामे शशाङ्के मरुद्वाहे स्वर्गगजे हरे फणिपतौ वाण्यां वृषे भे रुचिम् ।
अन्येषां तु तदम्बरे तदहिते तद्व्याङ्गने तन्मदे
तत्कण्ठे च तदीक्षणे तदलके तत्प्रार्थके तत्पथे ॥

हे नायक स्वामिन् हे राम तावकं त्वदीयं यशः कीर्तिः रामे बलभद्रे शशाङ्के सुधांशौ, मरुद्वाहे उच्चैःश्रवसि, स्वर्गगजे ऐरावते, हरे शम्भौ, फणिपतौ शेषे, वाण्यां सरस्वत्यां वृषेऽनडुहि, भे नक्षत्रे, च रुचिं शोभाप्रकर्षं धत्ते धारयति, सर्वेषां श्वेततया सादृश्यमस्तीति भावः, अन्येषां त्वद्वैरिणां तु यशः तदम्बरे रामवस्त्रे, तद्वस्त्रस्य नीलत्वादिति भावः,

तदहिते चन्द्राहिते राहौ, तदञ्जने उच्चैःश्रवसो व्यञ्जने, तन्मदे ऐरावतमदे, तत्कण्ठे ईशकण्ठे, तदीक्षणे शेषचक्षुषोः, तदलके वाण्याः केशेषु, तत्प्रोथके वृषनासिकायां, तत्पथे नक्षत्रमार्गे आकाशे च स्वीयां रुचिं धत्ते, अत्र सर्वत्र कृष्णत्वेन सादृश्यमस्तीति भावः, अत्र यथा संख्यमन्वयो ज्ञेयः । अनेन रामयशो धवलितं तदन्ययशः श्यामायितमिति सूचितम् ॥ ८२ ॥

(८३) श्रीमन्नायक रामभद्र भवतः पाणौ कृपाणं रणे
दृष्ट्वा यद्यदभूदरिक्षितिभुजां तत्तत्समाकर्णय ।
अङ्गे वेपथुरन्धता नयनयोर्वक्त्रे तृणं भूयसी
भीतिश्चेतसि वाचि संस्तुतिकथा हस्तद्वयं मस्तके ॥

हे श्रीमन्नायक रामभद्र रणे संग्रामे भवतस्तव पाणौ हस्ते कृपाणं खड्गं दृष्ट्वाऽरिक्षितिभुजां वैरिराजानां यद्यदभूत्तत्तत्समाकर्णय शृणु, अङ्गे वेपथुः कम्पः, नयनयोरन्धता, तथा वक्त्रे तृणं, येषां मुखे तृणं दृश्यते ते शूरा अपि गोवदवध्या इति भावः, तथाचेतसि भूयसी भीतिः, तथा तेषां वाचि संस्तुति कथा हे राम त्वं दयालुरतोऽस्मान्याहीत्येवंविधाऽनेका, तथा हस्तद्वयं करद्वयं मस्तके शिरसि त्वत्प्रणामार्थं कृतवन्त इत्यर्थः ॥ ८३ ॥

(८४) करकम्पितखड्गयष्टिभीमे
रणसंनाहितरामनाथवीरे ।
अरिभूभृदमर्त्यसुन्दरीणा-
मचलन्दक्षिणवामलोचनानि ॥

रणे संग्रामे संनाहितः कवचितो यो रामनाथाभिधो वीरस्तस्मिन् करेण कम्पिता या खड्गयष्टिस्तया भीमे रौद्रे क्रुद्धे जाते सति अरिभूभृतो वैरिराजास्तथाऽमर्त्या देवास्तेषां सुन्दर्यस्तासां यथाक्रमं दक्षिणवामलोचनान्यचलन्नस्फुरन्, स्त्रीणांवामदक्षिणलोचनपरिस्पन्दस्य यथाक्रमं शुभाशुभसूचकत्वेन वैरिस्त्रीणामशुभं देवस्त्रीणां शुभं सिद्धं रावणमरणमिति सूचितम् ॥ ८४ ॥

(८५) आकृष्टे कवचादहीन्द्ररसनाकल्पे कृपाणे त्वया
श्रीमन्नायक रामचन्द्र भवतः प्रत्यर्थिनां वेश्मसु ।
गाहन्ते सहसा लुलायचमरीशार्दूलशाखाचरी-
यक्षोरक्षशृगालकोलशलभृद्भल्लकभिल्लादयः ॥

हे श्रीमन्नायक रामचन्द्र त्वया कवचात्कोशादहीन्द्ररसनाकल्पे शेषराजजिह्वासदृशे कृपाणे खड्गविशेषे आकृष्टे निष्कासिते सति भवतः प्रत्यर्थिनां वैरिणां वेश्मसु गृहेषु सहसा सद्यो लुलाया महिषाश्चमर्यो वनगावः, शार्दूला व्याघ्राः, शाखाचर्यो वानर्यो, यक्षादेवयोनयो, रक्षांसि राक्षसाः, शृगालाः क्रोष्टारः, कोलाः शूकराः, शलभृतः शल्यकाः, भल्लूका ऋक्षा, भिल्लाः शबराश्च तदादयो हिंस्राः पशवो नराश्च गाहन्ते स्वेच्छया विलोडनं कुर्वते, तन्मन्दिराणां शून्यत्वेन वनचरतिरश्चां तत्र प्रवेशस्यानिवार्यत्वादितिभावः ॥ ८५ ॥

(८६) गण्डौपाण्डिमसात्तनूस्तनिमसात्पक्ष्मावलीबाष्पसात्
कीरः पञ्जरसान्मनोऽपि हरसात्कण्ठोऽपि कैवल्यसात् ।
आसन् राम चमूवरेण्य भवतः प्रत्यर्थिवामभ्रुवां
कोदण्डे परिवेषभाजि विजयश्रीसाधने योधने ॥

हे राम चमूवरेण्य सेनाप्रधान योधने रणे भवतस्तव कोदण्डे धनुषि परिवेषो मण्डलीकरणं धनुषस्तं भजते सेवतेऽसौ परिवेषभाक्तस्मिन् जाते सति कर्णान्तमाकर्षणेन कुण्डलनां प्राप्ते सतीत्यर्थः, प्रत्यर्थिवामभ्रुवां वैरिस्त्रीणां गण्डौ पाण्डिमसादास्तां पाण्डोर्भावः पाण्डिमा कृष्णौ गण्डौ पाण्डिम्ना संपद्येते इति पाण्डिमसात्, तथा तासां तनूस्तनिमसादासीत् तनोर्भावस्तनिमा कृत्वा शरीरतनिम्ना कृशत्वेन संपद्यते इति तनिमसात्, तथा पक्ष्मावली पक्ष्माणि नेत्ररोमाणि तेषामावली श्रेणिर्बाष्पसादासीत् कृत्स्ना पक्ष्मावली बाष्पमश्रु संपद्यत इति बाष्पसात्, तथा तासां कीरः शुकोपि पञ्जरसात्पञ्जराधीन आसीत्, तथा मनोपि हरसाद्धराधीनमासीत्, सर्वदा शंभुध्यानमकार्षीदिति भावः, तथा तासां कण्ठः कैवल्यसादासीत्, अत्र सर्वत्र साकल्ये सातिः पञ्जरहराभ्यां तु तदधीनवचने बोध्यः, एते विशेषास्तासां बभूवुरिति भावः, किंभूते योधने, विजयलक्ष्म्याः साधने कारणभूते, यद्यप्यमरादौ समरवाचक आङ्पूर्वक एव योधनशब्द उपलभ्यते तथापि महाकविप्रयोगात्केवलोपि साधुर्बोध्यः ॥ ८६ ॥

(८७) एक एव महान्दोषो भवतां विमले कुले ।
लुम्पन्ति पूर्वजां कीर्तिं जाता जाता गुणाधिकाः ॥

हे स्वामिन् भवतां निर्मले कुले वंशे एक एव महान् गुरुर्दोषः कलङ्कोस्ति, यत्र जाताः समुत्पन्नाः पुत्रादयः सर्वे पूर्वपूर्वापेक्षया गुणाधिका गुणैरधिकाः सन्तः पूर्वजां समुत्पन्नां कीर्तिं लुम्पन्ति परिमृजन्ति, अत्रायं भावः, अत्र वंशे पूर्वापेक्षयोत्तरोत्तरः पुरुषो न कोपि न्यूनगुणोऽभूत्किं तु विशिष्टगुण एवाभवदिति भावः ॥ ८७ ॥

(८८)परिहरतपराङ्गनानुषङ्गं बत यदि जीवितमस्ति वल्लभं वः ।
हरहर हरिणीदृशो निमित्तं दशदशकन्धरमौलयो लुठन्ति ॥

हे जनाः यदि चेद्वो युष्माकं जीवितं प्राणो वल्लभं प्रियमस्ति बत इति खेदे तर्हि पराङ्गनानुषङ्गं परस्त्रीष्वनुरागं परिहरत परित्यजत, यतः हरिणीदृशो मृगाक्ष्या निमित्तं कारणेन हरहरेति स्मरणं खेदेन दशकन्धरस्य दशग्रीवस्य रावणस्य मौलयः शिरांसि दश दशसंख्याकानि लुठन्ति भूमौ क्षितौ शेषः, यद्यसौ रावणः सीतानुषङ्गं नाकरिष्यत्तदा कथं रामस्तन्मस्तकानि तृणानीवालविष्यदिति भावः ॥ ८८ ॥

---

## THE APHORISMS
### OF THE
# YOGA PHILOSOPHY
### OF
## PATAÑJALI.

*(Continued from page 234.)*

[1] [Next] He states an expedient for firmess in this meditation.

**स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणम्पुनरनिष्टप्रसङ्गात् ॥५२॥**

Aph. 52 [The ascetic ought] not to form association and exhibit wonderment at the invitation of the tutelary deities, for evil would again ensue.

[2] There are four [classes of] ascetics viz., (1) he who has performed the practice and in whom the light [that consists of the pure element] has just entered; (2) he who possesses knowledge that holds to the truth; (3) he who has conquered the elements and senses; (4) he who has transcended the objects of meditation. This —the fourth one, in whom has sprung up the seven-fold perfect knowledge, up to the ground of the limit, and is realising [or has the immediate cognition of] the last stage, which is technically called, madhumati or honied, is invited by tutelary deities [Indra &c]: that is, they allure him with celestial nymphs and elixirs or ambrosia and the like.

He, upon this invitation should neither form association nor exhibit amazement. By association he falls again into the enjoyment of objects; and by wonderment thinking that he has accomplished his objects does not persevere in meditation. Therefore he should avoid association and wonderment.

[1] He states another expedient in regard to this resultant discriminative knowledge:

**क्षणतत्क्रमयोः सम्बन्धसंयमाद्विवेकजज्ञानम् ॥ ५३ ॥**

Aph 53 Knowledge springing from discrimination results from asceticism performed with regard to the relation between moments and to their order.

[2] "By moments" is meant the ultimate division of time, which cannot be sub-divided into other periods. 'Order" means modification of such moments of time as prior and posterior. From asceticism [performed] with regard thereto [i e with regard to both—the moments and their order] the above-discriminative knowledge results.

[3] The meaning is this, when perception even of an exceedingly subtile order of moments has taken place in the ascetic, who has performed asceticism in regard to the order that this moment is posterior to that, and that moment is prior to this; then he perceives other subtile things also, i. e, the great principle, &c.

[4] With the purpose of citing [another] discrimination of this restraint he states.

**जातिलक्षणदेशैरन्यतानवच्छेदात् तुल्ययोस्ततः प्रतिपत्तिः ॥ ५४ ॥**

Aph. 54. Therefrom results discernment of two similar things, as there is non-discrimination by class, characteristic and place.

[5] The causes of distinction of things are "class" [Jati] "characteristic" [lakshana] and "position" [desa].

In some cases the cause of distinction is "class" for instance, This is an ox, and This is a buffalo.

The cause of discrimination of two things of the same class, is "characteristic," for example, This [cow] is of variegated colour, and that is red. And the cause of discrimination of two things not differentiated by class

---

[1] अस्मिन् समाधौ स्थित्युपायमाह ।

[2] चत्वारो योगिनो भवन्ति तत्राभ्यासवान् प्रवृत्तमात्रज्योतिः प्रथमः । ऋतम्भरप्रज्ञो द्वितीयः । भूतेन्द्रियजयी तृतीयः । अतिक्रान्तभावनीयश्चतुर्थः ॥ तस्य चतुर्थस्य समाधिभूतसप्तविधप्रान्तभूमिप्रज्ञस्यान्त्यां मधुमतीसञ्ज्ञाम्भूमिकां साक्षात्कुर्वतः स्थानिनो देवाः उपनिमन्त्रयितारो भवन्ति दिव्यस्त्रीरसायनादिकेनोत्कण्ठयन्तीति तस्मिन्नुपनिमन्त्रणे नानेन सङ्गः कर्तव्यो नापि स्मयः । सङ्गतिकरणे पुनर्विषयभोगे पतति स्मयकरणे कृतकृत्यमात्मानं मन्यमानो न समाधावुत्सहतेऽतः सङ्गस्मययोर्वर्ज्जनन्तेन कर्तव्यम् ॥

[1] अस्यामेव फलभूतायां विवेकख्यातावुपायान्तरमाह ।

[2] क्षणः स चान्त्यः कालावयवो यस्य कालाः प्रविभक्तुं न शक्यन्ते तथा विधानाङ्क्षणानां यः पौर्वापर्य्येण परिणामस्तत्संयमात् प्रागुक्तविवेकजज्ञानमुत्पद्यते ॥

[3] अयमर्थः अयङ्क्षणोऽमुष्मात् क्षणादुत्तरोऽयमस्मात्पूर्व इत्येवं विधक्रमे कृतसंयमस्यात्यन्तं सूक्ष्मेऽपि क्षणक्रमे यदा भव तिसाक्षात्कारस्तदाऽन्यदपि सूक्ष्म महदादि साक्षात्करोति ॥

[4] अस्यैव संयमस्य विवेकोपक्षेपायाह ।

[5] पदार्थानाम्भेदहेतवो जातिलक्षणदेशा भवन्ति क्वचिद्भेदहेतुर्जातिर्यथा गौरयं महिषोऽयमिति जात्या तुल्ययोर्लक्षणम्भेदहेतुर्यथा इयङ्कर्बुरा इयमरुणेति जात्या लक्षणेन चाभिन्नयोर्भेदहेतुर्देशो दृष्टो यथा तुल्यपरिमाणयो रामलकयोर्भिन्नदेशस्थितयोः ॥

[6] अत्र पुनर्भेदो नावधारयितुं शक्यते यथैकदेशस्थितयोः पार्थिवयोः परमाण्वोः । तथाविधे विषये भेदाय कृतसंयमस्य यदा भेदेन ज्ञानमुपजायते तदा तदभ्यासात् सूक्ष्माण्यपि तत्वानि भेदेन प्रतिपद्यन्ते । एतदुक्तम्भवति यत्र न केनाप्युपायेन भेदोऽवधारयितुं शक्यस्तत्र संयमाद्भवत्येव भेदप्रतिपत्तिरिति ॥

and possessing similar characteristics is the place seen, as in the case of two emblic myrobalans of equal size, situated in two different places. But distinction cannot be made in such case as of two terrene atoms existing in the same place. When [in the ascetic] who has practiced restraint for a discrimination in regard to such objects, knowledge of distinction arises, then from practice of that subtile principles are distinctively known.

What is meant is this: where it is impossible to know difference by any other means, there, discernment of distinction certainly takes place by asceticism.

[1] In order to explain the signification [sanjñá] object [vishaya] and nature or characteristic [swabháva] of the above-described knowledge, springing from discrimination he states:

तारकं सर्वविषयं सर्वथाविषयमक्रमञ्चेति विवेकजञ्ज्ञानम् ॥ ५५ ॥

Aph. 55. The knowledge springing from discrimination is [called] saving [knowledge], has all things and the entire nature of all things for its objects, and is non-successive.

[2] The knowledge arisen in its final stage, from the efficacy of the asceticism described above [51st, 53] is by [its] significant name called saving [knowledge] for it delivers ascetics from the unfathomable sea of transmigratory existence. He states its object: It has all things for its object that is, all principles [tattwa] i. e. the great principle &c. are its objects. Its "Nature" [swabháva] is that it has all nature [or all states] of things for its object; that is, all principles existing in any mode, i. e. in all different forms gross, natural and subtile &c., in all states, in all modifications, are its objects. He states another characteristic of it, that it is non-successive, that is, there is no order [priority and posteriority] in perceiving without exception all entities modified in various states or forms: therefore it is called orderless [akrama].

It contemplates simultaneously all nature as if it were an emblic myrobalan-fruit in the hand. G. D.

*(To be continued)*

[1] उक्तस्य विवेकजन्यज्ञानस्य सञ्ज्ञां विषयं स्वभावञ्च व्याख्यातुमाह।

[2] उक्तसंयमबलादन्त्यायांभूमिकायामुत्पन्नज्ञानं तारयत्यगाधात्संसारपयोधेर्योगिन इत्यान्वार्थिक्यासञ्ज्ञया तारकमित्युच्यते ॥

अस्य विषयमाह। पूर्ववीति। सर्वाणि तत्त्वानि महदादीनि विषयोऽस्येति सर्वविषयम्। स्वभावश्चास्य सर्वथाविषयत्वं सर्वाभिरवस्थाभिः स्थूलस्वरूपादिभेदेन तैस्तैश्चपरिणामैः सर्वेण प्रकारेणावस्थितानि तत्त्वानि विषयोऽस्येति सर्वथाविषयम्। स्वभावान्तरमाह। अक्रमञ्चेति निःशेषनानावस्थापरिणतभावग्रहणे नास्य क्रमो विद्यते इत्यक्रमम् ॥ सर्वङ्करतलगतामलकवद् युगपत् पश्यतीत्यर्थः ॥

# THE VAIŚESHIKA APHORISMS

OF

# KAṆÁDA.

## SIXTH BOOK, SECOND DAILY LESSON.

*(Continued from page 237.)*

सुखाद्रागः ॥ १० ॥

Aph. 10 From pleasure [arises] desire.

[1] Restraint having been specified as an accessory with regard to merit and demerit, the origin of defects is stated, with the purpose of specifying defects as accessories. Desire or wish arises from pleasure generated by attachment to garlands, sandal-wood, women, and other objects of sense, or in the pleasures of those successive kinds, or in the means of those pleasures. It is also to be considered that aversion arises from pain begotten by snakes, thorns &c., in those pains, or in the means of those pains. Desire, aversion, and infatuation, in virtue of being incentives to activity are called defects. Accordingly the aphorism of Gautama, Defects have for their characteristic incitement to activity. U.

तन्मयत्वाच्च ॥ ११ ॥

Aph. 11. Also through habituation to that.

[2] The words 'desire and aversion arise' are to be supplied. Habituation is a particular powerful reproduction engendered by use of objects of sense, by the influence of which it is that the unhappy lover, who does not win his mistress, sees his beloved in every object; and he who has been once bitten by a snake in consequence of the forcible reproduction sees snakes everywhere. It has therefore been said: Habituation to an object is its luminous revelation external or internal. U.

अदृष्टाच्च ॥ १२ ॥

Aph. 12. Also through destiny.

[1] एवं धर्माधर्मप्रादुर्भावं प्रति यमसहकारिणमभिधाय दोषं सहकारिणमभिधातुं दोषनिदानमाह स्रक्चन्दनवनितादिविषयसेवनजन्मनः सुखादुत्तरोत्तरं तज्जातीये सुखे तत्साधने वा राग इच्छा संजायते अहिकण्टकादिजन्मनो दुःखात् तत्र तत्साधने वा द्वेष इत्यपि द्रष्टव्यम् रागद्वेषमोहाः प्रवर्त्तकत्वेन दोषा इत्यभिधीयन्ते तथा च गौतमीयं सूत्रम् प्रवर्तनलक्षणादोषाः इति ॥

[2] रागद्वेषौ भवत इतिशेषः विषयाभ्यासजनितो दृढतर संस्कारविशेष तन्मयत्वं यद्वशात् कामातुरस्य कामिनोमलभमानस्य सर्व्वत्र कामिनोदर्शनम् एकदा भुजभुजङ्गदष्टस्य तत्र दृढतरसंस्कारतः सर्व्वत्र भुजङ्गदर्शनम् तदुक्तं तन्मयत्वं तत्प्रकाशो बाह्याभ्यन्तरतस्तथा इति ॥

[1] The words 'desire and aversion [arise]' are to be supplied. Though destiny be a universal cause, yet in relation to these it sometimes assumes the nature also of a special cause. Such cases are to be inferred as the desire of a mistress at the commencement of youth even in one who has not experienced in that birth the pleasures of love; the aversion towards snakes even in those who have not experienced pain from snake-bites, &c. U.

जातिविशेषाच्च ॥ १३ ॥

Aph. 13. Also through particularity of race.

[2] Another accessory is stated. Thus on the part of the human race there is desire towards rice &c., on that of deer towards grass &c., on that of camels towards briers, &c. In all these cases destiny which determines such and such a race is the cause; but race, or particular birth is only a means. Similarly the desire of pigeons &c., for refuse. So also the aversion of buffaloes towards a horse, of dogs towards a jackal, of ichneumons towards a snake, &c. is to be inferred. U.

इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः ॥ १४ ॥

Aph. 14. Activity in merit or demerit has for its antecedents desire and aversion.

[3] Activity in a lawful action has desire for its condition; in an unlawful action, injury &c., activity has aversion for its condition. Activity conditioned by desire in sacrifice &c. begets merit; activity conditioned by aversion in injury &c. begets demerit. These same desire and aversion cause the series of transmigrations. Accordingly the aphorism of Gautama, Activity is energy of word, thought, and body. Verbal activity is energy of voice: it is meritorious so far forth as it is true, kind, and useful; evil so far forth as untrue, unkind, useless. By thought mind, by which we think or know, is intended. Mental activity therefore is compassion towards all creatures, &c. Bodily activity is almsgiving ministration &c., evil in ten ways, and good in ten ways. U.

तत्संयोगो विभागः ॥ १५ ॥

Aph. 15. By these are conjunction and disjunction.

[1] Existence in a future state is now declared to be the use of merit and demerit. By these—by merit and demerit—conjunction—birth—is caused. By conjunction is here intended connection with non-previous pairs of bodily organs. Disjunction is the disjunction of body and mind characterised as death. The meaning is therefore that this transitory world, a series of births and deaths, otherwise termed existence in a future state, is caused by merit and demerit. U.

आत्मकर्मसु मोक्षो व्याख्यातः ॥ १६ ॥

Aph. 16. Emancipation is declared as dependent on the actions of the soul.

[2] This it is which is the separation of body and mind. When there exist the actions of the soul, emancipation ensues. The actions of the soul are as follows:—hearing, meditation, the practise of devotion, abstraction, a sitting posture, restraining the vital airs, the acquisition of quietism and self-subjugation, the presentation of one's own and others' souls, knowledge of merit and demerit previously acquired whereof there must be fruition in other bodies and places, the formation of various bodies suitable to the fruition thereof, the destruction of merit and demerit by fruition, and emancipation characterised as removal of pain consequent on the cessation of birth resulting from the cessation of activity in consequence of the non-production of further merit and demerit by overcoming the mist of defects characterised as desire and aversion. Of these the prime act of soul is knowledge of the real nature of the six categories. U.

SEVENTH BOOK. FIRST DAILY LESSON.

उक्ता गुणाः ॥ १ ॥

Aph. 1. The qualities have been stated.

[3] Desirous of investigating the qualities in the seventh book, the author reminds us of their enunciation and definition. The meaning is that the qualities have been stated, enunciated, and defined. V.

---

[1] रागद्वेषावितिशेषः यद्यप्यदृष्टं साधारणकारणं तथापि क्वचित्तौ प्रति असाधारणतामप्यनुभजति यथा तज्जन्माननुभूतकामिनीसुरतस्यापि यौवनोद्भेदे कामिनीरागः अननुभूतभुजङ्गदंशदुःखानामपि भुजङ्गेषु द्वेष इत्याद्युन्नेयम् ॥

[2] सहकार्यन्तरमाह। तथाहि मनुष्यजातीयानामन्नादौ रागः मृगजातीयानां तृणादौ करभजातीयानां कण्टकादौ तत्रापि तत्तज्जातिनियामकमदृष्टमेव तत्त्वं द्वारमात्रन्तु जातिर्जन्मविशेषः एवं पारावतादीनामुत्करे रागः तथा महिषजातीयानां तुरङ्गद्वेषः सारमेयाणां शृगालेन नकुलानां भुजङ्गमे इत्याद्युन्नेयम् ॥

[3] विहिते कर्मणि रागनिबन्धना निषिद्धे कर्मणि हिंसादौ द्वेषनिबन्धना प्रवृत्तिः रागनिबन्धना यागादौ प्रवृत्तिर्धर्मं प्रसूते द्वेषनिबन्धना हिंसादौ प्रवृत्तिरधर्मं तावेतौ रागद्वेषौ संसारमनुवर्तयतः तथा च गौतमीयं सूत्रम् प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः इति वागारम्भो वाचिकी प्रवृत्तिः सत्यं प्रियं हितमिति पुण्या असत्यमप्रियमहितमिति पापा बुद्धिः बुध्यते ज्ञायतेऽनेनेति मनो बुध्यते तेन मानसी प्रवृत्तिर्भूतदयादिः शारीरीप्रवृत्तिर्दानं परिचरणमित्यादिका दशविधा पापा दशविधा पुण्या चेति ॥

[1] इदानीं धर्माधर्मयोः प्रयोजनं प्रेत्यभावमाह। ताभ्यां धर्माधर्माभ्यां संयोगो जन्म अपूर्वैरभिः शरीरेन्द्रियैरभिसम्बन्धः संयोग इहोच्यते विभागस्तु शरीरमनोविभागो मरणलक्षणः तथा चायं जन्ममरणप्रबन्धः संसारः प्रेत्यभावस्याजवञ्जवीभाव इति वैदिकी संज्ञा ॥

[2] अयमेव शरीरविभागः आत्मकर्मसु सत्सु मोक्षो भवतीत्यर्थः तत्रात्मकर्माणि तावत् श्रवणं मननं योगाभ्यासो निदिध्यासनमासनं प्राणायामः शमदमसम्पत्तिः आत्मपरात्मसाक्षात्कारो [illegible] धर्माधर्मपरिज्ञानं तद्भोगानुकूलनानादेहनिर्माणं तद्भोगेन तयोः प्रक्षयो रागद्वेषलक्षणदोषतुषारापगमादधर्माधर्मयोरनुत्पादात् प्रवृत्त्यपाये जन्मापायो दुःखापायलक्षणोऽपवर्गस्तत्र षट्पदार्थतत्त्वज्ञानमाद्यमात्मकर्म ॥

[3] सप्तमे गुणान् परीक्षिषुस्तदुद्देशलक्षणे स्मारयति। गुणा उक्ता उद्दिष्टा लक्षिताश्चेत्यर्थः ॥

**पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च॥२॥**

Aph. 2. Also the colour, taste, smell, and touch of the earth &c., inasmuch as substances are non-eternal, are non-eternal.

[1] The colour, taste, smell, and touch of earth; the colour, touch, and taste of water; the colour and touch of light [or fire]; and the touch of air;—these, inhering in the non-eternal are non-eternal, inasmuch as they cease to be on the cessation of the existence of their substrata. The particle 'also' implies unity, individual unity, extension, gravity, natural fluidity, and visc y. These also are, in the non-eternal, non-eternal. V.

**एतेन नित्येषु नित्यत्वमुक्तम् ॥ ३ ॥**

Aph. 3. By this is declared their eternity in things eternal.

[2] By this—by the affirmation that their non-eternity is caused by the non-eternity of their substiata, the eternity of colour &c in eternal substrata is declared, that is virtually asserted, being involved. The ieading adopted by the author of the Vṛitti is 'Non-eternity in things eternal.' In his opinion colour &c. are non-eternal in things eternal, that is in atoms, inasmuch as colour and the other qualities [above mentioned] are destructible by conjunction with fire. But it is to be considered that in this reading there is no congruity between the words 'by this' and 'is declared.' V.

**अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात् ॥ ४ ॥**

Aph. 4. They are eternal in water, light, and air, inasmuch as the substances are eternal.

[3] It may be objected: Why, whereas colour and the other qualities residing in terrene atoms are destructible by conjunction with fire, is it universally stated that they are eternal in things eternal? The things eternal are therefore particularized. The sense is that colour and the other quatilies are not eternal when existing in eternal earth, but are stated in the preceding aphorism to be eternal only when residing in eternal water, light, and air. V.

[1] पृथिव्या रूपरसगंधस्पर्शाः, जलस्य रूपरसस्पर्शाः, तेजसोरूपस्पर्शौ, वायोः स्पर्शः, एतेषामनित्याश्रितानामनित्यत्वम् आश्रयनाशनाश्यत्वात्, चकारादेकत्वैकपृथक्त्वपरिमितिगुरुत्वसांसिद्धिकद्रवत्वस्नेहानां संग्रहः, तेऽपि अनित्यगता अनित्या एवेत्यर्थः ॥

[2] एतेन आश्रयानित्यत्वहेतुकानित्यत्वकथनेन नित्येषु आश्रयेषु रूपादीनां नित्यत्वमुक्तमुक्तप्रायमर्थायातत्वादित्यर्थः । नित्येष्वनित्यत्वमिति वृत्तिकारसम्मतः पाठः. तन्मते नित्येषु पार्थिवपरमाणुषु रूपादीनामनित्यत्वमग्निसंयोगनाश्यत्वादित्यर्थः, किन्तु तादृशपाठे एतेनेति उक्तमिति च सङ्गतं न भवतीति ध्येयम् ॥

[3] ननु पार्थिवपरमाणुगतानां रूपादीनामग्निसंयोगनाश्यत्वात् कथं नित्येष्विति सामान्यत उक्तमतो नित्यानि विशेषयति । न खलु नित्यपृथ्वीगता रूपादयो नित्याः किंतु नित्यजलतेजोवायुगता ते एव नित्याः पूर्वसूत्रे उक्ता इत्यर्थः ॥

**अनित्येष्वनित्या द्रव्यानित्यत्वात् ॥ ५ ॥**

Aph. 5. In things non-eternal they are non-eternal because the substances are non-eternal.

It may be asked whether qualities other than colour &c. existing in things non-eternal are eternal, in which case conjunction &c. would be eternal. It is therefore stated that all qualities which reside in things non-eternal, are non-eternal, in consequence of the non-eternity of their substiatum; and that consequently there are no eteinal qualities in things non-eternal.

**कारणगुणपूर्वकाः पृथिव्यां पाकजाः ॥ ६ ॥**

Aph. 6. [Colour, taste, smell, and touch] produced by burning in earth, have for their antecedents the qualities of their causes.

It is implied that the colour, taste, smell, and touch residing in wholes, have for their antecedents the qualities of their cause, that is that they become manifest from the homogeneous qualities which are attiibutes of the parts which are the causes of their own substratum. It is thus to be undeistood that the presentation of colour, taste, smell, and touch residing in the parts which are the non-coinherent causes of colour, taste, smell, and touch existing in the wholes, is by the connection of co-inhesion with the co-inherent. In anticipation of the question how in a dark water-pot &c, after powerful conjunction with fire there is production

[1] ननु रूपादिभिन्ना अनित्यगता गुणाः किं नित्यास्तथा च संयोगादिकमपि नित्यं स्यादित्यत आह । अनित्येषु ये गुणा वर्तन्ते ते सर्व एवानित्या आश्रयानित्यत्वात् तथ.चानित्येषु नित्या गुणा न सन्त्येवेत्यर्थः ॥

[2] रूपरसगंधस्पर्शाः, अवयविगता इति विवक्षणीयं, कारणगुणपूर्व्वकाः स्वाश्रयस्य यानि कारणानि अवयवा इति यावत् तेषां ये गुणाः स्वसजातीयगुणाः तेभ्यः प्रादुर्भवन्तीत्यर्थः तथाचावयविवृत्तिरूपरसगन्धस्पर्शानामसमवायिकारणानि अवयवगता रूपरसगंधस्पर्शास्तेषां समवायिकारणप्रत्यासत्तत्वन्तु स्वसमवायिसमवायसम्बन्धेनेति बोध्यम्, ननु श्यामघटादौ बलवदग्निसंयोगानन्तरं कथं रक्ताद्युत्पत्तिरित्यत उक्तं पृथिव्यां पाकजा इति अपीतिशेषः तथा च पृथिव्यां रूपरसगन्धस्पर्शाः पाकजा अपि, पाकस्तु रूपादिपरावृत्तिफलकविजातीयतेजःसंयोगः, सोऽपि रूपादेरसमवायिकारणम्भवति, तत्र च परमाणावेव पाकाद्रूपादिपरावृत्तिर्नावयविनि इति पीलुपाकवादिनः, तन्मते विजातीयाग्निसंयोगादारम्भकसंयोगनाशेन द्व्यणुकपर्य्यन्तावयविनाशे सति परमाणौ रक्ताद्युत्पत्तिस्ततो विजातीयाग्निसंयोगादारम्भकसंयोगानुगुणक्रियाद्युत्पत्त्याऽऽरम्भकसंयोगादिप्रक्रमेण पुनर्द्व्यणुकादिमहावयवपर्य्यन्तानामुत्पत्तिर्भवतीति । पिठरपाकवादिनस्तु अवयविनां सच्छिद्रतया विजातीयाग्निसंयोगात् तेषामपि रूपादिपरावृत्तिर्भवति न तु तत्रावयविनां नाशः प्रत्यभिज्ञाविरोधादित्याहुः । अत्र च पाकप्रक्रिया ग्रंथगौरवभिया परित्यक्ता ऽन्यत्रानुसन्धेया । ये तु नीलरूपादिव्यक्तय एकैका एव नित्या इत्याहुस्तन्मते नीलरूपं नष्टं श्यामरूपमुत्पन्नमित्यादिप्रतीतिव्यवहारयोरनुपपत्तिः समवायसम्बन्धस्य नित्यतया तद्विषयतया तयोरुपपत्त्यसम्भवात् अन्यथा घटादीनामपि नित्यत्वमेकत्वञ्चापद्येत, घटस्य रूपमिति भेदप्रत्ययात् गुणगुणिनोर्नाभेदः नीलपीतादिनानातन्त्वाद्यारब्धे पटादौ चित्ररूपमेव जायते तादृशपटस्य नीरूपत्वे तच्चाक्षुषानुपपत्तेः, नव्यास्तु तत्र प. तत्तदवयवावच्छेदेन नानैव रूपाणि भवन्ति । अतएव 'लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते" ॥ इत्यादिकं सङ्गच्छते इत्याहुः, रसगन्धयोस्तु न चित्रत्वं नानारसादिमदवयवारब्धानामवयविनां नीरसत्वादिस्वीकारेऽपि क्षत्यभावात्, चित्रस्पर्शस्तु रूपस्थलीययुक्त्या स्वीकरणीय एवेति संक्षेपः ॥

of red colour &c, it is stated that in earth [those qualities] produced by burning also—for the word also is to be supplied—colour, taste, smell, and touch in earth, even when produced by burning, [have for their antecedents the qualities of their causes.] Burning is heterogeneous conjunction with fire resulting in change of colour, &c. This also is a non-coinherent cause of colour, &c. On this subject those who maintain the combustion of atoms hold that it is in the atom that the change of colour &c consequent on combustion takes place and not in the whole. According to their doctrine the red colour &c is produced in the atom after the dissolution of the whole into binary atomic aggregates by destruction of the originative conjunction consequent upon heterogeneous conjunction with fire; and after this ensues again production beginning with binary aggregates and terminating in the whole possessed of magnitude, in the progressive order of originative conjunction &c. caused by the production of action &c., conformable to originative conjunction, in consequence of conjunction with heterogeneous fire. Those who maintain the combustion of [wholes such as] the pot teach that, the wholes being porous, it is in them that the change of colour &c. takes place in consequence of conjunction with heterogeneous fire; and that there is in this case no destruction of the wholes, for this would be contra v to observation. The order of combustion is here omitted to avoid voluminous prolixity, and may be sought elsewhere. According to the doctrine of those who teach that particular blue colours &c. are only individually eternal, the cognition and application that blue colour has ceased to exist and dark colour has been produced is impossible, inasmuch as connection by co-inherence is eternal, and the production of such a cognition and application with connection by co-inhesion as its object is impossible. Else [were it possible] the eternity and unity of water-pots &c. would follow. There being a cognition of difference in the notion of the colour of a water-pot, there cannot but be a difference in the attribute and then in that in which the attribute exists. In a piece of cloth &c. originating in various threads &c. of blue, yellow, and other colours, there is produced a composite colour, for were such cloth colourless its ocular perception would be impossible. In conformity with this, they say, is the verse: That is said to be a black ox which is ruddy in colour in the face, yellowish in the tail, and white in the horns and hoofs. Taste and smell are never composite, there being no want of argument if it be but allowed that wholes originated by parts, possessing various tastes &c. are tasteless, &c. A composite touch must be allowed according to the analogy of colour. V.

एकद्रव्यत्वात् ॥ ७ ॥

Aph. 7. Because there is only one substance.

[1] In reply to the objection How the qualities of the cause as not existing in the effect can be productive of the qualities of the effect, there being a difference of substratum? it is stated that it is because there exists that whereof there is one substance as the substratum, that is because there is a common substratum. Notwithstanding, therefore, that the qualities of the cause do not exist in the relation of immediate co-inherence in the effect, yet inasmuch as, in the relation of community of substratum characterised as co-inherence with the co-inherent, they do exist in the effect, the production by them of the qualities of the effect is not impossible. V.

अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते ॥ ८ ॥

Aph. 8. The perception and non-perception of the atomic and of that which has magnitude have been explained to be constant.

[2] The word eternal [or constant] refers, as a subject to that which contains it, to the fourth book which treats of eternity. The respective application of the words perception and non-perception is according to the rule: That which is connected with another, is connected with the more remote. Non-perception of the atomic is thus

---

[1] ननु कारणगुणानां कार्य्येऽसत्वात् कथं कार्यगुणजनकत्वं वैयधिकरण्यादित्याशङ्कायामाह । एकं द्रव्यमधिकरणं यस्य तत्त्वात् सामानाधिकरण्यादित्यर्थः, तथा च कारणगुणानां साक्षात् समवायसम्बन्धेन कार्य्येऽसत्त्वेऽपि स्वसमवायिसमवायरूपसामानाधिकरण्यसम्बन्धेन कार्य्ये सत्त्वात्तद्गुणजनकत्वं नानुपपन्नमितिभावः ॥

[2] नित्ये इति विषयेण विषयिणं नित्यत्वप्रतिपादकं चतुर्थाध्यायमुपलक्षयति उपलब्ध्यनुपलब्धी इति यथायोगमन्वयः "येन यस्याभिसम्बन्धो दूरस्थस्यापि तस्य सः" इतिन्यायेन, तथाचाणोरनुपलब्धिरिति लभ्यते तदेवं स्थूलो नीलः कलस इति प्रात्यक्षिकप्रत्यये यथा नीलं रूपं विषयस्तथा परिमाणमपि तेन च परिमाणेन परमाणुपर्यन्तं परिमाणमुन्नीयते द्रव्यत्वाच्च किञ्च द्रव्यप्रत्यक्षतायां रूपवत् परिमाणमपि कारणं नहि महत्त्वमन्तरेण द्रव्यं प्रत्यक्षं भवति तथा च द्रव्यप्रत्यक्षकारणत्वेन स्वयञ्च प्रत्यक्षतया परिमाणं गुणोऽस्तीति निश्चीयते यदि हि घटादिस्वरूपं परिमाणं स्यात् तदा महदानयेत्युक्ते घटमात्रमानयेत् तथा च प्रैषसंप्रतिपत्ती विरुध्येयाताम्, एवं घटपटादौ परिमाणं प्रतीयेत परिमाणपदाद्वा घट इति. मानव्यवहारासाधारणकारणत्वं द्रव्यसाक्षात्कारकारणविषयनिष्ठसामान्यगुणत्वं वा महत्त्वं मानव्यवहारो हस्तवितस्त्यादिव्यवहारे न तु पलसङ्ख्यादिव्यवहारः तच्च परिमाणञ्चतुर्व्विधं महत्त्वमणुत्वं दीर्घत्वं ह्रस्वत्वञ्च, तत्र परममहत्त्वपरमदीर्घत्वे विभुचतुष्टयवर्त्तिनी परमाणुत्वपरमह्रस्वत्वे परमाणुवर्त्तिनी अवान्तराणुत्वावान्तरह्रस्वत्वे द्व्यणुकवर्त्तिनी त्रसरेणुमारभ्य महावयविपर्य्यन्तं महत्त्वदीर्घत्वे एवञ्च सर्वाण्यपि द्रव्याणि परिमाणवन्ति, बिल्वामलकादावणुत्वव्यवहारः समिदिक्षुदण्डादिषु च ह्रस्वत्वव्यवहारो भाक्तः, भक्तिश्चात्र प्रकर्षभावाभावः, आमलके यः प्रकर्षभावस्तस्याभावः कुवले, बिल्वे यः प्रकर्षभावस्तस्याभाव आमलके, स च गौणमुख्योभयभागित्वाद् भक्तिपदवाच्यः ॥ दीर्घत्वह्रस्वत्वे नित्ये न वर्त्तेते इत्येके, परिमाण एव ते न भवत इत्यपरे, महत्सु दीर्घमानीयतामितिवत् महत्सु वर्त्तुलं त्र्यस्रं वा आनीयतामिति निर्धारणबलाद्वर्त्तुलत्वादीनामप्यापत्तेरिति तेषामाशयात् ॥

obtained. In the perceptive cognition, therefore, determined as a large blue water-pot, the extension is just as much an object as the blue colour; and by means of this extension extension terminating in the atomic [as a minimum], is inferred, as also from substantiality Moreover of the perceptibility of substance the cause is coloured extension; for without magnitude substance cannot be perceived. Accordingly it is decided that, as being a cause of perceptibility of substance, and as being of itself perceptible, extension is a quality. For were the form of a water-pot &c. its extension, a man would bring a water-pot, when he was told to bring the great; and thus there would be a contradiction in the order and the apprehension of it, and likewise from the term water-pot extension would be cognised, or from the term extension a water-pot The notion of magnitude is that of a particular cause of the usage of measurement, or that of a universal quality existing in objects and the cause of the presentation of substance The usage of measurement is the usage of cubits, spans &c, not the usage of weights, numbers, &c This extension is of four kinds, the great, the small, the long, and the short Of these infinite greatness and infinite length exist in the four pervading substances, absolute smallness and absolute shortness exist in atoms. Intermediate smallness and intermediate shortness exist in binary atomic aggregates Greatness and length reside in substances from tertiary atomic aggregates upwards to composite wholes In this manner all substances whatever possess two extensions [or dimensions] The notion of smallness in a vilva or ámalaka-fruit, and of shortness in fuel, sugar-canes &c is relative The relativity in this case is the existence or non-existence of greater size There is non-existence in a jujube of the greater size, of which there is existence in an emblic myrobalan There does not exist in an emblic myrobalan the greater size which exists in a vilva-fruit. This as containing as parts both the primary and secondary magnitudes is described by the term relative magnitude. U.

कारणबहुत्वाच्च ॥ ९ ॥

Aph 9. Also in consequence of a plurality of causes [extension is produced.]

The particle 'also' implies the addition of magnitude and coalescence. 'Extension is produced' is the ellipse to be supplied in the aphorism. Among these plurality of causes alone produces greatness and length in a tertiary atomic aggregate, since greatness and accretion do not exist in their cause. The plurality is derived from the relative idea of the Deity. The influence of particular destiny determines a plurality of objects in the divine idea Similarly duality existing in two atoms is productive of extension in a binary atomic aggregate In a piece of cloth originated by two threads not coalescent it is magnitude alone which is the non-coinherent cause, inasmuch as plurality and coalescence do not there exist But where a ball of cotton is originated by two balls of cotton, in this case coalescence is the cause, for there is here observed an increase of extension, and there is no plurality; and magnitude even though it existed could not be an occasion of increase of extension Such being the case even were magnitude here a cause, there would be no failure in the argument. Hence it has been said: By two, by one, or by all. Coalescence is an originative conjunction, and is defined as conjunction in an object of some of its constituent parts towards itself, in which object some of the constituent parts are non-conjunct towards itself; for it is said that this conjunction of constituent parts involves a lax conjunction of its own portions, is productive of extension, and is involved in the origination of qualities and actions U.

A. E. G.

*(To be continued)*

[1] चकारो महत्त्वप्रचयौ समुच्चिनोति, परिमाणमुत्पद्यते इति सूत्रशेषः तत्र कारणबहुत्वं केवलं त्र्यणुके महत्त्वदीर्घत्वे जनयति महत्त्वप्रचययोस्तत्कारणेऽभावात् तच्च बहुत्वमीश्वरापेक्षाबुद्धिजन्यं तद्बुद्धेरनेकविषयत्वेऽप्यदृष्टविशेषेण नियमः एवं परमाणुद्वयगतं द्वित्वं द्व्यणुके परिमाणारम्भकं एवं तन्तुभ्यामप्रचिताभ्यामारब्धे पटे केवलं महत्त्वमेवासमवायिकारणं बहुत्वप्रचययोस्तत्राभावात् यत्र च द्वाभ्यां तूलकपिण्डाभ्यां तूलकपिण्डारम्भस्तत्र परिमाणोत्कर्षदर्शनात् प्रचयः कारणं बहुत्वस्याभावात् महत्त्वस्य सत्त्वेऽपि परिमाणोत्कर्षं प्रत्यप्रयोजकत्वात् एवञ्च सति यदि महत्त्वं तत्र कारणं तदा न दोषः तदुक्तं "द्वाभ्यामेकेन सर्वैर्वा" इति । प्रचयश्च आरम्भकः संयोगः सच स्वाभिमुखकिञ्चिदवयवासंयुक्तत्वे सति स्वाभिमुखकिञ्चिदवयवसंयोगलक्षणः सच्चावयवसंयोगः स्वावयवप्रशिथिलसंयोगापेक्षः परिमाणजनकः गुणकर्मारम्भे सापेक्ष इति वचनात् ॥

## NOW READY.

## Vols. I. and II.

## THE RÁMÁYAN OF VÁLMÍKI,

TRANSLATED INTO ENGLISH VERSE

BY

R. T. H GRIFFITH, M A.

Price per Vol. Rs 6. Postage 6 anas.

BENARES: Messrs. E. J Lazarus & Co.,
CALCUTTA: Messrs. Berigny & Co,
LONDON: Messrs. Trubner & Co.,

PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्कुरश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

# THE PANDIT.

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature

No. 59. Benares, April 1st, 1871. Vol. V.


## ॥ भाट्टचिन्तामणेस्तर्कपादः ॥

परामर्शश्च यदि पक्षविशेष्यकस्तदा तद्विशेष्यिकैवानुमितिः। हेतुविशेष्यके तु साध्यविशेष्यिकेति मणिकृत्। उभयविधेनापि पक्षविशेष्यिकैवेति नव्याः। अत्र धूमलिङ्गकपर्वतपक्षकवह्निविधेयकानुमितिं प्रति धूमपरामर्शस्य हेतुत्वं, धूमलिङ्गकत्वं स्वाव्यवहितोत्तरत्वसंबन्धेन धूमज्ञानवत्त्वम्, अव्यवहितोत्तरत्वं च धूमज्ञानाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणत्वरूपम्। तेनापेक्षाबुद्ध्यात्मकपरामर्शसंग्रहः। एवं तत्तत्परामर्शानां कारणतेति। ननु सर्वेषु परामर्शेष्वनुमितिकारणतावच्छेदकतया परामर्शत्वं जातिः किमिति नाभ्युपेयते। चाक्षुषत्वादिना संकर इति चेत्, तर्हि तस्यां जातौ मानसत्वव्याप्यताङ्गीकार्या, चाक्षुषपरामर्शानन्तरं जायमानायामनुमितौ व्यभिचारवारणस्य मध्ये मानसपरामर्शकल्पनेन संभवात्। न च चाक्षुषसामग्र्या मानसप्रतिबन्धकत्वेन तदानीं मानसोत्पादासंभव इति वाच्यम्। फलबलेन चक्षुर्योगाभावेन चाक्षुषसामग्र्यभावस्य सत्त्वात्। ननु परामर्शत्वं स्मृतित्वव्याप्यम्। चाक्षुषादिपरामर्शोत्तरोत्पद्यमानानुमितिस्थले भवत इव स्मरणरूपपरामर्शकल्पनाच्च क्षतिः। एवं च स्मरणस्य संशयात्मकत्वाभावेन संशयानन्तरमनुमित्युत्पादनासंभवात्। विशेषतः परामर्शकारणतायां निश्चयत्वस्याप्रवेशेनातिलाघवमिति चेत्, चाक्षुषादिपरामर्शोत्तरोत्पद्यमानानुमितिस्थले स्मरणात्मकपरामर्शकल्पने तज्जनकसंस्कारकल्पने चातिगौरवापत्तेः। अनुमितिजनकतावच्छेदकजातेः संशयात्मकमानसव्यावृत्तत्वकल्पनेन संशयात्मकपरामर्शादनुमित्यापादनासंभवेन विशेषहेतुतायां निश्चयत्वाप्रवेशस्य तुल्यत्वात्। समूहालम्बनात्मकपरामर्शोत्तरमेकानुमितौ तद्व्याप्यवत्तापरामर्शान्तरकल्पनेन समूहालम्बनात्मकपरामर्शे ऽनुमितिजनकतावच्छेदकजातिर्न कल्प्यते। अतो न तत्र द्वितीयानुमितिः। तस्मात् परामर्शत्वं जातिरिति चेत्। अत्र केचित्। उक्तनयेनेष्टहेतुताज्ञानादौ प्रवृत्तिजनकतावच्छेदकवैजात्यस्यापि मानसत्वव्याप्यत्वेन सिद्ध्येष्टसाधनत्वादिपरामर्शविशेषे प्रवृत्तिजनकतावच्छेदकवैजात्येन संकरप्रसङ्गात्। न च प्रवृत्तिजनकतावच्छेदकवैजात्यं चाक्षुषत्वव्याप्यमिति वाच्यम्। परामर्शत्वस्य चाक्षुषत्वादिव्याप्यत्वेन विनिगमनाविरहात्। अतो न परामर्शत्व जातिरित्याहुः॥

अत्र गौतमीयाः। वह्न्याद्यनुमितौ वह्निव्याप्यालोकवान्पर्वत इत्यादिविशिष्टपरामर्शस्यैव हेतुत्वं, न त्वालोको वह्निव्याप्य आलोकवान्पर्वत इति ज्ञानद्वयस्य, गौरवात्। यत्र च ज्ञानद्वयादनुमितिस्तत्र विशिष्टज्ञानकल्पनान्न व्यभिचार इत्याहुः॥

मीमांसकास्तु वह्निव्याप्यधूमवान् पर्वत इति विशिष्टपरामर्शस्य हेतुत्ववादिनये व्याप्त्यंशे निश्चयत्वं निवेश्य धूमांशेपि निश्चयत्वं निवेशनीयम्। तथा च निश्चयत्वस्य तदभावाप्रकारकत्वरूपबहुतरपदार्थघटितत्वेन तेषां परस्परं विशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावबाहुल्यम्। ज्ञानद्वयवादिनये तु ज्ञानस्य भिन्नतया निश्चयत्वप्रवेशेपि न मिथो विनिगमनाविरहस्तत्र लाघवमित्याहुः॥

न च परामर्शवादिनये व्याप्त्यवच्छिन्ना या हेतुनिष्ठप्रकारता तन्निरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन

हेतुत्वकल्पनेन व्याप्त्यंशे निश्चयत्वानिवेशेन नोपदर्शितगौरवमिति वाच्यम्। वह्निव्याप्त्यंशे निश्चयत्वानिवेशे वह्निव्याप्यो धूम इति विशेषणतावच्छेदकप्रकारकनिर्णयकाले व्याप्त्यभावप्रकारकं ज्ञानं जायतामितीच्छासत्त्वे व्याप्त्यंशे संशयात्मकतथाविधविशिष्टवैशिष्ट्यबोधोत्पत्तौ बाधकाभावः। तथा च तादृशज्ञाने व्याप्त्यंशे निश्चयत्वनिवेशेन गौरवतादवस्थ्यात्। न च तादृशज्ञानस्याहार्यत्वेन न तस्मादनुमित्यापत्तिः, आहार्यपरामर्शादनुमित्यापत्तिवारणार्थमनाहार्यत्वनिवेशस्यावश्यकत्वादिति वाच्यम्। अनुमितिजनकतावच्छेदककोटावनाहार्यत्वस्यानुगतस्याशक्यनिर्वचनत्वेन तद्व्यक्तिविश्रान्ततया तथाविधतद्व्यक्तित्वावच्छिन्नभेदकूटस्यानुमितिजनकतावच्छेदककोटौ निवेशमपेक्ष्य व्याप्त्यंशे निश्चयत्वस्यैव तर्कसहत्वात् तथा च गौरवं तदवस्थमिति दिक्॥

ज्ञायमानं लिङ्गमनुमानमिति केचित्। भूतभाविलिङ्गाभ्यामनुमित्यजननापत्तेस्तज्ज्ञानमिति युक्तम्। तच्चानुमानं द्विविधं, स्वार्थं परार्थं च। परामर्शेन स्वस्यैव साध्यज्ञानजनकं स्वार्थम्। प्रतिज्ञाद्यवयवप्रयोगेण परस्य साध्यज्ञानजनकं परार्थम्। अवयवत्वं चानुमानवाक्यैकदेशत्वम्। ते च प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपाः पञ्च। साध्यविशिष्टपक्षप्रतिपादकवाक्यत्वं प्रतिज्ञात्वं, यथा 'पर्वतो वह्निमा'निति। तृतीयान्तपञ्चम्यन्तान्यतरानुमितिप्रयोजकवाक्यत्वं हेतुत्वं, यथा 'धूमवत्त्वा'दिति। सदृष्टान्तव्याप्तिप्रतिपादकवाक्यत्वमुदाहरणत्वं, यथा 'यो धूमवान् सोऽग्निमान्' 'यथा महानस' इति। व्याप्तिविशिष्टवैशिष्ट्यावगाहिपक्षप्रतिपादकवाक्यत्वमुपनयत्वं, यथा 'तथा चाय'मिति। व्याप्तिविशिष्टवैशिष्ट्यहेतुकसाध्यविशिष्टपक्षप्रतिपादकवाक्यत्वं निगमनत्वं, यथा 'वह्निव्याप्यधूमवत्त्वाद् वह्निमा'निति। उदाहरणं साधर्म्योदाहरणं वैधर्म्योदाहरणं चेति द्विविधम्। हेतुमदुद्देशेन साध्यवदुपादानमाद्यम। साध्याभाववदुद्देशेन हेत्वभाववदुपादानं द्वितीयम्। तत्रैकेनैव गतार्थत्वान्न द्वयोरावश्यकतेति। एवं चावयववाक्यैरवान्तरवाक्यार्थज्ञाने जनिते धूमज्ञानज्ञाप्यवह्निमदभिन्नः पर्वतो, धूमव्यापकवह्निमन्महानससदृशो वह्निव्याप्यधूमवत्त्वहेतुकवह्निमदभिन्न इति महावाक्यार्थज्ञानात्परः साध्यं बुध्यत इत्यक्षपादीयाः॥ प्रतिज्ञाहेतूदाहरणैरेव धूमज्ञानज्ञाप्यवह्निमदभिन्नः पर्वतो वह्निव्याप्यधूमवन्महानससदृश इति वाक्यार्थज्ञानादनुमितिजननादुपनयनिगमने व्यर्थे। न च पर्वते धूमवैशिष्ट्यज्ञानार्थमुपनयः। प्रतिज्ञाहेतुभ्यामेव सिद्धेः। निगमनप्रयोगस्तु सर्वथैव व्यर्थः। एवं चोपनयनिगमने नावयवाविति॥ यद्वोदाहरणप्रभृतिभिरेव साध्यसिद्धेः प्रतिज्ञाहेत्वोर्न किंचित्प्रयोजनमिति दिक्॥

अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानप्रकारो हेतुनिष्ठदोषो हेत्वाभासः। भवति चासिद्धत्वानैकान्तिकत्वबाधकत्वादिज्ञानाभावः प्रतिबन्धकाभावविधयाऽनुमितिकारणीभूतस्तत्प्रतियोगिप्रमाप्रकारत्वमसिद्धत्वादीनां, तेन हेतुनिष्ठो दोषो हेत्वाभासः। यादृशविशिष्टविषयत्वेन यथार्थज्ञानस्यानुमितिप्रतिबन्धकत्वं तत्त्वमिति यावत्। यद्वा तादृशप्रमाविषयत्वम्। तेन दुष्टो हेतुर्हेत्वाभासः। धूमो वह्निव्यभिचारीत्यादिभ्रमवारणाय यथार्थेति। उपाधिवारणाय कारणेति। उपाधिज्ञानस्य साक्षात्प्रतिबन्धकत्वाभावेन तदभावस्यानुमितिप्रयोजकतया हेतुत्वाभावात्। ते त्रयोऽसिद्धानैकान्तिकबाधकाः। तत्रासिद्धिः, स्वरूपासिद्धिः संबन्धासिद्धिर्व्यतिरेकासिद्धिराश्रयासिद्धिर्व्याप्यत्वासिद्धिश्चेति पञ्चधा। हेत्वप्रसिद्धिः स्वरूपासिद्धः। बुद्धो धर्माधर्मवेदी सर्वज्ञत्वादिति। अत्र सर्वज्ञत्वं हेतुरप्रसिद्धः। पक्षे व्याप्यत्वेनाभिमतस्याभावः स्वरूपासिद्धिरित्यक्षपादीयमते त्वीश्वरे प्रसिद्धिसत्त्वे बुद्धे तदभावादक्षतिः। पक्षे व्याप्यत्वाभिमतस्य हेतुतावच्छेदकसम्बन्धेनाभावः संबन्धासिद्धिः। वह्निरदाहकः शीतत्वादिति। पक्षतावच्छेदकहेत्वोरभेदे व्यतिरेकासिद्धिः। गोशब्दः सास्नादिमद्वचनो गोशब्दत्वात्। अयमसाधारणानैकान्तिक इत्यक्षपादीयाः। इदमेव पक्षमात्रवृत्तित्वमसाधारणस्य। अत्र साध्यवत्साध्याभावसाधकतयाऽनुमितिप्रतिबन्धो दूषकताबीजम्। पक्षाप्रसिद्धिराश्रयासिद्धिः। आकाशो नित्यो निरवयवद्रव्यत्वादिति। सौत्रान्तिकमाकाशाभाववादिनं प्रत्याश्रयासिद्धिः। पक्षतावच्छेदकाप्रसिद्धिरपि सा। काञ्चनमयपर्वतो वह्निमानिति। पक्षैकदेशे हेतोरवृत्तित्वं व्याप्यत्वासिद्धिः। यथा वायुराकाशश्चानित्यो मूर्त्तत्वादिति। साध्ये साध्यतावच्छेदकस्य, हेतौ हेतुतावच्छेदकस्याप्रसिद्धिर्व्याप्यत्वासिद्धिः। काञ्चनमयवह्निमान् काञ्चनमयधूमादिति। एवं नीलधूमादित्यादावपि नीलधूमत्वस्य गुरुतया हेतुतानवच्छेदकत्वेन सापि व्याप्यत्वासिद्धिरित्यक्षपादीयाः। साध्यसंदेहजनको हेतुरनैकान्तिकः। संदेहजनकत्वं च साध्यतदभावसंबन्धित्वज्ञानेन सत्प्रतिपक्षितत्वेन च। यथा नित्यः शब्दोऽमूर्त्तत्वादिति। अत्रामूर्त्तत्वमनित्यक्रियादिसाधारणत्वात् साध्यसंदेहं जनयति। एवं वायुरप्रत्यक्षोऽरूपिद्रव्यत्वात्। वायुः प्रत्यक्षो महत्त्वे सत्युद्भूतस्पर्शवत्त्वात्। अत्रोभयोः समबलत्वात्साध्यसंदेहजनकतेति। अत्र साध्यतदभावव्याप्यताज्ञानात्परस्परानुमितिप्रतिबन्धो न संशयाकारानुमितिरित्यक्षपादीयाः। अत्राहुः। स्थाणुत्वपुरुषत्वव्याप्यवत्ताज्ञाने प्रत्यक्षरूपसंशयवत्सत्प्रतिपक्षस्थलेऽपि संशयाकारानुमितिरस्तु। यत्रैक-

कोटिव्याप्यदर्शने प्रबलं तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धाच्चसंशयः । फलबलेन चाधिकसमबलभावः कल्प्य इति ॥ अत्र नव्याः । तदभाववत्ताज्ञानस्येव तदभावव्याप्यवत्ताज्ञानस्यापि लौकिकसन्निकर्षाजन्यज्ञानत्वमेव प्रतिबध्यतावच्छेदकं तेन न संशयाकारानुमितिरित्याहुः ॥ बाधकस्तु साध्याभावसाधकः । अयं विरुद्ध इत्यक्षपादीयाः । यथा शब्दो नित्यः कृतकत्वादिति । अत्र कृतकत्वमनित्यत्वव्याप्य नित्यत्वं बाधते । अयं साध्यसामान्यविपर्ययसाधक इत्युच्यते इति दिक् ॥

तदिदमनुमानं न धर्मप्रमितिजनकं व्याप्त्यभावेन व्याप्त्यग्रहादिति ॥

अत्र नैयायिकाः । एवमनुमाननिरूपणस्य जगन्निर्मातृपुरुषधौरेयसिद्धिः प्रयोजनम् । तथाहि । सिद्धसाधनभिया जन्यकृत्यजन्यं द्व्यणुकं पक्षीकृत्य सकर्तृकं कार्यत्वादित्यनुमानेन तत्सिद्धिरित्याहुः । तदापातरमणीयम् । धर्मवद्वेदमात्रगम्यत्वेन तदावेदकानुमानासंभवात् । तथाहि । उक्तानुमानस्याकर्तृकत्वसाधकेन शरीराजन्यत्वेन सत्प्रतिपक्षितत्वात् । यदि चात्र शरीरविशेषणस्य स्वरूपासिद्धिवारकतया व्यर्थविशेषणत्वेन नित्यत्वोपाधिकतया व्यभिचारित्वेन सत्प्रतिपक्षासंभव इति विभाव्यते, तदा भवत्पक्षमेव पक्षीकृत्य शरीरमात्रकर्तृकत्वाभाववद्वस्तुत्वादिति सत्प्रतिपक्षः । न चात्रापि नित्यत्वमुपाधिः । देहाङ्कुरादावेवाशरीरमात्रकर्तृकत्वसंदेहेन घटादौ तदभावस्यासंदिग्धतया साध्यव्यापकत्वाभावात् । कार्यत्वहेतोश्चाशरीरमात्रकर्तृकत्वाभावसाधकतया साधारणानैकान्तिकत्वं च बोध्यम् । अतो वेद एवेश्वरसिद्धौ प्रमाणं नान्यदिति दिक् ॥

इति श्रीगागाभट्टकृतभाट्टचिन्तामणौ ईश्वरवादः ॥

नन्वेवं वह्निर्दाहानुकूलातीन्द्रियधर्मसमवायी, दाहजनकत्वाद्, आत्मवदित्यनुमानस्यानुकूलतर्काभावेनाप्रयोजकत्वादुत्तेजकाभावविशिष्टमण्यादिप्रतिबन्धकाभावस्यैव दाहजनकतया मण्यादिसमवधानदशायामपि शक्तिकल्पनस्यानुपपत्तेस्तद्बोधकवेदाभावाच्च शक्तिरपि न सिध्येदिति चेन्न । तृणारणिमणीनां व्यभिचारेण वह्नित्वावच्छिन्नजनकत्वग्रहानुपपत्त्या कार्यनिष्ठवैजात्यकल्पनापूर्वकहेतुहेतुमद्भावत्रयकल्पनमपेक्ष्य तृणादिनिष्ठजनकत्वावच्छेदकसहजशक्त्यङ्गीकारेणैकहेतुहेतुमद्भावकल्पनालाघवतर्कसहकृततृणादिपक्षकवह्निजनकत्वहेतुकतादृशधर्मानुमानस्य तत्र मानत्वात् । एवं वैकल्पिकव्रीहियवयोरपि हेतुताग्रहे लाघवं, व्यभिचारवारणं च । न च प्रदेयप्रकृतित्वेनोभयोर्हेतुत्वाज्जनकतावच्छेदकशक्त्यभावेपि न व्यभिचार इति वाच्यम् । व्रीहिनिष्ठकारणताग्रहे प्रदेयप्रकृतित्वग्रहस्तद्ग्रहे च तद्ग्रह इत्यन्योन्याश्रयात् । नाप्याग्नेयत्वव्याप्यवैजात्यस्य कार्यतावच्छेदकत्वकल्पनेन व्यभिचारपरिहारः । तादृशजातौ मानाभावात् । व्रीहिजन्यतावच्छेदकतयैव तत्कल्पने विकल्पो दत्तजलाञ्जलिः स्यात् । शक्तेश्च प्रत्येकं पर्याप्ततया न समुच्चयापत्तिः । अन्यथा ऽन्यतराभावविशिष्टान्यतरस्योभयाभावविशिष्टव्रीह्यादेर्वा हेतुत्वकल्पने गौरवापत्तिः व्यभिचारश्च । अतो जनकतावच्छेदकतया सहजशक्तिस्तावदावश्यकी । एवमाधेयशक्तिरपि प्रोक्षणादिजन्या व्रीहिनिष्ठा । अन्यथा प्रोक्षणादिजन्यापूर्वस्यात्मनिष्ठतया व्रीहीणां प्रोक्षणकर्मत्वानुपपत्तिः । अदृष्टवदात्मसंयोगेनादृष्टवत्तया कर्मत्वोपपत्तौ घटादीनामपि तत्कर्मत्वापत्तिः । तेन व्रीहिजन्यापूर्वजनिकाधेयशक्तिरप्यावश्यकी । तयोश्चायमेव भेदो यत्सहजशक्तिर्जनकतावच्छेदिका, आधेयशक्तिर्जनिका जन्या चेति । न च प्रोक्षणजन्यशक्तिमद्व्रीहित्वेनापूर्वजनकतया हेतुतावच्छेदकत्वसंभवेति । तादृशशक्तिमद्यवजन्यतदपूर्वे व्यभिचारात् । शक्तिव्रीहित्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण हेतुहेतुमद्भावद्वयकल्पने तथा यवत्वेऽपीति तच्चतुष्ककल्पनेऽतिगौरवापत्तिः । एवं सर्पविषमन्त्रोच्चारणजन्यपरशरीरनिष्ठाधेया शक्तिर्जीवनजनिका विषबाधापहारजनिका वा, प्रतिष्ठादिजन्या च पाषाणनिष्ठा पूजाहेतुश्चाण्डालादिस्पर्शनाश्या ऽप्यावश्यकीति । पदशक्तिस्तूभयसिद्धा । तच्छाब्दबोधजनकपदत्वहेतुकानुमानगम्या, वृद्धैस्तत्र प्रयुज्यमानत्वहेतुकानुमानगम्या वा । परं तु सेश्वरेच्छारूपा ऽतिरिक्ता वेत्यावयोर्विवादः । तत्रेश्वरेच्छावदीश्वरसंयोगस्य गुणरूपपदे ऽसंभवात्तत्तत्स्वरूपाणां सम्बन्धत्वकल्पनमपेक्ष्य समवायस्योचितत्वात् पदानामर्थानामनित्यत्वेपि नानुपपत्तिः । वस्तुतस्तु पदानां नित्यत्वाज्जात्यादिरूपाणामर्थानां च तथात्वाच्छक्तिरपि नित्येति तत्सम्बन्धस्य सुतरां नित्यतेति नानुपपत्तिलेश इति दिक् ॥

इति श्रीगागाभट्टकृतभाट्टचिन्तामणौ शक्तिवादः ॥

नन्वेवं कारणता ऽप्यतिरिक्ता स्यात् । न च तावत्कार्याभावव्यापकाभावप्रतियोगित्वम् । ईश्वरतज्ज्ञानेच्छादावव्याप्तेः । अत एव न कार्यव्यापकत्वम् । व्याप्तेरनन्तपदार्थगर्भतया गौरवात् । नापि कार्योत्पत्तिप्रतिबन्धकाभावप्रतियोगित्वम् । उत्तेजके ऽव्याप्तेरिति चेन्न । तस्यानन्यथासिद्धनियतपूर्ववर्त्तित्वरूपतया तदभिव्यञ्जकधर्मान्तरकल्पने मानाभावात् । अत्र दैवादागते हेतुत्ववारणाय नियतेति । तद्घटे तद्रासभस्य हेतुत्ववारणायानन्यथासिद्धेति ॥ वस्तुतस्तु नियतपदं व्यर्थम् । तच्चानन्यथासिद्धत्वमविध्यराहित्यम् । गृहीतस्वतन्त्रान्वयव्यतिरेकाननुविधानावच्छेदकधर्मत्वमादिमम् । अन्यनिरूपितपूर्ववर्त्ति-

त्वग्रहहेतुककार्यपूर्ववर्त्तित्वग्रहविषयत्वं द्वितीयम् । क्लृप्तान्वयव्यतिरेकानुविधानसाहित्य तृतीयम् । अत्राक्लृप्तान्वयव्यतिरेकानुविधायिन इति विवक्षणीयम् । तेन न कारणान्तरस्यान्यथासिद्धिः । ईश्वरज्ञानादिसंग्रहश्च । तस्योपादानप्रत्यक्षतया स्वतन्त्रान्वयव्यतिरेकानुविधानात् । तच्च कारणं द्विविधं, स्वरूपयोग्यं फलोपहितं चेति । सहकार्यन्तराभावावच्छिन्नजनकत्वाभाववैशिष्ट्यमाद्यम् । सहकार्यन्तरसाहित्यं द्वितीयम् । अत एव नित्यस्य स्वरूपयोग्यस्य फलावश्यंभावनियम इति प्रसिद्धिः । एवं च क्लृप्तकार्यपूर्वकालदेशसंबन्धस्यैव कारणतया नाक्लृप्तकारणत्वरूपपदार्थान्तरतत्प्रागभावध्वंसादिकल्पनम् । प्रयोजकत्वं चान्वयव्यतिरेकवत्त्वे सति नियतपूर्ववृत्तित्वमात्रमिति दिक् ॥

प्रसङ्गात्सृष्टिप्रलयौ चिन्त्येते ।

अत्र नैयायिकवैशेषिकौ । त्रिविधं वस्तुजातं, संप्रतिपन्नचेतनकर्तृकं यथाघटादि, संप्रतिपन्नचेतनाकर्तृकं व्योमादि, विप्रतिपन्नचेतनकर्तृकं महीरुहाङ्कुरादि । तत्र तृतीयं सावयवत्वेन सिद्धकार्यत्वकं पक्षीकृत्य बुद्धिमत्कर्तृकं कार्यत्वात्पटवदिति ईश्वरं कर्त्तारमनुमापयति । तस्य च परमाणवः समवायिकारणं, तत्संयोगश्चासमवायिकारणं, क्षेत्रज्ञपदवाच्या जीवात्मानो धर्माधर्मौ च निमित्तकारणम् । सर्गकाले पुनरीश्वरेच्छामदृष्टं च निमित्तमासाद्य परमाणुषु कर्माण्युत्पद्यन्ते । ततो मिथः संयुक्तैः परमाणुभिर्द्व्यणुकादिक्रमेण पृथिव्याद्यवयविचतुष्टयमारभ्यते । न च परमाणूनां निरवयवत्वादव्याप्यवृत्तिः परमाणुसंयोगो न संभवतीति वाच्यम् । तत्र व्याप्यवृत्तिसंयोगस्याङ्गीकारात् । तत्तद्देशस्यावच्छेदकत्वसंभवेनाव्याप्तिसंयोगस्यापि परमाणौ नानुपपत्तिः । निमित्तभूतादृष्टवैचित्र्यादीश्वरेच्छाजन्यक्रियावैचित्र्यवशाच्च जरायुजाण्डजोद्भिज्जस्वेदजभेदं शरीरमारभन्ते, इत्यूचतुः ॥

इदमेव युक्तमस्मन्मतं च । परं त्वेतावान् विशेषः । इच्छायाः कार्यमात्रजनकत्वे न किं चिन्मानमस्ति । न चात्मनिष्ठप्रयत्नोत्पादनं विनेच्छायाः कार्यजनकत्वम् । अचेतननिष्ठक्रियादिजनकत्वं च नानुभूतपूर्वम् । अतस्तादृशहेतुहेतुमद्भावकल्पनेनात्यन्तगौरवापत्तिः । आवश्यकादृष्टहेतुकतयाऽन्यथासिद्धिश्च । अतो धर्माधर्मयोरेव विजातीयक्रियाजनकत्वं, नेश्वरेच्छाप्रयत्नादीनामिति । तेनेश्वरेच्छायां तस्याः कार्यजनकत्वे च "स ऐक्षत बहु स्यां प्रजायेये"ति श्रुतिरेव मानम् । तत्र चा"त्मन आकाशः संभूत" इत्यादाविवेक्षतिरदृष्टं लाक्षणिक इत्यलं पल्लवितेन ॥

ननु प्रलये किं मानमिति चेत् । न । कालकपालान्यावृत्तिप्रागभावः, कार्यद्रव्यानाधारकार्याधिकरणवृत्तिः, अभावत्वाद्, आत्मावृत्त्यन्योन्याभाववद्, इत्यनुमानेन' घटः, कार्यद्रव्यानधिकरणकार्याधिकरणवृत्तिध्वंसप्रतियोगी,भावकार्यत्वात्, शब्दवद्, इत्यनुमानेन खण्डप्रलयस्य' पटः, अदृष्टासमानकालीनध्वंसप्रतियोगी, भावकार्यत्वाद्,मुक्त्यव्यवहितप्राक्कालीनज्ञानवद्' बुद्धिः, प्रागभावासमानकालीनध्वंसप्रतियोगिनी, भावकार्यत्वाद्, मुक्त्यव्यवहितप्राक्कालीनादृष्टवत्' सुखं, गन्धानाधारसमयवृत्तिध्वंसप्रतियोगि, जन्यगुणत्वात्, संस्काराजनकानुभववद्, आकाशवदिति व्यतिरेकिणा' एककालीनाः सर्वे परमाणवः, समयोपादेयप्रबन्धशून्याः, आरम्भकत्वाद्, नष्टपवनारम्भकपरमाणुवद्' दुःखसंततिरत्यन्तमुच्छिद्यते, सततित्वात्, प्रदीपसंततिवद्, इत्याचार्योपदर्शितानुमानेन च महाप्रलयस्य च सिद्धेः । एवं च नन्दान्तं क्षत्रियकुलमित्यादिपौराणव्यवहारोपपत्तिरित्याहुः ॥

अत्र जैमिनीयाः । उक्तानुमानेन "धाता यथापूर्वमकल्पय"दित्यादिमन्त्रलिङ्गेनावान्तरप्रलयसिद्धावपि महाप्रलये नास्ति प्रमाणम् । उक्तानुमानानामुपाधिग्रस्तत्वात् । तथाहि । अमूर्त्तमात्रवृत्त्यभावत्वस्योपाधित्वात् । उक्तः पक्षः, कार्यद्रव्याधाराधारः, मूर्त्तमात्रवृत्त्यभावत्वात्, तन्तुनिष्ठपटप्रागभाववदिति सत्प्रतिपक्षाच्च । एवं द्वितीयतृतीययोरमूर्त्तमात्रवृत्त्यभावत्वमुपाधिः । एवं महाप्रलयानुमाने, उक्ताः परमाणवः, समयोपादेयप्रबन्धवन्तः, प्रागभाववत्त्वात्, कपालवदिति सत्प्रतिपक्षः । आचार्यानुमानं तु "धाता यथापूर्वमकल्पय"दिति श्रुतिविरोधात्,

"अचन्द्रार्कग्रहा भूमिः कदा चित्तु भविष्यति ।
अपौरवा तु पृथिवी कदापि न भविष्यति" ॥

इति हरिवंशरूपव्यासस्मृतिविरुद्धत्वाद्, यावत्तैलं तावद्व्याख्यानमिति दृष्टान्तप्रसिद्धतैलाभावादिरूपोपाधिविस्मरणाच्चानाचार्यानुमानमेव । अन्यथा नरशिरःकपालं, शुचि, प्राण्यङ्गत्वात्, शङ्खवदित्यनुमानस्यापि प्रामाण्यापत्तेः । एवमन्येष्वप्यनुमानेषु दूषणान्यूह्यानीति दिक् ॥

वेदान्तिनस्तु "सर्वं खल्विदं ब्रह्म, नेहनानास्ति किं चने" त्यद्वैतवादश्रुतिभि"रात्मको जगदादावासी, तस्माद्वा एतस्मादात्मन आकाशः संभूत" इत्यादिब्रह्मोपादानत्वावेदकश्रुते"रिन्द्रो मायाभिः पुरुरूप ईयत" इति भेदावगमस्य मायारूपाविद्यानिबन्धनत्वश्रुतेश्च सैव व्योमादिरूपेण परिणतमिति चिदेकरसस्य च ब्रह्मणो जडरूपेण परिणामो ऽनेकत्वं च न वास्तवं, किं त्वविद्योपाधिकं, स्वप्नप्रपञ्चवत्प्रत्यक्षाविरोधिश्रुति-

जन्यं ज्ञानं चन्द्रतारकापरिमाणबोधकवाक्यवत् प्रत्यक्षबाधेनोपपन्नम् । एवं च "लोकास्तं परादुरन्यत्रात्मनो लोकान् पश्यति, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती"त्यादयो भेदज्ञाननिन्दार्थवादा उपपद्यन्ते । तेन प्रपञ्चो ऽविद्योपाधिको ऽपारमार्थिकः । अत एव सदसद्विलक्षण इत्याहुः ॥

तत्र किमिदमपारमार्थिकत्वं, मिथ्यात्वमिति चेत्, किमिदं मिथ्यात्वम् । न तावच्छशशृङ्गादिवदत्यन्तासत्त्व तत् । अबाधितप्रत्यक्षादिविषयप्रपञ्चे तदभावात् । नापि ज्ञानबाध्यत्वमज्ञानजन्यत्वं वा । घटादेर्ज्ञानबाध्यत्वाभावाद् अज्ञानस्य जनकत्वे ऽबाधितमानाभावेनाज्ञानजन्यत्वासंभवाच्च । न त्वागमेन तद्बाधः । मिथ्याभूतप्रपञ्चान्तर्गतागमेन प्रत्यक्षदृष्टप्रपञ्चे मिथ्यात्वबोधासंभवात् । अन्यथा वेदबोध्ययागस्वर्गसाध्यसाधनभावज्ञाने मिथ्यात्वबोधप्रसङ्गात् । इष्टापत्तौ स्वर्गसाध्यसाधनभावज्ञानेन ब्रह्मज्ञाने मिथ्यात्वबोधापत्तिः । आगमजन्यत्वाविशेषात् । नाप्यनिर्वाच्यत्व तत् । अनिर्वाच्यपदार्थस्य लोके ऽसंभवात् । प्रपञ्चस्यापि निर्वचनीयत्वेनानिर्वचनीयत्वाभावाच्च । किं चैवं श्रुतिबोध्यप्रपञ्चमिथ्यात्वेपि मिथ्यात्वप्रसङ्गः । तदङ्गीकारे सिद्धं प्रपञ्चस्यामिथ्यात्वमिति दिक् ॥

इदमत्र वेदान्तिनामाकूतम् । चैत्रस्य शुक्त्यज्ञानमित्यादौ चैत्रनिष्ठशुक्तिज्ञानस्याभाव इति न बोधः, प्रतियोग्यप्रसिद्धेः, किं तु चैत्रनिष्ठं शुक्त्यज्ञानमिति तदर्थः । तेनाज्ञान भावरूपः पदार्थः । तस्य च शुक्तिरजते हेतुत्वं लाघवाद् न तु तज्ज्ञाने, गौरवात् । किं च तत्र रजतं पश्यामीति लौकिकसाक्षात्कारो ऽनुभवसिद्धः । तत्र लौकिकसंनिकर्षस्य विषयस्य च हेतुतेति तत्र रजतोत्पत्तिरावश्यकी । एतेन तत्र रजतत्वमेव विषयः, ज्ञानलक्षणा चालौकिकसंनिकर्ष इत्यपास्तम् । अज्ञानं च जीवानां न ब्रह्मणः । एवं चाधिष्ठानाज्ञानस्य शुक्तिरजतादौ हेतुत्वदर्शनात्प्रपञ्चब्रह्माज्ञानस्य जीवसंबन्धिनः प्रपञ्चहेतुत्वमिति ॥ इदमेव मिथ्यात्वं सदसद्विलक्षणत्वं चेति पूर्वमतोपपत्तिरिति, नेदमपि युक्तम् । अधिष्ठानज्ञानेपि शङ्खपीतिमोत्पत्तेरधिष्ठानाज्ञानस्योत्पादकत्वायोगात् । न च तत्र दोषस्य हेतुत्वेन दोषाजन्यरजताद्युत्पत्तावधिष्ठानाज्ञानस्य हेतुत्वमिति वाच्यम् । तर्हि परमाण्वाद्युपादानाजन्यस्वाप्नादिप्रपञ्च एवाधिष्ठानाज्ञानस्य हेतुत्वमस्तु, न प्रपञ्चमात्रे । किं च चन्द्रतारकापरिमाणशङ्खपीतिमादीनामधिष्ठानज्ञाने सत्यपि कथमुत्पत्तिः । भवतां विशेषदर्शने सत्यपि भ्रान्तेरिव दोषवशादिति चेत् । तर्ह्यविद्यातिरिक्तस्यापि प्रपञ्चहेतुत्वापत्त्या गतमज्ञानकारणत्वनियमेन ॥ यत्तु रजतं पश्यामीति लौकिकसाक्षात्कारे विषयस्य लौकिकसन्निकर्षस्य च हेतुत्वसिद्धये रजतोत्पत्त्यङ्गीकार इति, तदपि पुरोवर्त्यंशे लौकिकत्वेन रजतत्वांशे ऽलौकिकत्वेन दोषजन्यत्वाङ्गीकारेण परास्तम् । यत्तु रजतज्ञानत्वस्य कार्यतावच्छेदकत्वमपेक्ष्य रजतत्वस्यैव कार्यतावच्छेदकत्व लाघवमिति, तदपि अज्ञानस्य कारणत्वकल्पनमपेक्ष्य लघुभूतमेव । न चैवमधिष्ठानज्ञानेपि भ्रमापत्तिः । लौकिकतदभावसाक्षात्कारस्य तद्वत्ताज्ञानं प्रति प्रतिबन्धकत्वात् । "मायां तु प्रकृतिं विद्या"दित्यादिश्रुतेरपि स्वाप्नसृष्टिविषयत्वेन मायापदस्य दोषपरत्वेन वा व्याख्यानादिति संक्षेपः ॥

केचित्तु परमात्मैव स्वेच्छया परमार्थत एव व्योमादि जनयति । "सदेव सोम्येदमग्र आसीत्, तदैक्षत, बहु स्यां प्रजायेय"इति, तस्माद्वा एतस्मादात्मन आकाशः संभूत इति, "पुरुष एवेदं नेह नानास्ति किं चने"त्यादिश्रुतयोमुमेवार्थं प्रकटयन्ति । अत्र ह्याद्यश्रुतिद्वयेनात्मनस्तद्रूपत्वेन प्रागवस्थितस्य बीजस्येव हेतुत्व व्योमादीनां च वृक्षस्येव तत्कार्यत्वमुक्तम् । अपरश्रुतिद्वयेन धर्मिभेदाभाव उक्तः । नानाशाखस्य वृक्षस्यानेकत्वेन ज्ञातस्यैकत्वबोधवत् ॥ यानि तु "आत्मैवैकः सत्य, इन्द्रो मायाभिः पुरुरूप ईयत" इत्यादिनिष्प्रपञ्चस्य मिथ्यात्ववादासत्यत्ववादभ्रान्तिवादमायावादबोधकानि, तान्यस्यानित्यत्वमेव प्रतिपादयन्ति । अपशवो वा अन्ये गो अश्वेभ्य इतिवत् । एतेषामपि मुमुक्षूणामुत्साहजननार्थतया वैराग्यजननार्थतया च प्रपञ्चासत्यत्वात्मपरमार्थसत्त्वप्रतिपादकतयार्थवादत्वस्य तुल्यत्वात् । विस्पष्टं चैत 'द्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं तथेद"मितिश्रुतौ । मृत्पिण्डभावेन सकलतद्विकारशरावघटादिज्ञानमिवात्मज्ञानेन तज्जन्यसकलप्रपञ्चज्ञानमित्यर्थः । यद्यपि व्योमरूपेण न ज्ञानं तथापि समासरूपेणोत्युपपत्तिः । तच्च प्रपञ्चस्य सत्यत्वे उपपद्यते । नहि सद्रूपज्ञानेनासत्यस्य ज्ञानं, शशविषाणादिज्ञानप्रसङ्गात् । अतः सत्यत्वमेव प्रपञ्चस्य युक्तमित्याहुः ॥

निरीश्वरसांख्यास्तु प्रकृतिरचेतना सत्त्वरजस्तमोगुणात्मिका प्रधानशब्दवाच्या चेतनात्मनामुपभोगाय महदादिविशेषप्रपञ्चरूपेण परिणमतीत्याहुः ॥

सेश्वरसांख्यास्तु प्रकृतिरेवाविद्यास्मितारागद्वेषाभिनिवेशक्लेशकर्मविपाकाशयैरपरामृष्टं सर्वव्यापिनं पुरुषशब्दवाच्यमीश्वरमधिष्ठाय महदहंकारपञ्चतन्मात्रादिक्रमेण जगत्सृजति । बीजमेव संस्कृतं क्षेत्रमधिष्ठायाङ्कुरादिक्रमेण वृक्षादि । तस्मात्प्रकृत्युपादाना सृष्टिरीश्वरभिन्नक्षेत्रज्ञपदवाच्यजीवभोग्या । प्रकृतेरैक्येपि भोक्तॄणां भेदात्प्रपञ्चवैचित्र्योपपत्तिः । औपनिषदास्त्वैकात्म्यवादाः सादृश्यपरत्वेन व्याख्येयाः । एवं नानात्वनिषेधाश्च । एतदभिप्रायेणैव

"विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" ॥

इति । "इन्द्रो मायाभिः पुरुरूप ईयते" इति च । मुक्तात्मनामीश्वरेण सहैकत्ववादास्तेप्यत्यन्तसाम्येन वैलक्षण्याभावेन वोपपादनीयाः ॥

"यदा पश्यः पश्यति रुक्मवर्णं
कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति"

इति श्रुत्या परमसाम्योक्तेः ।

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
स्वर्गेपि नोपजायन्ते प्रलये न व्यथन्ति च"

इति भगवद्वाक्येनापि साम्योक्तेः । न च

"ममैवांशो जीवलोके जीवभूतः सनातनः"

इति भगवद्वचनस्य,

"भेदस्य जनके ज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति"

इति पुराणवचनस्य चानुपपत्तिः । तयोः स्वामिभृत्यभावबोधकत्वेनोपपत्तेः । एवं च

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः"
"उपद्रष्टा ऽनुमन्ता च कर्त्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेस्मिन्पुरुषः परः"

इति भेददर्शनमुपपद्यते । तस्मात्प्रकृत्युपादानोयं प्रपञ्च इत्याहुः ॥

तदपि न । प्रकृतेरेकरूपतया हेतुवैलक्षण्याभावेन नरपश्वादिरूपकार्यवैलक्षण्यानुपपत्तेः । क्षेत्रज्ञादृष्टवशाद्वैलक्षण्यमित्यप्यदृष्टस्य कार्यवर्गान्तःपातितया प्रकृतौ विलीनत्वेनाकारणत्वादुक्तमशक्यम् । कुतो वा प्रकृत्या महदादिविकारारम्भः । ईश्वरेच्छयेति चेत्,तस्यापास्तसमस्तकामस्येच्छाभावात् । किं च प्रलये प्रकृतिमात्रस्यात्मनां च निर्विशेषाणामवस्थितत्वाद्धर्माधर्मयोश्चान्तःकरणधर्मतया तदानीमभावात् पूर्वजन्मनि कृताश्वमेधानां कृतमहापातकानां च विशेषो न स्यात् । न चासतः शशविषाणादेरुत्पत्तिनाशयोरदर्शनान्नियतोत्पत्तिदर्शनाच्चोत्पत्तिनाशयोराविर्भावतिरोभावरूपतया शक्त्यात्मनावस्थितधर्माधर्मवशेन वैचित्र्योपपत्तिरिति वाच्यम् । मृत्पिण्डकपालावस्थयोर्घटसत्त्वस्यानुपलब्धिबाधितत्वात् । "नासतो विद्यते भाव" इति तु "न त्वेवाहं जातु नास" मिति नित्यत्वप्रतिपादनोपक्रमादात्ममात्रस्यानुत्पत्तिविनाशधर्मत्वप्रतिपादकं, न सर्वस्य कार्यजातस्य । अस्तु वा कारणात्मना ऽवस्थानं तथा मृदात्मना ऽवस्थितघटादिनोदकाहरणासंभववत्प्रकृत्यात्मना ऽवतस्थिधर्माधर्माभ्यामपि न वैचित्र्यमभवः । यदि तु सृष्टिप्रलयपरम्परया ऽनादित्व शब्दानामनाद्यर्थसंबद्धानां वेदानां नित्यतां चाश्रित्य

"सर्वेषां चैव नामानि कर्माणि च पृथक्पृथक् ।
वेदशब्देभ्य एवादौ पृथगर्थांश्च निर्ममे"

इतिवचनानुरोधादेककर्तृका तुल्यनामव्यवहारकवस्तूत्पत्तिरङ्गीक्रियते ।

"अष्टाशीतिसहस्राणि संप्रदायप्रवर्त्तकाः"

इतिवचनानुरोधेन वा ऽनेककर्तृका तादृशसृष्टिरङ्गीक्रियते । तत्रापि प्रकृतेरुपादानत्वासंभवाद् अनुपादाननिर्माणासंभवात्सापादानत्वसिद्धिरिति संक्षेपः ॥

इति श्रीगागाभट्टकृतभाट्टचिन्तामणौ सृष्टिप्रलयविचारः ॥

ननु सर्वमिदं शरीरेन्द्रियमनतिरिक्तजीवात्मसद्भावे स्यात्तत्रैव मानं न पश्यामः । न चाहं जानामीति प्रत्यक्ष तत्र मानं, तस्याहं गौर इत्यादिवच्छरीरादिविषयकत्वेनाप्युपपत्तेरिति चेत् । अत्र जीर्णाः । शरीरान्तर्गतवायोरूर्ध्वाधोगमनानुकूलप्रयत्नाश्रयतया सुखाद्याश्रयतया वा तत्सिद्धिः । तेषामयावच्छरीरभावित्वेन तद्धर्मत्वासंभवात् । कार्यद्रव्यवृत्तिविशेषगुणानां पाकादिना विरोधिगुणान्तरोत्पत्त्या द्रव्यनाशेन वा नाश्यत्वमिति नियमः । उक्तयत्नस्य सुखादीनां च मृतावस्थायामुक्तनाशकत्रयाभावेन नाशानुपपत्तेर्न शरीरगुणत्वं संभवति । एवं ज्ञ नेच्छादीनामप्ययावच्छरीरभावित्वेन न शरीरगुणत्वम् । किं च वर्यावविशेषगुणानामवयवगुणपूर्वकत्वनियमेन ज्ञानादीनां शरीरावयवगुणत्वाभावेन न तदुत्पत्तिसंभवः । अतः सुखादिगुणतया शरीरादिभिन्नात्मसिद्धिः । न च तेषामिन्द्रियगुणत्वम् । इन्द्रियनाशेन संस्कारनाशे स्मरणानुपपत्तेः । नापि मनोगुणत्वं, तस्याणुतया तद्गुणप्रत्यक्षानुपपत्त्या ज्ञानादीनामप्रत्यक्षत्वप्रसङ्गात् । मनसो विभुत्वनये तु तद्गुणत्वे ज्ञानादीनां करणाभावात्प्रत्यक्षानुपपत्तिस्तुल्या । तस्मात्तदाश्रयतया ऽऽत्मसिद्धिः । किं च स्वर्गकामादिश्रुत्यापि देहातिरिक्तात्मसिद्धिः । तथाहि । स्वर्गकामादिश्रुतयः कर्मजन्यफलभोक्तारं शरीरातिरिक्तं कर्त्तारमाक्षिपन्ति । "अविनाशी वाअरे ऽयमात्मे" त्यादय उपनिषदोपि तमेवार्थं द्रढयन्ति । अतो ऽहंप्रत्ययवेद्यः शरीरातिरिक्त आत्मेति । न च तस्याहंप्रत्ययगम्यत्वमनुपपन्नं, ज्ञातृत्वज्ञेयत्वयोर्विरोधात्, एकस्यां क्रियायामेकस्य कर्तृत्वकर्मत्वानुपपत्तेरिति वाच्यम् । स्वात्मनि क्रियाविरोधस्य दूषकताबीजाभावेनादूषकत्वात् । न च परसमवेतक्रियाजन्यफलभागित्वस्य कर्मत्वतया कर्मसंज्ञायास्तद्विभक्ते-

श्चासाधुतापत्तिर्दूषकताबीजमिति वाच्यम् । तादृशकर्मत्वाभावेपि तद्विभक्ते"रात्मा ज्ञातव्य. आत्मानं वेद,आत्मानमुपासीते"त्यादिलौकिकवैदिकप्रयोगेणैव साधुत्वात् । यथा चलतिगच्छत्योरेकार्थत्वेपि सकर्मत्वाकर्मत्वे एवं ज्ञातुर्ज्ञानजन्यप्राकट्यरूपफलवत्तया ज्ञानकर्मत्वे बाधकाभावात् । "स मानसीन आत्मा जनाना"मित्यादिश्रुतिवशाच्च मानसाहंप्रत्ययवेद्य आत्मा सिद्ध इत्याहुः ॥

वेदान्तिनस्तु सुखेच्छादीनां मनोगुणत्वस्य श्रुतिसिद्धतया निर्गुणज्ञानस्वरूप एवात्मा, तस्य च निष्प्रकारकमेवौपनिषज्ज्ञानप्रत्यक्षं मोक्षसाधनमित्याहुः ॥

कः पुनर्मोक्षः ।

अत्र के चित् । संस्काराजनकानुभवध्वंसो मुक्तिः ।

के चित्तु दुःखप्रागभावासहवृत्तिदुःखसाधनध्वंसो मुक्तिः ।

दुःखमयसंसारबीजमिथ्याज्ञानध्वंसो मुक्तिरित्यपरे ।

शरीरेन्द्रियबुद्ध्यादितन्निदानधर्माधर्मध्वस इत्यन्ये ।

आत्यन्तिकदुःखप्रागभावो मोक्ष इति गुरवः ।

संस्काराजनकभोगविषयदुःखध्वंस इति के चित् ।

समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसोमुक्तिरिति मणिकृत् ।

प्रपञ्चसंबन्धविलयो मुक्तिरिति वेदान्तिनः । प्रपञ्चसंबन्धो बन्धः । तस्यात्यन्तिको विलयो मोक्षः । तथाहि । भोगायतनभोगसाधनभोगविषयाणां शरीरेंद्रियाणां संबन्धादात्मा बद्ध इत्युच्यते । एतत्कारणधर्माधर्मपरिक्षयादेतेषामात्यन्तिको विलयः पूर्वनाशपरानुत्पादस्वरूपः । न चैवमपुरुषार्थत्वापत्तिः । सुखवद्दुःखानुत्पादस्यापि पुरुषार्थत्वात् । तत्संबन्धविलयपूर्वकनित्यानन्दरूपात्माभिव्यक्तेर्मुक्तित्वाङ्गीकाराद्वा । तस्य सुखस्य नित्यतया धर्मजन्यत्वाभावात् । आत्मनश्च सुखात्मकत्वे मुक्तावस्थायां तन्नित्यत्वे चा"नन्दं ब्रह्मणो रूपं, न स पुनरावर्त्तत"इत्यादिश्रुतयो मानम् । यत्त्व"शरीरं वावसन्तं प्रियाप्रिये न स्पृशत"इति मुक्तस्य सुखाभाववत्त्ववचनं, तत्प्रपञ्चसुखाभिप्रायम् । ननु मनःशरीराद्यभावात्कथं तत्रानन्दानुभवः । न च तस्यानन्दस्य स्वप्रकाशत्वम् । संसारावस्थायां तादृशस्याननुभवात् । न च तदानीमभिभवान्न तादृगनुभव इति वाच्यम् । स्वप्रकाशस्याभिभवासंभवादिति चेत् । तस्यानन्दस्या"त्रायं पुरुषः स्वयंज्योति"रिति श्रुतिसिद्धस्वप्रकाशतया ऽऽत्मरूपानन्दानुभवस्य लोकसिद्धकारणान्तरानपेक्षत्वात् । तदुक्तम् ।

नित्यं यच्चात्मचैतन्यमानन्दश्चेष्यते च यः ।
यच्च नित्यविभुत्वादि तेनात्मा नैव मुच्यते ॥

इति । अतो नित्यसुखाभिव्यक्तिर्मुक्तिरित्याहुः ॥

तन्न । "विज्ञातारं केन विजानीयाद्, यस्य सर्वमात्मैवाभूत्केन कं पश्ये"दिति च मोक्षकाले ज्ञानाभावप्रतिपादकश्रुतिविरुद्धत्वात् । आत्मनश्च न विज्ञानसुखादिरूपत्वम् । "आनन्दं ब्रह्मणो विद्वान्, स एको ब्रह्मण आनन्द" इति श्रुत्या भेदप्रतीतेः । मम न किमपि सुखं,केवलं दुःखमेवेत्यनुभवात् । "ता एताः प्रजा अहरहर्ब्रह्मलोकं यन्ति अहरहरागच्छन्ती"ति सुषुप्तिमुक्त्योः सादृश्यप्रतिपादकश्रुत्या ऽऽनन्दात्मकत्वनिषेधाच्च । सुषुप्त्यवस्थायामानन्दानुभवाभावात् । अतो न नित्यसुखाभिव्यक्तिर्मुक्तिः । तस्मात् प्रपञ्चस्य सर्वथा विलयो मुक्तिः । स च दुःखाभावरूपत्वात् पुरुषार्थः । तेन सुखदुःखोपभोगाभावो मोक्ष इति फलितम् । तथा च श्रुतिः । "प्रियाप्रिये न स्पृशत" इति । न चैवमानन्दश्रुतिविरोधः । "मन आनन्द"मितिश्रुतेर्मनस आनन्दधर्मत्वात्तदानीं "त्वमनस्क" मिति श्रुत्या मनोभावेन "विज्ञातारं केन विजानीया"दिति श्रुत्या च तदानीमानन्दानुभवनिषेधात् । "अलं वा अरे इदं विज्ञाना" इति तु शक्तिमात्रपरम् । किं चानन्दप्रियाभाववचनयोर्विरोधे प्रमाणान्तरोपपत्तिभ्यामानन्दवचसो दुःखाभावपरत्वं परिकल्प्य तत्परिहारः । उभयत्रापि सामान्योपादानात् । अत उक्तरीत्यैव विरोधपरिहार इत्यात्यन्तिकदुःखाभाव एव मोक्ष इति । न चैवं सुखस्यापि नानुपादेयत्वमिति पुमर्थत्वम् । मधुविषभोजनदुःखवत्सुखस्यापि बहुतरदुःखानुबद्धत्वेन हेयत्वात् । न चैवमपि वर्त्तमानदुःखानां स्वभावेन विरोधिगुणान्तरोत्पत्त्या वा नाशादागन्तूनां प्रतियोग्यभावादतीतानामतीतत्वादेव नाशासंभवान्न मोक्षः साध्यः स्यादिति वाच्यम् । दुःखहेतुधर्माधर्मोच्छेदस्य पुंव्यापारसाध्यत्वात् । तथाहि । संचितानां प्रारब्धानां चादृष्टानां भोगात्मज्ञाननैमित्तिकप्रायश्चित्तानुष्ठानेन नाशात्काम्यानुष्ठानजन्यानां तदननुष्ठानेनानुत्पादाद्विहितानुष्ठाननिषिद्धाकरणाभ्यां प्रत्यवायापरिहाराच्च । सुखदुःखजनकधर्माधर्मनाशात्पूर्वशरीरनाशे मुक्तो भवति । अत एव ज्ञानकर्मणोः समुच्चयेन जनकता । ज्ञानेन संचितानामुत्पन्नधर्माधर्माणां नाशः । नित्यकर्मभिश्च तदनुत्पत्तिः । अन्यथा नित्याकरणजन्यप्रत्यवायेन शरीरोत्पत्तिप्रसङ्गात् । तस्मादुभयोरपि शरीरोत्पत्त्यभावसंपादकतया मोक्षजनकता । प्रारब्धकर्मणां तु न कर्मभिर्न ज्ञानेन नाशः । किं तु भोगेनेति । न च

"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते ऽर्जुन"

इति ज्ञानस्यैव शरीरोत्पत्त्यभावसंपादकतया मोक्षजनकत्वमस्तु, किं कर्मणेति वाच्यम् । ज्ञानवतोपि विहितानुष्ठाननिषिद्धाचरणाभ्यां प्रत्यवायोत्पत्तेः । तेन ज्ञानकर्मणोः समु-

त्त्वयेन जनकत्वम् । तत्राप्युपनिषज्जन्यात्मज्ञानं दृष्टोपयोगित्वात् क्रत्वर्थम् । उपासनात्मकं तु दृष्टोपयोगाभावा"त्सर्वान्कामानवाप्नोति, न मपुनरावर्त्तते"इत्यादिवाक्यशेषाच्चाभ्युदयफलकं निःश्रेयसफलकं चेति विवेकः । अतः सिद्धो ज्ञानकर्मसमुच्चय इति संक्षेपः ॥ तदुक्तम्

"सत्येन लभ्यस्तपसा ह्येष आत्मा
सम्यग्ज्ञानेन ब्रह्मचर्येण चेति" ।
"स्वेस्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥

तमभ्यर्च्य तं ज्ञात्वेत्यर्थः ।

तस्मात्तत्प्राप्तये यत्नः कर्त्तव्यः पण्डितैर्नरैः ।
तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामते ॥
उभाभ्यामिव पक्षाभ्यां यथा खे पक्षिणां गतिः ।
तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम्" ॥

इति ब्रह्मप्राप्तिर्मुक्तिरिति जीर्णाः ॥

नव्यास्तु "तमेव विदित्वा ऽतिमृत्युमेति, नान्यः पन्था विद्यते ऽयनाये"ति श्रुत्या "न कर्मणा न प्रजये"ति श्रुत्या च मोक्षे ज्ञानातिरिक्तसाधननिषेधात् तीर्थस्नानमहादानकाशीमरणादिकर्मणां ज्ञानद्वारैव मोक्षजनकत्वाच्च ज्ञानमेव साक्षान्मोक्षजनकम् । कर्म तु ज्ञानजनकान्तःकरणशुद्धिजनकम् । न च तमेवेत्यात्मातिरिक्तविषयकज्ञानस्य मोक्षजनकत्वपरिसंख्येति वाच्यम् । ज्ञानस्य मोक्षजनकत्वेन नियतप्राप्त्यभावात्परिसंख्यानुपपत्तेः । वाक्यान्तरप्राप्तपरिसंख्यायां तत्तद्वाक्यानां नान्यः पन्थेति निषेधस्य चानुपपत्तिः । एतेनोपनिषज्जन्यज्ञानातिरिक्तभाषान्यादिजन्यज्ञानपरिसंख्येति परास्तम् । अध्ययनविधिनैव तत्सिद्धेः । न चैवमुपनिषदध्ययनजन्यतत्त्वज्ञानस्य त्रैवर्णिकेष्वेव संभवाच्छूद्रादीनां मुक्तिर्न स्यादिति वाच्यम् । तेषामपि "श्रावयेच्चतुरो वर्णानि"ति पुराणश्रवणविधिना तज्जन्यार्थज्ञानसत्त्वान्मुक्तिसिद्धेः । अतो ऽयं ज्ञानस्य मोक्षसाधनत्वविधिः । नान्यः पन्थेति तदतिरिक्तकर्मणः साक्षात्साधनत्वनिषेधः । "न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूया"दितिवत् । एतन्निषेधवशादेव कर्मणां मोक्षसाधनत्वबोधकश्रुतयः परंपरासाधनत्वपराः । अत एव "अविद्यया मृत्युं तीर्त्वा विद्यया ऽमृतमश्नुते"इति श्रुतेरविद्यारूपकर्मणो मृत्युतरणशब्दलक्षिताज्ञाननाशस्यात्मज्ञानद्वारकत्वबोधकश्रुतिरपि संगच्छते । न कर्मणेत्यादिश्रुतिरपि परंपरया मोक्षसाधने संन्याससादृश्यनिषेधनद्वारा संन्यासप्राशस्त्यबोधिका कर्मणां परंपरया साधनत्वं बोधयति । न साक्षात् । एवं "तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेने"ति श्रुतिरपि कर्मणां ज्ञानार्थत्वमेव बोधयति । न साक्षान्मोक्षार्थत्वमिति । न चैवं ज्ञानेन संचितकर्मविनाशेपि शरीरजनकनित्याकरणजन्याधर्मविनाशायोगान्मोक्षो न स्यादिति वाच्यम् । तस्य संचितविनाशकत्ववदधर्मानुत्पादकत्वस्याप्यङ्गीकारात् । उत्पन्ननाशाङ्गीकाराद्वा । न चैवं वेदान्ताध्ययनजन्यतत्त्वज्ञानोत्तरं मुक्तिः स्यादिति वाच्यम् । प्रारब्धस्य प्रतिबन्धकत्वात् । न चैवं संचितानां प्रायश्चित्तेन प्रारब्धानां भोगेन नाशान्नित्यकर्मभिश्चानुत्पादात्तत्त्वज्ञानस्यानुपयोग इति वाच्यम् । सुखभोगयोग्यदेहजनकधर्मविनाशद्वारा तस्य मोक्षोपयोगित्वादिति जीर्णाः ॥

अन्ये तु तत्त्वज्ञानस्य संचितनाशकत्ववत् प्रारब्धनाशकत्वमपि । तत्त्वज्ञानव्यक्तिविशेषस्यैव मोक्षजनकतया तदुत्तरमेव मुक्तिः । जीवन्मुक्तादिव्यवहारस्तु शरीररूपदुःखसत्त्वेन बाधाद्भाक्त इत्याहुः ॥

इति मीमांसकश्रीगागाभट्टकृतभाट्टचिन्तामणावनुमाननिरूपणम् ॥

---

## ॥ अथ बालभारतस्य ॥

॥ चतुर्थः सर्गः ॥

केशान्तर्भूतजीमूतविद्युद्दीप्त्येव पिङ्गरम् ।
जटाजूटं वहन् व्यासः पायादवतरो हरेः ॥ १ ॥
अथो जयद्रथो भेजे भवदनाभयः क्षयम् ।
इत्यूचे कौरवस्तूर्णमर्षः पूर्णवशो गुरुम् ॥ २ ॥
अथ रुक्मरथः स्माह संनाहं नाहमाहवे ।
अद्य त्यजामि यामिन्यामप्यहत्वा तवाहितान् ॥ ३ ॥
एवमुक्तवति द्रोणे रोषशोणेक्षणाः क्षणात् ।
अस्तेऽपि सूरे शूरेन्द्रा युद्धायैव दधाविरे ॥ ४ ॥
निशाचराणां तमसां भियेव दिवसस्तदा ।
रक्षोविपक्षं शिश्राय कायकान्त्या जयिध्वजम् ॥ ५ ॥
हता द्रोणद्रुणा नादैः पलादाः प्रधनोत्सवे ।
किरीटिकेतनकपेर्बूत्कारैर्दूरमत्रसन् ॥ ६ ॥
हनूमतारबूत्कारप्रतिशब्द इवोद्धतः ।
भीमास्यकन्दरान्नादस्तदाभूदरिकम्पनः ॥ ७ ॥
ततो युयुधिरे वीरा रुधिरेण परिप्लुताः ।
निर्नाथे रुचिनाथस्य रुचिपूरैरिवाश्रिताः ॥ ८ ॥
तदोच्छलद्भिर्वीराणां बाणैर्विद्धमिवाम्बरम् ।
तारकच्छद्मना छिद्रपूरितं परितोऽप्यभूत् ॥ ९ ॥

तदाच्छादितभूचक्रतमः समुदयच्छलात् ।
क्रुध्यद्घटेन्द्रक्ष्वेडाभिस्त्रुटित्वेवापतन्नभः ॥ १० ॥
अथ द्रोणशरोत्कृत्तैः शिबिमुख्यनृपाननैः ।
क्व गतोऽर्क इति ज्ञातुमब्जैरिव गतं दिवि ॥ ११ ॥
सामीरिमुष्टिपिष्टाङ्गकलिङ्गक्ष्माभृदङ्गजात् ।
शुभ्राण्यस्थीनि भोक्तव्यपुण्यानीवाभितोऽपतन् ॥१२॥
कालवैतालिककृते व्यञ्जनानीव कुर्वता ।
चक्रे विराटसूदेन कलिङ्गकुलकर्तनम् ॥ १३ ॥
जयरातध्रुवौ वीरौ तेजस्तारौ व्यपातयत् ।
भीमः कुहूनिशारम्भ इवार्करजनीकरौ ॥ १४ ॥
निरन्तरालं पिहिते कर्णे सामीरिसायकैः ।
अतः कौरववाहिन्यां कोऽप्यभूदद्भुतः स्वनः ॥ १५ ॥
हसन् बलिद्विषं भीमस्तदा दुःकर्णदुर्मदौ ।
त्वत्सुतौ सरथौ राजन् पदा हत्वाक्षिपत् क्षितौ ॥१६॥
सोमदत्तसुतं भूरिश्रवसः सोदरं शलम् ।
उपाचकार शैनेयः समरक्रतुदीक्षितः ॥ १७ ॥
परिपेतुः सपत्नेषु रत्नरुद्धाः सहस्रशः ।
द्रौणिबाणास्तमस्विन्यां संध्यादीपा इवाभितः ॥ १८ ॥
वक्त्रज्वालातडिङ्क्रूरो घोरघोषो घटोत्कचः ।
जगद्द्रोहाम्बुद इव द्रौणिं रुद्रमिवाद्रवत् ॥ १९ ॥
व्योमाग्रमापतद्भीमैश्छित्त्वैकं चक्रमाशुगैः ।
द्रौणिस्तच्छौर्यसूर्यस्य बभञ्जोज्ज्वागरां गतिम् ॥ २० ॥
राक्षसाक्षौहिणीं भीमां भैमेर्मायाविमोहिनीम् ।
द्रौणिरद्रावयद्द्रागुस्तमो रौद्रं तमीमिव ॥ २१ ॥
पीतानि वीरतेजांसि मुखज्वालामिषाद्वमन् ।
नदन्नञ्जनपर्वोथ द्रौणिना तत्सुतो हतः ॥ २२ ॥
द्रौणिर्द्रुपदजानष्टौ कुन्तिभोजसुतान् दश ।
निहत्याष्टादशद्वीपदीप्रकीर्तिभरोऽभवत् ॥ २३ ॥
रत्नांशुधौतास्तद्रत्नधृता वीरालिमौलयः ।
तेनुस्तमस्यवस्कन्दं भानुभृत्या इवाम्बरे ॥ २४ ॥
गदानिष्पिष्टबाह्लीकक्षोणिभृन्मस्तकोत्थितैः ।
रत्नैरभाजि भीमस्य प्रतापाग्नौ स्फुलिङ्गता ॥ २५ ॥
प्रमाथी विरजा नागदत्तो दृढरथाह्वयः ।
वीरबाहुरयोबाहुः सुहस्तसुदृढावपि ॥ २६ ॥
ऊर्णनाभः कुण्डशायी दशेति तव सूनवः ।
भीमेन चक्रिरे क्षिप्रं क्षुरप्रैः क्षिप्तमौलयः ॥ २७ ॥
युग्मम् ।
तदा तेषां च्युतं राजन् युगपद्गमनोद्गतैः ।
शिरोभिः स्मारयांचक्रे सुराणां रामविक्रमः ॥ २८ ॥
क्षिप्ताः खे सप्त भीमेन दीप्ताः सौबलमौलयः ।
तत्क्ष्वेडाभ्रष्टसप्तर्षिकमण्डलुनिभा बभुः ॥ २९ ॥
दिव्यास्त्रदीप्तिविक्षस्ततमाः समरडम्बरः ।
द्रोणधर्मजयोर्वीरैर्दृष्टः स्पृष्टः कुतूहलात् ॥ ३० ॥
अथ पाण्डुभुवां काण्डैराकुले सकले बले ।
दीनवाचि नृपेऽवोचन्मुञ्चन्नुच्चैरिषून् वृषः ॥ ३१ ॥
मा भैषीरेष विद्वेषिपेषभारोऽस्ति भूप मे ।
अद्य ते रोचये राज्यं मोचये नरतां नरात् ॥ ३२ ॥
इदं कर्णे वदत्यूचे कृपः किं गोग्रहादिषु ।
न सूतसुत दृष्टोऽसि शक्त्या युध्यस्व गर्ज मा ॥ ३३ ॥
अथ क्रुद्धोऽभ्यधात् कर्णः कृपाचार्यं कृपाणवान् ।
वदस्यदो यदि पुनस्तच्छेद्या रसना पुनः ॥ ३४ ॥
ततः स्फीतोग्रदृग् द्रौणिर्मातुलाक्षेपकोपनः ।
रे रे किं वदसीत्युक्त्वा कौर्णासिः कर्णमाद्रवत् ॥ ३५ ॥
कर्णोऽप्यभ्युद्ययौ सासी दासीकृतयमाविमौ ।
मध्यमेत्य कृपाचार्यनृपाभ्यां शमितौ द्रुतम् ॥ ३६ ॥
कालैरिवाथ निघ्नद्भिः कर्णद्रौणिसुयोधनैः ।
आसन् परेषु मर्तव्यम्रियमाणमृतोक्तयः ॥ ३७ ॥
मौर्वी चार्जुनचापस्य सेना च कुरुभूपतेः ।
प्रबद्धमुष्टिवेगेन कर्णमूलमुपाविशत् ॥ ३८ ॥
रथे मनोरथे वाथ भग्ने फाल्गुनमार्गणैः ।
गन्ता तपस्वितां कर्णः कृपाचार्यमुपाश्रयत् ॥ ३९ ॥
द्रौणिध्वस्तद्रुपदजव्रजास्त्रडिण्डिमभ्रमे निर्भ्ररौद्रमे ।
तमःक्रव्यात्कुलं दूरकृष्टजिह्वमिवेक्ष्यत ॥ ४० ॥
धर्मिस्तु भीमबीभत्सुपारिपार्श्वद्वयान्वितः ।
कौरवेन्द्रबलत्रासनाटकैकनटोऽभवत् ॥ ४१ ॥
मदावलिप्रमालानस्तम्भं संरम्भकुम्भिनः ।
सात्यकिर्मत्तदन्तीव सोमदत्तमपातयत् ॥ ४२ ॥
संहरन्ती प्रजाः पार्थद्रोणदिव्यास्त्रदीपिता ।

सा रात्रिः चुद्ररुद्राग्निः कालरात्रिरिवोदभूत् ॥ ४३ ॥
पत्तद्वयाशुगरदैः पत्रपूगैकचूर्णिनि ।
यमस्यास्ये रणे रक्तं ताम्बलाम्बुतदा बभौ ॥ ४४ ॥
घोरे तमसि वीरेन्द्रा बभुर्दीपैः समीपगैः ।
कर्णोत्थैरन्तराध्मातक्रोधवह्न्यङ्कुरैरिव ॥ ४५ ॥
तमोऽपि विद्धं शूराणां बाणैः शोणितनिर्भरा: ।
दधौ चततनीरुग्रट्टीप्रदीपावलिच्छलात् ॥ ४६ ॥
रणातिरेके वीराणां श्यामाभिर्भल्लिभिस्तत: ।
चणात् तमश्चपेटाभिरिवापात्यन्त दीपकाः ॥ ४७ ॥
दैत्यात्मानं कुरुपतिं देवात्मा धर्मजः स्वयम् ।
निशाबलिष्ठमपि यज्जिगायाभूत् तदद्भुतम् ॥ ४८ ॥
प्रजाः कवलयन् कर्णो ग्रासस्थं नकुलानुजम् ।
कृती मातृवचः स्मृत्वा विप्रं तार्क्ष्य इवामुचत् ॥ ४६ ॥
रथी तटस्थशौर्यश्रीस्पर्शेच्छुः क्रतुजोऽकृत ।
द्रुमत्सेनादिभूपालकपालैः स्थपुटां भुवम् ॥ ५० ॥
आच्छादि द्रोणकर्णाभ्यां चितिः चितिभुजां मुखैः ।
लोकान्तरं व्रजद्भिस्तैर्विमुक्ता वारिजैरिव ॥ ५१ ॥
धृष्टद्युम्नादिवीरेन्द्रविद्रावणभवं यशः ।
कर्णे चन्द्रयति म्लानमाननाब्जैर्विरोधिनाम् ॥ ५२ ॥
भ्रातृस्नेहात् कृतान्तस्य दंष्ट्रास्विव शितीकृतैः ।
शरैः सेनां जयाशां च पार्थानां चिच्छिदेऽर्कजः ॥ ५३ ॥
रत्नचित्रमहाचापः सेन्द्रचाप इवाचलः ।
कृष्णेरितो महाकायस्ततस्तं भैमिराद्रवत् ॥ ५४ ॥
ज्वालाभिर्जाठरोदग्रसप्तार्चिर्जातजन्मभिः ।
दृङ्नासाकर्णवक्त्रेभ्यो निर्यन्तीभिर्भयंकरः ॥ ५५ ॥
स्फारस्फुलिङ्गभृत्पिङ्गश्मश्रुभ्रूमूर्धजोच्चयः ।
दावानलप्रदीप्ताग्रशृङ्गः शैल इवोच्चकैः ॥ ५६ ॥
मूर्त्यैव संहरन् भीरून् शूरान् दृष्ट्यैव पातयन् ।
क्ष्वेडयैव चिपन् वीरान् स कर्णं सायकैः प्यधात् ॥५७॥
त्रिभिर्विशेषकम् ।
ततः प्रतोलीतुल्यास्यस्तुङ्गदीर्घो निशाचरः ।
कर्णमन्तरयामास प्राकारवदलंबलः ॥ ५८ ॥
ततो घटोत्कचः प्रेच्य जटासुरसुतं पुरः ।
चतुर्हस्तशतीमात्ररथस्थस्तमयोधयत् ॥ ५६ ॥
स्फूर्जद्द्रुमौ महाकायौ द्वावुग्रमिषुवृष्टिभिः ।
मायिनौ तावयुध्येतां प्रेङ्खत्पत्तौ नगाविव ॥ ६० ॥
रथाद्रथमथापत्य भैमिर्दृढमपीडयत् ।
भुजोरसा रसादीदृग्युद्धबन्धुमलंबलम् ॥ ६१ ॥
पीडितायास्तदङ्गोर्व्याः श्रोत्रेभ्यो मारुतैः सह ।
तेजोऽम्बुखगुणैः कीलारक्तशब्दैर्विनिर्गतम् ॥ ६२ ॥
भैमिस्तन्मौलिमुन्मूल्य गत्वा दुर्योधनं जगौ ।
इत्थं कर्णशिरोऽप्याशु दर्शयाम्येष पश्य माम् ॥ ६३ ॥
इत्युक्त्वा कर्णमेत्यातित्वराफूत्कारभीषणः ।
अपूरयच्छरस्तम्भैस्तम्भैरिव महारथः ॥ ६४ ॥
निष्कम्पः कम्पयन्नोष्ठं निश्चलश्चालयन् भुजम् ।
निर्व्यथो व्यथयन् मौर्वीकाण्डैः कर्णोऽपि तं व्यधात् ॥ ६५ ॥
भैमेश्चक्रं सहस्रारं सहस्रांशूपहासकृत् ।
ज्वलद्व्योम्नि शरैः साधु सहस्रांशुसुतोऽच्छिदत् ॥ ६६ ॥
अथ द्युपथमाविश्य सरथः सैष पार्थभूः ।
हिंस्रः प्राणिसहस्राणि भूत्वा भूत्वापिषद् द्विषः ॥ ६७ ॥
जज्वालोर्वी शिखिज्वालैर्द्यौर्ववर्ष शिलोच्चयैः ।
दिशोऽमुञ्चन् राचसौघान् द्विट्सैन्ये भैमिमायया ॥ ६८ ॥
दिव्यास्त्रेणाथ तां मायां हत्वार्किः कर्कशैः शरैः ।
चिपन् राचसलचाणि दिद्युते रामविक्रमः ॥ ६६ ॥
या रुद्रेण स्वयं चक्रे सा चक्रैरष्टभिर्वृता ।
भैमिचिप्ताशनिः शौर्यरथमाधिरथिं व्यधात् ॥ ७० ॥
ततः कर्णशरचुण्णस्यन्दनः पिशिताशनः ।
खमुत्पपात तरसा पचीव चीणपञ्जरः ॥ ७१ ॥
मायाविनममायेन भूमिष्ठेन रथस्थितम् ।
प्रयुध्यमानं भीमेन पलादेन्द्रमलायुधम् ॥ ७२ ॥
बकस्य रचसो मित्रममित्रघ्नो घटोत्कचः ।
तदा प्रदारिताशाभिः क्ष्वेडाभिः संमुखं व्यधात् ॥७३॥
युग्मम् ।
तादृक्प्रतिभटालाभचण्डकण्डूविखण्डिनोः ।
तयोर्महाप्रहारोऽभूत् कृतान्तभुजयोरिव ॥ ७४ ॥
विशीर्णानि मिथोघातध्वानैर्व्योमस्थयोस्तयोः ।
गिरिशृङ्गाण्यपि तदा भीतानीव भुवं ययुः ॥ ७५ ॥
भैमिकृत्तमथ द्वेषिमुण्डमुज्ज्वलकुण्डलम् ।

दिवः पविज्वलत्पत्तद्वयो गिरिरिवापतत् ॥ ७६ ॥
एत्य पार्थवरूथिन्यां मृद्नन्तमथ पार्थिवान् ।
पुनर्विरथ्याधिरथिं हैडिम्बोऽविशदम्बरम् ॥ ७७ ॥
स दशापि दिशो ह्रादैर्ह्रादैर्वोल्किमयीः सृजन् ।
ववर्ष राक्षसो वृक्षविषभृद्ग्रावपावकैः ॥ ७८ ॥
ततः पदे पदे शुष्यद् दिक्षु सर्वासु तद्बलम् ।
भिन्नपालिस्थलशिरः सरोजलमिवाद्रवत् ॥ ७९ ॥
शिश्रियुर्द्विट्चमूमेव केचित् केचिदहो पुनः ।
प्राविशंश्चाशु हस्त्यश्वशवशैलमहागुहाः ॥ ८० ॥
विपरीताम्बुवृष्ट्याभैस्ततः शरभरैर्नभः ।
सूरजः पूरयामास रुद्धद्विट्शस्त्रवर्त्मभिः ॥ ८१ ॥
आर्कैः शरा द्रुमा भैमैर्मिथःसंघट्टजानलाः ।
ज्वलन्तः प्रपतन्तोऽथ प्रकृष्टायै भियेऽभवन् ॥ ८२ ॥
पलाशनबलाधीशः संरब्धोऽथ ववर्ष सः ।
कपाटसंधिघण्टाभिः सर्वाभिः शस्त्रजातिभिः ॥ ८३ ॥
प्रच्छिन्नभिन्नदीर्णाङ्गः क्रियासमभिहारतः ।
हाहेत्येवध्वनिमयस्तदाजनि चमूचयः ॥ ८४ ॥
मुहुःकिलकिलारावं चक्रे दिवि सुदारुणम् ।
मुहुर्ननर्त काष्ठासु ज्वलद्रोमावलीमुखः ॥ ८५ ॥
ससादि सालंकरणं हस्त्यश्वमगिलन्मुहुः ।
पपौ तडागतुल्याभ्यां प्रसृतिभ्यामसृङ्मुहुः ॥ ८६ ॥
इति नक्तंचरो नक्तं चरन् समहरच्चमूः ।
दर्शनेनैव रौद्रेण मुधा पेतेऽस्त्रजातिभिः ॥ ८७ ॥
स्वस्तीत्युक्त्वाथ यातेषु दिवः सिद्धसुरर्षिषु ।
क्षीयमाणासु सेनासु व्याकुलेषु जगत्स्वपि ॥ ८८ ॥
अहो गजेषु वाहानां वाहेषु भुजवाहिनाम् ।
भुजवाहिषु चाङ्घ्रीणां तलमिच्छत्सु संश्रयम् ॥ ८९ ॥
कौरवाः करिघण्टाभिरुन्नमाङ्कैकरक्षिणः ।
एत्य युद्धरसाधीनं दीनास्याः कर्णमूचिरे ॥ ९० ॥
त्रिभिर्विशेषकम् ।

अधुनाप्यमुनास्मासु हृतासुषु वृष त्वया ।
शक्त्या निघात्यः कस्यार्थे पार्थो वासवदत्तया ॥ ९१ ॥
इत्याकर्ण्यामुचत् कर्णस्तदस्त्रं वासवं ज्वलत् ।
सुसंकटाय कस्मैचिन्निधानमिव रक्षितम् ॥ ९२ ॥
मायास्त्रस्य पलादस्य मायास्थानं विदार्य हृत् ।
घ्नती तमोऽपि तन्मित्रं सा शक्तिस्त्रिदिवं ययौ ॥ ९३ ॥
विपन्नोऽपि हितं स्वेषां परेषामहितं सृजन् ।
संजहार महारक्षोविभुर्क्षौहिणीं पतन् ॥ ९४ ॥
पतिते तत्र वीरेन्द्रे कौरवा ननृतुर्मुदा ।
कृष्णोऽपि जगदात्मत्वं ख्यापयन्निव नृत्तवान् ॥ ९५ ॥
विष्वक्सेन विषादेऽपि कृत्ये नृत्येन भासि किम् ।
इत्यैन्द्रिणा तदा पृष्टो नृत्यन्नेवाभ्यधात् प्रभुः ॥९६॥
तेजोमयवपुः कर्णः कुरूणां जीवितं परम् ।
शक्तिर्वासवदत्तेयमभूत् तस्यापि जीवितम् ॥ ९७ ॥
न त्वत्सूनुरघानीति हसन्तीवांशुभिर्मुदा ।
सैकपुंघातिनी शक्तिर्भीमिं हत्वा हरिं श्रिता ॥ ९८ ॥
गतायां त्रिदिवं तस्यां मृतानेतान् न वेत्सि किम् ।
योऽत्यायाति मुखेऽमीषां श्वासः कोटरवायुवत् ॥९९॥
पार्थः पात्योऽद्य शक्त्येति कौरवैः शिक्षितोऽन्वहम् ।
तद्वृत्तवद्विसस्मार युधि मन्मोहितो वृषः ॥ १०० ॥
एकलव्यजरासंधशिशुपालादयो मया ।
दुर्जया जघ्निरे युक्त्या मत्वैतत् प्रधनं पुरा ॥ १०१ ॥
मत्संसाधितदुःसाधमित्येतद्वैरिमण्डलम् ।
अस्त्रास्तत्वक्पुटस्तोमं नालिकेरमिवाहर ॥ १०२ ॥
इत्युक्ते शौरिणा सर्वे भूपभीमार्जुनादयः ।
शोकाग्निं युधि रोषाग्नीकृत्य धीरा दधाविरे ॥ १०३ ॥
युध्यस्व धर्मान्मा क्रुध्य चतुर्थेऽह्नि जयस्तव ।
इत्यादिशत् तदा व्यासः क्षणदृष्टो युधिष्ठिरम् ॥१०४ ॥
अथोऽग्रे तमसि क्ष्वेडातुल्यकालं मिथः शराः ।
पेतुर्वक्रोदरेष्वेव योधानां शब्दवेधिनाम् ॥ १०५ ॥
ध्वान्तेषूग्रेषु सैन्याङ्गं दीप्रं दीप्रं मणिन्विषा ।
द्विड्बाणा विव्यधुः कालनखाग्रेणेव दर्शितम् ॥ १०६ ॥
उत्पपातेव नाराचैर्ननर्तेवासिभिस्तदा ।
निशीथे यौवनोन्मत्तं ननर्देव द्विपैस्तमः ॥ १०७ ॥
इत्थं चिरप्रहारेण भूभृतस्तेऽपि शश्रमुः ।
स्यान्न येषां श्रमांशोऽपि साब्धिशैलधराधृतौ ॥ १०८ ॥
अश्रान्तः करुणाक्रान्तमनाः संक्रन्दनात्मजः ।
तदा चख्यौ कृती वीरान् क्षणं विश्रम्यतामिति ॥१०९॥

ततः पार्थं प्रशंसन्तस्ते दुःखोच्छेददैवतम् ।
निद्रां हरिकरिस्कन्धस्थिता एव सिषेविरे ॥ ११० ॥
रेजतुर्युद्धसंनद्धे ते सेने स्वापनिश्चले ।
यमौकश्चित्रवन्नानारत्नभूषांशुवर्णके ॥ १११ ॥
अथोदयी शशी सुप्तान् करैरमृतवर्षिभिः ।
स्पृशन्निव प्रहारार्तान् कुलवीरान् सहानुगैः ॥ ११२ ॥
खण्डमूर्तेर्विधोर्बिम्बे रक्तकुल्यासु दिद्युते ।
कृत्तैरिव तनूखण्डैः कुलव्यसनसंयति ॥ ११३ ॥
अथ द्विजेश्वरकरक्रीडाकलितशान्तिके ।
वियद्धाम्नि विवेशार्कः कुर्वन् वसुमयीं महीम् ॥ ११४ ॥
गुरुः कुरुनरेन्द्रेण वाक्शल्यैः शल्यितस्ततः ।
क्रुद्धो विव्याध दिव्यास्त्रैरनस्त्रकुशलानपि ॥ ११५ ॥
संपरायपरायत्ते यत्ते रिपुचमूचये ।
चकार कदनं प्रातः कृतान्तरदनं गुरुः ॥ ११६ ॥
किमकालक्षयोत्तालं भालचक्षुस्त्रिचक्षुषः ।
द्रोणपाणितले प्रायः प्राणिनश्छिन्नयेऽभ्ययात् ॥ ११७ ॥
इत्युल्कामण्डलीचण्डकाण्डग्रस्तप्रजाव्रजम् ।
दीप्रं निहृप्य तच्चापं खेचराः प्रोचिरे भयात् ॥ ११८ ॥
युग्मम् ।
पतत्सु द्रोणबाणेषु चर्मवर्मभभेदिषु ।
रक्ताब्धिमज्जनैरेव वञ्चनं विदधुर्बुधाः ॥ ११९ ॥
चिप्रैर्द्रुपदपुत्राणामिन्दुवृन्दैरिवाननैः ।
द्रोणश्चकार रक्तोदं तदा कालोदजित्वरम् ॥ १२० ॥
द्रोणेऽस्मिन्नचले क्रूरप्रचण्डप्रहतौ ततः ।
विराटद्रुपदौ शौर्यद्विपदन्तौ निपेततुः ॥ १२१ ॥
धार्मितेजोयशःसूर्यशशितुल्यग्रहस्पृशौ ।
क्षुरप्रलूनौ तन्मौली राहुयुग्मं गुरुर्व्यधात् ॥ १२२ ॥
आद्रवन्तो गुरुं भीमधृष्टद्युम्नादयस्तदा ।
गर्जैरिव गजाः कर्णशकुन्याद्यैर्धृता युधि ॥ १२३ ॥
रजःकालरजन्युग्रो मिलत्सर्वबलाम्बुधिः ।
भूयिष्ठभैरवरवः क्षयस्तत्राद्भुतोऽभवत् ॥ १२४ ॥
भिन्नेभकुम्भनिर्मुक्तमुक्तासिक्तशिलास्ततः ।
तत्र प्रसस्रुरस्रौघस्रवन्त्यः पलपङ्किलाः ॥ १२५ ॥

१ काल–इति पा० ।

सप्तलोकतमांसीव प्रगेऽर्कः प्रलये पुनः ।
सप्तार्णवानिवौर्वाग्निर्द्रोणः सप्तार्दयच्चमूः ॥ १२६ ॥
ऊचे कृष्णोऽथ कौन्तेया न जेयोऽसौ धृतायुधः ।
अस्त्रं सुतमृतिश्रुत्या त्यजेन्नीत्या क्रियेत सा ॥ १२७ ॥
इत्याकर्ण्यार्जुने कर्णौ पिधायाधोमुखे स्थिते ।
कथंचिदभ्युपगमान्मूके भीमेन भूपतौ ॥ १२८ ॥
आलभ्य मालवपतेरश्वत्थामाभिधं द्विपम् ।
अश्वत्थामा हत इति प्रोच्चैरूचे वृकोदरः ॥ १२९ ॥
लज्जामज्जन्मुखाद्भीमाद्गुरुः श्रुत्वेदमप्रियम् ।
जानन्नजेयतां सूनोस्तदश्रद्धाय युद्धवान् ॥ १३० ॥
वीरान् षष्टिसहस्रीं स पाञ्चालान् हन्तुमुद्यतान् ।
जघान कपिलः कोऽपि सगरस्य सुतानिव ॥ १३१ ॥
प्रयुतानि प्रवीराणां ब्रह्मास्त्रेणाथ निर्दहन् ।
चतुर्वर्षशतोऽप्येष युवेव व्यचरत्तराम् ॥ १३२ ॥
कर्म कुर्वन्नतिक्रूरं निषिद्धोऽथ सुरर्षिभिः ।
भीमोक्तिं शङ्कितोऽपृच्छत् सत्यनिष्ठाद्युधिष्ठिरात् ॥ १३३ ॥
हरिणाभ्यर्थितो बाढं लोकप्रलयशान्तये ।
भीमोक्तिं धार्मिरप्युक्त्वा स्वैरं हस्तीत्यभाषत ॥ १३४ ॥
कृष्णकम्बुस्वनैर्हस्तीत्यनिशम्य नृपोदितम् ।
शङ्कितः सुतशोकेन क्षणं स्तब्धः स्थितो गुरुः ॥ १३५ ॥
अस्पृशन्तो भृशं भूमिं तं भूपं येऽवहन् हयाः ।
ते भुव्येत्य तदा चेरुर्बद्धपत्ता इवाण्डजाः ॥ १३६ ॥
धृष्टद्युम्नं प्रदीप्तास्त्र कृष्टजिह्ममिवान्तकम् ।
जित्वा ततो जघानाशु दशवीरायुतीं गुरुः ॥ १३७ ॥
इति द्विड्भयदं भीमः समभ्येत्य तमभ्यधात् ।
सुते मृतेऽपि विप्रोऽपि पलाद इव हंसि धिक् ॥ १३८ ॥
इत्याकर्ण्य विमुच्यास्त्रं दत्तविश्वाभयो गुरुः ।
योगीन्दुर्दशमद्वारनिष्क्रान्तार्चिरुपाविशत् ॥ १३९ ॥
प्रागुत्क्रान्तात्मनस्तस्य नभसोऽस्तरवेरिव ।
पार्षतः प्रविवेशाङ्गमन्धकार इवाधमः ॥ १४० ॥
क्रुद्धः पार्थनिषिद्धोऽपि धिक्कृतोऽपि नृपैरयम् ।
कचैराकृष्य खड्गेन गुरोर्मूर्धानमच्छिनत् ॥ १४१ ॥
त्रस्तेऽथ कौरवबले किमेतदिति पृच्छतः ।
द्रोणेराख्यत् कृपः कृत्स्नमाशु दुर्योधनेरितः ॥ १४२ ॥

ततः पितृवधक्रोधी रुद्रांशो भालरौद्रदृक् ।
अश्वत्थामा दधौ रूपं कल्पान्तायेव भैरवम् ॥ १४३ ॥
पिषन् करं करेणायं पेषोष्मत्रासितप्रजम् ।
ऊचे कोपानलोष्माभैः स्खलद्भिर्वाग्भरैर्मुहुः ॥ १४४ ॥
श्रावयद्भिः पितुः कर्णौ मृतं मां हन्त तैरपि ।
मृत एवास्मि किं ध्यातो यत् केशैर्जगृहुर्गुरुम् ॥ १४५ ॥
आजन्म धृतसत्योऽथ धर्मजोऽपि गुरुव्यये ।
दधौ मृषोक्तिं जीवत्सु विश्वासः क्षत्रियेषु कः ॥ १४६ ॥
अद्य नारायणास्त्रेण पितृदत्तेन विष्टपम् ।
असौ करोम्यपाञ्चालमपाण्डवमकेशवम् ॥ १४७ ॥
इत्युक्त्वा शुचिरादाय प्रकम्पितसुरासुरम् ।
अस्त्रं नारायणं द्रौणिर्जगर्जोद्धुतमूर्धजम् ॥ १४८ ॥
बलमाकुलमालोक्य तन्नादेनेन्द्रनन्दनः ।
अनुतापपरः क्ष्मापमूचे भ्रूचेष्टयोत्कटः ॥ १४९ ॥
राजन्नाजन्मसत्योक्तौ त्वयि सप्रत्ययो गुरुः ।
जघ्ने निरस्त्रो यदि तत् सह्यः केनैष तत्सुतः ॥ १५० ॥
धिग् भोगस्पृहयालुत्वं यत्कृते दुष्कृताशयः ।
शिष्यो वृद्धं गुरुं व्याजत्याजितास्त्रमपातयत् ॥ १५१ ॥
इति प्रलापिनि क्रुद्धे शतक्रतुसुते ततः ।
जगाद नादयन्नुर्वीं कोपनः पवनात्मजः ॥ १५२ ॥
क्षत्रियो मुनिवज्जल्पन् नैषि फाल्गुन वल्गुताम् ।
कः क्रूरारिवधोपाये प्रायो न्यायोचितं चरेत् ॥ १५३ ॥
किं नाम ध्वनिमुद्दामं कुरुते गुरुनन्दनः ।
मयि त्वयि च कृष्णे च संपरायपरायणे ॥ १५४ ॥
इत्युक्तिं भीमसेनस्य गमयन् पूर्वरङ्गताम् ।
शतयज्ञसुतं यज्ञसुतः कोपोन्मदोऽवदत् ॥ १५५ ॥
अनस्त्रज्ञानपि ब्रह्मबन्धुर्ब्रह्मास्त्रतो हरन् ।
अधर्मसमरः स्वैरी पितृवैरी मया हतः ॥ १५६ ॥
भीष्मः पितामहो वृद्धो भगदत्तः पितुः सखा ।
धर्मैकयोधिनौ जल्प कया युक्त्या त्वया हतौ ॥ १५७ ॥
इति ब्रुवन्तं पार्थेन धिगित्युक्त्वा कटाक्षितम् ।
क्रोधाग्निसंभ्रमभ्राम्यच्चक्षुस्तं सात्यकोऽभ्यधात् ॥ १५८ ॥
धिगस्मान् कुशलाचारानाराद्धाराध्य घातिनम् ।
स्वस्था भवन्तं हन्तव्यमपि ये मृगयामहे ॥ १५९ ॥

अथैनं पार्षतः प्रोचे केन प्रायगतो हतः ।
यज्ञैकशीलो यूपाङ्कः पार्थकृत्तभुजः कृती ॥ १६० ॥
रे नृशंस दुराचार पुनर्यदि वदस्यदः ।
तत् त्वां हन्मीति जल्पन्तौ मिथस्तौ हन्तुमुद्यतौ ॥ १६१ ॥
कृष्णोक्त्या तौ च भीमेन वारितौ स्फारितायुधौ ।
जज्वाल दीप्तदिग्जालमस्त्रं च द्रौणिचालितम् ॥ १६२ ॥
अथ नारायणास्त्रोत्थैर्व्यथितां विविधायुधैः ।
सेनां प्रेक्ष्य नरं पश्यन् भूधवान् धार्मिरभ्यधात् ॥ १६३ ॥
सत्यजित्प्रमुखा येन हता हन्त महारथाः ।
दुग्धमुग्धमुखो येन सौभद्रश्छलतो हतः ॥ १६४ ॥
दुर्योधनाय दुर्भेदं दिव्यं यः कवचं ददौ ।
वधे तस्य गुरोः क्रुध्यन् मध्यस्थोऽभून्मृधेऽर्जुनः ॥ १६५ ॥
युग्मम् ।
स्वस्त्यस्मै भोः पलायध्वं प्रवेक्ष्याम्येष पावकम् ।
केन शक्योऽधुना जेतुं कालकल्पः कृपीसुतः ॥ १६६ ॥
अथोद्बाहुश्चतुर्बाहुरूचे प्रज्वलितान् नृपान् ।
नास्त्रेणानेन दह्यन्ते त्यक्तायुधरथा युधि ॥ १६७ ॥
इति श्रुत्वाभ्यधाद्भीमो भो भो मा भैष्ट भूमिपाः ।
हन्म्येष पश्यत द्रौणिं निर्दयं गदयानया ॥ १६८ ॥
इत्युदीर्यातिगर्जन्तं धाविनं पावनिं पुरः ।
मूढोऽयमित्युपहसन् द्रौणिर्बाणैरपूरयत् ॥ १६९ ॥
अथो रथायुधमुचां मुक्त्वा चक्रं महीभुजाम् ।
एकीभूयास्त्रकीलालिर्द्रुद्भीमं भीममासदत् ॥ १७० ॥
अस्त्रकीलाकलापेन वृतो भीमस्तदा बभौ ।
प्रतापभासुरो भानुरिव कल्पान्तवह्निना ॥ १७१ ॥
वारुणं मरुतिचाणमस्त्रमैन्द्रिस्तदामुचत् ।
क्षणान्नारायणास्त्रेण तदप्यस्फालितं बलात् ॥ १७२ ॥
अस्त्रेण ताप्यमानोऽपि युध्यमानो वृकोदरः ।
अभूच्चेतश्चमत्कारकारी दिविषदामपि ॥ १७३ ॥
मुक्त्वाथ मन्थरहयं रथमेत्यातिरंहसा ।
यानादाकृष्य कृष्णाभ्यां भीमोऽस्त्रं त्याजितो बलात् ॥ १७४ ॥
सह पाण्डुचमूदुःखैः सह द्रौणिमनोरथैः ।
सह विश्वोपतापैश्च ततोऽस्त्रं तद्ययौ शमम् ॥ १७५ ॥
अस्त्रं पुनर्विमुञ्चेति द्रौणिर्दुर्योधनेरितः ।

द्भिः प्रयोज्यं न दिव्यास्त्रमित्युक्त्वाधावदुद्धतः ॥१७६॥
वज्रसारैः शरासारैर्जित्वा सात्यकिपार्षतौ ।
भूपं सुदर्शनं निन्ये पौरवं यमपौरताम् ॥ १७७ ॥
वस्यन्तीं धर्मजचमूमनुधावन्नथ क्रुधा ।
रुद्धो धनंजयेनास्त्रमाग्नेयं द्रौणिरक्षिपत् ॥ १७८ ॥
अस्त्रस्य तस्य कीलाभिः श्लिष्यमाणाश्चमूभटाः ।
कालकिंकरजिह्वाभिर्लिह्यमाना इवाबभुः ॥ १७९ ॥
धूमोर्मिमन्दमार्तण्डदृश्यतारकमण्डलम् ।
प्रदह्यावोहिणीं मङ्क्षु तदस्त्रं कृष्णमाद्रवत् ॥ १८० ॥
तत्कीलापटलालीढौ कृष्णौ प्रधनमूर्धनि ।
तदा गर्भितनीलाश्महेमताटङ्कतां गतौ ॥ १८१ ॥
अथ पार्थो बभौ क्षिप्तब्रह्मास्त्रशमितानलः ।
तत्कालदहनोत्तीर्णसुवर्णवदतिद्युतिः ॥ १८२ ॥
अपाण्डवामकृत्वापि महीं शान्तेऽस्त्रपावके ।
दिव्यास्त्राणि तदानिन्दन् द्रौणिर्व्यासमलोकत ॥१८३॥
रथं मुक्त्वा मुनिं नत्वा ततोऽपृच्छत् कृपीसुतः ।
विफलत्वं किमस्त्राणि कृष्णयोरगमन् मम ॥ १८४ ॥
अथोवाच मुनिर्वत्स विद्धि बीभत्सुकेशवौ ।
निमित्तमानवावेतौ नरनारायणावृषी ॥ १८५ ॥
तपः षष्टिसहस्राब्दीं तप्त्वा नारायणो मुनिः ।
लिङ्गार्चनव्रतः शर्वं सेवित्वा तत्समोऽभवत् ॥ १८६ ॥
मूर्तिसेवापरः शंभोस्त्वं तु यातस्तदंशताम् ।
विश्वरूपस्वरूपं हि लिङ्गमङ्गं तु तद्भवः ॥ १८७ ॥
तन्मा कृथाः पृथासूनुकृष्णयोर्धाम्नि विक्रियाम् ।
रुद्रांशः सततं रुद्ररूपयोरेकरूपयोः ॥ १८८ ॥
इत्युक्त्वान्तर्हिते व्यासे द्रौणिर्नत्वा हृदा हरम् ।
देवरूपौ स्वयं कृष्णौ शान्तमन्युरमन्यत ॥ १८९ ॥
ततो विरतसंहारेऽवहारे विहिते नृपैः ।
अभिसर्पन्निवाम्नायव्यासं वासविरैक्षत ॥ १९० ॥
नत्वाथ पप्रच्छ मुनिं पृथाभू-
र्दृष्टः पुमान् शूलकरो मयाग्रे ।
कुरून् हरन् शूलभवैस्त्रिलोक-
ग्रासक्षिजिह्वैरिव कस्त्रिशूलैः ॥ १९१ ॥
अथाददे वाचमयं मुनीन्द्रः
कृष्णप्रसादेन तव प्रसन्नः ।
स्वामी स कामी गिरिपुत्रिकाया
जगत्त्रयीकाननकल्पवृक्षः ॥ १९२ ॥
तमात्मानमनात्मानं तमीश्वरमनीश्वरम् ।
पार्थ तं ज्ञानमज्ञानं ध्याय तं प्रियमप्रियम् ॥ १९३ ॥
इत्थं जगत्पतिजपैरनुगृह्य पार्थं
याते मुनौ निजनिजं शिबिरं प्रविश्य ।
वीराः शरीररुचिक्लृप्तदिना दिनान्ते
चक्रुः कथामवितथां सुभटप्रथासु ॥ १९४ ॥
भेजे श्रीजिनदत्तसूरिसुगुरोरर्हन्मतार्हस्थितेः
पादाब्जभ्रमरोपमानममरो नाम व्रतीन्द्रः कृती ।
तद्वाक्कर्मणि बालभारतमहाकाव्ये कविप्रीतिदे
पीयूषद्रवधाम्नि सप्तममिदं द्रोणस्य पर्वाद्रवत् ॥१९५॥
सर्गैश्चतुर्भिरप्यत्रानुष्टुभां द्रोणपर्वणि ।
अशीतिसंनिकृष्टानि निर्दिष्टानि शतानि षट् ॥ १९६ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के द्रोणपर्वणि पञ्चमदिने द्रोणवधो नाम चतुर्थः सर्गः ॥ ४ ॥ :: :: ॥

---

## ॥ अथ बालभारतस्य ॥

॥ कर्णपर्वारम्भः ॥

अगोचरं वागधिदेवताया
वाचामपि स्वं चरितप्रपञ्चम् ।
वक्तुं जगत्तारणकारणेन
व्यासीभवन् पातु भवो मुरारेः ॥ १ ॥
पुनः कुरुक्षेत्रनिषण्णनेत्रः
सङ्ग्राममुद्दामतमं निरूप्य ।
गावल्गणिर्द्रोणवधाकुलाय
न्यवेदयत् कौरवपुंगवाय ॥ २ ॥
ततः कृपीसूनुमते कुरूणां
सेनाधिपत्ये मुदितेन राज्ञा ।
कर्णोऽभिषिक्तस्तृणवत् त्रिलोकीं
मेने दृशा क्रोधशिखित्विषेव ॥ ३ ॥

स्मरानुकारो मकरक्रमेण
बलं महद् व्यूह्य तदङ्गराजः ।
राजन् जगज्जैत्रपतत्रिपातः
प्रकम्पयामास न कस्य चेतः ॥ ४ ॥
विभूष्य भूमिं हरमूर्तिमर्ध-
चन्द्रानुकारेण बलेन पार्थः ।
जज्वाल भालाग्निवदस्त्रजाल-
ज्वालाकरालो भयदस्तदग्रे ॥ ५ ॥
अथास्त्रसंघट्टपरंपराभि-
श्चूर्णीकृतानां तपनद्युतीनाम् ।
लेशैरिव व्योमतलं स्फुलिङ्गैः
शृङ्गारयन्तः सुभटाः प्रसस्रुः ॥ ६ ॥
पक्षद्वयक्ष्मापपटुप्रताप-
स्विद्यज्जयश्रीगुणघर्मनीरैः ।
हतस्ततोऽपि क्षतजच्छलेन
काश्मीरमिश्रैरिव भूरभूषि ॥ ७ ॥
रिपुक्षुरप्रोत्पतितप्रवीर-
ताटङ्किवक्त्रौघनिभाद्विभाति ।
अभ्युद्गमोऽकारि सकोकयुग्मै-
रिवाम्बुजैरम्बुजकोकबन्धोः ॥ ८ ॥
गदाप्रपातोत्पतदस्रबिन्दु-
सिन्दूरिताशापतिकुम्भिकुम्भः ।
सामीरिणा मत्तकरिस्थितेन
कुलूतराजः सगजोऽपि जघ्ने ॥ ९ ॥
आच्छादिते रेणुभरेण भानौ
नभःस्पृशा संयति भानुसूनुः ।
शरक्षतारिक्षतजौघवृष्ट्या
निविष्टरेणुं धरणीं चकार ॥ १० ॥
निपात्य संसप्तकमण्डलानि
क्ष्माखण्डमाखण्डलसूनुरस्त्रैः ।
चकार कोपारुणदृष्टिधाम-
वृष्टिप्रपञ्चैरिव पूर्यमाणम् ॥ ११ ॥
पार्थप्रतापप्रहतौ प्रभूत-
प्रतापयाञ्चार्थमिव प्रयातौ ।
भूपौ सगर्भौ युधि दण्डधारौ
दण्डस्य चण्डद्युतिमण्डलाय ॥ १२ ॥
पाण्ड्यो नृपः पाण्डुचमूचलाची-
चूडामणिः कौरवकालरुद्रः ।
विश्वाधिकंमन्यतयातिदर्पः
ससर्प सर्पाधिपबन्धुबाहुः ॥ १३ ॥
कर्णादिजेतुर्युधि तस्य मौलिं
द्रौणिक्षुरप्रोत्पतितं पतन्तम् ।
रत्नप्रभादीप्रदिशं निभाल्य
भिया न भानौ नयनं दधौ कः ॥ १४ ॥
मौलिं महायुद्धसमुद्धतस्य
छित्त्वोत्सुकैर्म्लेच्छबलाधिपस्य ।
भुवि प्रविष्टं बलिसद्मगङ्गा-
स्नानाय नूनं नकुलस्य काण्डैः ॥ १५ ॥
स्मरन् गिरं मातुरनातुरात्मा
कृती कृतारातिजयो जघान ।
अभ्यागतं वध्यदशां दशाशा-
विकीर्णकीर्तिर्नकुलं न कर्णः ॥ १६ ॥
इत्थं मिथःसंगरसंगतानां
चमूचराणां खचरैः शरौघैः ।
विष्वक्चलत्प्राजनशङ्कयेव
रथ्या रवेराशु ययुर्नभोऽन्तम् ॥ १७ ॥

प्रथममहः ।

कृतावहारे निशि वीरवारे
प्रातः प्रवृत्ते पुनराहवाय ।
रराज कर्णः कुरुराजकर्ण-
सुधाधुनीपूरगिरिर्गिरैवम् ॥ १८ ॥
राजन्नराजन् नयनोत्सवा ये
भवत्प्रसादाः कृतशत्रुसादाः ।
अद्यैव तेषामनृणो भवामि
दहामि कामं ज्वलितोऽर्जुनस्य ॥ १९ ॥
शौर्यास्त्रवीर्यैरधिकोऽस्मि पार्थात्
स सर्वथा सारथिनाधिको मत् ।
कृष्णाधिकं सारथिमद्य शल्यं
यच्छाशु यच्छामि जयश्रियं ते ॥ २० ॥

इत्युक्तिभिस्तस्य मुदा नृपेण
शल्योऽर्थितस्तद्रथसारथित्वम् ।
क्रुद्धो जगौ विश्वजयक्षमस्य
ददासि धिक् सूतजसूततां मे ॥ २१ ॥

नृपोऽथ तं प्रश्रयवानवादी-
न्मा वीरकोटीर कुरुष्व कोपम् ।
सारोत्तराः सारथयो रथिभ्यः
पथि प्रथिम्नः प्रधनस्य धेयाः ॥ २२ ॥

ततो हुताशस्य यथा समीरः
पुरां विपक्षस्य यथा विरञ्चिः ।
पृथातनूजस्य यथा मुकुन्द-
स्तथास्य सारथ्यमुरीकुरु त्वम् ॥ २३ ॥

इत्युक्तिपूरैर्नृपतेः सुधौघ-
समद्रवैर्मद्रपतिः प्रसन्नः ।
स्वच्छन्दचारी रविनन्दनस्य
सूतो भवामीति भृशं बभाषे ॥ २४ ॥

ततः सितोष्णीषधरोऽङ्गभर्ता
रथं वलक्षाश्वमकूजनाख्यम् ।
महेन्द्रसूतं भृगुसूनुदत्तं
तं दन्तिकक्षाध्वजमारुरोह ॥ २५ ॥

कुरूद्वहेषु ध्वनिदीर्णदिक्षु
धुन्वन् धनुः शल्यमथाह कर्णः ।
अद्यार्जुनं हन्मि यतो मुरारि-
स्ततो जयः स्यादिति वाङ्मुधास्तु ॥ २६ ॥

मयेन्द्रपुत्रेऽथ हते रुषेन्द्रः
सेवागतायास्त्रिदशास्त्रपङ्क्तेः ।
लज्जाविनम्राण्यपि दृग्भिरङ्घ्रि-
गताभिरालोकयतां मुखानि ॥ २७ ॥

अथाह शल्यः प्रहसन् यदृच्छा-
प्रलापतः कर्ण न लज्जसे किम् ।
भोः केन न त्वं स च दृष्टसारो
गन्धर्वयुद्धे च गवां ग्रहे च ॥ २८ ॥

दृष्टासि तेजोऽद्य ममेति शल्यं
संलाप्य कर्णोऽथ जगाद भृत्यान् ।
संप्रेक्षतां क्वापि जितेन्द्ररुद्रः
पार्थस्तदर्थं विशिखा ममोत्काः ॥ २९ ॥

यो दर्शयत्यर्जुनमद्य तस्मै
ददामि दामानि रणन्मणीनि ।
रामास्तुरंगान् करिणः पुराणि
साराणि यद्वा स्वयमीहते सः ॥ ३० ॥

उवाच शल्योऽथ हसन्नवैमि
सत्यीभवत् कर्ण वचस्तवेदम् ।
यदर्जुनो दर्शयिता स्वयं स्व-
मिष्टान् ग्रहीता भवतस्ततोऽसून् ॥ ३१ ॥

स्पर्धां मृधे मा कुरु भर्तृपिण्ड-
पुष्टोऽद्य राज्यांशभुजार्जुनेन ।
हंसेन हेमाब्जभुजा गृहस्थो-
च्छिष्टाशनः काक इवद्युयाने ॥ ३२ ॥

तावन्महान्त्यङ्गमहीभुजंग
कुरङ्गवत् तुङ्गय रङ्गणानि ।
मृगेन्द्रवद् यावदफल्गुपातं
न फाल्गुनो वल्गति वल्गुतेजाः ॥ ३३ ॥

क्रुद्धोऽथ कर्णो निजगाद वेद्मि
तमर्जुनं मां च स वेत्ति तत्त्वात् ।
शल्योपमैः शल्य किमत्र शत्रु-
मित्रोपधिस्त्रासयसीव वाक्यैः ॥ ३४ ॥

वदाथवा स्वैरमगम्यगन्तु-
रपेयपातुर्यदभक्ष्यभोक्तुः ।
त्वं मद्रदेशैकनिवेशनस्य
जनस्य नेतासि शुचिः कुतोऽसि ॥ ३५ ॥

शल्योऽथ तं प्राह मुहुः किमित्थं
मामात्थ नाथोऽसि यदङ्गभूमेः ।
विक्रेयतानीतकलत्रपुत्रै-
स्त्याज्या जनन्योऽपि जनैर्न यत्र ॥ ३६ ॥

क्रुधं विधत्सेऽभिहिते हितेऽपि
वैधेय युध्यस्व तदर्जुनेन ।

---

१–हूतिः इति पा० ।

उक्त्वेति शल्यस्त्वरयांचकार
हरीनरीणां जडयन् मनांसि ॥ ३७ ॥

महारथानामिषवोऽन्तरिक्षे
तदा मिथःपातविलूनदेहाः ।
तेजोमयं प्राप्य शरीरमंशु-
च्छलेन मन्ये तपनं प्रविष्टाः ॥ ३८ ॥

संनाहदृङ्मार्गगलल्ललाट-
स्वेदोदबिन्दुर्दलयन्नथारीन् ।
अस्मिन् नियत्या निहिते नियोगे
रुदन्निवार्दार्शि दयालुरैन्द्रिः ॥ ३९ ॥

अथावदन्मद्रनृपोऽङ्गभूपं
कुतूहलं सूतज पश्य पश्य ।
लीलालवः संयति योऽर्जुनस्य
प्राणापहारः स महारथानाम् ॥ ४० ॥

मृत्यौ समासीदति पश्य कर्ण
कुरुश्रियामुत्कटवार्द्धकानाम् ।
अपाति दन्तैर्नरकाण्डलून-
नृपालिमौलिच्युतहारमूर्त्या ॥ ४१ ॥

पश्यैन्द्रिबाणा युधि सप्त सप्ता-
ष्टाष्ट द्विषः कर्ण निपात्य तुष्टाः ।
ध्वान्ताविले यान्ति बिलेऽभिरन्तुं
जयश्रियं चारुतरां गृहीत्वा ॥ ४२ ॥

इतस्ततः शैलततीस्तताम
कोदण्डकोट्यैव पुरा पृथुर्यत् ।
तत् कौतुकं शान्तमगुर्दिगन्तान्
यद् भूभृतोऽस्मिन् धृतचाप एव ॥ ४३ ॥

शरत्वरामारुतलुप्तखेद-
संसुप्तसंसप्तकचक्रवालः ।
वृषः क्षणादेष बलेषु बल्गन्
हरेः सुतोऽयं वद केन सह्यः ॥ ४४ ॥

अथ क्व यास्यत्यधुना मृधेऽसौ
दृष्टो मयेत्युल्लसदंशमुक्त्वा ।
कर्णः शराकीर्णनभा नभस्व-
त्प्रभाततेरप्यदितावकाशम् ॥ ४५ ॥

शरोत्करैरर्कसुतस्य दिक्षु
भित्तीभवद्भिः स्खलितेऽपि वाते ।
आव्यथ्यमाना बलिना भयेन
वनीव पाण्डुध्वजिनी चकम्पे ॥ ४६ ॥

काण्डैर्महामण्डपमन्तरिक्षे
कृत्वाग्रजं भोजयितुं कृतान्तम् ।
शवान्नकूटान् पतितानपक्ष-
पाते रणे सूरसुतस्ततान ॥ ४७ ॥

विद्धा मृधोर्वीषु सहस्ररश्मि-
सुतेन तेनाशुगमण्डलैर्ये ।
तदाशुगैर्विव्यधुरात्मभिस्ते
रोषादिव व्योम्नि सहस्ररश्मिम् ॥ ४८ ॥

मुहुर्विरथ्य क्रतुनन्दनादीन्
दशायुतीं बाहुभृतां निहत्य ।
नदन् शरैर्धर्मसुतेन हैमै-
श्चक्रेऽशुमानर्क इवार्कजोऽपि ॥ ४९ ॥

क्षीणायुधः च्छिन्नरथोऽथ कृत्त-
वर्मा क्षताङ्गो हतचक्ररक्षः ।
वृषक्षुरप्रैर्विधुरो धरित्री-
धवोऽथ बोधिच्छदवच्चकम्पे ॥ ५० ॥

तीक्ष्णांशुजस्यैव यमं युवैव
जित्वाङ्गभर्तुः पितृपूर्वबन्धू
कोपावनिः पावनिराशुगैर्यत्
तदाजयत् तं किमु चित्रमत्र ॥ ५१ ॥

नन्दोपनन्दौ कवची सुपर्वा
पाशी धनुर्ग्राहमहाभुजौ च ।
निर्द्वन्द्वदीर्घात्मकसंनिपङ्गि-
काथा जरासंध इति प्रतीताः ॥ ५२ ॥

सुतास्तव द्वादश जघ्निरेऽमी
राजन्नयाजौ पवनात्मजेन ।
सूर्या इव द्वादश तत्प्रतापा-
स्ततः कुरूणामदिशन् युगान्तम् ॥ ५३ ॥

युग्मम् ।

तत्कार्मुकद्वादशतूर्यघोष-

नान्यन्तदीप्तः पवनस्य सूनुः ।
रेजे यशोनाट्यनटो हतेभ-
कुम्भोत्थमुक्ताततिमुष्टिपुष्पः ॥ ५४ ॥
मुक्ताफलैर्मारुतिदारितानां
कुम्भस्थलोत्थैः करिणामपाति ।
दिवं गतानां कषणेन तेषां
द्युलोकवृक्षेभ्य इव प्रसूनैः ॥ ५५ ॥
परस्परोत्तालनृपालमाला-
कलम्बजालैर्वलयोर्द्वयी सा ।
अकम्पतान्योन्यविलोलचक्षुः-
कटाक्षपातैर्युगलीव यूनोः ॥ ५६ ॥
जनौघसंहारचिराद्विराग-
भृता तपस्वीभवता यमेन ।
ज्येष्ठेन दत्तं स्वमिवाधिकार-
मादात् तदार्किः परसंप्रहारैः ॥ ५७ ॥
हत्वा हयानां च विषाणिनां च
सप्रायुतीं तत्तदसृक्पयोधीन् ।
चन्द्रैरिवाप्लुप्यदेष लूनै-
र्द्राग्व्याघ्रदत्तादिनरेन्द्रवक्त्रैः ॥ ५८ ॥
दिव्यास्त्रभृद्द्रोणिजयावदातं
दिव्यास्त्रवर्त्मक्षपितत्रिगर्तम् ।
किरीटिनं कर्णकलम्बचक्र-
चमत्कृतः प्राह तदा मुकुन्दः ॥ ५९ ॥
विदारयन् वीरभुजोर्मिमाला
दोर्भ्यां तरन् संगरसागरेऽस्मिन् ।
कर्णोऽद्य पश्यार्जुन पश्यति त्वां
मुहुः परं पारमिवारुणाक्षः ॥ ६० ॥
उत्तुङ्गमातङ्गतुरङ्गमुख्य-
प्राणिव्रजप्राणनिरासरौद्रः ।
विना त्वयोच्चैः शरभेन केन
प्रस्खाल्यतां सिंह इवैष धावन् ॥ ६१ ॥
इत्युक्तिपारे वृषभल्लिभिन्नं
निशम्य भीमाच्छिविरप्रयातम् ।
युधिष्ठिरं द्रष्टुमगादगाध-
बाधः क्रुधान्धः सहरिः किरीटी ॥ ६२ ॥

मर्दार्तिकोपेन निपात्य कर्ण-
मिमौ समेताविति जातबुद्धिः ।
निरीक्ष्य तौ क्षोणिपतिः क्षतौघ-
क्षीणोऽपि हर्षी शयनादुदस्थात् ॥ ६३ ॥
नत्वा निषण्णौ तदनु क्षतौघ-
वीक्षाविषण्णो नृपतिर्मुदा तौ ।
पप्रच्छ दिष्ट्याद्य स पिष्टसैन्यः
कथं हतः संयति रामशिष्यः ॥ ६४ ॥
पार्थस्ततः प्राह विभो कृपीभू-
जयश्रिया विघ्नितकर्णमृत्युः ।
भीमे भरं न्यस्य निरीक्षितुं त्वा-
मेतोऽधुना हन्मि तवाज्ञया तम् ॥ ६५ ॥
क्रुधाथ धार्मिस्तमुवाच कुन्त्याः
क्षत्राधम त्वं जठरं किमागाः ।
धिङ्मां त्वयि क्वासिनि येन दध्रे
त्रयोदशाब्दीमसुहृज्जयाशा ॥ ६६ ॥
एकोऽद्य बन्धून् परिहृत्य कर्णात्
त्रस्तोऽसि लुब्धादिव कृष्णसारः ।
ओजस्विनः कस्यचिदर्पयेदं
गाण्डीवमस्मानवति द्विषो यः ॥ ६७ ॥
इत्युक्तिभिः कोपकडारमक्षि
खड्गे क्षिपन्तं हरिरैन्द्रिमूचे ।
गाण्डीवमन्यस्य समर्पयेति
वक्तुर्वधेऽसि प्रथितप्रतिज्ञः ॥ ६८ ॥
ततः प्रतिज्ञाघटनाय श्रोणां
साम्नामनौचित्यविवेचनेन ।
आकर्ष खड्गाद् दृशमाशु निन्दां
गुरोरशस्त्रं वधमादिशन्ति ॥ ६९ ॥
इदं निशम्याह महेन्द्रसूनु-
र्युधिष्ठिरं धृष्टतरैर्वचोभिः ।
भयातिपूर्णः परमप्रमादी
त्वमेव पृथ्व्या मघवान् प्रतीतः ॥ ७० ॥
इतीरितोक्तिं द्रुतकृष्टखड्गं

१ हृत इति पा० ।

तमाह कृष्णस्त्यज मूढ शस्त्रम् ।
त्वं ज्येष्ठनिन्दानुशयान्मुमूर्षुः
स्तवं कुरु स्वस्य सतां स मृत्युः ॥ ७१ ॥
इदं विदित्वाह नरश्चरित्रे-
र्न मादृगस्त्री पुरुषोऽस्ति कश्चित् ।
कलिप्रकर्षे कलितोदयानां
शरीरिणां शश्वदहं धुरीणः ॥ ७२ ॥
अथैष मां निन्दति नौति च स्व-
मिति क्रुधा रक्तमुखं नरेन्द्रम् ।
हरिर्जगौ भूप विचारयेन्द्रि-
स्तव स्तवं स्वस्य चकार निन्दाम् ॥ ७३ ॥
इति ब्रुवन् भूपपदाब्जयुग्मे
मधुव्रतामास नरेण कृष्णः ।
भूपोऽपि तौ कर्णवधेऽभ्यषिञ्च-
द्दिवाचिनीरैः परिरभ्य हृष्टः ॥ ७४ ॥
रणे धरित्रीरमणेन साकं
पाकद्विषः सूनुरथाभ्युपेत्य ।
हत्वापि राजप्रकरानकार्षीत्
तेषां मुखे राजमयीमिवोर्वीम् ॥ ७५ ॥
गदाबलैर्वैरिबलानि भीम-
स्तथा बिभेदाच यथा न भेदाः ।
क्ष्मायामबुध्यन्त महीभुजंग-
शताङ्गमातङ्गतुरङ्गमाणाम् ॥ ७६ ॥
भीतैर्भटैर्मुक्तमुखः करीव
माद्यन्नथोत्पत्य पुरः स्फुरन्तम् ।
दुःशासनं क्रूरथास्त्रपेषः
स एष जग्राह करेण कम्प्रम् ॥ ७७ ॥
दोषान् स्मरन्त्या हृदयस्थयाशु
स कृष्णया नुन्न इवोग्रकोपः ।
हत्वैनमङ्कोऽग्निसदृग्भिरुच्चै-
राचष्ट दृग्भिः प्रदहन्निवाशाः ॥ ७८ ॥
जहर्ष यः संसदि याज्ञसेनी-
केशांशुकाकर्षणकौतुकेन ।
भो भूमिपाः पश्यत पश्यतास्य
विपाट्य वक्षो रुधिरं पिबामि ॥ ७९ ॥
इदं गदन्नेव तदा त्वदीय-
सूनोः कपाटोरु विपाट्य वक्षः ।
रक्तं मुहुः सैष पपौ जगर्ज
मुहुर्महीपान् मुहुरालुलोके ॥ ८० ॥
आस्फालयन् बाहुमसृक्कचितेन
स सृक्किणी चावलयन् करेण ।
ननर्द स्तदा रक्तदृगूर्ध्वरोमा
दृष्टश्च वीरैरभिमूर्च्छितं च ॥ ८१ ॥
स तेन कोपेन तदाकरिष्य-
दकर्णदुर्योधनमेव विश्वम् ।
स्मरस्मयस्मेररसोऽस्मरिष्य-
न्न द्रौपदीवेणिविमोचनं चेत् ॥ ८२ ॥
ऐन्द्रिं तृणीयन् रणकर्मणीन्द्र-
स्पर्धैकधीरो वृषसेनवीरः ।
क्षणेऽच कार्णिः कटकोत्कटानि
न्यपातयत् क्षोणिभृतां कुलानि ॥ ८३ ॥
मुहुः स माद्रीसुतसात्यकादी-
नेको बहून् विश्वविलोपशक्तीन् ।
विभग्नसंरम्भभरानकार्षी-
दब्धेस्तरङ्गानिव तीरदेशः ॥ ८४ ॥
ततः किरीटी प्रहरन् शरौघै-
र्मुखं च हस्तौ च वृषाङ्गजस्य ।
अपातयत् कौरवराज्यलक्ष्मी-
वासाम्बुजं च श्रवणाम्बुजे च ॥ ८५ ॥
ततः शिखिक्रोडितकालकूट-
चक्रायमाणारुणकृष्णचक्षुः ।
राधाङ्गभूर्धैर्यधनोऽभ्यधाव-
द्धनंजयं पुत्रवधक्रुधार्तः ॥ ८६ ॥
तयोरभून्नारदनादहूत-
गीर्वाणगन्धर्वभृतान्तरिक्षम् ।
अभ्यस्तमाजन्ममनोरथानां
परंपराभिः समरं पराभिः ॥ ८७ ॥
सूर्येन्द्रयोः पुत्रजयोक्तिवादे
द्विधा स्थितैः पूर्वममर्त्यवृन्दैः ।

१–यत–इति पा० ।

पृष्टस्तदेशश्च विधिश्च यच
कृष्णो जयस्तत्र सदेत्युवाच ॥ ८८ ॥
मिलच्चतुर्वार्धिमिथोमहोर्मि-
संघट्टघोषोग्रयुगान्तकल्पः ।
संरब्धकृष्णार्जुनशल्यकर्ण-
शङ्खप्रणादः समयः स जज्ञे ॥ ८९ ॥
ततोऽतिसंरम्भिणि पार्थयुग्मे
शल्यश्चलत्कृष्णकटाक्षविद्धः ।
हनूमतः पुच्छलवाग्ररोम्णा
सा हस्तिकक्षा च हता चकम्पे ॥ ९० ॥
इन्द्राय धाचा दनुजान् विजेतु-
मिन्द्रेण रामाय नृपान् विपेष्टुम्
रामेण दत्तं विजयाह्वमस्मै
यच्चापमार्किस्तदयं चकर्ष ॥ ९१ ॥
द्वन्द्वैकयुद्धस्पृहया सहस्र-
चक्षुःसहस्रांशुतनूद्भवाभ्याम् ।
मिथः शरैः पार्श्वचरा नरेन्द्रा
विजिग्यिरे मङ्क्षु निजघ्निरे च ॥ ९२ ॥
अथार्कपुत्रेण वलत्रपत्राः
क्षिप्ता यशोऽङ्का इव कङ्कपत्राः ।
अपूरयन् पार्थचमूं रयेण
मरालमाला इव नीलमभ्रम् ॥ ९३ ॥
जवादवैरोचनमेव विश्वं
कर्तुं नरेण प्रहिताः पृषत्काः ।
भित्त्वा भृशं कर्णशरीरमुर्व्या
मूलं बलिं भेत्तुमिव प्रविष्टाः ॥ ९४ ॥
मुष्टिस्थितानेव चकर्त कर्णः
शरानथैन्द्रेः कृतविश्वचित्रः ।
उत्थातुकामान् लघुमूल एव
विधेरनर्थानिव बुद्धिकारः ॥ ९५ ॥
उक्तोऽर्जुनस्तद्गुणविस्मिताभ्यां
भीमाच्युताभ्यां ननु दुर्जयोऽसौ ।
धीराधिकं खाण्डवकालिकेय-
किरातयुद्धादिह संरभस्व ॥ ९६ ॥
श्रुत्वेति पार्थोऽभ्युदितेऽनुरूपे
रणे रणत्कङ्कणकेतवेन ।
दोर्भ्यां हसन्नामिव दूरमुक्तैः
शरैः शरीरीव नभोऽप्यकार्षीत् ॥ ९७ ॥
पराक्रमं दर्शयितुं सुरेभ्य
इवात्मनो मानधनस्तदार्किः ।
तद् भार्गवास्त्रेण किरीटिक्लृप्तं
ब्रह्माण्डतः काण्डपटं जहार ॥ ९८ ॥
विद्धाखिलाङ्गानथ कृष्णभीम-
किरीटिनः काण्डगणेन कर्णः ।
प्रातः पतङ्गांशुसहस्रलीढ-
त्रिकूटकूटप्रतिमानकार्षीत् ॥ ९९ ॥
तयोर्वनान्तद्विपयोरिवाथ
गण्डस्थलोड्डीनशिलीमुखेन ।
रणातिरेकेण न के समीपा
जग्मुर्महीपास्तरुवद्विनाशम् ॥ १०० ॥
यः खाण्डवे खण्डितपुच्छदण्डः
स कृष्णयुग्मग्रसने प्रतिज्ञाम् ।
जिह्वायुगेनेव सृजन् वृषेण
बाणासने बाणपदे कृतोऽहिः ॥ १०१ ॥
हितोक्तिषु स्वैरमकर्णे कर्ण
संधानतोऽस्माद् भुजगाशुगोऽयम् ।
द्विषद्गलं नैति पुनस्तदेनं
संधेहि युद्धेषु जडोऽन्यथा त्वम् ॥ १०२ ॥
इत्युच्यमानो युधि मद्रपेन
तेजोवधार्थं व्यथमानचेताः ।
द्विः संदधे नास्त्रमितीरितोक्ति-
र्मुमोच कर्णो जयिने भुजंगम् ॥ १०३ ॥
युग्मम् ।
हरौ गृहीताचलगौरवेऽथ
हृदा रथाश्वेषु भुवं गतेषु ।

१ विद्धेषिणोऽर्या—इति पा० ।

१ बलं इति पा० ।

किरीटिनो मङ्क्षु किरीटखण्ड-
मेवाहरन्नग्रमुखस्य सर्पः ॥ १०४ ॥
कृष्णौ ततो रत्नविचित्रवर्णैः
कर्णस्य बाणैः परितः परीतौ ।
अवापतुः पाण्डवराज्यराज-
जयश्रियोः केलिकलापिहेलाम् ॥ १०५ ॥
यान् सूनुवात्सल्यवशंवदोऽन्त-
र्हस्तानिवादत्त वृषस्य भानुः ।
अखण्डयत् तानपि काण्डपातैः
पार्थस्त्रुटत्काञ्चनवर्मदम्भात् ॥ १०६ ॥
अर्कात्मजत्वाद् वृषपक्षभाजा
क्षिप्तो यमेनेव भुजो भुजंगः ।
धावन् रवात् खाण्डवदत्तवैर-
श्छिन्नस्तदा व्योम्नि शरैर्नरेण ॥ १०७ ॥
दिव्यास्त्रपातैरपि दुर्जयस्य
जयस्य कर्णेन ततः क्षतज्यः ।
तादृग्रणश्रान्त इवास्त्रदण्डो
विश्रामकामः क्षणमुन्ननाम ॥ १०८ ॥
कोपच्छलेन ज्वलनः स्वचाप-
पराभवेनेव तदातितापः ।
महारिमह्नाय जहीति वक्तु-
मिवाविशच्चेतसि शक्रसूनोः ॥ १०९ ॥
द्राक् सज्जिते धन्वनि रौद्रमैन्द्रि-
स्ततो दधे दिग्दहनाग्रमस्त्रम् ।
नश्यन्निवैतद्भयतस्तदोर्वी-
मज्जद्रथाङ्गो रविभूरथोऽभूत् ॥ ११० ॥
धर्मध्वजो गोक्षतिपापपङ्क
इवावमज्जद्रथचक्रमुर्व्याम् ।
उद्धर्तुमिच्छन्नथ भानुसूनु-
रवोचदुच्चैस्तनयं पृथायाः ॥ १११ ॥
मनोरथं भर्तुरिवोद्धरामि
रथस्य चक्रं सुकृतञ्च यावत् ।
तावद्विलम्बस्व महास्त्रमोक्षे
शूरा न शूरा व्यसनस्थितेऽरौ ॥ ११२ ॥

हसन्नथामुं हरिराह कर्ण
दिष्ट्योपदेष्टुं सुकृतानि वेत्सि ।
विषाग्निचारे क्रतुजानिकारे
सौभद्रमारेऽपि न किं स्मृतानि ॥ ११३ ॥
इत्यच्युतोक्त्या कुपितस्तदस्त्रं
ब्रह्मास्त्रपातेन विजित्य कर्णः ।
बिम्बं रवेर्गन्तुमिव प्रतेने
पद्यामयं द्यामनु बाणचक्रैः ॥ ११४ ॥
अथ व्यमुञ्चत् प्रसभात् कृशानु-
मयं महास्त्रं ज्वलिताश्ममैन्द्रिः ।
जितौ यमार्कौ दिवि धूमतापै-
र्भ्राता च तातश्च वृषस्य येन ॥ ११५ ॥
अथाक्षिपद्वारुणमस्त्रमार्किः
शान्ताग्निकीलापटलं समन्तात् ।
संताप्य सद्यो जलमज्जितस्य
रूपस्य रूपं तदगाद् यशोऽस्य ॥ ११६ ॥
इत्यस्त्रमस्त्रेण निहत्य तिष्ठन्
कर्णोऽवनिग्रस्तसमस्तचक्रः ।
प्रम्लानदुर्योधनवक्त्रपद्मो
बभावसूर्येन्दुरिव प्रदोषः ॥ ११७ ॥
ततस्तपोभिर्यदि मे प्रसन्ना
रुद्रादयोऽस्त्रे गुरवस्तदेनम् ।
हन्यामनेनेत्यभिमन्त्र्य हैमं
बाणं मुमोचाञ्जलिकं किरीटी ॥ ११८ ॥
सूनोः शुचा दीर्णमिवोरुरन्ध्र-
मुरश्चिरं दर्शयति द्युरत्ने ।
कण्ठेऽथ तेनाङ्गविभुर्विभिन्नः
पपात पातालपतिव्यथाकृत् ॥ ११९ ॥
दानैकशौण्डः परमार्गणाय
तदाङ्गमप्यङ्गपतिः प्रदाय ।
दिशो दशापि द्युतिभिर्विभिन्द-
न्नङ्के पितुः केन पतन् न दृष्टः ॥ १२० ॥
उत्कृत्तकर्णा मदपौरुषाभ्यां
सा कुण्डलाभ्यामिव वर्जिताथ ।

कीर्त्या हसन्त्यैन्द्रिभुजाद्रियेव
पराङ्मुखाभूत् कुरुराजसेना ॥ १२१ ॥

मुक्तात्मने जलमिव स्वसुताय दातुं
यातेऽथ पश्चिमपयोनिधिमुष्णरश्मौ ।
एके स्मिताक्षिकुमुदा विदधुः प्रवीराः
प्रम्लानवक्त्रकमलाश्च परेऽवहारम् ॥ १२२ ॥

मूर्धीव तस्मिन् पतितेऽपि बन्धौ
दुर्योधनो युद्धरसेन धावन् ।
त्वत्सूनुराश्चर्यकरः सुराणां
वीरेषु रेखां विशदां तदाप ॥ १२३ ॥

भेजे श्रीजिनदत्तसूरिसुगुरोरर्हन्मताईस्थितेः
पादाब्जभ्रमरोपमानममरो नाम व्रतीन्द्रः कृती ।
पर्वेदं रविनन्दनस्य जगदानन्दे तदास्यामृत-
ज्योतिर्ज्योतिषि बालभारतमहाकाव्ये जगामाष्टमम् ॥ १२४ ॥

अनेनैकेन सर्गेण कर्णपर्वण्यनुष्टुभाम् ।
शतमेकमिहोत्पन्नं त्रिभिर्युक्ता च सप्ततिः ॥ १२५ ॥

इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के कर्णपर्वणि कर्णवधो नाम ग्रन्थारम्भतः सर्गसंकलनया सप्तत्रिंशत्तमः सर्गः ॥ ३७ ॥ :: :: ॥

---

## ॥ अथ खण्डप्रशस्तौ

### रामावतारवर्णनम् ॥

(८६) पाताले मञ्जुमूलं फणिपतिरभितः कीर्तिवल्लेस्तवैषा
स्थूणा कैलासशैलो गगनमिह महामण्डपः पाण्डुदण्डाः ।
दन्तीन्द्रस्थूलदन्ता दलततिरतुला शारदाभ्राणि सारा-
स्तारा: पुष्पाणि चन्द्रः फलमिदममलं राम राजेन्द्र मन्ये ॥

हे राम राजेन्द्र अहमेवं मन्ये यत्तव कीर्तिवल्लेः कीर्तिरूपाया व्रततेः पाताले फणिपतिः शेषो मञ्जु मनोहरं मूलं वर्तते, तथा तस्याः स्थूणा स्तम्भः कैलासशैलोऽस्ति, तथा तस्या महामण्डपो गगनमाकाशमस्ति, तथा तस्याः पाण्डुदण्डाः श्वेतयष्टिका दन्तीन्द्रस्थूलदन्ताः दन्तीन्द्राणां दिग्गजानां स्थूला महान्तो दन्ताः सन्ति, तथा तस्या अतुला दलततिः अनुपमा पर्णसन्ततिः श्रेणिः शारदाभ्राणि शरत्कालेभवा जलधराः सन्ति तथा तस्याः पुष्पाणि साराः प्रसूनास्तारा गगनज्योतींषि सन्ति, तथा तस्याः फलमिदं प्रत्यक्षदृश्यममलं निर्मलं चन्द्र इन्दुरस्तीति ॥ ८९ ॥

(९०) त्वं चेत्कल्पतरुर्वयं सुमनसस्त्वं चेत्सुधात्मा कलाः
संपूर्णा वयमीश्वरो यदि भवान् स्वच्छा विभूतिर्वयम् ।
संपूर्णः कमलाकरो यदि भवान् श्रीराजहंसा वयं
स्वामिंस्त्वं शृणु रामचन्द्र नृपते किंकिं न तेऽङ्ग वयम् ॥

हे स्वामिन् रामचन्द्र नृपते वयं ते तव किंकि नाङ्गमवयवो भवेम किं तु वयं सर्वे तवैवावयवा इति भावः, अथ तदेवाह, हे राम त्वं चेद्यदि कल्पतरुः कल्पवृक्षस्तर्हि वयं सुमनसः पुष्पाणि भवेम वृक्षस्यावयवत्वात्पुष्पाणामिति भावः, एवमग्रेऽपि तत्तदवयवत्वं ज्ञेयम्, तथा हे राम त्वं चेद्यदि सुधात्मा चन्द्रस्तर्हि वयं संपूर्णाः कलाः, तथा यदि भवानीश्वरः शंभुस्तर्हि वयं स्वच्छा विभूतिर्भस्म तदपीश्वराङ्गमिति भावः, तथा यदि भवान् कमलाकरः संपूर्णस्तर्हि वयं श्रीराजहंसाः, एवमेवास्माकं सर्वेषां सर्वत्र सर्वदा सर्वथाऽङ्गत्वं जायत एवेति भावः ॥ ९० ॥

(९१) एतस्मिन्विजनेवनेऽतनुतरुच्छन्नावकाशे सुखं
तिष्ठामीति तव द्विषामधिपतिर्यावद्विधत्ते मतिम् ।
तावत्तत्र निपातितं भुवि भवन्नामाङ्कसेल्लाहतं
दृष्ट्वा केसरिणः करङ्कमसमत्रासो मुहुर्मूर्छति ॥

हे राम तव द्विषां शत्रूणामधिपतिः स्वामी वैरिराजः एतस्मिन् कस्मिंश्चिदिष्टे विजने जनरहिते वने अतनुभिर्महद्भिस्तरुभिर्वृक्षैश्छन्नआच्छादितोऽवकाशो दिग्विदिशोरन्तरालं यस्मिंस्तत्र त्वद्भीत्या सुखं तिष्ठामीति यावन्मतिं विधत्ते तावत्तत्र वने भुवि पृथिव्यां भवन्नामचिन्हितेन सेल्लेन शस्त्रविशेषेणाहतं व्याहतं केसरिणः सिंहस्य करङ्कमस्थिपञ्जरं निपातितं दृष्ट्वा असमत्रासोऽतुलत्रासो मुहुर्मूर्छति मूर्छां प्राप्नोतीत्यर्थः ॥ ९१ ॥

(९२) अयि खलु विषमः पुराकृतानां
विलसति जन्तुषु कर्मणां विपाकः ।
क्व नु कुलमकलङ्कमायताक्ष्याः
क्व च रजनीचरसंगमापवादः ॥

अयीति कोमलामन्त्रणे खलु निश्चितं जन्तुषु जीवेषु पुराकृतानां पूर्वजन्मविहितानां कर्मणामर्थादशुभानां विषमो विपाकः फलं विलसति भवत्युत्पद्यत इति यावत्, तदेवाविष्करोति, नु इति वितर्के आयते विस्तीर्णे अक्षिणी नेत्रे

यस्यास्तस्याः सीतायाः अकलङ्कं कलङ्को दोषस्तद्रहितं कुलं क्व क्व च पुना रजनीचरो रावणस्तस्य यः संगमः सयोगः स एवापवादोऽश्लाघ्यो दोषः, अनेन सीताया रावणस्य चात्यन्तासंगतिः सूचिता ॥ ९२ ॥

(९३) अयि खलु विषमः पुराकृतानां
विलगति जन्तुषु कर्मणा विपाकः ।
हरशिरसि शिरांसि यानि रेजु-
र्हरहर तानि लुठन्ति गृध्रपादैः ॥

अत्र पूर्वार्धो व्याख्यात एव, यानि रावणस्य शिरांसि मस्तकानि पूजायां निहितानि हरशिरसि शंभुमस्तके रेजुः शुशुभिरे तानि शिरांसि हरहरेति खेदे गृध्रपादैर्गृध्रचरणैर्लुठन्ति, रावणस्य शिरांसि रामबाणच्छिन्नानि भूमौ पतितानि गृध्रचरणैरितस्ततो लोठ्यन्त इति भावः ॥ ९३ ॥

(९४) अयि खलु विषमः पुराकृतानां
विलगति जन्तुषु कर्मणां विपाकः ।
क्व च ननु जनकाधिराजपुत्री
क्व च दशकन्धरमन्दिरे निवासः ॥

पूर्वार्धस्यार्थः पूर्ववदेव नन्विति वितर्के, जनकमहाराजस्य कन्या सीता क्व क्व च दशग्रीवरावणस्य गृहे निवासः, असंभावितमपि सर्वं दैवयोगेन फलतीति भावः ॥ ९४ ॥

(९५) त्वत्प्रारब्धप्रचण्डप्रधननिधनितारातिवीरातिरेकक्रीडत्कीलालकुल्यावलिभिरलभत स्यन्दमाकन्दमुर्वी ।
दम्भोलिस्तम्भभास्वद्भुज भुजगजगद्भर्तुरार्भतुरेनां
तेनायं मूर्ध्नि रत्नद्युतिततिमिषतः शोभते शोणभावः ॥

दम्भोलिर्वज्रं तस्य यः स्तम्भस्तद्वद्भास्वन्तौ देदीप्यमानौ भुजौ यस्य तत्संबोधने हे दम्भोलिस्तम्भभास्वद्भुज येन कारणेनोर्वी भूमिराकन्दं कन्दं मर्यादीकृत्य त्वया प्रारब्धं प्रचण्ड रौद्रं यत्प्रधनं संग्रामस्तेन निधनिता विनाशं प्राप्ता येऽरातिवीराः वैरिसुभटास्तेभ्योऽतिरेकेणाधिक्येन क्रीडन्ती खेलन्ती या कीलालकुल्या रुधिरनदी तस्या या आवलयः श्रेणयस्ताभिः स्यन्दं क्षरणमलभत प्राप, यदा त्वया वैरिणो हतास्तदा तद्रुधिरं भूमितले गतमिति भावः, तेन कारणेन भुजगजगत् पाताललोकस्तस्य भर्तुः स्वामिनः शेषस्य मूर्ध्नि मस्तके रत्नद्युतिततेः शेषाहिशिरःस्थितकान्तमणिसमूहस्य मिषतः छलेनायं शोणभावः शोणत्वं रक्तत्व शोभते, रामाहतवैरिरुधिरसंपर्कजनितमेव रक्तत्वं शेषशिरःस्थितमणिषु भासत इति भावः ॥ ९५ ॥

(९६) देव त्वद्विजये तुरङ्गमखुरव्रातक्षतक्ष्मातलप्रोद्भूते रजसः परागपटले दिक्चक्रमाक्रामति ।
अक्ष्णां पङ्क्तिशतानि निन्दति निजां हस्तद्वयीं निन्दति
स्वां निन्दत्यनिमेषतां परिपतद्बाष्पाम्बुधारो हरिः ।

हे देव त्वद्विजये तव विजयकाले तुरङ्गमाणामश्वानां खुरव्रातैः खुरसमूहैः क्षतं क्षुण्णं यत् क्ष्मातलं भूतलं तस्मात्प्रोद्भूते उत्थिते रजसो धूलेः परागपटले सूक्ष्मकणसमूहे दिक्चक्रं दश दिश आक्रामति सति हरिरिन्द्रः परिपतद्बाष्पाम्बुधारः सर्वनेत्रेषु रजःकणसंसर्गात्परिपतन्ती निर्गच्छन्ती नेत्रेभ्यो बाष्पाम्बुधारा अश्रुजलप्रवाहो यस्य स परिपतद्बाष्पाम्बुधारः सन् स्वीयानामक्ष्णां नेत्राणां पङ्क्तिशतानि दशशतानि निन्दति, यतश्चैतावद्रजः समुच्छलितं येन तस्य सहस्रनेत्राणि तिरोहितानि बभूवुस्तेन यदि मम नेत्रसहस्रं नाभविष्यत्तदा चैतावद्रजो निकरस्तत्र नापतिष्यदतो नेत्र सहस्रं मम किमर्थमभवदिति, तथा निजां स्वीयां हस्तद्वयीं करद्वयं निन्दति सत्यपि नेत्रसहस्रे तत्तिरोधानाय यदि हस्तसहस्रमप्यभविष्यत्तदा हस्तैः सर्वनेत्राच्छादनं कर्तुमशक्यमतो मम पाणिद्वयं व्यर्थमेवेति, तथा स्वां स्वकीयामनिमेषतामक्ष्णां पक्ष्मपाताभावतां निन्दति, यतो मया देवत्वादनिमेषता पक्ष्मपाताभावः किमिति प्राप्तः यस्माच्चक्षुषां रजःपटलाक्रान्तत्वमभूद्यदि च मे नयनेष्वनिमेषता नाभविष्यत्तदा रजःपातोऽपि नाभविष्यदतः स्वामनिमेषतां निन्दतीति भावः ॥ ९६ ॥

(९७) अम्भः कर्दमतामुपैति सहसा पङ्कः पुनः पांसुतां
रेणुर्वारणकर्णतालयुगलैर्दिक्प्रान्तनीहारताम् ।
निम्नत्वं गिरयः समं विषमतां शून्यं जनाकीर्णतां
निर्याते त्वयि रामचन्द्र नृपते त्यक्तस्वरूपं जगत् ॥

हे रामचन्द्र नृपते त्वयि निर्याते यात्रार्थं निष्क्रान्ते सति जगत् त्यक्तस्वरूपं त्यक्तं स्वं रूपं येन तथाविधं जातम्, तत्कथमित्याह, अम्भो जलं सहसा सपदि कर्दमतामुपैति प्राप्नोति यतोऽम्भसो द्रवत्वेऽपि भवदीयाश्वखुरोत्थापितरजःसंपर्कात्तस्य कर्दमता जातेति, तथा पुनः सच पङ्कः पांसुतां धूलितां जनसंपर्कात्प्राप्तः, तथा रेणुर्वारणकर्णतालयुगलैर्वारणानां हस्तिनां यानि कर्णतालयुगलानि तैर्दिक्प्रान्तनीहारतां दिगन्ते या नीहारता हिमता तामुपैति दिगन्ते समुद्राणां सत्त्वात्तत्र च वारणकर्णतालयुगलप्रेरिता रेणवो निपातिता हिमा भवन्तीति भावः, तथा गिरयः घोटकखुरक्षुण्णा निम्नत्वं प्राप्नुवन्ति, समं च स्थलं विषमतामुपैति, जनशून्यं स्थलं जनाकीर्णतां त्वत्सेनया वने प्रवेशादरण्यमपि जनपदवद्भवति,

एवं सर्वमेव जगत्स्वस्वरूपत्यागेन त्यक्तस्वरूपं जज्ञे इति भावः ॥ ९७ ॥

( ९८ ) देव त्वद्भुजदण्डचण्डिमचमत्कारिप्रतापानल-
ज्वालाजालभयादिवाभिविशति क्षीराम्बुधिं माधवः ।
भर्गः स्वर्गधुनीं दधाति शिरसा त्यक्तत्रिलोकीकृति-
र्वेधाः किंतु मुहुः कमण्डलुजले रात्मानमासिञ्चति ॥

हे देव त्वदीयौ यौ भुजदण्डौ तयोर्यश्चण्डिमोग्रत्वं तेन चमत्कारकारी आश्चर्यकारीयः प्रतापः स एवानलज्वालाजालमग्निशिखासमूहस्तद्भयादिव माधवः कृष्णः क्षीराम्बुधिमभिविशति प्रविशति, यथा भर्गः शंभुस्तद्भयादिव स्वर्गधुनीं गङ्गां शिरसा दधाति धारयति, तथा वेधा ब्रह्मा त्यक्ता त्रिलोक्याः कृतिः करणं येन स तथा ऽभूत्, अथ च न केवलं त्यक्ता किंतु मुहुर्वारंवारं कमण्डलुजलैरात्मानमासिञ्चति, यथा जनः ग्रीष्मोद्भूतानलदाहसन्त्रस्तो जलं सेवते तथैतेऽपि त्वत्प्रतापानलसंत्रस्ता इव जलं सेवन्ते इति भावः ॥ ९८ ॥

( ९९ ) रेफ व्यञ्जनराजता तव तवाकारप्रकर्षः स्वरे-
ष्वन्त्यस्यापि मकार विस्फुरति ते वर्गाक्षरेष्वादिमा ।
यैः संभूयनिगद्यते रघुकुलालङ्कारहीराङ्कुरो-
देवः क्षोणिसुतापयोधरतटीशृङ्गारहारो हरिः ॥

हे रेफ तव व्यञ्जनराजता व्यञ्जनेषु श्रेष्ठत्वं स्फुरति, हे आकार तव स्वरेषु प्रकर्षः स्फुरति, तथा हे मकार तव वर्गाक्षरेषु कखादिषु अन्त्यस्यापि सत आदिमा विस्फुरति, विपरीतगणनयेति भावः, तेषां प्राधान्यं प्रपञ्चयति, यैर्वर्णैः संभूय मिलित्वा राम इत्यनेन रघुकुले यो लङ्कारस्तदीयो यो हीराङ्कुरः स इव देवो द्योतनशीलो हरी रामचन्द्रः क्षोणीसुतायाः सीतायाः पयोधरतटी स्तनतटी तस्याः शृङ्गारार्थं यो हारः स इव निगद्यते कथ्यत इत्यर्थः ॥ ९९ ॥

(१००) देव ब्रह्माण्डभाण्डेसदसिविकसितन्यायनान्दीनिनादै-
र्भूतेशप्रीतिहेतोर्भुवनधवलनं नाटकं नाटयन्त्याः ।
त्वत्कीर्तेर्मूर्तयोऽमी कुमुदकुमुदिनीकान्तकर्पूरकुन्द-
क्षीराब्धिक्षीरमुक्तामणिविबुधसरित्तारकाशेषसंघाः ॥

हे देव ब्रह्माण्डभाण्डे सदसि सभायां न्याय एव नान्दीनिनादा द्वादशतूर्यशब्दास्तैर्भूतेशस्य शम्भोः प्रीतिहेतुना भुवनस्य जगत्त्रयस्य धवलनं श्वेतताकरणं नाटकं नाटयन्त्यास्त्वत्कीर्तेरमीपदार्था मूर्तयो जाताः, ते के इत्याह, कुमुदं कैरवं, कुमुदिनीपतिश्चन्द्रमाः, कर्पूरः, कुन्दः, क्षीराब्धिः क्षीरसमुद्रः, क्षीरं दुग्धं, मुक्ताः, मणयश्चन्द्रकान्ताद्याः, विबुधसरिद्गङ्गा, तारकाज्योतींषि, शेषः नागः, शङ्खाः इति, यथाऽन्यापि काचन नटभार्या स्वसदृशरूपवत एव पदार्थान्प्रकाशयति तथैव त्वत्कीर्तिः स्वसदृशान् श्वेतानेव पदार्थान् नाटकार्थमुत्पादितवतीति भावः ॥ १०० ॥

# THE APHORISMS
### OF THE
# YOGA PHILOSOPHY
### OF
## PATAÑJALI.

(*Continued from page* 262 )

What results from this saving [knowledge's táraka]? To this he replies :—

सत्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् ॥ ५६ ॥

Aph. 56. On equalization of clearness of the pure quality [i. e. understanding] and soul, Isolation takes place.

On the equality of clearness of the pure quality [viz, the understanding—the modifications of the pure quality] and soul, the characteristics of which have been described before, Isolation takes place.

By "clearness" of the pure quality [i. e. thinking principle, buddhi-sattwa] is meant its resolution into its cause, by removal of the conceit [or notion] of being the agent of universe ; and the "clearness" of soul is non-existence of experience [which is] attributed to it.

Thus, when "clearness" of these two [i. e. of the principle of understanding and soul] has equally taken place, then Isolation—perfect emancipation—ensues.

## BOOK IV.

Now [the fourth book, which is called] Kaivalya Páda—book of Isolation is commenced for the purpose of establishing, by consistent reason, the nature of Isolation, by means of expelling mistakes arisen from contrary determination And there by mentioning various causes as birth &c., of the fore-mentioned perfections, he informs us that the meditation should, therefore be performed ; and he states its subservience to Isolation.

अस्मात् तारकात् किम्भवतीत्याह ।

सत्त्वपुरुषावुक्तलक्षणौ तयोः शुद्धिसाम्ये कैवल्यम् । सत्त्वस्य सर्वकर्तृत्वाभिमाननिवृत्त्या स्वकारणेऽनुप्रवेशः शुद्धिः । पुरुषस्य शुद्धिरुपचरितभोगाभावः इति द्वयोः समानायां शुद्धौ कैवल्य मुत्पद्यते मोक्षो भवतीत्यर्थः ॥

इति श्रीमहाराजाधिराज श्रीभोजदेवविरचितायां पातञ्जलयोगशास्त्रवृत्तौ विभूतिपादस्तृतीयः ॥

जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥

Aph 1 Perfections are produced by birth, herbs [of mysterious virtue] incantations penances and meditations

Some "Perfections" [Siddhi, supernatural powers] are caused by birth alone such as the motion of birds in the air and the like, or the knowledge &c, of Kapila and other saints [or minuteness &c, of deities that were invested with them then birth]

'Perfections' produced by herbs consist of elixirs and the like that is supernatural herbs in Pátála—the regions under the earth, [this perfection is obtained by persons who possess knowledge of these supernatural herbs or medicines]

'Perfections' produced by Incantations are well known [that is this perfection may be obtained by any one, who knows and repeats incantations] Perfections produced by "Penances" are those obtained by Viswámitra and others, [mendicants and performers of penances] 'Perfections" caused by "meditations' are such as have been described before.

The [real] cause of perfections is meditation alone performed in the other births, Incantations and the rest are merely media or mediate causes [or occasional causes] But then [it may be asked] how the meditation of other [former] births can be the cause [of perfection for] in the case of Nandíśwara and others the result is seen in this birth alone? To this he replies

जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥

Aph 2 The change into another class is from the supply of nature

The change of class &c of Nandíśwara and others in this present life, was from the 'Supply of Natures" That is, the natures of former births alone supply the modifications in this birth—viz, they [the former natures] cause changes of those [modifications] by changing them into different classes, &c

[The meaning is this that the fact of change of class &c as is seen in the case of Nandíśwara &c, who was born a Bráhman and by worship of Siva was changed into a deity in that very life can be accounted for by Nature—or modifications of Nature—i e in the case of Nandíśwara the body and organs of sense belonging to him as a man and a Bráhman were modified into the body and organs of sense of a deity by supply of constituent particles of the body and organs of sense belonging to a deity]

But [even] then [it may be objected] merits and demerits are observed to be in process of being realised in this life, how then can it be maintained that the supply of natures is the cause? To this he replies —

निमित्तमप्रयोजकम्प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥

Aph 3 The occasional is the non-efficient cause of natures thereby there is removal of obscurations as in the case of a husbandman [who removes the impediments to the irrigation of his field]

'Occasional"—merit &c is the non-efficient cause of the modifications of natures into other things, for a cause is not set in motion by an effect

Then where [it may be asked] is operation of the merits &c? To this he replies —Thereby is the removal of obscurations as in the case of a husbandman." "Thereby" from the merits &c which are realised takes place "Removal" or destruction of whatever is obscurant—the obstacles—i. e of works &c because it is contradictory On the removal of that obstacle, the natures themselves become efficient of the desired effect He gives an example, Like a husbandman, i e as a farmer or husbandman desiring to conduct water from one field to another merely removes the impediments or obstacles [in the way] of the water which being removed the water itself assumes the modification of proffluence, but there is no exertion made by him of advance of water Similarly is it to be understood of merit and demerit (G D)

---

इदानीं विप्रतिपत्तिसमुत्थभ्रान्तिनिराकरणेन युक्त्या कैवल्यस्वरूपव्यवस्थापनाय कैवल्यपादोऽयमारभ्यते । तत्र पूर्वोक्तसिद्धीनां नानाविधजन्मादिकारणप्रतिपादनद्वारेणैवम्बोधयति नैः फल्यं नास्तीति समाधिः कर्तव्य इति कैवल्यार्थत्वञ्चाह ॥

काश्चन जन्मनिमित्ता एव सिद्धयो यथा पक्ष्यादीनामाकाशगमनादयः । यथा वा कपिलादिमहर्षीणाञ्ज्ञानादयः । औषधिसिद्धयः पातालादौ रसायनादयः । मन्त्रसिद्धयः प्रसिद्धाः । तपः सिद्धयो यथा विश्वामित्रादीनाम् । समाधिसिद्धयः पूर्वमेवोक्ताः ॥

सिद्धीनां समाधिरेव हेतुर्जन्मान्तराभ्यस्तः । मन्त्रादीनां द्वारतैव ॥

ननु नन्दीश्वरादीनां जात्यादिपरिणामोऽस्मिन्नेव दृश्यते तत्कथञ्जन्मान्तरसमाधेः कारणत्वं तत्राह ॥

योऽयमिहैवजन्मनि जात्यन्तरादिपरिणामः स प्रकृत्या पूरात् पाश्चात्या एव हि प्रकृतयोऽस्मिन् जन्मनि विकारानापूरयन्ति तान् जात्यन्तरादिद्वारेण परिणमयन्ति ॥

ननु च धर्मादयस्तत्रक्रियमाणा उपलभ्यन्ते तत्कथम्प्रकृतीनामापूरणाद्कारणमित्यत्राह ॥

निमित्तं धर्मादि तत्प्रकृतीनामर्थान्तरपरिणामे न प्रयोजकं नहि कार्येण कारणम्प्रवर्तते । कुत्र तर्हि धर्मादेर्व्यापारस्तत्राह ॥

वरणभेदस्तु ततः क्षेत्रिकवत् । ततस्तस्मादनुष्ठीयमानाद्धर्मादेर्वरणमावरकमधर्मादि तस्यैव विरोधित्वात् क्षयः क्रियते । तस्मिन् प्रतिबन्धके क्षीणे प्रकृतयः स्वयमभिमतकार्याय प्रभवन्ति दृष्टान्तमाह क्षेत्रिकवत् यथा कर्षीवलः केदारात् केदारान्तरं जलं निनीषुर्जलप्रतिबन्धकावरणभेदमात्रङ्करोति तस्मिन् भिन्ने जलं स्वयमेव प्रसररूपं परिणामङ्गृह्णाति नतु जलप्रसरणे तस्य कश्चित् प्रयत्नः एवन्धर्मादेर्बोध्यम् ॥

THE

# VAIŚESHIKA APHORISMS

OF

# KANÁDA

## SEVENTH BOOK, FIRST DAILY LESSON

*(Continued from page 266.)*

**अतो विपरीतमणु ॥ १० ॥**

Aph. 10 The contrary of this is the minute

[1] That which is the contrary of this, that is of great extension established by perception, is minute extension The contrariety arises from imperceptibility, and contrariety of causes, for the causes of magnitude are magnitude, plurality, and coalescence, and the cause of minuteness is duality derived from the relative idea of the Deity residing in the cause. By this is also to be understood shortness the contrary of length, and in this case also the contrariety is as aforesaid U.

**अणु महदिति तस्मिन् विशेषभावात् विशेषाभावाच्च ॥ ११ ॥**

Aph 11 The notions greater and smaller [arise] in this conception [of a relatively great and a relatively small object] from the existence of particularity and from the non-existence of particularity.

[2] The word *iti* refers to the usage There is, then, a conventional notion that a jujube is small in relation to a bel-fruit, an emblic myrobalan great in relation to a jujube, and a bel-fruit great in relation to an emblic myrobalan Among these the principal notion is that of greatness The reason of this is stated to be that there exists particularity, that is that there exists particular magnitude because there is a relation of more and less But among these the notion of smallness is relative The reason of this is said to be the non-existence of particularity, that is the non-existence therein of particular smallness For minuteness as a product resides only in binary atomic aggregates, and as eternal abides only in the ultimate particles But this does not exist in a jujube, &c In other words it is because there exists in the particles of the jujube &c plurality, magnitude and coalescence of constituent elements, which are a particular cause of magnitude, and because there does not exist in the jujube &c duality not having a common substratum with magnitude which duality is the cause of smallness U

**एककालत्वात् ॥ १२ ॥**

Aph 12 Because the time is one

[1] The greatness and smallness are both experienced at one time, and these greatness and smallness being contrary to one another cannot exist together in one substratum. Therefore, inasmuch as there exists a cause of greatness, the conception of magnitude is in this instance primary and the notion and usage with regard to smallness are derivative [or relative only ] U

**दृष्टान्ताच्च ॥ १३ ॥**

Aph 13 Also because of the example

[2] It is seen likewise that in the natural order of things there must be a practical conception of a great, greater and greatest in the jujube, emblic myrobalan and bel-fruits which possesses magnitude, just as in the course of things there is a conventional notion of white whiter and whitest in a piece of cloth, a conch shell, crystal &c which are white U

**अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्मगुणैर्व्याख्यातः ॥ १४ ॥**

Aph 14 The non-existence of greatness and smallness in greatness and smallness is explained by greatness and smallness

[3] It may be objected that in virtue of the practical notion of small and great extension it is known that in magnitude as an extension there exists magnitude, and in smallness as an extension there exists smallness How then can these exist in substance alone, or how does not the contradiction arise of the existence of qua-

---

[1] अतः प्रत्यक्षसिद्धान्महतः परिमाणाद्यद्विपरीतं तदणुपरिमाणमित्यर्थः । वैपरीत्यञ्चाप्रत्यक्षत्वात् कारणवैपरीत्याच्च, महत्त्वे हि महत्त्वबहुत्वप्रचयानां कारणत्वम्, अणुत्वे च कारणगतस्य द्वित्वस्येश्वरापेक्षाबुद्धिजन्यस्य कारणत्वम्, एतेन दीर्घत्वविपरीतं ह्रस्वत्वमित्यपि द्रष्टव्यम्, वैपरीत्यञ्चात्रापि पूर्ववत् ॥

[2] इतिशब्दो व्यवहारपरतां दर्शयति, तेन बिल्वापेक्षया कुवलमणु कुवलापेक्षयामलकं महत् आमलकापेक्षया बिल्वं महदिति तावद्व्यवहारोऽस्ति, तत्र महदिति तेषु व्यवहारो मुख्यः कुत एव मतआह । विशेषभावात् महत्त्वविशेषस्यैव तरतमादिभावेन भावात्, अणुव्यवहारस्तु तेषु भाक्तः कुतएव मतआह । विशेषाभावात् अणुत्वविशेषस्य तत्राभावात्, अणुत्वं हि कार्यं द्व्यणुकमात्रवृत्ति, नित्यं परमाणुवृत्ति कुवलादौ तदभावात् यद्वा विशेषस्य महत्त्वकारणस्यैवावयवबहुत्वमहत्त्वप्रचयानां कुवलाद्यवयवेषु भावात् सद्भावात् विशेषाभावात् विशेषस्य अणुत्वकारणस्य महत्त्वासमानाधिकरणद्वित्वस्य कुवलाद्यवयवेष्वभावादसद्भावादित्यर्थः ॥

[1] महत्त्वमणुत्वञ्च द्वयमप्येकस्मिन् काले ऽनुभूयते, ते च महत्त्वाणुत्वे परस्परविरोधिनी नैकत्राश्रये सह सम्भवतः, अतो महत्त्वकारणसद्भावान्महत्त्वप्रत्ययस्तत्र मुख्योऽणुत्वप्रत्ययप्रयोगौ च भाक्तावित्यर्थः ॥

[2] दृश्यते तथा वस्तुगत्या महत्स्वेव कुवलामलकबिल्वेषु स्थूलस्थूलतरस्थूलतमव्यवहारेण भवितव्यमित्यर्थः यथा वस्तुगत्या शुक्लेष्वेव पटशङ्खस्फाटिकादिषु शुक्लशुक्लतरशुक्लतमव्यवहारः ॥

[3] नन्वणु महत्परिमाणमितिव्यवहारबलान्महत्त्वेऽपि परिमाणे महत्त्वमणुत्वेऽप्यणुत्वमस्तीति ज्ञायते तत् कथं द्रव्यमात्रवृत्तित्वमनयोः कथं वा गुणे गुणवृत्तित्वविरोधो नापद्यत इत्यत आह । यथा गुणा कर्माणि नाणुत्वमहत्त्ववन्ति तथा ऽणुत्वमहत्त्वे अपि नाणुत्वमहत्त्ववती इत्यर्थः प्रयोगश्च भाक्तो द्रष्टव्यः ॥

lity in quality? In answer to this it is stated that as quality and action do not possess quality and action, so also greatness and smallness do not possess greatness and smallness, and that such a conventional notion is to be regarded as derivative U.

**कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः ॥ १५ ॥**

Aph 15 Actions are explained to be [void] of actions, and qualities of qualities

[1] It may be urged that as qualities are possessed of qualities—and how else could there be such conventional notions as a loud sound, one sound, twenty-four qualities &c?—and as actions are possessed of actions—and how else could there be such cognitions as, It goes quickly, It goes rapidly?—so in like manner greatness and smallness must also be possessed of greatness and smallness In answer to this it is stated that actions are not possessed of actions, nor are qualities possessed of qualities, and that in like manner greatness and smallness are not possessed of greatness and smallness, but the conventional notion is in all these cases derivative. U

**अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः ॥ १६ ॥**

Aph 16 Actions moreover and qualities are explained to be [void] of smallness and greatness

[2] It may be urged than in virtue of such conventional notions as small actions, great actions, small qualities, great qualities, the extension greatness and smallness must be concluded to exist in action and quality. It is therefore stated that as the extensions greatness and smallness do not exist in the extensions greatness and smallness, in like manner neither of those extensions exists in action or in qualities, and that the aforesaid conventional notions have as their objects increase and diminution V

**एतेन दीर्घत्वह्रस्वत्वे व्याख्याते ॥ १७ ॥**

Aph 17. By this length and shortness are explained

[3] It is stated that shortness and length are similar to smallness and greatness As smallness and greatness are proved to exist by the conventional notions of great and small, so shortness and length are proved to exist by the conventional notions of long and short In like manner also the notion and convention that one thing is shorter or is longer than another have for their object increase and diminution V.

**अनित्ये ऽनित्यम् ॥ १८ ॥**

Aph 18 In the non-eternal [extension] is non-eternal.

[1] Extension is non-eternal in the non-eternal. It is in consequence of the destruction of its substratum that it ceases to exist It is not to be maintained that in a water-pot and the like, where there is an increase or diminution by two, three or more atoms, there is another extension recognised by perception, on the ground that there is in this case no destruction of the water-pot &c inasmuch as there exists in regard to it the recognition that it is the same water-pot For in the case of a diminution or increase of the atoms there is necessarily a destruction commencing in the tertiary atomic aggregates and terminating in the composite wholes, there being necessarily a destruction of the binary aggregates; for the sum of destroying causes fails not in obtaining its effect through any difficulty with regard to the recognition In the case of an increase in the body &c there is necessarily a destruction of the composite whole in consequence of the necessity of the destruction of the non-coinherent cause Nor can it be urged, Where there is not destruction of a piece of cloth &c, how can there be an addition of extension resulting from conjunction with other threads? For in this instance there must needs be destruction of the piece of cloth resulting from the destruction of the conjunction of the threads, which conjunction is the non-coinherent cause, which destruction is caused by the striking of the loom, &c Moreover if that other thread were a portion of that

---

[1] ननु यथा गुणा गुणवन्तः कथमन्यथा महान् शब्दः द्वौ शब्दौ एकः शब्दः चतुर्विंशतिर्गुणा इत्यादिव्यवहारः, कर्माण्यपि च कर्मवन्ति प्रतीयन्ते कथमन्यथा शीघ्रं गच्छति द्रुतं गच्छतीति व्यवहारः तथाचाणुत्वमहत्त्वे अपि न तद्वती स्यातामित्यत आह। कर्मभिः कर्माणि न। द्वन्ति गुणैश्च गुणा न तद्वन्तस्तथाऽणुत्वमहत्त्वे अपि न तद्वती, व्यवहारस्तु सर्वत्र भाक्त इत्यर्थः ॥

[2] नन्वणूनि कर्माणि महान्ति कर्माणि अणवो गुणा महान्तो गुणा इत्यादिव्यवहारबलात् कर्मणि गुणे च अणुत्वं महत्त्वञ्च परिमाणं सेत्स्यतीत्यत आह। यथा ऽणुत्वमहत्त्वपरिमाणयोर्नाणुत्वमहत्त्वपरिमाणे तथा कर्म्मणि गुणेषु च न तदुभयम् उक्तव्यवहारश्चापकर्षोत्कर्षविषयका एवेति ॥

[3] ह्रस्वत्वदीर्घत्वयोरप्यणुत्वमहत्त्वतुल्यतेत्याह। यथा अणु महदिति-व्यवहारसिद्धे अणुत्वमहत्त्वे तथा ह्रस्वं दीर्घमितिव्यवहारसिद्धे ह्रस्वत्व-दीर्घत्वे एवमिदमस्माद् ह्रस्वमिदमस्माद्दीर्घमित्यादिप्रत्ययव्यवहारावप्यपकर्षोत्कर्षविषयकावेवेत्यर्थः ॥

[1] परिमाणमनित्ये अनित्यमाश्रयविनाशादेव तन्नश्यतीत्यर्थः नच घटादौ त्रिचतुरादिपरमाणुविश्लेषे तदुपचये वा परिमाणान्तरं प्रत्यक्षसिद्धं स एवायं घट इत्यादिप्रत्यभिज्ञायास्तत्र सत्त्वेन घटादेराश्रयविनाशादिति वाच्यं परमाणुविश्लेषे तदुपचये वा द्व्यणुकनाशस्यावश्यकत्वेन त्रसरेण्वाद्यन्त्यावयविपर्य्यन्तनाशस्याप्यावश्यकत्वात् नहि विनाशसामग्री प्रत्यभिज्ञाभिया कार्य्यं नार्ज्जयिष्यति शरीरादाववयवोपचयेऽसमवायिकारणनाशस्यावश्यकत्वादवयविनाश आवश्यकः नच पटाविनाशेऽपि तन्त्वन्तरसंयोगात् कथं परिमाणाधिक्यमिति वाच्यं तत्रापि वेमाद्यभिघातेनासमवायिकारणतन्तुसंयोगनाशादेव पटनाशस्यावश्यकत्वात् किञ्च तन्त्वन्तरस्य तत्पटावयवत्वे पूर्व्वं तत्पट एव न स्यात् तत्तन्तुरूपकारणाभावात् तत्तन्तोरवयवत्वाभावे च न तेन परिमाणाधिक्यं संयुक्तद्रव्यान्तरवत् तस्मात्तत्र तन्त्वान्तरसंयोगे सति पूर्व्वपटनाशात्पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्य्यम् अवयविनः प्रत्यभिज्ञानन्तु साजात्येन सैवेयं दीपकलिकेत्यादिवत्। नच पूर्व्वतन्तव एव तन्त्वन्तरसहकारात् पूर्व्वपटे सत्येव पटान्तरमारभन्त इति वाच्यं मूर्त्तयोः समानदेशताविरोधादिति संक्षेपः ॥

क्तिरिति वैयाकरणाः । कार्यान्विताभिधानाङ्गीकारेण कार्यान्वयरूपेण वाक्यार्थे शक्तिरिति गुरवः । इतरान्विताभिधानाङ्गीकारेणान्वयरूपे वाक्यार्थे शक्तिरिति वेदान्तिनः । वैयाकरणानां वाक्यार्थो विशेष्य इतरयोस्तु विशेषणभूत इति भेदः । संसर्गमर्यादया वाक्यार्थभानमिति गौतमीयाः । वाक्यार्थे लक्षणेति सिद्धान्तः । तत्र वैयाकरणास्तावत् । भवति भूयात् बभूव रामः रामानित्यादौ श्रूयमाणतिकारविसर्गादीनां वाचकता न तु भूधातुलकारसुबाद्युपस्थापनद्वारा ऽर्थप्रत्यायकत्वम् । आदेशिनां वाचकत्वकल्पने आदेशानां तदुपस्थापकत्वकल्पने गौरवात् । व्याकरणभेदेनादेशिनामननुगमाच्च । अन्यथा ऋषभो वृष इत्यादावप्यन्यतरेणान्यतरस्मरणेनैकत्रैव शक्त्यापत्तेः । अतः श्रूयमाणानुपूर्वीविशिष्टा वर्णा वाचका न तु धात्वाद्युपस्थापका इति वर्णस्फोटः । एवं हरिणा हरये रामात् हरेरित्यादौ पदादेशविभागाभावात्कस्य चिदंशस्य द्रव्यवाचकत्वं कस्य चित्करणत्वादिवाचकत्वमिति नियन्तुमशक्यत्वात् संपूर्णस्यैव करणत्वादिविशिष्टहरिवाचितेति पदस्फोटः । एवं कृष्णोहि रक्षैनमित्यादौ वाक्येंशविभागाभावादेकारघटितानुपूर्वीकस्यागमनवाचकस्यात्र सत्त्वेमानाभावाद्वाक्यस्यैव विशिष्टार्थे शक्तिरिति वाक्यस्फोटः । स द्विविधः सखण्डवाक्यस्फोटो ऽखण्डवाक्यस्फोटश्च । आद्यो द्विधा । पदरूपखण्डवाक्यस्फोटो, वर्णरूपखण्डवाक्यस्फोटश्च । तथाहि । विष्णोवेत्यादिवाक्येषु आकाङ्क्षादिसहकृततत्तत्पदस्मारितपदार्थानां संसर्गरूपवाक्यार्थावगमेपि तस्य शाब्दत्वसिद्धये वाक्यस्य शक्तिः कल्प्यते । सैव वाक्यस्फोटः । सा चाज्ञातैव स्वरूपेण हेतुः, अन्वितशक्तिवादिमते अन्वयांशशक्तिवत् । हरिद्रायां नद्यां घोष इति वाक्यद्वान्वयाव्यवहितपूर्वक्षणे तदवगमो वा कल्प्यते । यद्वा हरे ऽवेत्यादौ पदविभागानिर्णयाद्वर्णत्रयात्मकवाक्यस्य संबोध्यहरिकर्तृकरक्षणे शक्तिरूपः स्फोटः । तदा वर्णरूपः खण्डवाक्यस्फोटः । अस्याश्च व्यवहारकाले ग्रहः । न चैवं वाक्यस्य पदवत्स्मारकत्वापत्त्या ऽननुभावकत्वापत्तिः । अनुभवत्वस्य प्रत्यक्षमात्रवृत्तितयेष्टत्वात् । यथार्थज्ञानजनकत्वस्यैव वाक्यप्रमाणत्वात् । आकाङ्क्षादिसहकृतपदार्थस्मरणजन्यार्थज्ञानजनकत्वस्यैवानधिगतार्थगमकतया प्रामाण्याविघातः । यद्वा वाक्ये बोधकत्वातिरिक्तः संबन्धो न शक्तिः, मानाभावात् । हस्तिपकादौ तु तस्य मानान्तरगम्यत्वाद्युक्तं तेन तत्स्मरणम् । अतो न स्मारकत्वापत्तिलेशोपि । एवं चाकाङ्क्षादिज्ञानस्य हेतुत्वाभावात्तात्पर्यज्ञानस्यैव हेतुतया कार्यकारणभावकल्पनालाघवम् । यद्वा घटमानयेत्यादिवाक्येषु ध्वनिधर्मैस्तारत्वमन्दत्वादिभिरिव घटत्वादिध्वनिधर्मैरेव एकशब्दो वर्णरूपो ऽभिव्यज्यते । स एव वाक्यस्फोटः । एवं पदस्फोटेपि द्वैविध्यमुन्नेयम् । एवं च एकं पदमेकं वाक्यं महत्पदं महद्वाक्यं शब्दात् प्रत्येमीत्याद्यनुभवोपपत्तिः । वर्णानामनेकत्वेन महत्वाभावेन च तदनुपपत्तेरित्याहुः ॥ परे तु । यथा बलवता प्रेरित इषुरेकेनैव वेगाख्यव्यापारेण वर्मच्छेदमुरोभेदं प्राणहरणं शत्रोः करोत्येवं शब्द एकेनाभिधाव्यापारेण पदार्थस्मृतिं वाक्यार्थानुभवं च करोतीति यत्परः शब्दः स शब्दार्थ इति वाक्यार्थे शक्तिमाहुः । तदयुक्तम् । पूर्वो धावतीत्यत्र परस्य पुत्रस्ते जात इत्यादिषु हर्षादीनां,गच्छसि चेदित्यादौ मागा इति निषेधस्य वाक्यार्थतापत्तेः । अत एव तादृशार्थप्रत्ययाय व्यञ्जनैवाङ्गीकृता । तच्च व्यञ्जनानिरूपणे स्पष्टमिति दिक् ॥ के चित्तु वाक्यार्थे तात्पर्याख्यं वाक्यस्य वृत्यन्तरमाहुः ॥

प्राभाकरास्तु । कार्यान्विते पदानां शक्तिः । तथाहि । पदेषु स्मारिका, ऽनुभाविका,चेति शक्तिद्वयम् । तत्र स्मारिका जातौ । अनुभाविका कार्यान्विते । एवं च घटादिपदानि घटत्वादिजातिस्मरणद्वारा घटादेः कार्यान्वयानुभवजनकानि । तथाहि । सर्वत्र व्यवहारेणैव शक्तिग्रहः, प्रयोज्यवृद्धस्य प्रयोजकवाक्यश्रवणानन्तरं गोकर्मकानयनचेष्टया तादृशकृतीच्छानुमानद्वारा स्वप्रवृत्तौ कार्यताज्ञानस्य हेतुत्वदर्शनात्कार्यताज्ञानमनुमाय कार्यताज्ञानहेतुत्वमवधार्य तस्यासति वृत्त्यन्तरे तदर्थशक्तिं विनानुपपन्नतया कार्यान्वये अनुभाविकां शक्तिमवधारयति । कार्यं चापूर्वमेवेति यत्र कार्यवाचकपदाभावस्तत्र न वाक्यार्थबोधः किं तु पदार्थस्मरणमात्रम् । लिङादियुक्तलौकिकवाक्यस्य च लक्षणया ऽऽनयनादिरूपकार्यान्वितबोधकत्वमित्याहुः ॥

वेदान्तिनस्तु इतरान्वित एव शक्तिग्रहो न तु कार्यान्विते । तथाहि । प्रयोजकवाक्यस्य आनयनकर्मत्वविशिष्टगोरूपेर्थे शक्तिमवधार्यावापोद्वापाभ्यां गवादिपदस्य गोत्वादौ शक्तिमवधारयन्नाद्यव्युत्पत्तिगृहीतान्वयांशे शक्तिमत्यजन्नानयनान्विते एव शक्तिमवधारयति । एवं चान्वयेपि शक्तिरित्याहुः ॥

नैयायिकास्तु समभिव्याहारेण वाक्यार्थबोध इति घटानयनविशिष्टसंसर्गज्ञाने तादृशानुपूर्वीज्ञानस्य हेतुतामात्रकल्पने लाघवात् । शाब्दत्वं च न शब्दवृत्तिविषयत्वं किं तु शब्दजन्यप्रतीतिविषयत्वम् । तेन वृत्त्यविषयस्याप्यन्वयस्य शाब्दत्वोपपत्तिरित्याहुः ॥ सिद्धान्तस्तु वाक्यस्य वाक्यार्थे लक्षणा । न च शक्याभावात् कथं लक्षणेति वाच्यम् । बोध्यसंबन्धस्यैव लक्षणात्वात् । घटमानयेत्यादिवाक्ये घटानयनसामान्यबोधेपि तद्विशेषबोधस्य लक्षणां विनानुपपत्तेः । नहि घटानयनसामान्य

वाक्यार्थः । ज्ञानेच्छाप्रवृत्तानां समानप्रकारकत्वसमानविशेष्यकत्वेन हेतुहेतुमद्भावाद्विशेषविषयकेच्छाप्रवृत्त्यनुपपत्तेः । अतस्तद्विशेषरूपवाक्यार्थस्य लाक्षणिकत्वं युक्तमिति स्फुटीकरिष्यते चैतत्तद्भूताधिकरणे ।

अवलोक्य जरद्भिबन्धजात-
मणिमन्यानि तदीयटिप्पणानि ।
अनवाप्य मुदं ततो मुदर्थे
लिखितो ऽयं निजकल्पितो विशेषः ॥ १ ॥

---

## ॥ अथ बालभारतकाव्यस्य ॥

### ॥ शल्यपर्व ॥

युष्मान् शमसुधाम्भोधिः पायाद् द्वैपायनो मुनिः ।
पापतापं न कः शास्त्रैर्यस्योर्मिभिरिव त्यजेत् ॥ १ ॥
ततो निध्याय निःशेषनिधनं प्रधनं पुनः ।
नृपमेत्य जगौ दुःखैः संजयः खञ्जयन् वचः ॥ २ ॥
एको[1] रराज शौर्ये च दाने च प्रश्रये च यः ।
तस्मिन् कर्णे जगत्कर्णेन्द्रियैकग्राह्यतां गते ॥ ३ ॥
उड्डीनजीवितो राजन् पुत्रस्ते कर्णजीवितः ।
भूताविष्ट इव स्वेषां भियेऽभूद्विकलश्चलन् ॥ ४ ॥
बाढं कृपेण संध्यर्थमर्थितस्त्वत्सुतोऽवदत् ।
कः सुहृद्बन्धुभिर्मेलं कर्ता मेऽलं मृधं विना ॥ ५ ॥
ततो न मे समौ कृष्णाविति निष्णातशान्तवाक् ।
राज्ञा द्रौणिमतेऽरातिशल्यं शल्योऽभ्यषिच्यत ॥ ६ ॥
अमुं द्रोणार्किभीष्मेभ्योऽधिकमर्जुनदुर्जयम् ।
स्वयं जहीति कृष्णोक्त्या शल्यं वव्रे युधिष्ठिरः ॥ ७ ॥
अथ संभूय भूयोभिर्योध्यं नैकेन केनचित् ।
इत्युक्त्वा सर्वतोभद्रं व्यूहं मद्रपतिर्व्यधात् ॥ ८ ॥
बलं विभिद्य[2] शैनेयधृष्टद्युम्नशिखण्डिभिः ।
कर्मसाक्षिणि साक्षित्वं गते धार्मिस्ततोऽचलत् ॥ ९ ॥
प्रावर्तत ततः सङ्ग्रामसङ्ग्रामसरच्छरम् ।
छन्नदिक् छत्रच्छायोच्छलन्नवरविच्छवि ॥ १० ॥
वध्यप्राणिगणे तस्मिन् रणे यममहानसे ।
प्रातर्धूलिच्छलाद् धूमस्तोमो व्योमोदरं ययौ ॥ ११ ॥

असिदण्डैस्तदा कुट्ट्यमानानां मुण्डकैतवात् ।
राज्ञां यमस्य धान्यानामिव प्रोच्छलितं कणैः ॥ १२ ॥
कृपभक्तो गुणभृत्सेतुमुल्लङ्घ्य क्षतजार्णवम् ।
क्षतारयः श्रियं प्राप्य रेमिरे रामवद्भटाः ॥ १३ ॥
पितृव्यमातुलभ्रातृपितृपुत्रसुहृत्क्षयात् ।
निराशा जीवितव्येऽपि घोरं युयुधिरे भटाः ॥ १४ ॥
हासैः शुभ्रोऽसिभिः श्यामो वाहिन्योः कोऽप्यभूत् तयोः ।
संभेदो मज्जतां मुक्त्यै गङ्गायमुनयोरिव ॥ १५ ॥
सत्यसेनं सुषेणं च चित्रसेनं च कर्णजान् ।
नकुलो युद्धवैचित्र्यचण्डः कुण्डलिनोऽवधीत् ॥ १६ ॥
एवं विपक्षवक्षांसि दारयिष्यामि संगरे ।
इत्याख्यातुमिव स्वर्णसीतां केतौ प्रदर्शयन् ॥ १७ ॥
धिङ्मां मयैव भीष्माद्या हताः प्रागेव सैष यत् ।
नाभ्यपेक्षीति तन्वानः पश्चात्तापं कुरुप्रभोः ॥ १८ ॥
संहरन् रक्तलौल्येन गताभिः काण्डभङ्गिताम् ।
कीनाशदासजिह्वाभिरिवारीन् मद्रपोऽविशत् ॥ १९ ॥

विशेषकम् ।

शल्ये प्रहरति स्वैरं पत्त्यश्वरथकुञ्जरम् ।
खं दिशोऽपि द्विषः शल्यमयान्येव व्यलोकयन् ॥ २० ॥
तेन काण्डहतः शैलशृङ्गादिव रथादथ ।
भीमः सिंह इवाधावत् क्ष्वेडामुखरिताम्बरः ॥ २१ ॥
भेजे भीमो गदाभग्नमहेन्द्रस्यन्दनस्ततः ।
दन्तक्षताद्रिशृङ्गस्य मतङ्गजपतेस्तुलाम् ॥ २२ ॥
पदधूतासु धूलीषु भीमशल्यावथोद्गदौ ।
भ्रेमतुर्मण्डलावर्तैर्मृत्युवात्यावशाविव ॥ २३ ॥
एतौ मिथो गदापातैः क्षुण्णयोः खलु तेजसोः ।
कणैरिव स्फुलिङ्गैर्द्यां द्योतयन्तौ विनेदतुः ॥ २४ ॥
तौ पेततुस्त्वरातारौ परिहृत्य परस्परम् ।
वीरावुभयतो यन्त्रनिर्मुक्तौ गोलकाविव ॥ २५ ॥
अथेत्य स्वस्वसेनाभिनोभितां गमितौ हृतौ ।
संज्ञामाप्य रथारूढौ गूढौ समितिं चेरतुः ॥ २६ ॥
चलदस्त्रदलो दन्तिदन्तालीपुष्पितस्तदा ।
सिषेवे रणकल्पद्रुः स्वर्गस्त्रीकाङ्क्षिभिर्भटैः ॥ २७ ॥
सद्यासन्नीकृतं ब्रह्मलोकं क्षितिभृतां यताम् ।

---

[1] राजन् इति पा० ।
[2] विभज्य इति पा० ।

दुर्योधनास्त्रैरग्रेऽभूच्चेकितानो नृपस्तदा ॥ २८ ॥
तेजोभिरुज्ज्वलैर्भूपसहस्रद्वयघातजैः ।
सहस्ररश्मिद्विगुणप्रभावोऽभूद्युधिष्ठिरः ॥ २९ ॥
रत्नाढ्यपुङ्खैरापुङ्खं हृन्मग्नैः शल्यसायकैः ।
आलिङ्ग्यत मृधे धार्मिः कौस्तुभाङ्घ्रियया श्रिया ॥३०॥
उड्डाययति शल्येषुमारुते तृणवद् द्विषः ।
चकम्पे द्युसदां चक्रैर्वियत्कासारवारिजैः ॥ ३१ ॥
हतसूतस्त्वरातारहयः कुरुपते रथः ।
निर्ययौ भीमबाणेभ्यः पताकाङ्कुष्ठनर्तकः ॥ ३२ ॥
पार्थास्त्रविरथो द्रौणिर्निहत्य सुरथं नृपम् ।
बिलं बिलशयाशीव भोगी तद्रथमास्थितः ॥ ३३ ॥
क्षितिभृद्भ्यः क्रुधा रक्ते रक्ताब्द इव मद्रपः ।
रक्तरक्तैः शरैर्वर्षन्नकर्षद्रक्तनिम्नगाः ॥ ३४ ॥
वृतः पाण्डवशैनेयैर्मौलिहस्तक्रमैरिव ।
युधिष्ठिरवपुः शल्यं मूर्तो मृत्युरिवाद्रवत् ॥ ३५ ॥
मिथोऽस्त्रपातविरथौ रेजतुर्धार्मिमद्रपौ ।
महीमूलगतौ प्रातः सूर्याचन्द्रमसाविव ॥ ३६ ॥
द्विषित्क्षयानुमेयोऽस्थाद् गुप्तं यो दक्षिणे भुजे ।
तमाकृष्य यमं खड्गमूर्त्याधावत मद्रपः ॥ ३७ ॥
मद्रेशचन्द्रहासेन पतता मूर्ध्नि भूभृताम् ।
निघ्नता सिन्धुरध्वान्तानसृक्सिन्धुरवर्ध्यत ॥ ३८ ॥
कुम्भिकुम्भभिदालग्नमुक्ताव्यक्तरदस्तदा ।
जहास यशसा शल्यकृपाणः पार्थपौरुषम् ॥ ३९ ॥
दिव्यास्त्रैरर्जुनादीनां महेन्द्रः क्व नु पात्यताम् ।
अजातरिपुणा कोपाद् दृष्टोऽप्यासीन्न भस्म यत् ॥ ४० ॥
अथ यां शंभवे त्वष्टा सृष्टवान् दैत्यदारिणीम् ।
सर्वशक्त्येव शक्तिं तां शल्याय प्राक्षिपन्नृपः ॥ ४१ ॥
हतस्तया सहस्रघ्न्या सहास्रो हृदि मद्रपः ।
शेषशीर्षसहस्रस्य व्यथां भुवि पतन् ददौ ॥ ४२ ॥
धावन् शल्यानुजः क्रुद्धो विचित्रकवचाभिधः ।
युधिष्ठिरक्षुरप्रेणाभिमुखोऽप्यमुखीकृतः ॥ ४३ ॥
धावत्सु मद्रसैन्येषु ततः कञ्चुकिषु क्रुधा ।
पक्षिभिः काञ्चनै रौद्रैः सुपर्णतनयायितम् ॥ ४४ ॥
भीमेनाभ्रंलिहारातिशवालिनगमालिनी ।
निर्मनुष्या महारण्यभूरिवाकारि युद्धभूः ॥ ४५ ॥
शैनेयभल्ललूनेन शाल्वभूपालमौलिना ।
दृष्टेन राहुणेवाशु म्लानं कुरुमुखेन्दुभिः ॥ ४६ ॥
दुर्योधनशरोदस्तैर्भेजे द्विट्चक्रमौलिभिः ।
भुञ्जानदण्डभृत्सैन्योत्क्षिप्रवायसपिण्डता ॥ ४७ ॥
स्वीकर्तुमिव निःशेषा तेन द्विषिचमूः शरैः ।
आपुङ्खमग्नैः पुङ्खस्थनिजनामभिरङ्किता ॥ ४८ ॥
सुशर्मकृपहार्दिक्यद्रोणभूसौबलाकुलिः ।
अरातिषु कुरुक्ष्मापो यमपाणिरिवापतत् ॥ ४९ ॥
कार्योऽद्य समरस्यान्त इत्युद्भ्रान्तपराक्रमैः ।
ततः कल्पान्तकालोग्रैः संरब्धं कुरुपाण्डवैः ॥ ५० ॥
मा गा बलस्व तिष्ठेहि पूर्वं प्रहर हन्मि तत् ।
इत्यन्तरेऽस्त्रपातानामश्रूयन्त भटोक्तयः ॥ ५१ ॥
शस्त्रैरेव भटाः शस्त्रारवैरेव भटारवाः ।
अहन्यन्त तदा तस्मिन् समरे त्रस्तखेचरे ॥ ५२ ॥
लोकान्तध्वान्तदुर्भेदे ततो रजसि विस्तृते ।
शब्दा एव घ्नतामासन् स्वान्यपक्षोपलक्षणम् ॥ ५३ ॥
क्व सुशर्मा क्व हार्दिक्यः क्व द्रौणिः क्व सुयोधनः ।
क्व सौबल इति व्यापुः खं तदा पाण्डवोक्तयः ॥ ५४ ॥
जयत्सेनो महाबाहुर्जैत्रो दुर्विषहोऽरिहा ।
दुर्मर्षणो दुःप्रधर्षः समं सहसुवर्चसा ॥ ५५ ॥
सुजातः श्रुतवान् वातवेगो भूरिबलोऽप्यमी ।
राजन् भीमेन पुत्रास्ते त्रयोदश तदा हताः ॥ ५६ ॥
युग्मम् ।
त्रयोदशानां रक्षेषु स तेषां बिम्बितो दधौ ।
चतुर्दशजगत्त्राणे द्राक् चतुर्दशतामिव ॥ ५७ ॥
सर्वे जयाय धावन्ति मया लब्धोऽद्य संजयः ।
इति ब्रुवाणः शैनेयो राजन् मामग्रहीत् तदा ॥ ५८ ॥
उग्रकर्मा सुशर्माणं सानुजानुगनन्दनम् ।
स्वर्गमार्गसुशर्माणं ससैन्यं निर्ममेऽर्जुनः ॥ ५९ ॥
तदा मदाढ्यो भीमेन भवत्सूनुः सुदर्शनः ।
मरुन्मृगाक्षीवक्षोजस्तम्बे स्तम्बेरमीकृतः ॥ ६० ॥
पृष्ठघातं छलात् कुर्वन् सबलः सुबलात्मजः ।
अदृष्टव्रणवज्जघ्ने सहदेवेन शस्त्रिणा ॥ ६१ ॥

गृहीतां द्रोणतो युद्धविद्यामुद्योतयन्नयम् ।
उलूकं शकुनेः सूनुं ससैन्यौघमपातयत् ॥ ६२ ॥
धृष्टद्युम्नगिरा हन्तुमुद्यतादथ सात्यकेः ।
प्रत्यक्षीभूय मां व्यासो विश्वदृश्वा व्यमोचयत् ॥ ६३ ॥
अदर्शि द्रौणिहार्दिक्यकृपशेषान्मया रणात् ।
एकाकी पद्गतिर्निर्यन्नेकादशचमूपतिः ॥ ६४ ॥
स मां ह्रीणोऽवदत् कथ्यं मत्पितुर्यत् तवात्मजः ।
हतबन्धुसुहृत्सैन्यो दुःस्थः श्रान्तो ह्रदेऽविशत् ॥ ६५ ॥
इत्युक्त्वा मायया सैष दैत्यानामब्धिवासिनाम् ।
संस्तभ्याम्भो ह्रदेऽविवत् संध्यारविरिवार्णवे ॥ ६६ ॥
क्व राजेति कृपद्रौणिहार्दिक्यै रथिभिस्त्रिभिः ।
भ्रमद्भिः कुरुवर्षान्ते मद्गिरासौ ह्रदश्रितः ॥ ६७ ॥
युधिष्ठिराज्ञया राजन् युयुत्सुस्त्वत्सुतस्तदा ।
दारान् दुर्योधनादीनामादाय प्रस्थितः पुरम् ॥ ६८ ॥
तदा रथिसहस्राभ्यामयुतेनाङ्घ्रिचारिणाम् ।
मातङ्गसप्तशत्याश्वसहस्रैः पञ्चभिर्वृतः ॥ ६९ ॥
युधिष्ठिरश्चरान् दिक्षु प्रैषीच्चिन्ताभरातुरः ।
युद्धाद् दुर्योधनः क्वागाद्वैरमूलमितीक्षितुम् ॥ ७० ॥
हार्दिक्याद्याः शनैरूचुस्तदा ह्रदगतं नृपम् ।
वीरोत्तिष्ठ सहास्माभिः शत्रून् जयमुखान् जय ॥ ७१ ॥
तान् प्रशंसन्नथाचष्ट क्ष्माकान्तः श्रान्तवानहम् ।
विश्राम्यन्तु भवन्तोऽपि प्रातर्वध्या विरोधिनः ॥ ७२ ॥
इत्याकर्ण्यावनीगुप्ता लुब्धका धनलुब्धकाः ।
द्विषं शशंसुर्भीमाय ह्रदस्थं सोऽपि भूभुजे ॥ ७३ ॥
ततः सह महावीरैर्मुदां भूमिः स भूमिपः ।
ययौ ह्रदं चमूह्रादह्रीणदिग्दन्तिसंततिः ॥ ७४ ॥
मा बुध्येऽहं परैरेवेत्याज्ञयाथ कुरुप्रभोः ।
दूरे वटद्रुमं गत्वा द्रौणिमुख्या विशश्रमुः ॥ ७५ ॥
अथापत्य पृथापत्यतिलकस्तज्जलान्तिकम् ।
उच्चैर्द्विषन्तमुद्दिश्य मुकुन्दप्रेरितो जगौ ॥ ७६ ॥
विश्वत्रयीवशीकारकारणं ह्रदमध्यगः ।
प्रक्षालयसि किं राजन् यशश्चन्दनमण्डनम् ॥ ७७ ॥
मानेन हृज्जुषाप्यम्भःस्तम्भनं किं न शिक्षितम् ।
यत् ते ह्रदप्रवेशेऽस्मिन् साहचर्यं मुमोच सः ॥ ७८ ॥
उत्तिष्ठोत्तिष्ठ युद्धोत्थै रेणुभिः कीर्तिदर्पणम् ।
नीरप्रवेशविच्छायं वीरकोटीर मार्जय ॥ ७९ ॥
चिन्तामणिः क्षत्रियाणां रणस्तदधिकोऽपि वा ।
कदाचिद्याचतामुर्वीं ददाति दिवमप्यसौ ॥ ८० ॥
अथोद्यद्बुद्बुद[1]च्छद्मनिर्यन्मूर्तिमदक्षरम् ।
ह्रदवर्ती वचोऽवोचत् तं प्रति प्रतिभूपतिः ॥ ८१ ॥
युक्तमुक्तं त्वया वीर किंतु पृथ्व्या किमद्य मे ।
अर्था यदर्थमर्थ्यन्ते ते मृता मित्रबन्धवः ॥ ८२ ॥
स्वर्गे रिपूत्सवम्लानप्रमोदं ददते रणाः ।
तदेनं विश्ववन्द्येन प्राप्स्यामि व्रतवर्त्मना ॥ ८३ ॥
राजन् शमरसेनैव रचिताचमने मयि ।
मद्भुक्तोच्छिष्टनिर्मुक्तामिदानीं भुङ्क्ष्व मेदिनीम् ॥ ८४ ॥
अथाह पार्थः[2] किं भूप स्वं भूदानेन रक्षसि ।
भूलवोऽपि न मेने प्राक् कुलमुच्छेत्तुमेव किम् ॥ ८५ ॥
पार्थेभ्यः सूचिवेध्यापि न देयोर्वीतिसिद्धवाक् ।
कृत्स्नां दत्त्वाद्य तां भग्नप्रतिज्ञः किं न लज्जसे ॥ ८६ ॥
तदुत्तिष्ठ मृधेनास्तु तव वा मम वा मही ।
मा भूद्विजयसंदेहो मयि त्वयि च जीवति ॥ ८७ ॥
अथाह कौरवः क्रुद्धः सर्वानप्येष हन्मि वः ।
एकैकेन पृथग् युद्धं विधाय गदया रणात् ॥ ८८ ॥
अथ धार्मिस्तमाचष्ट तुष्टोऽहं तव शौर्यतः ।
इष्टेनास्त्रेण जित्वैकमप्यस्मासु भुवं भज ॥ ८९ ॥
अथाभ्यधत्त गान्धारीसूनुर्योऽङ्गीकरोति माम् ।
गदया स मया सार्धं समरेऽस्तु समाहितः ॥ ९० ॥
इत्युक्त्वाशु गदापाणिर्ह्रदादुत्थितवानयम् ।
शोणाक्षः परिभुक्तश्रीर्जनार्दन इवार्णवात् ॥ ९१ ॥
सौभद्र इव युष्माभिर्नास्माभिस्त्वं निहन्यसे ।
इत्युक्त्वास्मै शिरस्त्राणं ददौ वर्म च धर्मजः ॥ ९२ ॥
येन ते रोचते युद्धमाह्वयस्व तमित्यथ ।
सत्याङ्गजे गदत्याह दैत्याहतिबुधः क्रुधा ॥ ९३ ॥
पुनर्द्यूतमिदं मूढ किमारब्धमिह त्वया ।
अयमाहूयते चेत् त्वां तन्महाभाग का गतिः ॥ ९४ ॥

१ बुद्धि—इति पा० ।
२ अथाह तपसः सूनुस्तु—इति पा० ।

त्रयोदश समाः पुंसि गदाभ्यासमयोमये ।
अयं चक्रे कृती तेन भीमोऽप्येनं जयेन्नवा ॥ ९५ ॥
अथोत्थायावदद्भीमो मैवं वद गदाधर ।
हराम्येष द्विषः प्राणान् क्षणेन गदयानया ॥ ९६ ॥
अथाह्वयत तं गर्वी गर्जन् दुर्योधनो युधे ।
सोऽप्यधावत घोरेण ध्वनिना दारयन् दिशः ॥ ९७ ॥
तदा सरस्वतीतीरतीर्थचारी हलायुधः ।
तौ शिष्यौ नारदाद्बुद्ध्वा युद्धस्थौ द्रष्टुमागमत् ॥ ९८ ॥
अथाभ्युत्थानमातेनुः कृष्णाकुन्तीसुतादयः ।
चकोरा इव चन्द्रस्य रेवतीहृदयेशितुः ॥ ९९ ॥
स्यमन्तपञ्चके युद्ध सिद्धक्षेत्रे विभाति मे ।
इति दुर्योधनेनोक्ते सर्वे सत्यसुतादयः ॥ १०० ॥
दक्षिणेन सरस्वत्यास्तीर्थे शयननामनि ।
गत्वा सीरिणमावृत्य रणं द्रष्टुमुपाविशन् ॥ १०१ ॥
युग्मम् ।
आपत्य विरथावेव भीमदुर्योधनाविह ।
अतिष्ठतां गदापाणी मिथोगर्जिततर्जितौ ॥ १०२ ॥
सुरसिद्धर्षिगन्धर्वैः कुतुकाद् द्रष्टुमागतैः ।
तौ दृश्यमानौ समरे समानौ चेलतुस्ततः ॥ १०३ ॥
उद्गारैरिव पीतारितेजसोर्गदयोर्मिथः ।
तौ महाघातकीलाभिर्भासुरावभिजग्मतुः ॥ १०४ ॥
तर्जने वर्जने स्थाने चलने बलनेऽभ्रमौ ।
तौ जातौ चित्रचारीभिः स्वर्नारीनयनोत्सवौ ॥ १०५ ॥
वामदक्षिणगोमूत्रप्रभृती मण्डले क्रमात् ।
तयोः क्रमोद्धुतो रेणुरेवाचक्ष्यौ दिवौकसाम् ॥ १०६ ॥
दुर्योधनेन गदया भीमः पार्श्वेऽतिताडितः ।
शक्रेण पविना तार्क्ष्य इव नैष व्यकम्पत ॥ १०७ ॥
भ्रामयित्वा गदां वेगाद्वेगदर्शितदिग्भ्रमिम् ।
उच्चैर्व्यमुञ्चत् सामीरिस्त्वत्सुताय द्रुतोत्प्लुतः ॥ १०८ ॥
त्वत्सूनुर्वञ्चयित्वैनां तं मूर्ध्नि गदयार्दयत् ।
दन्तिदन्ताहतशिरा नायं गिरिरिवाचलत् ॥ १०९ ॥
गदा भीमेन मुक्ताथ क्षितिनाथेन वञ्चिता ।
पपात कम्पितक्षोणिभ्राम्यदद्रिकुलाचला ॥ ११० ॥
अथ वक्षसि दक्षेण भीमो भूपेन ताडितः ।
आलिलिङ्ग क्षणं कम्पी मूर्च्छां मीलितलोचनः ॥ १११ ॥
भीमेनाश्वस्य नृपतिस्ताडितः प्रपतन् भुवि ।
स्थितोऽसौ जानुहस्ताग्रै रिपुसिंह इवैक्ष्यत ॥ ११२ ॥
हर्षत्पाञ्चालचक्रेषु स क्रोशत्सु क्रुधोत्थितः ।
दिक्कूलंकषनिर्घोषः शङ्खे भीममताडयत् ॥ ११३ ॥
रक्तारुणः कम्पमानः पवमानसुतः क्षणम् ।
रेजेऽर्कबिम्बवत् कालक्रीडासरसि संगरे ॥ ११४ ॥
आहत्य भुवि भीमेन पातितस्तव नन्दनः ।
अविलम्बितमुत्थाय सोऽपि भीममपातयत् ॥ ११५ ॥
स्वतोऽप्यधिक एवायं तदा मेने युधि ध्रुवम् ।
त्वद्भूदैवैरपि यतः पूजितः पुष्पवृष्टिभिः ॥ ११६ ॥
भीमे प्रमृज्य कीलालं पुनर्युद्धार्थमुत्थिते ।
अधिकः कोऽनयोरित्थं पार्थपृष्टो हरिर्जगौ ॥ ११७ ॥
बली भीमः कृती भूपः कृतिना जीयते बली ।
छलयुद्धेन भङ्क्त्वोरू यदि भीमो जयत्यमुम् ॥ ११८ ॥
इति श्रुत्वोत्तरानृत्यगुरुः स्वामूरुमाश्वहन् ।
भीमे पश्यति हस्तेन नर्तयिष्यन्निव श्रियम् ॥ ११९ ॥
आदाय भीमस्तां संज्ञां प्रतिज्ञां स्वामथ स्मरन् ।
चचार विविधाश्चारीर्द्विषदूरुभिदामतिः ॥ १२० ॥
तेनाशु मुक्तामुल्लङ्घ्य गदां त्वत्सूनुना हतः ।
स मूर्च्छितः स्थितः पाणिवक्षःस्तब्धगदः क्षणम् ॥ १२१ ॥
तं मत्वा प्रहरिष्यन्तं नापपात पुनर्नृपः ।
निहन्यात् तदवस्थं चेत् तन्न जीवेद्वृकोदरः ॥ १२२ ॥
मूर्च्छान्ते तलमालोक्य तेनोर्ध्वं प्रेरिता गदा ।
मुञ्चतस्तलमुत्प्लुत्य नृपस्योरू बभञ्ज सा ॥ १२३ ॥
तदोत्पातसहस्रेण विश्वे वैधुर्यधारिणि ।
पपात विचलत्पादः श्रीलतापादपो नृपः ॥ १२४ ॥
निकारान् विषदानादीनुन्मादी श्रावयंस्तदा ।
पदा भीमोऽस्पृशन्मौलिमेकादशचमूपतेः ॥ १२५ ॥
अस्मान् द्यूतच्छलाज्जित्वा कृष्णां गौरिति ये जगुः ।
धर्मयुद्धान्निहत्याद्य ब्रूमो गौरिति तान् वयम् ॥ १२६ ॥
इत्युद्दामवचा भीमो वार्यमाणोऽपि धार्मिणा ।
पुनर्नैकृतिकेत्युक्त्वा भूपं मूर्ध्नि पदास्पृशत् ॥ १२७ ॥

---

* एतदन्तं पद्यद्वयं प्रक्षिप्तम् ।

रुदन्नथाह त्वत्पुत्रं धार्मिर्बन्धो विधिर्बली ।
पितृव्यपुत्रयोरासीद्यद्वैरं नौ कुलान्तकृत् ॥ १२८ ॥
किं रे छलेन जित्वापि स्पृशसि क्ष्मापमङ्घ्रिणा ।
इत्युक्त्वाथ बली भीमं हली क्रोधादधावत ॥ १२९ ॥
कटेरधो न हन्तव्यं गदयेति विदन्नपि ।
अस्योरू भग्नवान् भीमः प्रतिज्ञापालने कृती ॥ १३० ॥
अस्योरुभङ्गं मैत्रेयमुनिशापस्तदाफलत् ।
इत्यादिभिस्तदा वाग्भिः शौरिणा बोधितो बलः ॥ १३१ ॥
पाण्डवाश्छलयोद्धारः कौरवा ऋजुयोधिनः ।
इत्यस्तु ख्यातिरित्युक्त्वा क्रुद्धोऽथ द्वारिकां ययौ ॥ १३२ ॥
युद्धे धर्मेऽप्यधर्मेऽपि पाण्डवाः काममाप्नुयुः ।
इत्यूचेऽथ वचः कृच्छ्राद्धार्मिणाभ्यर्थितो हरिः ॥ १३३ ॥
दिष्ट्या दुष्टस्य दत्तोऽङ्घ्रिस्त्वया मूर्ध्नि रिपोरिति ।
स्तुतोऽथ भीमः पाञ्चालैर्धार्मिलालितपौरुषः ॥ १३४ ॥
तानथाह हरिः पापैः स्वैरेवायं हतः पुरा ।
भीमेनाद्य हतोऽस्त्रेण वाग्भिः किं हन्यतेऽधुना ॥ १३५ ॥
स्फिङ्विष्टो भुवं दोर्भ्यामवष्टभ्यो न्नतानन: ।
भ्रूसङ्कटललाटोऽथ क्रुधाह त्वत्सुतो हरिम् ॥ १३६ ॥
रे कंसदासदायाद स्वैरधर्मैर्वयं हताः ।
त्वद्दिष्टैर्धर्मयोद्धारो नाधर्मैः किं हता मृधे ॥ १३७ ॥
भीष्मो भूरिश्रवा द्रोणः कर्णोऽहमपि कैतवात् ।
न्यपात्यामहि युष्माभिः पापिभिः शोच्यविक्रमैः ॥ १३८ ॥
धर्मयुद्धतनूशेषीकृतारिः सर्वकृत्यकृत् ।
आजन्मसुखितः संख्ये कः परोऽहमिवापतत् ॥ १३९ ॥
इत्युक्तवति वीरेऽस्मिन् मुक्ताः पुष्पस्रजः सुरैः ।
स्वं शोचन्तस्ततः पार्था द्विड्निवासान् समासदन् ॥ १४० ॥
अथोत्तीर्णसतूणास्त्रपार्थेऽन्तर्हितवानरः ।
साश्वः सरश्मिः सर्वाङ्गं दग्धः कृष्णोज्झितो रथः ॥ १४१ ॥
द्रोणकर्णास्त्रलीढोऽग्रेऽधुना मदवधीरितः ।
दग्धो रथोऽयमित्यूचे पार्थपृष्टोऽच्युतस्ततः ॥ १४२ ॥
अथामृत्युर्जयो भूतिः सर्वं नस्त्वत्प्रसादतः ।
इति स्तुवन् हरिं तत्र निवासानग्रहीन्नृपः ॥ १४३ ॥
याम ओघवतीं नाम श्रेयसेऽद्य सरस्वतीम् ।
इत्युक्त्वा शिबिरात् कृष्णोऽकृषत् सात्यकिपाण्डवान् ॥ १४४ ॥

इहान्तरे महार्तिर्मामूचे भूप भवत्सुतः ।
कृतं मे मायया पश्य पाण्डवैर्मानखण्डनम् ॥ १४५ ॥
शक्त्या संवलितश्चार्व्या चार्वाको यदि जीवति ।
स परिव्राट् सुहृद्वैरपारं मम गमिष्यति ॥ १४६ ॥
धन्योऽहं दिवि यास्यामि भविष्यन्ति कथाः पुनः ।
तौ मातापितरौ वृद्धौ स्वसा मुग्धा च दुःशला ॥ १४७ ॥
इत्यादिवादिनानेन विषमस्थेन भूभुजा ।
राजन् वच्मि किमात्मानं भूरुहोऽपि प्ररोदिताः ॥ १४८ ॥
अथाकर्ण्य व्यथाकीर्णां कथकेभ्यः कुरूद्वहम् ।
तीर्थं ते द्रौणिहार्दिक्यकृपाः शयनमाययुः ॥ १४९ ॥
तत्र निर्लुठिताङ्गस्तैरिलापतिरलोक्यत ।
स्वर्गं गन्तुमिव चोर्वीं पृच्छन्नालिङ्गनैर्घनैः ॥ १५० ॥
अथावदत् कृपीसूनुरश्रुधाराललोचनः ।
पृथ्वीपतेर्नियमयन् विकीर्णान् मूर्धजान् मुहुः ॥ १५१ ॥
विश्वं विश्वंभरागोलं लोलयित्वा चमूभरैः ।
धिग् धिगद्यागतो राजन्नवस्थां कथमीदृशीम् ॥ १५२ ॥
संव्यज्यथा यथाकामं चामरैर्यः पुराद्य सः ।
त्वं मरुद्भिः स्फुरत्केशः स्थलानां चामरीकृतः ॥ १५३ ॥
स्पृष्टाङ्घ्रिणापि न प्राग् या दुर्भगेव महीपते ।
सुभगामिव सर्वाङ्गमालिङ्गस्यद्य तां महीम् ॥ १५४ ॥
तवार्कस्य च तेजोभिः स्पर्धया तपतोर्मिथः ।
यत् पुरा प्राविशन्मध्यं छत्रं कुत्र तदद्य ते ॥ १५५ ॥
अलङ्घ्यत भवान् वाहैर्यो मरुत्तरलैः पुरा ।
साद्य त्वां लङ्घते भूमिर्भूमिनाथ रजःकणैः ॥ १५६ ॥
कुम्भिकुम्भौ स्पृशन् कुम्भस्तनीभिर्वीक्षितो रुषा ।
यः पुरा स शिवाभिस्त्वन्क्ष्मागतो[1] वीक्ष्यसे मुदा ॥ १५७ ॥
क्वणं गीतिविरक्तेन चक्रचीत्कृतिकौतुकात् ।
पुरावाहि रथो येन स शृणोषि शिवारुती: ॥ १५८ ॥
इतस्ततः स्फुरन् वीरैरुक्तो जीवेति यः पुरा ।
उच्यसे स म्रियस्वेति पलादैः स्वस्वभाषया १५९ ॥
दिने दानभरश्रान्तो रात्रौ च स्त्रीकुचेषु यः ।
स ते हस्तः क्षितौ वेल्लन् न विश्राम्यति संप्रति ॥ १६० ॥
क्षितौ क्षिपन् मुहुर्बाहू मूर्धानं विधुवन् मुहुः ।

1 क्षताङ्गो इति पा० ।

मृद्नन् सास्रं मुहुश्चक्षुर्जगादाथ कुरूद्वहः ॥ १६१ ॥
दिष्ट्या साम्राज्यमासाद्य स्वविनाशभियाभवम् ।
क्वापि प्रत्यर्थिनां नाहमर्थिनां च पराङ्मुखः ॥ १६२ ॥
दिष्ट्या कलावसुस्थानदानेन सततं मया ।
चक्रिरे परमप्रीताः सज्जना दुर्जनाश्च ते ॥ १६३ ॥
परं प्रति भयोल्लासं बिभ्रद्भिरनिशं मया ।
दिष्ट्या धीरैश्च वीरैश्च सदा गोष्ठीरसः कृतः ॥ १६४ ॥
शुभवत् सकलोत्साहा दिष्ट्यानुसमयं मया ।
भवार्णवमहानावो गावो विप्राश्च पूजिताः ॥ १६५ ॥
लब्धं भीमस्य सांमुख्यात् कुरुदेशव्यवस्थितम् ।
दिष्ट्याभूदुज्ज्वलं राज्यकरणं मरणं च मे ॥ १६६ ॥
दिष्ट्या पुण्यप्रदा ब्रह्मकेशवेशा इव त्रयः ।
महाक्षयेऽपि जीवन्तो भवन्तो वीक्षिता मया ॥ १६७ ॥
तन्मास्म कुरुत क्षात्त्रोत्साहनिर्वाहशालिनः ।
शोकं लोकंपृणाशेषचरितस्य मृतस्य मे ॥ १६८ ॥
इत्युक्त्वा मौनिनि क्षोणिपतौ रोषारुणेक्षणः ।
पिंषन् करं करेणाह द्रौणिः साहसिकाग्रणीः ॥ १६९ ॥
दुःखाय क्ष्माप न तथा वधोऽप्यनुचितः पितुः ।
यथाद्य त्वदवस्थेयं मम मर्माणि कृन्तति ॥ १७० ॥
तदद्य पञ्च पाञ्चालान् पञ्च यज्ञसुतासुतान् ।
पाण्डवान् पञ्च पञ्चत्वं नयाम्यायान्ति चेत् पुरः ॥ १७१ ॥
तदादिश दिशः सर्वा नादयन् हर्षनिस्वनैः ।
यथा यामि पृथासूनुपृतनानाशमानसः ॥ १७२ ॥
इत्याकर्ण्य नृपः प्रीतः कृपमादिश्य तत्क्षणम् ।
सरस्वतीजलेनामुं सेनापत्येऽभ्यषेचयत् ॥ १७३ ॥
क्ष्मापसिंहमथालिङ्ग्य सिंहनादनदन्नभाः ।
दक्षिणाभिमुखं द्रौणिः सहार्दिक्यकृपोऽचलत् ॥ १७४ ॥
तरणौ वरुणावासं याते तदुदयैषिणः ।
शिबिरस्य समीपेऽमी गत्वा तस्थुर्विनद्य ते ॥ १७५ ॥
इति संजयवाचार्तौ गान्धारीं च नृपं च तौ ।
प्रतिबोधयितुं व्यासे समासेदुषि तत्क्षणम् ॥ १७६ ॥
युग्मम् ।
तयोः शापभयादेत्य पार्थशप्रेरितो हरिः ।
गृहीत्वा नृपतेः पादावरुदद्रोदयन् सभाम् ॥ १७७ ॥

अथोत्थाय कृती कृत्वा शौचमूचे जनार्दनः ।
गान्धारीं धृतराष्ट्रं च वचोभिर्दुःखगद्गदैः ॥ १७८ ॥
प्रकृष्टे दैवदृष्टेऽस्मिन् हन्त जातेऽन्वयक्षये ।
अत्यक्तधर्मौ युवयोः क्रोधपात्रं न पाण्डवाः ॥ १७९ ॥
युद्धोद्यते सुते तस्मिन् याचमाने जयाशिषम् ।
युवाभ्यामेव गदितं यतो धर्मस्ततो जयः ॥ १८० ॥
युष्मदाज्ञाकृतः पार्था द्रष्टव्याः पुत्रवत् ततः ।
मुहुर्ब्रुवाण एवेदमुदस्थात् सहसा हरिः ॥ १८१ ॥
निशायुद्धेऽस्तिधीर्द्रौणिस्तत् त्रातुं यामि पाण्डवान् ।
एवं ब्रुवन् सुतान् पाहीत्युक्तो राज्ञा हरिर्ययौ ॥ १८२ ॥
व्यासेऽप्याश्वासनावाचश्चञ्चयित्वा तिरोहिते ।
ज्ञातुं रजनिवृत्तान्तं संजयं प्राहिणोन्नृपः ॥ १८३ ॥
तानि स्मरन् कृपकृपीश्वरसिद्धुसिन्धु-
सूनुप्रबोधवचनान्यवधीरितानि ।
दुर्योधनप्रधनपातविमुह्यमान-
बुद्धिर्धृतिं न धृतराष्ट्रनृपः प्रपेदे ॥ १८४ ॥
भेजे श्रीजिनदत्तसूरिसुगुरोरर्हन्मतार्हस्थितेः
पादाब्जभ्रमरोपमानममरो नाम व्रतीन्द्रः कृती ।
शोभाशालिनि बालभारतमहाकाव्ये तदेकाक्षर-
ध्यानाधानमहाफलेऽत्र नवमं शल्यस्य पर्वागमत् ॥ १८५ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के सगदायुद्धं शल्यपर्व ॥ ९ ॥

---

॥ अथ बालभारतकाव्यस्य ॥

॥ सौप्तिकपर्व ॥

अथ ते व्योममानेन वर्धमाने वटे स्थिताः ।
निशि द्रौण्यादयो निद्रामद्रौणी पुनरापतुः ॥ १ ॥
अनिद्राणः स्वयं द्रौणिर्द्रागरिद्रोहचिन्तया ।
चिरं बभ्राम कान्तारचक्रे कौम्भिकचक्रवत् ॥ २ ॥
एष वृक्षशिखासुप्तं घूकेनैकेन केनचित् ।
निगृह्यमाणं साक्रन्दं काकलोकमलोकत ॥ ३ ॥
समिति द्विषतो जानन् दुर्जयानेकको बहून् ।
अथायं तद्वधोपायं तद्वदेव व्यचिन्तयत् ॥ ४ ॥
रयाज्जागरयित्वाथ सोऽयं हार्दिक्यमातुलौ ।

सौप्तिकेन द्विषः सुप्तान् हन्मीत्यवददुन्मदः ॥ ५ ॥
कृपोऽप्यूचे द्विषः सुप्तानगुप्तान् कवचायुधैः ।
निघ्नन् निर्विघ्न एव स्यान्नरकस्यातिथिर्नरः ॥ ६ ॥
तत् क्षत्रधर्ममाश्रित्य कर्मसाक्षिणि साक्षिणि ।
अरातीन् पातयिष्यामो यास्यामो वैरपारताम् ॥ ७ ॥
श्रमविद्राविणीं निद्रामेव सेवामहेऽधुना ।
आपृच्छ्य धृतराष्ट्रादीन् यामः प्रातररातिषु ॥ ८ ॥
कृत्येषु हि स्फुरद्वृद्धाङ्कुशः कुशलवान् पुमान् ।
इह वैधर्म्यदृष्टान्तः क्षितिकान्तः सुयोधनः ॥ ९ ॥
अथ क्रोधप्रबोधातिव्यक्तरक्तविलोचनः ।
निश्वसन् विश्वरौद्रोक्तिरूचे शारद्वतीसुतः ॥ १० ॥
भीष्मभूरिश्रवस्तातकर्णभूपानधर्मतः ।
तेषां हतवतां हन्त हतो को धर्ममीक्षते ॥ ११ ॥
स्मरतः समरोत्सङ्गे तातघातमधर्मतः ।
मम श्रमश्च निद्रा च कुतोऽस्तु भवतोरिव ॥ १२ ॥
भुजाभाजां प्रतिज्ञैकपालनं धर्मपालनम् ।
तत् तद्वधे प्रतिज्ञाते किं प्रष्टव्या जरत्तराः ॥ १३ ॥
अधुनापि ततो हन्मि निशि तान् निशितायुधः ।
किं मे धर्मैरिति प्रोच्य प्रचचाल रथेन सः ॥ १४ ॥
इति प्रतिज्ञया यान्तं तं तावप्यनुजग्मतुः ।
जन्तोः कर्मपरीपाकमिव बुद्धिक्रियाचयौ ॥ १५ ॥
अथेत्य शिबिरद्वारि महाभूतं प्रभूतदृक् ।
अत्यङ्घ्रिस्रं महाकायं दोर्निकायस्थितायुधम् ॥ १६ ॥
दृग्भिर्यद्भूरिभीमास्त्रं हरिवक्रोत्थितानलम् ।
रुण्डोपवीतिं तेऽपश्यंश्चकिताः कृत्तिचीवरम् ॥ १७ ॥
युग्मम् ।

रत्नदीप्ताहिकेयूरे सूरेन्दुशततेजसि ।
द्रौणिस्तत्राफलीभूतशस्त्रपातो व्यचिन्तयत् ॥ १८ ॥
उल्लङ्घ्य कृपहार्दिक्यौ वृद्धौ स्वश्रद्धया स्फुरन् ।
एतामापदमाप्तोऽहं महेशानं श्रयेऽधुना ॥ १९ ॥
इति ध्यात्वा हुताशे स्वं जुहोमीति स्तुतो हरः ।
तेनाग्रे वीक्षितं चाग्निकुण्डं कल्याणवेदिकम् ॥ २० ॥
निःशङ्कः शंकरध्यानो निर्यद्भूमततो ततः ।
कार्यसिद्धिपुरद्वारीवाग्निकुण्डेऽत्र सोऽविशत् ॥ २१ ॥

स पुरारिं पुरोऽपश्यत् ततः किमपि नापरम् ।
अथ प्रीतिभरस्मेरमुखोऽभाषि स्मरद्विषा ॥ २२ ॥
धर्मसूनुधरित्रीशचमूं रक्षितुमक्षताम् ।
वत्स माया मयैवेयं चक्रे चक्र्युपरोधतः ॥ २३ ॥
सत्त्वेनानेन ते प्रीतश्चमूं संप्रत्यमूं जय ।
इत्युक्त्वास्मै हरो जैत्रं दत्त्वा खड्गं तिरोदधे ॥ २४ ॥
जनो निर्यन् निघात्यो वामित्युक्त्वा भोजमातुलौ ।
सैन्यस्य द्वारि मुक्त्वान्तरद्वारा द्रौणिराविशत् ॥ २५ ॥
उत्थाप्याङ्घ्रिप्रहारेण सुखसुप्तं मखात्मजम् ।
उत्तिष्ठन्तं कचाग्रेषु क्रोधोऽग्रः सोऽग्रहीदमुम् ॥ २६ ॥
शस्त्राज्जहीति जल्पन्तं मदस्त्राणि गुरुद्रुहम् ।
न स्पृशन्तीत्युदीर्णोक्तिः पशुवत् तं जघान सः ॥ २७ ॥
हत्वोत्तमौजसं तद्वदेव द्रौणिर्गतो रथम् ।
तद्ध्वानैर्धावतो वीरान् रुद्रास्त्रेण न्यपातयत् ॥ २८ ॥
युधामन्युं युधा मन्युं धृत्वा धावन्तमुद्धतम् ।
गदोन्मुचमशस्त्रेण रथोत्तीर्णः क्रुधावधीत् ॥ २९ ॥
बहूनपि मुहूर्तेन सुप्तानेवावधीद्भटान् ।
गन्धसिन्धुरगन्धर्ववृन्दानीव स खड्गभृत् ॥ ३० ॥
पञ्चापि द्रौपदीपुत्रान् धावतो दुर्धरायुधान् ।
स जघानासिना तौ च शिखण्डिजनमेजयौ ॥ ३१ ॥
द्रुपदस्याथ पुत्राणां पौत्राणां सुहृदामसौ ।
प्रभद्रकाणां मत्स्यानामपि चक्रे महाक्षयम् ॥ ३२ ॥
दिग्धये ज्वालयित्वाग्निं तौ तु द्वारि स्वयं स्थितौ ।
जघ्नतुः कृपहार्दिक्यौ भयतो निर्यतो भटान् ॥ ३३ ॥
वह्निना तेन ताभ्यां च दह्यमानाश्चमूचराः ।
को हन्ति किमिदं हन्तेत्याक्रन्दं चक्रुरुच्चकैः ॥ ३४ ॥
रक्तस्रग्लेपनां रक्तवाससं रक्तदृङ्मुखीम् ।
कालीं पाशकरां नाशकरीं पाशेन देहिनाम् ॥ ३५ ॥
कालरात्रिमलोकन्त हन्यमानास्तदा भटाः ।
द्रोणाङ्गजस्य कल्पान्तरुद्रस्येव पुरश्चरीम् ॥ ३६ ॥
युग्मम् ।

आ युद्धादिदिनात् कृत्यायुक्तं घ्नन्तं कृपीसुतम् ।
वीराः स्वप्नेषु तेऽपश्यन् स्वप्नश्च फलितं तदा ॥ ३७ ॥
प्राग्भिया हरिपार्थानां स्वप्नेऽस्वप्नेऽन्वहं हताः ।

ते वीरा द्रौणिकृत्याभ्यां प्रत्यक्षं तु तदुज्झिताः ॥ ३८ ॥
कालरात्रिपरीवारपिशाचपलभुक्चमूः ।
देहभाजस्तदास्वादज्जीवतोऽपि मृतानपि ॥ ३९ ॥
इति निःशेष्य तां सेनां शेषे यामद्वये निशः ।
ते त्रयोऽप्यमिलन् प्रातः प्रीताः प्रोक्तमिथःकथाः ॥४०॥
गत्वा च कौरवाधीशं निःसंज्ञं रक्तमुद्वमम् ।
रुरुदुः परितः स्थित्वा शुशुचुश्चास्य तां दशाम् ॥४१॥
ऊचुश्च नृप यद्यस्ति संज्ञा शृणु ततः प्रियम् ।
पाण्डवाच्युतशैनेयशेषाः सर्वे हता द्विषः ॥ ४२ ॥
तान् प्रियोक्त्या नृपोऽप्याप्तसंज्ञः प्राह वहन्मुदम् ।
न भीष्मद्रोणकर्णैस्तद्यद्भवद्भिः कृतं मम ॥ ४३ ॥
प्राणान् प्रीतोऽधुना मुञ्चे स्वर्गे सङ्गोऽस्तु नः पुनः ।
इत्युक्त्वाभूद्व्यसुर्भूपस्तमथालिङ्ग्य ते ययुः ॥ ४४ ॥
अथ पार्थभिया भोजः स्वदेशं हास्तिनं कृपः ।
व्यासाश्रमं कृपीसूनुर्गन्तुमैच्छद्दिनोदये ॥ ४५ ॥
सौप्तिकस्य कथायुक्तिं प्राणमुक्तिं च भूपतेः ।
आख्यातुं धृतराष्ट्राय संजयोऽप्यचलद् द्रुतम् ॥ ४६ ॥
इत्येवं कृतवर्मास्त्रान्निःसृतो निशि दैवतः ।
आख्यन्मखभवं क्षत्ता सौप्तिकं कर्म धार्मये ॥ ४७ ॥
तच्छ्रुत्वा मूर्च्छितः कृष्णानुजभोजैर्धृतः पतन् ।
संज्ञां प्राप्यावदद्भूपो निश्वसन्नश्रुमिश्रदृक् ॥ ४८ ॥
अस्माकं धिग् जयोऽप्येष जज्ञे स्वक्षयहेतुकः ।
शोच्यो लोकेषु वेसर्यामिव पुत्रभवोत्सवः ॥ ४९ ॥
अथारिदलनानन्ददुग्धाब्धौ स्नास्यति ध्रुवम् ।
धिग्भ्रातृपुत्रशोकातिपङ्किले द्रुपदाङ्गजा ॥ ५० ॥
इत्युक्त्वा नकुलं कृष्णानयनाय निदिश्य सः ।
राजा स्वयं मृताशेषयोधमायोधनं ययौ ॥ ५१ ॥
वीक्ष्य वीरान् हतान् राजा मूर्च्छन्नाश्वासितोऽनुजैः ।
कृष्णां प्राप्तामुपप्लव्याद्वीक्ष्य भेजेऽधिकां शुचम् ॥ ५२ ॥
तं क्षयं वीक्ष्य मूर्च्छन्ती भीमेनाश्वासिता तदा ।
कृष्णा स्माह नृपं क्षणसुतो भुङ्क्ष्व भुवं मुदा ॥ ५३ ॥
दर्शयिष्यसि चेद् द्रौणिं हत्वा मे तच्छिरोमणिम् ।
तदा भुञ्जेऽहमित्युक्त्वा सेयं प्राय उपाविशत् ॥ ५४ ॥
बोध्यमानाथ भूपेन सा क्रुधा स्माह मारुतिम् ।
मानिन् क्षत्रियकोटीर दुःखात् त्रायस्व मामिति ॥ ५५ ॥
इत्युक्तः कान्तया भीमस्तूर्णं नकुलसारथिः ।
हन्तुमुद्दामधामानमश्वत्थामानमन्वगात् ॥ ५६ ॥
अथोचे पार्थिवं विष्णुः फाल्गुनाय गुरुः पुरा ।
ददौ ब्रह्मशिरोऽस्त्रं तत् क्रूराय द्रौणये तु न ॥ ५७ ॥
भवत्सु वनयातेषु द्रौणिना क्रूरचेतसा ।
पुरीं द्वारवतीमेत्य ततोऽहं चक्रमर्थितः ॥ ५८ ॥
गृहाणेति मयोक्तोऽथ नायं वामेन पाणिना ।
न दक्षिणेन न द्वाभ्यां चक्रोत्क्षेपे क्षमोऽभवत् ॥ ५९ ॥
अथोचे मामयं चक्रं ग्रहीतुं स्यां यदि क्षमः ।
ततस्त्वामेव युध्येयं बुद्धिरीदृङ्ममाभवत् ॥ ६० ॥
यच्छ ब्रह्मशिरोऽस्त्रं तच्चक्रोत्क्षेपाक्षमाय मे ।
इदमुक्तवते तस्मै तदस्त्रं प्रददे मया ॥ ६१ ॥
स्वभावभीरुः संरम्भी क्रूरात्मास्त्रेण तेन सः ।
अयोज्येनापि मानव्ये द्रौणिर्भीमं हनिष्यति ॥ ६२ ॥
तदितो रक्षणीयोऽद्य भीम इत्युक्तिमान् हरिः ।
भूपार्जुनौ समारोप्य रथे सामीरिमन्वगात् ॥ ६३ ॥
व्यासाश्रमं गताः सर्वे ततो द्रौणिमलोकयन् ।
घृताक्तवाससं तीराभ्यासस्थं व्याससंनिधौ ॥ ६४ ॥
तं निरीक्ष्य किरीट्यग्रजन्माधावत् क्रुधान्वितः ।
रे क्रूर ब्रह्मबन्धो रे तिष्ठ तिष्ठेति विब्रुवन् ॥ ६५ ॥
द्रौणिर्भयभ्रमद्द्रौणिर्वीक्ष्य तं युद्धदीक्षितम् ।
निरस्त्रो नीरथोऽगृह्णादिषीकां वामपाणिना ॥ ६६ ॥
तत्र ब्रह्मशिरोऽस्त्रस्य मन्त्रन्यासं विधाय सः ।
एनामपाण्डवायेदमुक्तवानाशु मुक्तवान् ॥ ६७ ॥
अथाभ्यधान्मधुध्वंसी बिभ्यद् बीभत्सुमुत्सुकः ।
पार्थ पार्थ यतस्वाशु मा स्याद्विश्वमपाण्डवम् ॥ ६८ ॥
रथादथावतीर्यैन्द्रिः कृतदेवगुरुस्मृतिः ।
स्वस्त्यस्तु गुरुपुत्राय सहैभिः पाण्डुसूनुभिः ॥ ६९ ॥
उदग्रमिदमेवास्त्रमस्त्रेणानेन शाम्यतु ।
इत्युक्त्वातिशुचिर्भूत्वा परमास्त्रमयोजयत् ॥ ७० ॥
युग्मम् ।
ज्वालालिजटिले तत्र ज्वलितेऽस्त्रद्वये दिवि ।
तदुत्तुङ्गस्फुलिङ्गान्तः पतङ्गोऽपि न लक्षितः ॥ ७१ ॥

क्षयेऽपि द्वादशैव स्युरर्काः किं तेऽद्य कोटिशः ।
तयोः स्फुलिङ्गानालोक्य रुद्राद्यैरित्यचिन्त्यत ॥ ७२ ॥
रौद्रौर्वाग्निसमे शस्त्रे ते विलोक्य त्रिलोक्यपि ।
कल्पान्तशङ्कयेवाप कम्पसंपातमद्भुतम् ॥ ७३ ॥
वीक्ष्यात्ममित्रमस्त्राग्निं दूरतः क्रूरतां गतम् ।
क्रूरतां वायवोऽप्यापुः कर्करीकृतपर्वताः ॥ ७४ ॥
और्वाग्निमिव खे वीक्ष्य तदस्त्रद्वयजं महः ।
उच्चकैरुच्चचालाब्धिः क्रोडीकर्तुमिवाशु तत् ॥ ७५ ॥
क्षुभ्यदब्धिस्त्रुटच्छैलः स्फुटद्ब्रह्माण्डखण्डभूः ।
ब्रह्मास्त्रप्रसरे क्रूरः कोऽपि कोलाहलोऽभवत् ॥ ७६ ॥
तदोचुर्मुनयो धर्मज्ञौ युवां द्रौणिपाण्डवौ ।
स्वं स्वमस्त्रममानुष्यचेष्टं संहरतं द्रुतम् ॥ ७७ ॥
कलिप्रियोऽपि कल्पान्तशङ्की व्यासानुगो मुनिः ।
तदा तयोः पपातान्तर्निषेद्धुं युद्धमस्त्रयोः ॥ ७८ ॥
तावन्तर्वीक्ष्य पार्थोऽस्त्रं संजहार महारयात् ।
मैतयोर्भूत् तपोलेशक्लेशोऽस्य स्तम्भनादिति ॥ ७९ ॥
विजित्यैव तपस्तेजस्तीव्रताभिर्महाव्रतौ ।
तदस्त्रं तु कृपीसूनोः स्तम्भयामासतुर्द्रुतम् ॥ ८० ॥
प्रतिव्रतियति स्माह साहसाब्धिस्ततोऽर्जुनः ।
सृष्टं मयास्त्रमस्त्रस्य ध्वंसाय न कृपीभुवः ॥ ८१ ॥
मयास्त्रेऽस्मिन् हृतेऽस्त्रेण सैष नः संहरिष्यति ।
तदस्मासु च लोकेषु यद्धितं तद्विधीयताम् ॥ ८२ ॥
अथोचतुः सुतं कृप्यास्तौ मुनी शस्तया गिरा ।
द्विजोत्तम किमारब्धं त्वया लोकद्वयाहितम् ॥ ८३ ॥
पार्थेष्वमानुषश्चेष्टं क्षिप्तं ब्रह्मशिरस्त्वया ।
तस्यैव प्रतिघाताय परमास्त्रं नरोऽसृजत् ॥ ८४ ॥
स्याच्चेद्ब्रह्मशिरोऽस्त्रस्य परमास्त्रेण च क्षयः ।
कथं त्रुटिष्यसि क्रूरकर्मकृद्वाद्वृकोदरात् ॥ ८५ ॥
अस्त्रं संहर संहर्षसंरम्भाभ्यां समन्ततः ।
पश्यास्मद्दर्शनादेव हृतमस्त्रं किरीटिना ॥ ८६ ॥
पार्थेभ्यश्च शिरोरत्नं स्वं जीवितमिवार्पय ।
तत्क्रूरकार्यकर्तापि जीवन्नेभिर्विमुच्यसे ॥ ८७ ॥
द्रोणाङ्गभूर्जगादाथ तौ मुनी विनयानतः ।
अयुक्त्याघाति भीमेन भूप इत्यस्त्रमीरितम् ॥ ८८ ॥
नाधुना साधुनाथौ मे विरोधविधुरं मनः ।
नित्यानामपि वैराणां युष्मदीक्षणमौषधम् ॥ ८९ ॥
किंतु शूरो गुरौ भक्तः सत्यब्रह्मव्रतोऽर्जुनः ।
नाहं तद्वदतो नेदमस्त्रं संहर्तुमीश्वरः ॥ ९० ॥
योऽस्त्रमेतदसद्ब्रह्मचर्यः सृष्ट्वैव संहरेत् ।
एतेन सानुबन्धस्य मूर्धा तस्याशु लूयते ॥ ९१ ॥
अमोघमस्त्रमीदृक्षमीदृक्क्षयशान्तये ।
अभिमन्युप्रियायास्तद्गर्भभ्रूणे पतत्वदः ॥ ९२ ॥
रक्षोदानवदिव्यास्त्रव्याधिविघ्नादिजं भयम् ।
दलयत्याशु तेनायं स्यान्न देयः शिरोमणिः ॥ ९३ ॥
यच्छामि पितृशिष्येभ्यस्तथाप्येनं भवद्गिरा ।
अयं प्रलयसंरम्भः समन्ताच्छाम्यतादिति ॥ ९४ ॥
युग्मम् ।
एवमेव विधेहीति मुनिभ्यां गदितस्ततः ।
तदस्त्रमुत्तरागर्भे प्रत्यमुञ्चत् कृपीसुतः ॥ ९५ ॥
अथावदद्गदापाणिर्द्रौणिं भ्रूणो न दह्यताम् ।
क्षीणस्य कुरुवंशस्य कुलतन्तुर्भवत्वयम् ॥ ९६ ॥
व्रती विप्रः पुरा प्रोचे वैराटीं प्रति यत् तव ।
परिक्षीणेषु कुरुषु परिक्षिद् भविता सुतः ॥ ९७ ॥
तद् द्विजेश द्विजस्यास्य तद्वचो मान्यथा कृथाः ।
त्वत्पितृप्रियशिष्यस्य कुलमेतच्च वर्धताम् ॥ ९८ ॥
द्रौणिरूचेऽथ मा पक्षपाताद्वद गदाधर ।
अमोघेन मदस्त्रेण सैष भ्रूणोऽस्तु भस्मसात् ॥ ९९ ॥
कृष्णोऽप्यूचे विमुञ्चास्त्रममोघं भ्रूणभित्तये ।
अहं तु तपसा स्वेन जीवयिष्यामि तं सुतम् ॥१००॥
भवान् पुनरिति क्रूरकर्मनिर्मितिपातकी ।
त्रीणि वर्षसहस्राणि चरिष्यत्यजने वने ॥ १०१ ॥
असहायो मलक्लिन्नः पूतिशोणितगन्धभृत् ।
न प्राप्स्यसि क्वचित् काचित् कस्यचित् संविदं पुनः ॥ १०२ ॥
ऊचे सत्यवतीसूनुः सत्यमस्तु हरेर्वचः ।
द्रौणे यतस्त्वया क्रूरं कर्माशूरोचितं कृतम् ॥ १०३ ॥
इति शप्तो मणिं द्रौणिर्दत्त्वा तेभ्यो वनं ययौ ।
तेऽप्यगुर्द्रौपदीं व्यासनारदाभ्यां युता द्रुतम् ॥ १०४ ॥
अथ रत्नं नभोरत्नसपत्नं द्योतयन् पुनः ।

सामीरिराज्ञया राज्ञ: कृष्णामभ्यर्थित स्मित: ॥ १०५ ॥
ब्रचगत्या जितोऽस्त्रज्ञस्त्याजितोऽस्त्रशिरोमणिम् ।
गुरोरङ्गज इत्यङ्ग न स्वर्गं गमितोऽद्य स: ॥ १०६ ॥
अथ मुदमुदयन्ती द्रौपदी स्माह मान्यो
गुरुरिव गुरुसूनुर्युक्तमत्याजि जीवन् ।
मणिममुममराणां लोभकृ शोभिताशं
निजशिरसि रसायाश्चिननाथो निधनाम् ॥ १०७ ॥
कुनयकुरुकुटुम्बच्छेदनात् खेदनाश:
समजनि मम यत्त्वे द्रौणिमर्षात् सुहर्ष: ।
अहमिति हरिमैत्र्यात् त्वत्प्रियत्वात् कृतार्था
जगति सुगतिभाजो नैव शोचामि बन्धून् ॥ १०८ ॥
ते पुत्रास्तव बन्धवस्तव च ये न द्रौणिना जघ्निरे
तत्पुत्रेन हता हरेण महतामेषां न शोच्यं मह: ।
इत्युक्तेऽसुरवैरिणा सुकृतभूपृष्ठेन तुष्टिं परां
भेजेऽसौ निजवर्गवीरचरितज्ञानेन[1] यज्ञाङ्गजा ॥१०९॥
भेजे श्रीजिनदत्तसूरिसुगुरोरर्हन्मतार्हस्थिते:
पादाब्जभ्रमरोपमानममरो नाम व्रतीन्द्र: कृती ।
वाणीवेश्मनि बालभारतमहाकाव्ये तदन्तर्दृगु-
न्मेषप्रेङ्खणभासि पर्व दशमं शान्तिं ययौ सौप्तिकम् ॥११०॥
अनयोरेकसर्गेण शल्यसौप्तिकपर्वणो: ।
एकेन कलितान्यासन् शतानि चीण्यनुष्टुभाम् ॥ १११ ॥

इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के सैषीकसौप्तिकपर्वकीर्तनो नामाष्टाविंशतम: सर्ग: ॥ १० ॥ :: :: ॥

---

## ॥ अथ खण्डप्रशस्ति ॥

रामावतारवर्णनम् ॥

(१०१) देव त्वं मलयाचलोऽसि भवत: श्रीखण्डशाखी भुजस्तस्मिन्कालभुजङ्गमो निवसति स्फूर्जत्कृपाणच्छलात् ।
एष स्वाङ्गमनर्गलं रिपुतरुस्कन्धेषु संघट्टयन्
दीर्घव्योमविसारि निर्मलयशो निर्मोकमुन्मुञ्चति ॥

हे देव त्वं मलयाचलो मलयाद्रिरसि वर्तसे, तत्र भवतस्तव भुजो बाहु: श्रीखण्डशाखी चन्दनवृक्षोऽस्ति, तस्मिन् त्वद्भुजचन्दनतरौ स्फूर्जत्कृपाणच्छलात् स्फूर्जत: खड्गस्य व्याजेन कालभुजङ्गम: कालसर्पो निवसति, तत्र स एष: कालभुजङ्गम: स्वाङ्गं स्वशरीरं रिपव एव तरवस्तेषां स्कन्धेषु प्रकाण्डेषु रिपुमस्तकेष्विति यावत्, अनर्गलं यथेच्छं यथा स्यात्तथा संघट्टयत् संश्लेषयन् दीर्घव्योमविसारि महत्याकाशे विस्तरणशीलं निर्मलं यश एव निर्मोक: कञ्चुकस्तमुन्मुञ्चति प्राबल्येन त्यजति, यथा कश्चन सर्पस्तरुस्कन्धे संघट्टनं कुर्वन् स्वं कञ्चुकं परित्यजति तथा त्वत्कृपाणाहि: शत्रुतरुस्कन्धेषु संश्लिष्य यश:कञ्चुकं मुञ्चतीति भाव: ॥ १०१ ॥

(१०२) आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधे:
पूर्वाद्रि: करवालखण्डमहसो लीलोपधानं श्रिय: ।
संग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो
राजन् राजति वैरिराजवनितावैधव्यदस्ते भुज: ॥

हे राजन् ते तव भुजो बाहू राजति शोभते, किंविशिष्टो भुज:, जय एव कुञ्जरस्तस्यालानं बन्धनस्तम्भ:, तथा विपद एव वारिधि: समुद्रस्तस्य दृषदां पाषाणानां सेतु: पारगमनमार्ग:, दृषदामित्यनेनाविनश्वरत्वमस्य सेतो: सूचितम्, तथा करवाल: खड्ग: स एव चण्डमह उग्रतेजा: सूर्यस्तस्य पूर्वाद्रिरुदयाचल:, तथा श्रियो लक्ष्म्या लीलार्थकमुपधानमुष्णीषकं, यत: सा जयश्रीस्त्वद्भुज एव सर्वदास्त इति भाव:, तथा संग्राम एवामृतसागर: क्षीराब्धिस्तस्य या प्रमथनक्रीडा विलोडनलीला तस्या विधौ विधाने मन्दरो मेरुगिरि:, यथा क्षीराब्धिमन्थने मन्दराचलस्तथा संग्रामामृतसागरविलोडने त्वद्भुज: यथा च तत्रामृतमुत्पन्नं तथात्र यश इति भाव:, तथा वैरिराजवनितानां शत्रुनृपस्त्रीणां वैधव्यं ददातीति स:, यतस्त्वद्भुजेन सर्वेऽपि वैरिनृपाहता निर्मलं यशश्च संपादितमिति भाव: ॥ १०२ ॥

(१०३) खेदाम्भ:कणमण्डलानि खुरलीखेलोद्भवान्यन्वहं
त्वद्बाह्वो रसयन्महाबल इति ख्यातिं गतो मारुत: ।
तं चास्वाद्य मुहु: सहस्रफणताशाली बलीयानहि-
र्धत्ते कोमलकोमलैरपि फणै: श्रीरामचन्द्र स्थिराम् ॥

हे श्रीरामचन्द्र त्वद्बाह्वोस्त्वद्भुजयो: खुरली श्रमस्तत्संबन्धिनी या खेला तस्या उद्भवन्ति यानि स्वेदस्य प्रस्वेदस्याम्भ:कणानां जलबिन्दूनां मण्डलानि समूहान्यन्वहं निरन्तरं रसयन् आस्वदयन्मरुदेव मारुतो वायुर्महाबल इति ख्यातिं प्रसिद्धिं गत: प्राप्त:, यदात्वया वैरिणोहतास्तदा त्वद्भुजयो: परिश्रमज: स्वेद उत्पन्नस्तच्छोषणाद्वायुर्महाबलोऽभूदिति भाव:, तं च महाबलं वायुं मुहुर्वारंवारमास्वाद्य सहस्रसंख्या-

[1] —वरताज्ञानेन इति पा० ।

कफणतया शालते शोभते असौ तथाविधो हि शेषराजो बलीयान् भूत्वा कोमलेभ्योऽपि कोमलैरतिकोमलैरिति यावत्, एवं भूतैः फणैः स्थिरां पृथ्वीं धत्ते धारयति, सर्पाणां महाबलवायुभक्षणादेव बलिष्ठत्वमस्तीतिध्येयम् ॥ ५०३ ॥

(१०४) देव त्वद्गजवाजिपत्त्रपटलप्रोद्भूतधूलीभरै-
राकाशं वसुधायते खरकरः सोमायते निष्प्रभः ।
किंचाधोभरकुञ्चितः फणवतां नाथः स कूर्मायते
कूर्मो भोगपतीयते किमपरं रात्रीयते वासरः ॥

हे देव त्वदीयानां गजानां वाजिनां पत्त्राणां वाहनानां पटलेन प्रोद्भूताः समुद्भूता ये धूलीभरस्तैराकाशं खं वसुधायते वसुधेवाचरति, रामचन्द्रवाहिन्येतावतीविपुलाऽऽसीद्यत्तत्संमर्दाद्ाकाशमपि रजोमयं बभूवेति भावः, अत एव निष्प्रभो निस्तेजः खरकरश्चण्डांशुः सोमायते सोमइवाचरति, तथा किं च फणवतां सर्पाणां नाथः स्वामी शेषराजः अधोभरकुञ्चितः सन् भारेणाधः संकोचं प्राप्तः सन् स कूर्मायते कूर्म इवाचरति यथा कूर्मः संकोचयति स्वं शरीरं तथा शेषोऽपि त्वद्वाहिनी भारेण संकुचितशरीरोऽभूदिति, तथा कूर्मो भोगिपती, यते भोगिपतिः शेषः स इवाचरति संकुचितशरीरोपि प्रलम्बकायोऽभूदिति, तथाऽपरमपि किं चिदभूदित्याह, वासरो दिनं रात्रीयते रात्रिरिवाचरति यतस्तादृक् त्वद्वाहिन्या धूलीपटलं समुच्छालितं येन दिनमप्यन्धकारवशाद्रात्रिरिवाभवदिति भावः ॥ १०४ ॥

(१०५) लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा ।
इन्दुः किं घटितः, किमेष विहितः पूषा, किमुत्पादितं
चिन्तारत्नमहोमुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥

हे देव त्वयि रामे वेधसा ब्रह्मणा लावण्यौकसि लावण्यं सौन्दर्यं तस्यौको गृहं यः तस्मिन्निष्पादिते उत्पादिते सति पुनरिन्दुः किमर्थं घटितो निर्मितः यतस्त्वमेव विमलसकललावण्यगृहमतस्त्वत्पुरः सकलङ्कस्य चन्द्रस्य लावण्यमयत्वेन घटनं व्यर्थमेवेति, तथा त्वयि प्रतापविशिष्टो गरिमा यस्मिंस्तथाभूते उत्पादिते सत्येष पूषा किंविहितः यतः पूषा त्वत्प्रतापगरिमालवांशमपि नाप्नोतीति, तथा त्यागिनां दातृणामग्रेसरे प्रधाने त्वयि निष्पादिते सति चिन्तारत्नं किमुत्पादितं यतश्चिन्तारत्नस्यायं प्रभावो यद्याचकयाचितार्थानां सद्य एव पूरणं भवति तच्च त्वत्त एव भवतीति अतश्चिन्तामण्युत्पत्तिर्व्यर्थेति, अहो इत्याश्चर्यं, तथा त्वयि अवनेर्भारस्य क्षमौ वहनसमर्थौ भुजौ यस्य स तथाविधे उत्पादिते सति अमी कुलक्ष्माभृतः कुलाचलाः पर्वता मुधैव वृथैव सृष्टा निर्मिताः यत पृथ्वीभारस्त्वया भुजाभ्यामेव धारितोतस्तदुत्पत्तिर्व्यर्थेति भावः ॥ १०५ ॥

(१०६) श्रीरामे मृगयां गतेऽपि धनुषा बाणे समारोपिते-
प्याकर्णान्तगतेऽथ मुष्टिगलितेऽप्येणाङ्घ्रिलग्नेऽपि च ।
न त्रस्तं न पलायितं न चकितं नोत्कम्पितं न द्रुतं
मृग्या मद्वशगं करोति दयितं कामोऽयमित्याशया ॥

श्रीरामे मृगयार्थमाखेटार्थं वनं गते सति मृग्या हरिण्या न त्रस्तं त्रासो न कृतः अथ धनुषि बाणे समारोपिते संन्यस्ते सति वा तया भीत्या न पलायितं, तत आकर्णान्तं बाणे प्राप्ते सत्यपि न चकितं विस्मितं, अथ च तस्मिन्मुष्टिगलिते हस्तान्मुक्तेऽपि नोत्कम्पितं न कम्पः प्राप्तः, अथापि च एणाचरणलग्ने तया न द्रुतं स्थानान्तरगमनं न कृतं, यतो रामे रूपलावण्यातिशयाद् भ्रान्त्या कामोऽयं मम दयितं भर्तारं रत्यर्थं मद्वशगं करोतीत्याशया, अयं कामो मया सह रन्तुं स्वबाणप्रक्षेपेण दयितं मामभिमुखीकरोतीति सा जानाति स्म व्याधशङ्केव तस्या नोदेति यतो रामदर्शनादेव सा तृषस्यन्ती संपन्नेति भावः । एतेन रामस्यातीव रूपलावण्यं प्रदर्शितम् ॥ १०६ ॥

(१०७) मनोभूर्मुग्धासु क्षिपति यदि बाणावलिमसौ
कथं ताभिःक्षिप्तास्त्वयि नयनविक्षेपविशिखाः ।
अथ ज्ञातं ब्रूमः शृणु सुभग शृङ्गारनलिनी-
वनक्रीडाहंस स्मरमिव विदुस्त्वां मृगदृशः ॥

हे श्रीराम असौ मनोभूः कामो मुग्धासु स्त्रीषु यदि बाणावलिं मोहनादिशरश्रेणिं क्षिपति तर्हि ताभिः स्त्रीभिस्त्वयि रामे नयनानां ये विक्षेपास्त एव विशिखा बाणाः कथं क्षिप्ता मुक्ताः यतोलोके हन्ता हन्यते नान्यः परमत्र विपर्यासो दृश्यते यत् स्वहन्तारमपि कामं त्यक्त्वाऽन्य एव त्वं स्वचक्षुःकटाक्षबाणैस्ताभिर्हन्यसे इति कथमन्यायाचरणं ताभिः कृतमिति विस्मितस्तदौचित्यं निरूपयति, हे सुभग अथ ज्ञातमधुनावगतमस्माभिस्तद्ब्रूमस्त्वंशृणु, यन्मृगदृशः स्त्रियस्त्वां रामं स्मरमिव काममिव विदुरवगच्छन्ति त्वां काममेव जानन्तीति भावः, अतोनङ्गं काममनुपलभ्य त्वामेव साङ्गं काममुपलभ्य त्वयि स्वहन्तरि ताः स्वनेत्रबाणान्विचिक्षिपुः अतस्ताभिरन्यायो न कृतः; किं भूतं त्वां, शृङ्गार एव नलिनीवनं पद्मिनीवनं तस्मिन् क्रीडाहंसः केलिहंस इव यस्त्वामिति ॥ १०७ ॥

(१०८) नागविशेषे शेषे
शेषेऽशेषेपि संहृते जगति ।

हंस्यसिकालं कालं

का लङ्कालङ्घने स्तुतिर्भवत: ॥

हे राम त्वया अशेषे समस्तेऽपि जगति संहृते संहृतवति त्वं नागविशेषे शेषनागे शेषे स्वपिषि, तथा असिवत् खड्गवत् कालं कृष्णं अथवा असिवत् कलनाकर्तारं कालं मृत्यं हंसि मारयसि यत: सम्प्रत्यु जगदुपसंहृत्य दुग्धाब्धौ शेषे शेषे इत्यादीनि बहूनि महदाश्चर्यजनकानि तव कृत्यानि दृष्टान्यतो भवतस्तव लङ्काया लङ्घने पारगमने कास्तुति: स्तवनं न किमपीति भाव: ॥ १ ८ ॥

(१०६) योऽद्धा योद्धावधीनान् सपदि पलभुज: संपराये पराये येनायेनाश्रितानां स्तुतिरवनमितेशानचापेन चापे ।

लङ्कालंकारहर्ता ककुभिककुभि य: कान्तया सीतयासीद्दूनो दूनोऽथहृष्ट: सविभुरवतु व: स्व: सभाऽर्य: सभार्य: ॥

य: श्रीराम: सपदि शीघ्रं तान्पलभुजो राक्षसानवधीज्जघान, तान्कानित्याह, ये संपराये संग्रामे परा दर्पिष्ठा:, किंभूतो राम:, योऽद्धा निश्चितं योद्धा युद्धकर्ता, तथा अवनमितं नम्रीकृतमीशानस्य शंभोश्चापं धनुर्येन तथाविधेन येन रामेणायेन स्वभाग्येन "अयं भाग्यमिति दुर्ग:" आश्रितानां जनानां स्तुति: प्रशंसावचनं चापे प्राप्तं, तथा लङ्कानगर्या अलंकारो भूषणं यो रावणस्तस्य हर्ता विघातक:, तथा य: सीतया कान्तयोनो विरहित: सन्ककुभिककुभि दिशिदिशि दूनो दुःखितमना भ्रमन्नासीत्, अथ च यदा सभार्य: सीतया सहितो जातस्तदा हृष्ट:, स स्व:सभा देवसभा तस्या अर्य: स्वामी विभु: प्रभुर्वो युष्मा नवतु रक्षत्वित्यर्थ: ॥१०९॥

(११०) यो रामो न जघान वक्षसि रणे तं रावणं सायकैर्हृद्यस्य प्रतिवासरं वसति सा तस्या ह्यहं राघव: ।

मय्यास्ते भुवनावली परिवृता द्वीपै: समं सप्तभि: स श्रेयो विदधातु नस्त्रिभुवनत्राणैकचिन्तापर: ॥

य: श्रीरामस्तं सीतापहारकं रावणं सायकैर्बाणैर्वक्षसि न जघान, हि यतोऽस्य रावणस्य हृदि हृदये प्रतिवासरं सततं सा सीता वसति सीताध्यानपरत्वाद्रावण: सीतासक्त इति सूचितम्, तस्या हृदये चाहं राघवो वसामि साचमद्भक्तेति भाव:, मयि च सप्तभिर्द्वीपै: समं परिवृता भुवनावली जगत: श्रेणिर्वसति सर्वं जगद्रामाधारमेव वर्तते इति भाव:, यद्यहं वक्षसि रावणं हनिष्यामि तर्हि तद्वक्षसो विदारणे सीताविनाशो भवेत्तद्विनाशे तद्धृदयस्थत्वान्ममविनाशो भवेन्ममनाशे च मदेकशरणस्य जगत्त्रयस्य नूनं विनाशो भवेत्तर्हि कथं कर्तव्यमिति त्रिभुवनत्राणविषयिण्यैव चिन्ता परानिष्ठा यस्य स रावणशिरांस्येवाच्छिनत्स रामो नोस्माकं श्रेय: कल्याणं विदधातु करोत्वित्यर्थ: ॥ ११० ॥

(१११) संग्रामे रिपुभूभुजां मुखरुचि र्जीवश्च देवाङ्गनाचक्षु: प्रोल्लसदम्बुजं सकलमप्युन्मेदिनीमण्डलम् ।

त्वद्बाणोद्गतबाणसंहतिरभूच्छ्रीराम भूमीपते जम्बवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥

हे श्रीराम भूमीपते चक्रवर्तिन् त्वया मम मे प्रारब्धे सति रिपुभूभुजां वैरिराजानां मुखस्य रुचि: कान्तिर्जम्बूवत् तद्वच्छ्यामाऽभूत् तथा तेषां जीव: प्राणो जलबिन्दुवत्क्षणनश्वरोऽभूत्, तथादेवाङ्गनानामप्सरसां चक्षुर्जलजवत्पङ्कजवदभूत्, यथा जलजं कमलं विकस्वरं सूर्योदये जायते तथा संग्रामारम्भे तु रणतिपन्दितैर्त्यविनाशसंभावनया संग्रामं पश्यन्तीनामप्सरसां नेत्रजातमुल्लसद्विकस्वरं वर्तते, तथा तन्मेदिनीमण्डलं संग्रामभूमि: प्रोल्लसन्त्युच्छलन्ति यानि रामाहतवैरिशरीरेभ्याऽसृञ्जि रुधिराणि मांसानि च तेषां निवहैर्जम्बालवत्कर्दमवदभूत्, तथा त्वदीयाच्चापादुद्गतानां बाणानां संहति: संघातो जालवदभूत् यथा जालगता मत्स्या बहिर्निष्क्रान्तुं न समर्थास्तथा त्वदीयबाणान्मुक्त: कोपि वैरी नावशिष्ट इति भाव: ॥ १११ ॥

(११२) राज्यं येनपटान्तलग्नतृणवत्त्यक्तं गुरोराज्ञया पाथेयं परिगृह्यकार्मुकवरं घोरं वनं प्रस्थित: ।

स्वाधीन: शशिमौलिचापविषये प्राप्तो न वै विक्रियां पायद्व: स बिभीषणाग्रजनिहा रामाभिधानोहरि: ॥

येन रामेण गुरोर्दशरथस्य आज्ञया राज्यं पटान्ते वस्त्रान्ते लग्नं तृणं यथा भवति तथामत्वा त्यक्तमुत्सृष्टं तत: पाथेयं पथि योग्यं कार्मुकवरं सुन्दरं धनु: परिगृह्य गृहीत्वा घोरं रम्यं वनमारण्यं प्रस्थितो गन्तुं प्रवृत्त:, अतएव स्वाधीन: स्वतन्त्र:, यश्च शशिमौले: शंभोश्चापस्य धनुष: समारोपणविषये विक्रियां विकारं नवै प्राप्त:, यश्च विभीषणस्याग्रजनिरग्रजन्मा रावणस्तं हन्तीति स रामाभिधानो रामनामा हरिर्व: पायाद्रक्षत्वित्यर्थ: ॥ ११२ ॥

(११३) यस्तीर्थानामुपास्त्या गलितमलभरं मन्यते स्म स्वमेवं नाज्ञासीज्जज्ञिरे यन्मम चरणरज:पातपूतान्यमूनि ।

पादस्पर्शेन कुर्वन् झटिति विघटितग्रावभावां महल्यां कौशल्यासूनुरूनं व्यपनयतु व: श्रेयसा च श्रिया च ।

यो रामस्तीर्थानामुपास्त्या सेवनया स्वमात्मानं गलित: चरितो मलभर: पापसमूहो यस्य तमिव तीर्थस्नानेन पवित्र:

मात्मानं मन्यतेस्म अमंसीत् परं स्वपादस्पर्शेन अहल्यां विघटितग्रावभावां विघटितो दूरीकृतो ग्रावभावः पाषाणत्वं यस्याः सा तां पुनः प्राणिरूपां कुर्वन्नपि एवं नाज्ञासीचज्ञातवान्यन्मम चरणयो रजसः पातेन पूतान्यमूनितीर्थानि जज्ञिरे जातानीति एवं भूतः स कौशल्यासूनू रामो वो युष्माकं श्रेयसा यशसा श्रिया लक्ष्म्या यदून मूनत्व तद्व्यपनयतु दूरीकरोतु, अज्ञान मिति भावप्रधानो निर्देशो बोध्यः ॥ ११३ ॥

॥ शेष उत्तराङ्कि ॥

---

## THE APHORISMS

### OF THE

## YOGA PHILOSOPHY

### OF

### PATAÑJALI.

*(Continued from page 291.)*

[1] When an ascetic assumes numerous bodies simultaneously, then from whence are so many minds [which are necessary for so many bodies] produced? To this he replies.

**निर्म्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥**

Aph. 4. The minds in the productions [ensue] from mere egotism.

[2] The minds in the productions [that is, in the bodies which he produces for himself] of an ascetic created by himself, ensue, as sparks arise simultaneously as modifications from fire, at his will from egotism alone, which is the general and original cause [of mind].

[3] But [it may be objected] as there may be different purposes of so many, [different] minds, how can they produce one effect? To this he replies.

**प्रवृत्तिभेदे प्रयोजकञ्चित्तमेकमनेकेषाम् ॥ ५ ॥**

Aph. 5. In different activities of [those] numerous [minds] one mind [of the ascetic] is the moving cause.

[4] The "Moving cause"—i. e. that which actuates the different activities—various operations of those [different] minds, as a ruler, is the one mind of the ascetic and not a different element.

---

[1] यदाऽनेकशरीराणि युगपदेव गृह्णाति योगी तदा कुतस्तानि चित्तानि प्रभवन्तीत्याह ॥

[2] योगिनः स्वयं निर्म्मितेषु कार्य्येषु यानि चित्तानि तानि मूलकारणादस्मितामात्रादेव तदिच्छया प्रसरन्ति । अग्नेर्विस्फुलिङ्गाइव युगपत् परिणमन्ति ॥

[3] ननु बहूनाञ्चित्तानामभिन्नाभिप्रायत्वाचैककार्य्यकर्तृत्वं स्यादित्यत्राह ॥

[4] तेषां चेतसाम्प्रवृत्तिभेदे व्यापारनानात्वे एकं योगिनश्चित्तम्प्रयोजकम्प्रेरकमधिष्ठातृत्वेन न भिन्नं तत्वम् ॥

---

[1] The meaning is that as the mind like a ruler directs at will the sight, the hand &c. [i. e. other organs of sense and action] in his [the ascetic's] own body, so in like manner it does in regard to other bodies [i. e. with regard to the internal and external organs of sense belonging to other bodies].

[2] He [now] states the distinction of the mind produced by meditation from the minds produced by birth &c. [birth, medicine, incantations and penances].

**तत्र ध्यानजमनाशयम् ॥ ६ ॥**

Aph. 6. Among these [minds produced by birth &c], that which springs from meditation is without substratum.

[3] Among those five kinds of minds springing from birth &c. [i e birth, medicines, incantations, penances and meditation] that which springs from meditation or reflection is without substratum—i. e. destitute of the basis of mental deposits of works.

[4] He [now] states that as the mind of the ascetic is free from afflictions and actions and is distinct, so his work also is likewise distinct [from that of others].

**कर्म्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥**

Aph. 7. The work of an ascetic is neither pure nor dark, and that of others is of three kinds.

[5] [There are four kinds of works (1) pure, [śukla] (2) dark, [krishṇa]; (3) pure and dark [śukla-krishṇa]; (4) neither pure nor dark [aśukla-krishṇa]. Work such as sacrifice &c. which produces a good result, is pure; that which produces an evil or a bad result, such as the murder of a Brahman &c. is dark; that which is the commixture of both is [called] pure-dark.

Of these the pure [work] is of those persons who give alms and perform penances and study the Veda; dark work is that which belongs to infernal beings; the pure dark work is of men. The works of ascetics is neither pure nor dark, for it does not produce any result, in consequence of the renunciation of results, their practice.

[6] He [now] states the result of this work:

---

[1] अयमर्थो यथाऽऽत्मीय शरीरे मनश्चक्षुः पाण्यादीनि यथेच्छम्प्रेरयत्यधिष्ठातृत्वेन तथा कायान्तराण्यपीति ॥

[2] जन्मादिप्रभवचित्तात्समाधिजस्य वैलक्षण्यमाह ॥

[3] ध्यानजं समाधिजं यच्चित्तन्तत्पञ्चसु जन्मादिप्रभवचित्तेषु मध्येऽनाशयङ्कर्म्मवासनारहितमित्यर्थः ॥

[4] यथेतरचित्तेभ्यो योगिनश्चित्तङ्क्लेशकर्म्मादिरहितं विलक्षणं तथा कर्म्मापि विलक्षणमित्याह ॥

[5] शुभफलदं यागादि शुक्लम् । अशुभफलदं ब्रह्महत्यादि कृष्णम् उभयसङ्कीर्णं शुक्लकृष्णम् । तत्र शुक्लङ्कर्म्म दानतपः स्वाध्यायादिमताम्पुरुषाणाम् । कृष्णङ्कर्म्मनारकाणाम् । शुक्लकृष्णं मनुष्याणाम् । योगिनाम्फलत्यागेनानुष्ठानेन न किञ्चित्फलमारभते कर्म्म ॥

[6] अस्यैव कर्म्मणः फलमाह ।

